योगतन्त्र-ग्रन्थमाला

[प्रथमं पुष्पम्]

# नित्याषोडशिकार्णवः

शिवानन्दकृतया

**ऋ जु वि म र्शि न्या**

विद्यानन्दकृतया

**अ र्थ र त्ना व ल्या**

च

संवलितः




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

योगतन्त्र-ग्रन्थमाला

[प्रथमं पुष्पम्]

# नित्याषोडशिकार्णवः

शिवानन्दकृतया

ऋ जु वि म र्शि न्या

विद्यानन्दकृतया

अ र्थ र त्ना व ल्या

च

संवलितः




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

YOGATANTRA-GRANTHAMĀLĀ

[ Vol. 1 ]

# NITYĀṢOḌAŚIKĀRṆAVA

With two Commentaries

**ṚJUVIMARŚINĪ**

by

ŚĪVĀNANDA

&

**ARTHARATNĀVALĪ**

by

VIDYĀNANDA




EDITED BY

**VRAJAVALLABHA DVIVEDA**

Ex-Professor & Head of Dept. of Yogatantra

&

Śāstracūḍāmaṇi Professor

Sampurnananda Sanskrit Vishvavidyalaya

VARANASI

1985

योगतन्त्र-ग्रन्थमाला
[ प्रथमं पुष्पम् ]

# नित्याषोडशिकार्णवः

शिवानन्दकृतया
ऋ जु वि म र्शि न्या
विद्यानन्दकृतया
अर्थ र त्ना व ल्या
च
संवलितः




सम्पादकः
श्रीव्रजवल्लभद्विवेदः
सांख्ययोगतन्त्रागमविभागाध्यक्षचरः, शास्त्रचूडामण्याचार्यश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्

२०४१ तमे वैक्रमाब्दे    १९०६ तमे शकाब्दे    १९८४ तमे खैस्ताब्दे

प्रकाशक :—
निदेशकः, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी ।

□

[ग्रन्थोऽयं विश्वविद्यालयानुदानायोगतो लब्धेनार्थिकसाहाय्येन मुद्रापितः प्रकाशितश्च]

□

प्राप्तिस्थानम् :—
**विक्रयविभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१००२.

□

द्वितीयं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्—७६.०० रूप्यकाणि

□

मुद्रक :—
**रत्ना प्रिंटिंग वर्क्स**
बी २१/४२ ए, कमच्छा,
वाराणसी - २२१००१ ।

# द्वितीयसंस्करणप्रस्तावना

सोपोद्घातस्य सपरिशिष्टस्य प्राच्यव्याख्याद्वयोपेतस्य सटिप्पणस्य नित्याषोडशिकार्णवस्य द्वितीयमिदं संस्करणमुपस्थापयतामस्माकं नितान्तं प्रसीदति चेतः। १९६८ ई० वर्षेऽस्य प्रथमं संस्करणं तदानीन्तनानां योगतन्त्रविभागाध्यक्षाणां श्रद्धेयानां गुरुचरणानां पद्मविभूषणादिनानाविरुदालङ्कृतानां श्रीश्रीगोपीनाथकविराजमहोदयानां निदेशानुसारं योगतन्त्रग्रन्थमालायाः प्रथमपुष्पत्वेन सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाशितमासीत्। उत्तरप्रदेशीयेन प्रशासनेन कालिदासपुरस्कारेण सत्कृतोऽयं ग्रन्थो देशस्थैर्विदेशीयैश्च[1] विद्वद्भिः प्रशंसित इति स्वप्रयत्नस्य साफल्यमिवानुभवत्ययं जनः।

नूतनेऽस्मिन् संस्करणे स्वल्पान्येव परिवर्तनानि दृश्येरन्। प्रथमसंस्करणस्य ४१५-४१६ पृष्ठयोः स्थापितानि परिवर्धनानि संशोधनानि चात्र यथास्थानं मूले टिप्पणीषु च संनिवेशितानि, तत्स्थाने च उपोद्घातभागे कृतानि तानि स्थापितानि। १९६८ ई० वर्षे कृतायां तंजोरयात्रायां तत्रत्ये सरस्वतीमहलग्रन्थालये सुभगोदयस्य सौभाग्यहृदयस्य च मातृके दृष्टे। तत्रत्यानि पाठान्तराणि त० इति संकेतेनात्र संगृहीतानि। अन्यत् सर्वं प्रायो यथावस्थितमेव राजते।

अत्र परिशिष्टभागे इदम्प्रथमतया संनिवेशितं त्रिपुरसुन्दरीदण्डकं कैश्चिद् विपश्चिद्भिः स्वकीयायामनुसन्धानपत्रिकायामाधारनिर्देशं विनैव प्रकाशितम्। इदमत्र विभावनीयं यदत्रत्यः प्रथमो जयतीत्यादिकः श्लोकः क्षेमेन्द्रकृतेः कविकण्ठाभरणस्याद्यं पद्यम्। क्षेमेन्द्रलघुकाव्यसंग्रहे प्रकाशिते तस्मिन् ग्रन्थे श्लोकोऽयं द्रष्टुं शक्यते। एवमेवान्तिमो ब्रह्मेन्द्ररुद्रेत्यादिकः श्लोकश्च पञ्चस्तव्यां समाविष्टस्य द्वितीयस्य चर्चास्तवस्य २९ तमं पद्यमिति। तेनेमावुभावपि श्लोकौ नास्य दण्डकस्येति। यथास्माभिस्त्रिपुरसुन्दरीदण्डकपरिचयप्रसङ्गे प्रोक्तं[2] यन्नास्य काचन स्वतन्त्रा मातृकोपलब्धा, किन्तु विद्यानन्दकृतेर्ज्ञानदीपविमर्शिन्याः केरलविश्वविद्यालयमातृकायां स्तोत्रपद्धतौ लिखितमविकलमेतद्दण्डकं दृक्पथमायातमिति। स्तोत्रपद्धत्यामस्यां कानिचन स्तोत्राणि सम्पूर्णानि विद्यन्ते, अन्येषां चैकैकः श्लोकोऽत्र संगृहीतः। तदा तदेतदजानद्भिरस्माभिः

---

१. हिन्दु तान्त्रिज्म ( लीडेन; सन् १९७९, पृ. ४ ), "हिन्दु तान्त्रिक लिटरेचर इन संस्कृत" ( हालैण्ड, सन् १९८१, पृ. ३, ६० ) इति च द्रष्टव्यम्।

२. उपोद्घाते तृतीयं पृष्ठं द्रष्टव्यम्।

श्लोकद्वयमेतत् त्रिपुरसुन्दरीदण्डकाङ्गत्वेनैव स्थापितमिति प्रस्तुतेऽपि संस्करणे तत्तथैव विद्यते। अत्रत्यः सौधाम्बुधावरुणेत्यादिकः श्लोकोऽपि कस्यचनान्यस्यैव स्तोत्रग्रन्थस्य स्यात्।

त्रिपुरसुन्दरीदण्डकीये २३ तमे गद्यखण्डे गुणाष्टकं चर्च्यते। श्वेताश्वतरोपनिषच्छाङ्करभाष्ये गुणाष्टकमेतदेवं व्यावर्णि[1]—"अष्टावात्मगुणा ज्ञेयाः। दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति गुणाष्टकम्" (१।४) इति। एतेऽष्टावात्मगुणाः स्वच्छन्दतन्त्रेऽपि वर्ण्यन्ते। तद्यथा—

अत आत्मगुणानष्टौ कथयामि समासतः॥
दया सर्वेषु भूतेषु क्षान्तिश्चाप्यनसूयता।
शोचं चैवमनायासो मङ्गलं चाप्यतः परम्॥
अकार्पण्यं चास्पृहा चेत्यष्टावात्मगुणाः स्मृताः। इति।

(१०।४०९–४११)

अभिनवगुप्तेन न केवलं नित्यातन्त्रविद एव स्मृताः (उपो० पृ० ८), अपि तु परात्रिंशिकायास्तत्त्वविवेकाख्यव्याख्याने (पृ० २२९-२३०) तेन नित्याषोडशिकार्णवस्य 'कामेन कामयेत्" (४।४६) इति, "ए-ओकारगतं बीजम्" (१।१००) इति च वचनमपि स्मर्यत इति नूनं तस्य समये ग्रन्थ एष प्रसिद्ध आसीदित्यत्र नास्ति विवादस्यावसरः। ईश्वरशिवादिविषये चास्माभिः "त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च" इत्यस्मिन् निबन्धे पूर्वमेवोक्तम्। उपोद्घातभागे स्मृता ईदृशा निबन्धाः, श्रीविद्यायाः समयिसम्प्रदायः, शिवपुराणीयं दर्शनमित्याद्याश्च, यात्रावर्णनपराश्च संस्कृतनिबन्धास्तन्त्रयात्रायाम्, हिन्दीनिबन्धाश्च "आगम और तन्त्रशास्त्र" इत्यस्मिन् ग्रन्थे प्रकाशिता इति ते सर्वे सौकर्येण तयोर्ग्रन्थयोर्द्रष्टुं शक्यन्ते।

'सुभगोदये सुभगोदयवासनायां सुभगोदयप्रभायां च सप्ततिसंख्यामिताः श्लोकाः सन्तीति स्वयमेव ग्रन्थकारो वदति। महेश्वरानन्दोऽपि महार्थमञ्जर्यां सप्ततिसंख्यामिताः

---

१. "अष्टकैः षड्भिः" इति श्वेताश्वतरवचनव्याख्याने तदेतद् भगवत्पादैरुक्तम्। षडष्टकमेतदष्टाचत्वारिंशत्संस्कारमुखेन दीक्षाप्रकरणेषु शैवागमीयेषु व्याख्यायते। त इमेऽष्टाचत्वारिंशत्संस्कारा अभिनवगुप्तकृते तन्त्रसारे टिप्पण्याम् (पृ० १४८-१५४) मृगेन्द्रागमे (क्रिया० ८।१५९-१६१) तद्वृत्तौ च पारमेश्वरादिप्रामाण्येन, स्वच्छन्दे (१०।३८६-४१२), मतङ्गपारमेश्वरे (क्रिया० ७।२६-३०) तद्वृत्तौ च यज्ञसूत्रप्रामाण्येन सुविशदं व्याख्याताः। अष्टकानां षट्कं तु नास्त्यत्रेति केवलं संख्यापरकतयोपनिषद्वचनं संगमनीयम्। श्वेताश्वतरवचनेनानेन वैदिकवाङ्मयेऽष्टाचत्वारिंशत्संस्काराणां स्थितिरन्वेषणीया। स्वच्छन्दोद्योते मतङ्गपारमेश्वरवृत्तौ च स्मृतं यज्ञसूत्रं वैदिकवाङ्मयस्यैव ग्रन्थः प्रतीयते।

कारिका अनुबध्नाति। शिवानन्दमहेश्वरानन्दयोरस्यां संख्यायामभिनिवेशः किंमूलक इति विचार्यम्" (पृ० २०) इत्यस्माभिरुपोद्घाते प्रोक्तम्। प्रो० ए०एन० उपाध्येमहोदयेन स्वकीये "डॉ० एस० के० बेलवल्कर फेलिसिटेशन वाल्यूम" इत्यत्र (पृ० १९३) प्रकाशिते "प्राकृत लेंगवेजेज एण्ड काश्मीर शैविज्म" इत्याख्ये निबन्धे स एव विषयो विचारित इति डॉ० नवजीवनरस्तोगीरचिते "क्रम तान्त्रिसिज्म०" इत्याख्ये ग्रन्थे (पृ० २१८) धृतया टिप्पण्या ज्ञायते।

"षडङ्गयोगप्रतिपादकेषु ग्रन्थेषु यमनियमासनरूपाणि त्रीण्यङ्गानि न दृश्यन्ते। ....आसनाख्यो योगाङ्गस्तन्त्रेषु किमर्थं परित्यक्त इति विचारणीयोऽयं विषयः" (पृ० ११८) इत्युपोद्घातेऽस्माभिः प्रश्न उपस्थापितः। अयमेव प्रश्नो[1] म० म० पी० वी० काणेमहोदयैरपि पृच्छ्यते। स चैवं समाधातुं शक्यते—तन्त्रागमोपदिष्टेषु समयेषु यमानां नियमानां च, पूजावसरे समुपदिष्टेषु षडासनादिषु चासनाख्यस्य योगाङ्गस्य समावेशो जायत इति।

"शिखण्डचण्डरसन्यायः शिबिकाख्यो द्वितीयकः" (पृ० ३७) इत्यर्थंरत्नावल्यां दृश्यते। तथैवास्माभिस्तस्य संगतिस्तत्र टिप्पण्यां प्रदर्शिता। उपोद्घाते (पृ० ६६) च वातूलनाथसूत्रवृत्तौ (पृ० १६) मध्यमायां वाचि शिम्बिकाफलन्यायो न्ययोजीत्युक्तम्। शिम्बिकाबीजदृष्टान्तः शिवस्तोत्रावलीविवृतौ क्षेमराजेनापि स्मर्यते। एवं च पूर्वोक्ते श्लोके 'शिबिका' इत्यस्य स्थाने 'शिम्बिका' इति पाठेनैव भाव्यम्।

"कालमृत्युयमादयः" (२।५६) इति, "कालमृत्युयमादिभिः" (५।३३) इति चात्र दृश्यते। अत्र शिवानन्द ऋजुविमर्शिनीकारः—"कालोऽवच्छेदकः, मृत्युर्मारयिता, यम उपरमयिता" (पृ० २७३) इति व्याख्याय "कालो मृत्युर्यमो व्याधिस्तत्त्वतस्त्वेक एव तु" इत्यादिकं श्लोकद्वयं समुद्धरति। "कालमृत्युयमास्तु देवताविशेषरूपत्वाद् भिन्ना एव" (५।३४) इति च भास्कररायः। स्कन्दपुराणे (१।२।५५।८८) यमान्तकौ स्मर्येते। "मृत्युकालान्तकादीनां मध्ये पश्यति वै यमम्" (१०।५२) इति मार्कण्डेयपुराणवचने च मृत्युकालान्तकयमाः स्मर्यन्ते। शब्दानामेषां विशिष्टं विवरणं पुराणागमादिष्वन्वेषणीयम्। स्वच्छन्दोद्योतकारेण (९।५९) तु—

एकोत्तरं मृत्युशतमस्मिन् देहे प्रतिष्ठितम्।
तत्रैकः कालमृत्युः स्याच्छेषास्त्वागन्तवः स्मृताः॥

इति श्लोकमुद्धरता कालमृत्युशब्दस्यैकत्वमङ्गीक्रियते।

डॉ० तून-गान्द्रियानमहोदयेन "हिन्दू तान्त्रिक लिटरेचर इन संस्कृत" इत्याख्ये ग्रन्थे श्रीकुलविभागे (पृ० ५८-७४) त्रैपुराणां तन्त्राणां परिचयः प्रदत्त इति

---

१. द्रष्टव्यम् - "धर्मशास्त्र का इतिहास" इति ग्रन्थस्य हिन्दीसंस्करणम्, लखनऊ, भा. ५, अ. २६, पृ. २१-३०।

तेषां प्रयासोऽयमतीव प्रशंसार्हः। डॉ० कान्तिचन्द्रपाण्डेयमहोदयैरपि "अभिनवगुप्त०" इत्याख्ये ग्रन्थे कौलतन्त्रविभागे (पृ० ५६५-५९०) ज्ञानार्णवादित्रैपुरतन्त्राणां केषाञ्चन ग्रन्थकर्तॄणां च परिचयः प्रदत्तः। साम्प्रतं तत्र कानिचन संशोधनानि परिवर्धनानि चापेक्षितानि। तानि च दीपिकासहितस्य योगिनीहृदयस्य हिन्दीभाषानुवादसहितस्य सज्जीक्रियमाणस्य संस्करणस्य उपोद्घाते समावेशयिष्यन्त इत्यधुना एतावदेवोक्त्वा विरम्यते ॥

मौनी अमावस्या, संवत् २०४१
२१-१-८५ ई०
वाराणसी।

विदुषां वशंवदः
**व्रजवल्लभद्विवेदः शास्त्रचूडामण्याचार्यः**
सं० सं० वि० वि०, वाराणसी।

---

प्रथमसंस्करणस्य

# प्रास्ताविकम्

अथ व्याख्याद्वयोपेतं नित्याषोडशिकार्णवाख्यतन्त्रमेतत् तान्त्रिकपूजारहस्य-जिज्ञासूनां भृशमुपकाराय प्रकाशयन् वाराणसेयसंस्कृतविश्वविद्यालयोऽयं कमपि महिमानमाधत्ते। शिवानन्देन रचिता 'ऋजुविमर्शिनी', विद्यानन्देन च निर्मिता 'अर्थरत्नावली' मूलस्थतान्त्रिकनिगूढार्थावगतये नूनं प्रमाणभूते विराजेते। एताभ्यां समन्वितस्य प्रख्यातस्य तन्त्रस्यैतस्यैष प्रकाशनावतारः प्रथमः कस्य विपश्चितः प्रमोदाय न कल्पेत। परिशिष्टभागे षण्णां लघुग्रन्थानां प्रकाशनमपि नितान्तमौचित्यं भजते। तत्र श्रीदीपकनाथसिद्धविरचितम् (१) त्रिपुरसुन्दरीदण्डकम्; शिवानन्दमुनिविरचितानि (२) सुभगोदयः, (३) सुभगोदयवासना, (४) सौभाग्यहृदयस्तोत्रं चेति त्रीणि पूजादि-परिपोषकाणि ग्रन्थरत्नानि; अमृतानन्दयोगिविरचितौ (५) सौभाग्यसुधोदयः, (६) चिद्विलासस्तवश्चेति लघुग्रन्थषट्कस्य प्रकाशनेनास्य संस्करणस्य माहात्म्यं समधिकमुपबृंहितमित्यत्र न बहु चोदनीयं वर्तते। गुणोत्कर्षमीमांसापटवः पण्डिताः, विशेषतस्तन्त्रागमरहस्यकोविदाः, नानादेशेभ्यो हस्तलेखान् संगृह्य वैज्ञानिकरीत्या संशोध्य समीक्षणात्मकं संस्करणमेतत् पुरस्कुर्वतां सम्पादकमहाभागानां भृशमुपकारतति-मावहन्तीति ध्रुवं जागर्ति मदीयो विश्वासः। तन्त्रशास्त्रीयमैतिहासिकं सकलं दार्शनिकं च तथ्यजातमेकत्र संगृह्य निपुणं विविच्य च भृशमुपकृता विद्वांसः श्रीव्रजवल्लभद्विवेदमहाभागैरिति हेतोस्तेषामुपकारततिं कैरपि स्वल्पैः शब्दैरत्र प्रकाशयामः।

नित्याषोडशिकार्णवे तावद् विराजन्ते पञ्च पटलाः, येषु भगवत्यास्त्रिपुरसुन्दर्याः पूजा, प्रयोगः, मुद्रा, विद्याव्याप्तिः, जपस्तुतिश्च विवेचिता वर्तन्ते। भारतीयेयं संस्कृति-र्निगमागममूलिकैव विराजत इत्यत्र न किमपि चोदनीयं भवेत्। तत्र निगमो वेदः, आगमश्च तन्त्रमिति। समग्रेऽस्मिन् भारते वर्षे तन्त्राणामाधिपत्यं विद्यते। तत्र गौडपद्धतिः, काश्मीरपद्धतिः, केरलपद्धतिश्च मूलदार्शनिकसिद्धान्तेषु किमपि वैशिष्ट्यं विवृणोति पद्धतित्रयमेतत्। गौडानां तान्त्रिकः सम्प्रदायोऽन्यादृक्। काश्मीरकेरलयोः परस्परं विचाराणामादानप्रदानं ध्रुवं सम्भाव्यते। काश्मीरसिद्धान्तानां केरलदेशे बहुलोपलम्भात् तथ्यमिदं साक्षात्कृत पार्यते तज्ज्ञैः। परन्तु केरलीयसम्प्रदायोऽपि स्ववैशिष्ट्येन काश्मीरतान्त्रिकमतमप्युपकृतवानिति नासम्भावनापदवीमाटीकते कथनमेतत्। अस्य ग्रन्थरत्नस्य प्रकाशितयोर्व्याख्ययोर्गाढानुशीलनमेतस्मिन् विषये विप्रमाणान्युपन्यसितुं क्षमत इति नात्र किञ्चन द्वापरत्वम्।

अस्य ग्रन्थस्य सम्पादकवर्यो व्रजवल्लभद्विवेदो महता परिश्रमेण नानापुस्तकालयेभ्यो हस्तलेखान् संगृह्य तेषां च साहाय्येन ग्रन्थान् परिशोध्य समीक्षणात्मकं संस्करणमेतत् प्रस्तुतमकार्षीदिति तस्य परिश्रमस्य परिशोधनस्य च विषये के न प्रमोदन्ते विपश्चितः। तेन विरचिता निगूढार्थप्रकाशिनी प्रस्तावना न केवलमैतिहासिकं तथ्यं समुन्मिषति, प्रत्युत तान्त्रिकपूजाप्रचयसंवलितं दार्शनिकं सिद्धान्तमप्याविष्करोति। तत्र सर्वेऽपि विषयास्तर्कपाटवेन युक्तिनैपुण्येन च विवेचिताः परीक्षिताश्च तन्त्रतत्त्वसमुन्मेषचणानां पण्डितानां भृशमुपकाराय भवन्तीति निश्चप्रचमेव। शिवानन्दस्य विद्यानन्दस्य चैतिहासिकं विवरणं साधूपन्यस्यति समीक्षकः, तान्त्रिकविषयाणां च विवेचने तन्त्राणां शाखा-प्रशाखाकथनम्, मातृकास्वरूपविमर्शः, मन्त्रस्वरूपविमर्शः, मुद्रायाः पीठस्य च स्वरूपविमर्शः सम्पादकेन निपुणं व्यधायि। त्रिपुरादर्शनं नाम शाक्ताभिमतं षोडशिकापूजननिबन्धनं नानागूढतथ्योपबृंहितं विराजते दर्शनरत्नम्। तत्रत्या चक्रमयी सृष्टिः, जपध्यानयोगादयः प्रमाणोपन्यासपुरःसरा वर्णिता विवेचितास्तुलनात्मकदृष्ट्या च समीक्षिता विषयाः पण्डितानां दृष्टिपथं नूनमावर्जयन्ति। तान्त्रिकाणां मानसोल्लासाय श्रीव्रजवल्लभद्विवेदमहाभागैर्विरचितेयं प्रस्तावना नूनं कल्पिष्यते इति ध्रुवं विश्वसिमि। योगतन्त्रविभागस्याङ्गभूतमिदं प्रमाणमण्डितं प्रकाशनं महामहोपाध्याय-श्रीगोपीनाथकविराजमहाभागानामाशीर्वचनैरपि स्वजनुषः साफल्यं विधत्त इति शम्।

वाराणसेयसंस्कृतविश्वविद्यालयः,
वाराणसी
आश्विनकृष्णाष्टमी, सं० २०२५
दि० १५-९-६८

**बलदेव उपाध्यायः**
सञ्चालकः
**अनुसन्धानसंस्थानस्य**

## FOREWORD TO THE FIRST EDITION

The present edition of Nityā Ṣoḍaśikārṇava Tantra with two Commentaries, viz. Ṛju Vimarśini by Sivānanda and Artha Ratnāvali by Śrī Vidyānanda was undertaken a few years ago and is now published in the following pages on behalf of the Yoga-Tantra Department of the Varanaseya Sanskrit University. It is well known to the students of Śākta Culture that the work is a standard treatise on Śri Vidyā and is familiar to the Śākta School under different names, viz. Chatuḥśatī, Vāmakeśvara Tantra, etc. The work consists of five chapters (Paṭalas) dealing with the Pūjā, Prayoga, Mudrā, Vidyā-Vyāpti and Japastuti of the Deity. The intrinsic value of this highly important work has been greatly increased by the publication in the appendices (i) of a small poem entitled Tripura Sundari Daṇḍaka by Dīpakanātha Siddha, (ii-iv) of 3 small works by Śivānanda, viz. Subhagodaya, its commentary and Saubhāgya hṛdaya Stotra as well as (v-vi) of two small works by Amritānanda Yogi, viz. Saubhāgya Sudhodaya and Chidvilāsa.

It is well known that in the esoteric culture of the Śāktas, which is usually hidden from both popular and philosophical scholarship, there are many subtle points which are usually obscure and represent differences in outlook among Āgamic scholars. It is well known that Bhāskara Rāya and others in comparatively recent times expounded in different ways many secret doctrines of which the traditional view-point is supposed to be maintained by the earlier scholars of the South. It is very likely that the traditional standpoint, as far as it was maintained by the earlier southern scholars, might be partially discovered in the teachings of Śivānanda, Puṇyānanda and Amṛtānanda, all belonging to the early mediaeval age and hailing from Kerala and the neighbouring countries. The three cultural lines of Gauḍa, Kashmira and Kerala are familiar to students of the history of Agamic lore. Though the South Indian line was powerfully influenced by Kashmira, it is presumed that it had its natural reaction on the Kashmira school. When a descriptive history of the Saṃvit Krama comes to be written, much obscure ground will become clear.

The Tantric studies of the present day are generally confined to the conventional details of outer worship, of course supported by the old traditions undoubtedly, but it does not generally represent the more or less hidden side of the esoteric culture.

The editor of the present work, who has had my blessings and support throughout his literary career, has tried his best to make the edition as useful as he could, not only to the readers of this particular text but also to a serious Tantra student from every possible point of view. He has utilised all available Mss. on the text and commentaries, has tried to afford a fairly complete knowledge of the valuable works utilised by the two commentators. This means a long continued intelligent labour in widely varied areas.

The topics raised or referred to in the text or commentaries have been brought together under suitable heads and much useful light has been thrown on them. The Introduction is specially valuable for the bibliography of the allied Tantric literature during the period. An interesting expository note on the 64 Tantras has been furnished, in which the well known three fold classification has been mentioned, viz. the list furnished by the Śrī Kaṇṭha Saṃhitā, the list in Nityā Ṣoḍaśikārṇava (or Kūlacūdāmaṇi) and the list in the Sarvollāsa Tantra. The last classification is not really based on the authority of the Sarvollāsa but on that of the Toḍala Tantra as quoted in the Sarvollāsa.

The Introduction has interesting notes on some important topics e. g. the essential nature of Mātrikā, Mantra, Mudrā, Pītha, Chakra, two fold Krama and the Upāsanā of Tripura Sundari.

The Introduction is a highly interesting piece of original research work in a field hardly accessible to modern academical scholarship. It is a fairly detailed history of the Tripurā worship in some of its aspects, as preserved through transmission from master to pupil and arranged in a historical and critical perspective. In view of the importance of the work it seems to me that it deserves to be translated into Hindi and given a wider publicity.

7-9-68<br>
2/A, Sigra, Varanasi

**Gopinath Kaviraj**

# उपोद्घातः

नित्याषोडशिकार्णवं व्याख्याद्वयोपेतं तन्त्रशास्त्रानुशीलनरुचीनां मनीषिणां समक्षं समुपस्थापयतामस्माकं परमं प्रसीदति चेतः। इतः पञ्चवर्षेभ्यः पूर्वं वाराणसेयसंस्कृतविश्वविद्यालयतः प्रकाशितस्य दीपिकासेतुबन्धसहितस्य योगिनीहृदयस्य द्वितीयसंस्करणमुद्रणावसरे प्रकाशनविभागस्थैरस्माभिः पूर्वंचतुश्शतीसेतुबन्धे शिवानन्दविद्यानन्दयोस्तत्प्रणीतयोर्ऋजुविमर्शिन्यर्थरत्नावल्योश्च भूयोभूयः समुल्लेखः समवालोकि। ततः सरस्वतीभवनपुस्तकालयस्थासु तन्त्रशास्त्रमातृकासु नाथानन्दान्तानां गुरूणां कृतीरनुसन्दधद्भिरस्माभिरधिगता ऋजुविमर्शिनीग्रन्थस्यापूर्णा मातृका। तदानीन्तनानामनुसन्धानसंचालकानां परमश्रद्धास्पदानां श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायमहानुभावानां निदेशमनुसृत्य दीपिकासेतुबन्धोद्धृतवचनानां स्थलसंवादाय विविधतन्त्रशास्त्रग्रन्थावलोकने प्रवृत्तैरस्माभिर्महार्थमञ्जरीपरिमलत ऋजुविमर्शिनी महेश्वरानन्दस्य परमगुरोः कृतिरिति परिज्ञातम्। तस्मिन्नेव प्रसङ्गे गायकवाड़शोधसंस्थानसूचीषु कलकत्तासंस्कृतमहाविद्यालयसूचीषु चार्थरत्नावल्यधिगता, मद्रासराजकीयपुस्तकालयसूचीषु च व्याख्याद्वयमपि। विज्ञापितमेतत्सर्वं प्रातःस्मरणीयानां महामहोपाध्यायाद्यनेकविरुदालङ्कृतानामागमिकदर्शनोद्धारगृहीतदीक्षाणां गुरुवर्याणां पण्डितश्रीगोपीनाथकविराजमहोदयानां चरणकमलयोः, तेषामनुज्ञया चास्य सम्पादनं प्रारब्धम्।

योगिनीहृदयस्यानुप्रास्ताविकेऽस्माभिश्चिद्विलाससौभाग्यसुधोदयादिग्रन्थविषये किमप्युक्तम्। ततो विभिन्नाभ्यः संस्थाभ्य एतयोर्मातृकाणां प्रतिलिपिरस्माभिरासादिता। तदवलोकनेन सौभाग्यसुधोदयो योगिनीहृदयदीपिकोद्धृतामृतानन्दकृतसौभाग्यसुभगोदयादभिन्न इति विज्ञातम्। चिद्विलासकृतित्वविषयको विशयस्तावदवस्थित एवासीत्। तदपनोदनाय, तासु तासु संस्थासु संगृहीतानां मातृकाणां परिचयापादनाय, विद्वद्भिः सह तद्विषयकानुसन्धानसंवादाय च यात्रायां प्रवृत्तैरस्माभिर्गायकवाड़शोधसंस्थायां वामकेश्वरतन्त्रस्य ज्ञानदीपविमर्शिन्याश्च प्राचीनतमा मातृकाऽधिगता, पुण्यपत्तने स्थितायामितिहाससंशोधनमण्डलसंस्थायां शिवानन्दस्य सौभाग्यहृदयमुपलब्धम्, जयपुरयात्रायां च ब्रह्मपुर्यां निवसतां पण्डितहरिदत्तशर्ममहोदयानां गृहेऽपि चिदानन्दरचितायां स्वच्छन्दपद्धत्यां सौभाग्यहृदयमदृश्यत। वाराणसेयसंस्कृतविश्वविद्यालयाधिकारिणामनुग्रहेण सर्वासां तासां मातृकाणां प्रतिलिपयो मातृका वाऽऽसादिताः, यासां परिचयोऽत्र मातृकाविवरणे प्रदत्तः।

अर्थरत्नावल्यां स्थलद्वये दीपकाचार्यविरचितं त्रिपुरसुन्दरीदण्डकं स्मर्यते। भगवत्यास्त्रिपुरसुन्दर्या अनुग्रहेण तदासादितमस्माभिः केरलविश्वविद्यालयपुस्तकालयतः

प्रेषितायां ज्ञानदीपविमर्शिनीमातृकाप्रतिलिप्याम् । शिवानन्दस्य सुभगोदयः, सुभगोदयवासना, सौभाग्यहृदयस्तोत्रं च सम्प्रदायविद्भिर्बहुशः स्मर्यन्ते, तथैवामृतानन्दस्य सौभाग्यसुधोदयश्चिद्विलासस्तवश्च । अतोऽत्र षडिमे ग्रन्थाः परिशिष्टांशे नियोजिताः । मन्येऽनेन विधानेन परितोषः स्यादागमिकदर्शनजिज्ञासूनां विदुषाम् । सर्वप्रथममत्र ग्रन्थसम्पादने प्रयुक्तानां मातृकाणां परिचयः समुपस्थाप्यते, ग्रन्थसंपादनशैली च प्रदश्यंते ।

## संस्करणे उपयुक्तानां मातृकाणां परिचयः

**नित्याषोडशिकार्णवः**

वा.—वामकेश्वरीमतविवरणं जयरथकृतं नित्याषोडशिकार्णवव्याख्यानम्, कश्मीरग्रन्थमालायां प्रकाशितम् । मातृकात्रयाधारेणैतत्संस्करणं सज्जीकृतम् । आसां मातृकाणां मूलग्रन्थस्य पाठा अत्र वाक. ख. ग. इति संकेतेन संगृहीताः ।

से.—सेतुबन्धाख्यं भास्कररायकृतं नित्याषोडशिकार्णवव्याख्यानम्, आनन्दाश्रमग्रन्थमालायां प्रकाशितम् । अत्रत्यो मूलग्रन्थपाठः से. इति संकेतेन संगृहीतः ।

ऋ.—ऋजुविमर्शिनीस्थः पाठोऽनेन संकेतेन सूच्यते ।

अ.—अर्थरत्नावलीस्थः पाठोऽनेन सूच्यते ।

ब.—बड़ोदानगरस्थगायकवाड़शोधसंस्थानस्य मातृका, १०४३० संख्याका, १० पत्रात्मिका, संपूर्णा, १५९३ विक्रमसंवत्सरे लिखिता, वामकेश्वरतन्त्रमिति नाम धारयन्ती सूच्यतेऽनेन संकेतेन । लिपिरत्र देवनागरी ।

सक.—सरस्वतीभवनस्था २४०१० संख्याका, १–१९ पत्रात्मिका, संपूर्णा, १७७७ विक्रमसंवत्सरे लिखिता ।

सख.—सरस्वतीभवनस्था २४०११ संख्याका, १–१७ पत्रात्मिका, संपूर्णा ।

सग.—सरस्वतीभवनस्था २४६६२ संख्याका, ३–९ पत्रात्मिका, अपूर्णा ।

सघ.—सरस्वतीभवनस्था २५४८३ संख्याका, २–१७ पत्रात्मिका, अपूर्णा ।

**ऋजुविमर्शिनी**

क.—सरस्वतीभवनस्था २४८१७, संख्याका मातृका, १-२८ पत्रात्मिका, देवनागरीलिपिमयी, अपूर्णा ।

ख.—मद्रासराजकीयपुस्तकालयस्था D ५६२३ संख्याका, ६६ पत्रात्मिका, तेलुगुलिपिमयी, संपूर्णा । अस्याः सरस्वतीभवनस्था प्रतिलिपिः ८२६०६ संख्याका । अत्र प्रमाणवचनानि प्रायः परित्यक्तानि ।

ग.—मद्रासराजकीयपुस्तकालयस्था R ४४४३ संख्याका, ५८ पत्रात्मिका, ग्रन्थलिपिमयी संपूर्णा । अस्याः सरस्वतीभवनस्था प्रतिलिपिः १००११० संख्याका । अत्र मातृकान्तरेभ्योऽधिकाः पाठा विद्यन्ते ।

घ.—त्रिवेन्द्रंस्थितकेरलविश्वविद्यालयस्था C ६९० संख्याका, ३२ पत्रात्मिका, मलयालमलिपिमयी, संपूर्णाऽपि मध्ये मध्ये खण्डिता। अस्याः सरस्वतीभवनस्था प्रतिलिपिः १००१०९ संख्याका।

ङ.—मद्रासराजकीयपुस्तकालयस्था D ५६२२ संख्याका, ३८ पत्रात्मिका, तेलुगुलिपिमयी, संपूर्णा। अस्याः सरस्वतीभवनस्था प्रतिलिपिः १०३९५६ संख्याका। प्राय एषा खमातृकामनुसरति।

**अर्थरत्नावली**

क.—गायकवाड़शोधसंस्थानस्था ३४४३ संख्याका, १–४०, ४२–८४ पत्रात्मिका, मध्ये खण्डिता मातृका। लिपिरत्र देवनागरी। लिपिकालः—संवत् १६२३।

ख.—मद्रासराजकीयपुस्तकालयस्था D ५६१९ संख्याका, ८५ पत्रात्मिका, सम्पूर्णा, तेलुगुलिपिमयी। अस्याः सरस्वतीभवनस्था प्रतिलिपिः ८२६०५ संख्याका।

ग —कलकत्तासंस्कृतमहाविद्यालयस्था, तन्त्रविभागे २० संख्याका, ३६पत्रात्मिका, सम्पूर्णा, देवनागरीलिपिलिखिता। स्थलेस्थलेऽत्र कमातृकानुसारी पाठः संक्षिप्य स्थापितः।

घ. - केरलविश्वविद्यालयस्था C ७२८ b संख्याका, १०४१ b संख्यायां विवृता, ४३ पत्रात्मिका, मलयालमलिपिमयी, अपूर्णा मध्ये मध्ये खण्डिता च। अस्याः सरस्वतीभवनस्था प्रतिलिपिः १००१०७ संख्याका।

ङ.— मद्रासराजकीयपुस्तकालयस्था R ५६२० संख्याका, ४७ पत्रात्मिका, संपूर्णा, तेलुगुलिपिलिखिता। सरस्वतीभवनस्थाऽस्याः प्रतिलिपिः १००८१६ संख्याका। मध्ये मध्ये च्युताक्षरैषा मातृका।

च.—मद्रासराजकीयपुस्तकालयस्था R १५१७ r संख्याका, १७२–१८० पत्रात्मिका, अपूर्णा, ग्रन्थलिपिमयी। सरस्वतीभवनस्थाऽस्याः प्रतिलिपिः १०१३६८ संख्याका।

छ.—जोधपुरीयराजस्थानपुरातत्त्वमन्दिरस्था १६५० संख्याका, ७८ पत्रात्मिका, संपूर्णा, देवनागरीलिपिलिखिता। अस्याः सरस्वतीभवनस्था प्रतिलिपिः १०२१९२ संख्याका।

ज.—मद्रासराजकीयपुस्तकालयस्था D ५६२१ संख्याका, १०७ पत्रात्मिका, अपूर्णा, तेलुगुलिपिमयी। अस्याः सरस्वतीभवनस्था प्रतिलिपिः १०२१३० संख्याका।

**त्रिपुरसुन्दरीदण्डकम्**

न कापि स्वतन्त्रा मातृकाऽस्य दण्डकस्यास्माभिरुपलब्धा। विद्यानन्दकृतेर्ज्ञानदीपविमर्शिन्याः केरलविश्वविद्यालयमातृकायां स्तोत्रपद्धतौ लिखितमविकलमेतद्दण्डकं दृक्पथमायातमस्माकम्। तत्साहाय्येनैवास्य संस्करणं सज्जीकृतम्। तस्याः संख्या C. १२७८ b इति वर्तते। ५३ पत्रात्मिका मलयालमलिपिलिखिता सा ९१२ b संख्यया तत्रत्यायां

सूच्यां विवृता । अस्याः सरस्वतीभवनस्था प्रतिलि पः १०३९४३ संख्याका । अत्र ८९-९५ पृष्ठेष्वेतद्दण्डकं दृश्यते ।

**सुभगोदयः**

क.—मद्रासराजकीयपुस्तकालयस्था R ४४४४ a संख्याका, १५ पत्रात्मिका, संपूर्णा, ग्रन्थलिपिलिखिता सुभगोदयवासनानामधेया । अस्याः सरस्वतीभवनस्था प्रतिलिपिः ८२०९५ संख्याका ।

ख.—केरलविश्वविद्यालयस्था C ६९० b संख्याका, पत्रत्रयात्मिका, संपूर्णा मलयालमलिपिमयी । अस्याः सरस्वतीभवनस्था प्रतिलिपिः १०३९४२ संख्याका ।

**सुभगोदयवासना**

क.—एकैव मातृका मद्रासराजकीयपुस्तकालयस्था R.४४४४ a संख्याका विवृतोपरि । अत्र सुभगोदयानन्तरं सुभगोदयवासना लिखिता । केरलविश्वविद्यालयमातृकायां तु सुभगोदयमात्रं दृश्यते । योगिनीहृदयदीपिकायां कामकलाविलासटीकायां चिद्वल्ल्यां महार्थमञ्जरीपरिमले चोद्धृतानामंशानामाधारेण ग्रन्थ एष शोधितः पूरितश्च । महार्थमञ्जरीपरिमले ( पृ० ११५, ११७ ) क्रमवासनासमाख्यया ग्रन्थ एष स्मृतः ।

**सौभाग्यहृदयस्तोत्रम्**

क.—पुण्यपत्तनस्थ-इतिहाससंशोधनमण्डलस्था ५८।४७ संख्याका, पत्रद्वयात्मिका, सम्पूर्णा, देवनागरीलिपिलिखिता ।

ख.—चिदानन्दविरचितायां स्वच्छन्दपद्धत्यामुद्धृतं सौभाग्यहृदयस्तोत्रम् । पाठभेदो जयपुरनगरे ब्रह्मपुर्यां निवसतां श्रीहरिदत्तशुक्लमहोदयानां मातृकया संगृहीतः ।

ग.—विद्यानन्दविरचिताया ज्ञानदीपविमर्शिन्याः केरलविश्वविद्यालयस्थमातृकायां त्रिपुरसुन्दरीदण्डकानन्तरं सौभाग्यहृदयस्तोत्रमपि सम्पूर्णमुद्धृतं वर्तते । अस्या मातृकायाः परिचयस्त्रिपुरसुन्दरीदण्डके उपस्थापितः ।

**सौभाग्यसुधोदयः**

क.—मद्रासनगरस्थ-अड्यारपुस्तकालयमातृका ६६५२६ संख्याका, २२ पत्रात्मिका, आन्ध्रलिपिमयी, अपूर्णा ।

ख.—मद्रासनगरस्थ-अड्यारपुस्तकालयमातृका ६६५२५ संख्याका, १२ पत्रात्मिका, आन्ध्रलिपिमयी, अपूर्णा ।

ग.—केरलविश्वविद्यालयमातृका C १८८१ i संख्याका, १११७ i संख्यया विवृता, ११ पत्रात्मिका, मलयालमलिपिलिखिता ।

**चिद्विलासस्तवः**

क.—सरस्वतीभवनस्था २३४६२ संख्याका, १-३ पत्रात्मिका, देवनागराक्षरा, संपूर्णा ।

ख.—सरस्वतीभवनस्था २१९२० संख्याका, १९ पत्रात्मिका, देवनागराक्षरा, संपूर्णा।

ग —'श्रीकृष्णमुद्रणालय, होसपेठ' इत्यतः १९२६ ई० वर्षे कन्नड़लिपिमुद्रितं पुस्तकम्। ग्रन्थकारोऽत्रामृतानन्द इति निरटङ्कि।

घ.—गायकवाड़शोधसंस्थानमातृका ९९८२ संख्याका, ५ पत्रात्मिका, देवनागराक्षरा, सम्पूर्णा। १९१४ वैक्रमे वर्षे काश्यां दुर्गाकुण्डसमीपे लिखिता। अत्र पुण्यानन्दः स्तवकर्तृत्वेन निर्दशितः।

ङ.—तंजोरनगरस्थसरस्वतीमहलपुस्तकालयमातृका ८१७८ संख्याका, ९३८७ b संख्यया विवृता, २ ( ८–९ ) पत्रात्मिका, तेलुगुलिपिमयी, सम्पूर्णा।

च.—तंजोरस्थसरस्वतीमहलपुस्तकालयमातृका ८१९७ संख्याका, १२१७४ b संख्यया विवृता, २ ( १२-१३ ) पत्रात्मिका, तेलुगुलिपिमयी, सम्पूर्णा।

छ.—श्रीरङ्गनगरस्थवाणीविलासमुद्रणालयमुद्रितं पुस्तकम्।

ज.—सरस्वतीभवनस्था २६००५ संख्याका, २३ पत्रात्मिका, देवनागरलिपिलिखिता। मातृका यद्यप्यपूर्णा, तथाप्येष स्तवस्तत्र सम्पूर्णं उपलभ्यते।

अत्रत्यासु क. ख. ज. मातृकासु सरस्वतीभवनस्थासु चिद्विलासस्तवेन साकमन्येऽपि ग्रन्थाः सन्ति लिखिताः।

## ग्रन्थसम्पादनशैली

सरस्वतीभवनग्रन्थमालायां प्रकाशितस्य तन्त्ररत्नस्य सम्पादने श्रीमद्भिः परमादरणीयचरणैः श्रीरामचन्द्रदीक्षितमहोदयैः समाश्रिता ग्रन्थसम्पादनशैली प्रायोऽत्रानुसृता। सन्दिग्धानि प्रायः सर्वाणि स्थलानि संशोध्यैवात्र स्थापितानि। मातृकासूपलब्धः सन्दिग्धः पाठः प्रश्नचिह्नेनाङ्कयित्वा संशोध्य कोष्ठके स्थापितः। यत्र संशोधने नापारि, तत्र प्रश्नचिह्नेनाङ्कयित्वा यथावदेव परित्यक्तः। उद्धरणानां स्थलनिर्देशे यथामत्यायस्तम्, मूलस्थलपरिशुद्धाः पाठाश्चात्र मूले स्थापिताः, मूलस्थलेषूपलब्धाः पाठभेदास्तु टिप्पणीषु संनिवेशिताः। पाठसंकलनात्मिका टिप्पणी देवनागराङ्कैः, विषयात्मिका च आङ्गलाङ्कैरङ्किता ऊर्ध्वाधरभावेन न्यवेशि।

नित्याषोडशिकार्णवे ऋजुविमर्शिन्यामुपलब्धः पाठ एव मूले स्थापितः, तत्रानुपलब्धः पाठस्तु वामकेश्वरीमतविवरणीयो न्ययोजि। ऋजुविमर्शिन्या गमातृकायां मातृकान्तरेभ्योऽधिकाः पाठा विद्यन्ते, ते च पाठा अत्र टिप्पणीषु संनिवेशिताः। अर्थरत्नावलीपाठे विधिद्वयमवलोक्यते—ख. ङ. च. ज. संज्ञकानां मद्रासमातृकाणामेकः प्रकारः, शिष्टानां चान्यः। अनयोः साधारणः पाठभेदष्टिप्पणीष्वेव न्ययोजि, नितान्तं भिन्नः पाठान्तरस्तु भिन्नाक्षरेषु मुद्रितः। द्वादशश्लोक्यां ( पृ० १४-१९ ) चतुर्थपञ्चमपटलयोश्च ( पृ० १९३-२७४) स द्रष्टव्यः। सौभाग्यसुधोदयस्य अड्यारपुस्तकालयमातृकयोः पाठो नितान्तं त्रुटितो विद्यते। केरलमातृकाया योगिनीहृदयदीपिकाधृततद्वचनानां च साहाय्येन पाठपूर्तिरत्राकारि। सौभाग्यभास्कर-सेतुबन्ध-वरिवस्यारहस्यप्रकाशप्रभृतिभिर्भास्कर-

रायग्रन्थैरपि पाठपूर्तिसंशोधनादिषु बहूपकृतम् । मातृकासु मध्ये मध्ये त्रुटितः पाठो नात्र प्रदर्शितः, द्विरावृत्तिकः पाठोऽपि च नैव संकलितः । अत्र संस्करणे उपयुक्ताः काश्चन मातृका अपूर्णाः सन्ति । यत्रैता अवसितास्तत्र टिप्पणीषु तत्प्रदर्शितम् ।

चिद्विलासस्तवे श्लोकानां संनिवेशे छसंज्ञकवाणीविलासमुद्रणालयमुद्रितपुस्तकक्रम एव मुख्यत्वेनादृतः । तं हि क्रमं सरस्वतीभवनपुस्तकालयस्थाः क. ख. ज. संज्ञका मातृकाः, बटोदरस्था घ. संज्ञका मातृका चानुसरन्ति । इयांस्तु विशेषः—योगिनीहृदय-दीपिकायां चिद्वल्ल्यां च समुद्धृतौ तंजोरस्थ-ङ. च.-मातृकयोः सप्तमैकादशसंख्याङ्कितौ, गसंज्ञके सव्याख्यकन्नडलिपिमुद्रिते पुस्तके च एकादशदशसंख्याङ्कितौ श्लोकावत्र मूले स्थापितौ तंजोरमातृकाक्रमानुसारम् । तेन मूलस्तवश्चत्वारिंशच्छ्लोकात्मकः संपद्यते । श्लोकयोरनयोरभावेन चतुर्षु पुस्तकेषु ३८ श्लोकाः सन्ति । घमातृकायां द्वात्रिंशत्तमः श्लोकोऽपि नास्ति, तेन तत्र ३७ श्लोका एव विद्यन्ते ।

ङ. च. मातृकयोरेकत्रिंशच्छ्लोकपर्यन्तमानुपूर्वी समाना, तदनन्तरं श्लोकषट्केषु यथा संख्याव्युत्क्रमस्तथा चिद्विलासान्ते स्थापितायां सारण्यां द्रष्टव्यः । अपि चात्र ३९ संख्याकः श्लोको नास्ति, तत्स्थानेऽन्य एव श्लोको विद्यते । स चात्र ४१ संख्यायां स्थापितः । तेनात्रापि श्लोकसंख्या चत्वारिंशत्परिमितैव ।

ग. पुस्तके तु वर्तते महदन्तरम् । अत्र पञ्चमः श्लोकः षष्ठत्वेन, षष्ठश्च पञ्चमत्वेन स्थापितः । सप्तमः श्लोक एकादशत्वेन, तदनन्तरस्थाश्चाष्टमाद्येकादशसंख्याकाः श्लोकाः सप्तमादिदशसंख्याङ्किता दृश्यन्ते । ततो द्वादशाद्येकोनत्रिंशश्लोकपर्यन्तमानुपूर्वी समाना । इतः परं भूयान् संख्याव्युत्क्रमश्चिद्विलासान्ते स्थापितया सारण्याऽवगन्तव्यः । अत्र ३०, ३३, ३६ संख्याकाः श्लोका न सन्ति । ङ. च. मातृकयोः परिदृश्यमानोऽत्र ४१ संख्याक्रमे मुद्रितः श्लोको ग. पुस्तकेऽपि दृश्यते । इतोऽधिकानि च त्रीणि पद्यानि तत्र विद्यन्ते । तानि चात्र ४२-४४ संख्याक्रमेषु स्थापितानि । तेन गपुस्तके स्तवस्य श्लोकसंख्या ४१ संपद्यते । एतेषु ४२ संख्याकः श्लोकश्चिद्गगनचन्द्रिकाया इति चिद्विलासगपुस्तके तस्य समावेशो न समञ्जस इत्यवगन्तव्यम् ।

योगिनीहृदयदीपिकायां ( पृ० ९२ ) समुद्धृतः 'आत्मचक्रमनु' इत्यादिकः श्लोकार्धस्तु कस्यामपि मातृकायां नोपलभ्यते । चिद्विलासस्तवस्यैवायमंशोऽथवा कस्य-चनान्यस्य ग्रन्थस्येति यद्यपि प्रमाणाभावान्न किमप्यधुना वक्तुं पार्येत, तथापि प्रकरणानु-रोधादत्रैव सर्वान्ते स्थापितः ।

भास्कररायेण सेतुबन्धे मतभेदप्रदर्शनाय खण्डनाय वा यत्र यत्र टीकाद्वयवचनान्यु-ट्टङ्कितानि, प्रायस्तानि सर्वाण्येव याथातथ्यविवेचनायात्र टिप्पणीषु संगृहीतानि समा-लोचितानि च । विषयवैशद्याय सूचितार्थप्रकाशनाय चात्र संक्षिप्ततमानां टिप्पणीनां निवेशनमक्रियत । अत्रोद्धृतानि वचनानि यदि सन्ति स्मृतानि ग्रन्थातरेष्वपि, तान्यपि टिप्पणीषु प्रदर्शितानि । 'प्राग् दर्शितम्', 'उत्तरत्र वक्ष्यामः' इत्यादिषु टीकाद्वयनिर्दिष्टेषु स्थलेष्वपि तन्निर्देशिकाष्टिप्पण्यः संनिवेशिताः ।

विहाय नित्याषोडशिकार्णवमत्र प्रकाशितानां सर्वेषां ग्रन्थानां संस्करणाय पुस्तकालयेषूपलब्धाः सर्वा मातृका उपयुक्ताः। मद्रासराज्यपुस्तकालयस्था R. ३५८२ संख्याका ऋजुविमर्शिनीमातृका प्रतिलिप्यनर्हेतिकृत्वा सा नात्रोपायुज्यत। टीकाद्वय-सम्पादने प्रवृत्तैरस्माभिर्नित्याषोडशिकार्णवमातृकासंग्रहे न तथाऽऽयस्तम्। ग्रन्थस्यास्य टीकान्तरनिरपेक्षप्राचीनतममूलस्वरूपनिर्णयाय तु तदावश्यकम्। तदवशिष्यतेऽधुनापि कर्तव्यतया कस्यापि कृतिनः।

एवमत्र सम्पादितग्रन्थमातृकाणां परिचयं तत्सम्पादनशैलीं च प्रदर्श्याधुना ग्रन्थग्रन्थकारविषयकबहिरङ्गपरीक्षार्थं प्रवर्तामहे।

**नित्याषोडशिकार्णवः**

"परमकारुणिको भगवान् लोकानुग्रहं चिकीर्षुर्बहुरूपाष्टकं शास्त्रं संक्षिप्य चतुश्शतसंख्यापरिमितैर्ग्रन्थैस्तत्सारमुद्धर्तुकामः" (अर्थ० पृ० ४) इत्यनेन विद्यानन्दवचनेन बहुरूपाष्टकशास्त्रस्य संक्षेपभूतमेतच्छास्त्रमित्यायाति। अस्य च नाम विमलस्वात्मशम्भुपराभिधानेन तेन वामकेश्वरशास्त्रमित्यङ्गीकृतम्—

सम्प्रदायद्वयज्ञेन विमलस्वात्मशम्भुना।
क्रियते टिप्पणं सम्यग् वामकेश्वरशास्त्रगम्॥

इत्यस्मिन्नुपोद्घाते। वामकेश्वरशास्त्रनाम्नैव प्रायोऽत्रत्यानि पद्यान्युद्ध्रियन्ते तेषु तेषु ग्रन्थेषु। योगिनीहृदयेऽपि वामकेश्वरतन्त्रनाम्ना स्मृतमेतत्। विवरणकारेण जयरथेन नेपालराजकीयपुस्तकालयस्थमातृकाटिप्पणीकारेण च वामकेश्वरीमतनाम्ना स्मर्यते तत्। चतुश्शतसंख्यापरिमितैर्ग्रन्थैर्बहुरूपाष्टकशास्त्रस्य सारोऽत्र संगृहीत इति कृत्वा चतुश्शती-समाख्याऽप्यस्य पप्रथे। शिवानन्दपरवर्तिनोऽमृतानन्दप्रभृतयः सर्वे आचार्याः प्रायोऽनयैव समाख्यया तद् बोधयन्ति। शिवानन्देन तु नित्याषोडशिकार्णवनाम्ना तत् संबोधितम्, एवं च तस्य विवरणमुपस्थापितम्—

श्रीवामकेश्वरं नाम शास्त्रं तत्र प्रकाशितम्।
शिवेन संविदं देवीं लक्ष्यीकृत्य निजात्मिकाम्॥
मध्ये शास्त्रस्य तस्यास्ति नित्याषोडशिकार्णवः।
सूत्रैश्चतुश्शतैर्युक्तः कश्चिद्भागो रसावहः॥
स च पञ्चपटल्यात्मा कर्मपञ्चकभासकः।
पूजा प्रयोगो मुद्रा च विद्याव्याप्तिर्जपस्तुतिः॥ (पृ० २-३)

विस्तृतं तद्वामकेश्वरशास्त्रं कीदृशं कियत्प्रमाणकं चासीद् यस्य मध्ये हि शिवानन्देन नित्याषोडशिकार्णवस्यावस्थितिः प्रादर्शि, तस्य विषये नास्माभिः किमपि ज्ञायते। वामकेश्वरतन्त्रान्तर्गतनित्याषोडशिकार्णवपदेन पूर्वोत्तरचतुश्शत्यात्मको ग्रन्थोऽभिप्रेतो भास्कररायस्य। नैतन्मतं शिवानन्दसंमतमिति प्रतिपादितमत्रैव भूमिकायां टिप्पणीषु च। शिवानन्देन पञ्चपटल्यात्मा नित्याषोडशिकार्णवो योगिनीहृदयनैरपेक्ष्येण व्याख्यायीति कृत्वा तन्मतेन नित्याषोडशिकार्णवस्योत्तरो भागो योगिनीहृदयमिति न वक्तुं शक्येत।

"नित्याः षोडश देवेश सूचिता न प्रकाशिताः" ( १।२२ ) इति मूलग्रन्थप्रकरणा-देतदवगम्यते, यदीश्वरेण ज्ञानयोगक्रियाचर्याप्रतिपादनपराणि चतुष्षष्टितन्त्राण्यन्यान्यपि च शास्त्राणि देव्यै पूर्वमुपदिष्टानि, येषु कस्मिंश्चिच्छास्त्रे षोडश नित्याः केवलं सूचिताः। यत्र हि षोडश नित्याः सूचितास्तदेव शास्त्रं नित्याषोडशिकार्णवस्य पूर्वो भागोऽभ्यु-पगन्तुं शक्यते।

"शृणु देवि प्रवक्ष्यामि नित्याषोडशिकार्णवम्" (१।२४) इति मूलवचनप्रामाण्यात् शिवानन्दपरिगृहीतत्वाच्च नित्याषोडशिकार्णव इत्यभिधानमेव परिगृहीतमत्र, सत्स्वपि ग्रन्थस्यास्य वामकेश्वरीमत-वामकेश्वरतन्त्र-चतुश्शतीप्रभृतिषु नामधेयेषु। "तत्र बाह्या कराभ्यां बन्धनीया नित्याषोडशिकार्णवसमुद्धृतबीजैः" (पृ० १८८) इत्यत्र भङ्ग्यन्तरेण नामनिर्देशं कुर्वता विद्यानन्देन तु नित्याषोडशिकार्णवस्य ग्रन्थान्तरत्वमेव ख्याप्यते, प्रस्तुते ग्रन्थे मुद्राबीजानामनुद्धारात्। अत्र हेतुरन्वेषणीयः।

चतुष्षष्टितन्त्राणामत्र परिगणनात्तदुत्तरभावित्वमेवास्य शास्त्रस्याभ्युपगन्तव्यम्। वैष्णवानि, शैवानि, बौद्धानि च प्राचीनानि तन्त्राणि यथा समुद्धृतानि प्रकाशितानि च, न तथा प्रयतितं शाक्तानां प्राचीनानां तन्त्राणां समुद्धारे प्रकाशने च। चतुष्षष्टि-तन्त्रपरिगणनावसरे सन्ति प्रदर्शितास्तेषु बहूनां तन्त्राणां मातृकाः, येषां प्राचीनताविषये न कोऽपि संभाव्यते विसंवादः। तन्त्राणामेतेषां प्रकाशनोत्तरमेव शाक्तानां तन्त्राणां किमप्यभिनवं वैशिष्ट्यं भासेत।

नित्याषोडशिकार्णवो जयरथेन व्याख्यातः। अभिनवगुप्तेन नित्यातन्त्रविदः स्मृताः। जयरथेन स्वकीये विवरणे श्रीमानीश्वरशिवो रसमहोदधिग्रन्थस्य प्रवर्तयिता, शास्त्रस्यास्य कश्मीरेष्ववतारकः, शूरमठाधिपतिश्चोक्तः। डॉ०कान्तिचन्द्रपाण्डेयमहोदयेन[1] ईशवीया नवमी शताब्दी तस्य समयो निश्चितः। रसमहोदधिर्हि नित्याषोडशिकार्णवस्य वार्त्तिकभूतो ग्रन्थः। अतो नित्याषोडशिकार्णवस्य तत्पूर्ववर्तित्वं सुवचम्। वसुगुप्तस्य शिष्यः कल्लटः, तच्छिष्यश्च भट्टप्रद्युम्नः। भट्टप्रद्युम्नेन प्रतिपादितः शक्तिपारम्यपक्षः शिवदृष्टौ सोमानन्देन समालोच्यते। नित्याषोडशिकार्णवे चतुर्थे पटले शक्तिपारम्यपक्षः प्रतिपाद्यते। वसुगुप्तादयो नवमशताब्दीभवा ऐतिहासिकैरङ्गीकृताः। सौन्दर्यलहर्या आद्य-शङ्कराचार्यकृतित्वे विवदन्ते इतिवृत्तविदः, तथापि पूर्वोक्तैः प्रमाणैर्नित्याषोडशिकार्णवा-विर्भावकालो भगवत आद्यशङ्कराचार्यस्याविर्भावकालश्च समान एवेति तु साधयितुं सुकर-मेव। भगवत्यास्त्रिपुरसुन्दर्या उपासना आद्येन शङ्कराचार्येण तत्परमगुरुणा गौडपादेन च प्रवर्तितेति श्रूयते। इतिहासदृष्ट्या केषाञ्चन ग्रन्थानां प्राचीनतायां सन्दिग्धायामपि सम्प्रदायस्य प्रवृत्तिकालः स एवासीदिति निश्चयो नैव नाम बाधितो भवेत्।

कौलिके मते वर्तते कामरूपपीठस्य प्राथम्यम्, श्रीत्रिपुराया अभिव्यक्तिस्थाने श्रीचक्रे च महामध्यस्थानस्थितस्य बिन्दुनिलयस्य ओड्याणपीठस्यैव वैशिष्ट्यं किमपि

---

१. द्रष्टव्यम्—'अभिनवगुप्त', द्वितीयं सस्करणम्, पृ० ५७८।

राजते। अतस्त्रिपुराया उपासना ओड्याणपीठतो विनिर्गतेति मन्तव्यम्। प्रथमं सा ईश्वरशिवादिभिः कश्मीरेष्ववतारिता, ततः शिवानन्दप्रभृतीनां पूर्वगुरुभिः केरलेषु। शङ्करभगवत्पादानां जन्मभूमिश्चोलदेश एव। अतोऽत्र त्रिपुरसुन्दर्युपासनाप्रचारो नातिविस्मयकरः। शिवानन्दादयश्चोलदेशीया एवेति प्रतिपादयिष्यते परस्तात्। एवं च नित्याषोडशिकार्णवाविर्भावस्थलमोड्याणपीठमेव स्यात्। ततः प्रथमं कश्मीरेषु तदनन्तरं च केरलेषु स प्रावर्तत। साम्प्रतं तु वर्ततेऽस्य सार्वदेशिकः प्रचारः प्रसारश्च। आसेतुहिमाचलं परश्शता मातृका अस्य ग्रन्थस्य समुपलभ्यन्ते। उपलब्धेषु नित्यातन्त्रेषु प्राचीनतममेतत्तन्त्रमित्युक्तिर्नैव यथार्थतामतिजह्यात्।

## नित्याषोडशिकार्णवस्य चतुश्शतीत्वसमाख्या

"एवमध्यर्धाष्टोत्तराशीत्यधिकशतसंख्योपेतसूत्रं प्रथमं पटलं विवृत्य सार्धनवाधिकसप्ततिसंमितं....द्वितीयं पटलं विवृणुमः" ( पृ० १४३ ), "इदानीमष्टाविंशतिसूत्रसन्दर्भस्य .. तृतीयस्य पटलस्य" ( पृ० १७४ ), "एकसप्ततिसूत्रग्रथिते तुरीये पटले ( पृ० १९० ),"त्रयस्त्रिंशसूत्रग्रन्थिते पञ्चमे पटले"( पृ० २६१ ) इत्येतैरृजुविमर्शिनीस्थैर्वचनैरत्र चतुश्शतसंख्याकाः श्लोकाः सन्तीति शिवानन्दस्य मते चतुश्शतीत्वसमाख्या निर्विवादा। सेतुबन्धे तु—"एवं प्रथमपटलेन चतुरधिकद्विशतश्लोकेन" ( पृ० ९८ ), "एवमेकाशीतिश्लोकात्मकेन द्वितीयपटलेन" ( पृ० १२४ ), "एवं सार्धाष्टाविंशत्या श्लोकैर्घटितेन तृतीयपटलेन" ( पृ० १३२ ), "एवं त्रिसप्तत्या श्लोकैश्चतुर्थपटलेन" ( पृ० १६२ ) इत्यादिभिर्वाक्यैरस्याः पञ्चपटल्याः सार्धत्रिंशदधिकचतुश्शतश्लोकघटितत्वमङ्गीकृतम् ( पृ० १७६ )। नित्याषोडशिकार्णवाद्[1] द्वादशश्लोक्या बहिर्भावत्वे भास्कररायाङ्गीकृते ( पृ० ८ ) स्वीकृतेऽपि चतुश्शतश्लोकसंख्यासंपत्तिर्नोपपद्यते, अत एव समाख्याया एवाल्पन्यूनाधिकभावाविवक्षया गौणत्वेन निर्वाहोऽङ्गीकृतस्तत्र (पृ० १७६)।

सर्वेष्वेव पटलेषु श्लोकसंख्यायां वैभिन्न्ये जाग्रत्यपि, पञ्चमपटलस्य त्रयस्त्रिंशता श्लोकैरेव समाप्तौ सत्यामपि च सेतुबन्धकारस्य—"यत्प्राचीनैर्विमर्शिन्यादिटीकाकारैः सर्वैरैककण्ठ्येन मूलस्थपञ्चमपटलस्य चतुस्त्रिंशता श्लोकैरेव समाप्तिं मन्यमानैरुत्तरत्र पठ्यमानान् दशश्लोकान् पुस्तकेषूपलभ्यमानान् संगतानपेक्षितानपि परित्यजद्भिः किमभिप्रेतमिति त एव प्रष्टव्याः" ( पृ० १७५ ) इत्युक्तिर्न क्षोदक्षमा प्रतिभाति। नहीमे

---

१. 'महात्रिपुरसुन्दरीसंज्ञां व्याचष्टे परमदेशिको महादेवः" ( ऋजु० पृ० ४ ), "महात्रिपुरसुन्दरी महत्या भक्त्या महादेवः प्रणमति" ( अर्थ० पृ० ४-५ ) इति च वदन्तौ शिवानन्दविद्यानन्दौ द्वादशश्लोक्या ग्रन्थान्तर्भूतत्वमेवाङ्गीकुरुतः।

मयाऽप्येतद्व्रतस्थेन क्रियतेऽद्यापि सुव्रते।
जपस्त्रिसन्ध्यमेतस्यास्तदेतत्पदसिद्धये ॥

इत्यग्रिमे ग्रन्थे त्रिपुरभैरवीसमुपासनाप्रख्यापनं कुर्वतो देशिकोत्तमस्य ग्रन्थारम्भे तस्या नमनमुचितमेव। अतो द्वादशश्लोक्या ग्रन्थान्तर्गतत्वमेवाङ्गीकर्तव्यम्।

दशश्लोका विहाय सेतुबन्धं कस्यामपि टीकायां व्याख्याता:, न चोपलब्धाः सरस्वतीभवनस्थायां कस्यामपि मातृकायाम्, न च १५९३ वैक्रमे वर्षे लिखितायां बड़ोदास्थगायकवाड़शोधसंस्थानस्थायां प्राचीनायां मातृकायाम् । नित्याषोडशिकार्णवो बहिर्यागपरः, योगिनीहृदयं चान्तरयागप्रतिपादकम् । नानयोरैकशास्त्र्यमिति साधितमस्माभिरन्यत्र चात्र च । एवं चान्तरजपहोमादिप्रतिपादकानामेषां श्लोकानां नात्र काचन संगतिर्न चेमेऽत्रापेक्षिताः । भिन्नयोरेतयोः शास्त्रयोरेकत्वकल्पनमेव सेतुबन्धकारस्य विचारवैभिन्न्योत्पादकम् ।

यद्यपि "तन्त्रराजे....तद्व्याख्यातृभिः पञ्चविंशे पटले यन्त्राणि मन्त्राः सर्वत्रेतिश्लोकव्याख्यावसरे चक्रनवकवासनामेतामेव कथयित्वा तत्संमत्यर्थं नित्याषोडशिकार्णवे प्रोक्तमिति ग्रन्थेन कालो धामानि भूतानीत्यर्धमेव लिखितम्" (से० पृ० १७५) इत्यनेन तन्त्रराजव्याख्यातुः सुभगानन्दनाथस्य मतेनापि श्लोका इमे नित्याषोडशिकार्णवस्येति सिद्ध्यति, तथापि विमर्शिनीकारस्य प्राचीनत्वं [1]मनोरमाकारस्य चातिप्राचीनत्वं तदुक्तं ( पृ० १७५-१७६ ) संदिग्धमेव । न ध्यानमित्यादिकोऽत्रत्यः श्लोको विनैव नामनिर्देशमृजुविमर्शिन्यां समुद्धृतः । संयम्येन्द्रियसंचारमित्यादिकश्च श्लोको दीपिकायामभियुक्तवचनत्वेनोद्धृतो दृश्यते । अनयोः श्लोकयोः सदृश एव

न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम् ।
स्वे महिम्न्यद्वये धाम्नि सा पूजा या परा स्थितिः ॥

इति श्लोकः [2]संकेतपद्धतिस्थस्तत्रावलोक्यते । इमावपि श्लोकौ संकेतपद्धतेरेव स्याताम् ।

---

१. कासुचन मातृकाविवरणसूचीषु मनोरमारचनाकालः १७३० प्रदर्शितः । स च प्रतिलिपिकालः स्यात् । यतो हि 'इण्डिया आफिस पुस्तकालय'-ग्रन्थसूच्यां २५४० संख्याककादिमतमनोरमामातृकाविवरणे—

आकाशरसतर्केन्दुमितेऽब्दे कार्तिके सिते ।
तन्त्रराजस्य टीकेयं पूर्णायां पूर्णतामगात् ॥

इति तत्रत्यश्लोकं प्रमाणीकृत्य ग्रन्थरचनाकालः संवत् १६६० ( ई० १६०३ ) निर्धारितः । एष श्लोकोऽपि ग्रन्थप्रतिलिपिकर्तुरेवेति संभावयामो वयम् । तथाहि—श्रीनिवासभट्टापरनामधेयविद्यानन्दनाथेन १६३० वैक्रमे वत्सरे सौभाग्यरत्नाकरो विरचितः ( योगिनीहृदयस्यानुप्रास्ताविके घपृष्ठे टिप्पण्यां प्रमाणवचनानि द्रष्टव्यानि )। एष ग्रन्थस्तेन शिवार्चनचन्द्रिकायां स्मृतः ( ग्रन्थसमाप्तिस्थाः श्लोका द्रष्टव्याः )। तत्र च—"तट्टीकाकृता मनोरमाकारेण" ( २४९५९ संख्याका सरस्वतीभवनस्था मातृका, प० २९ ) इत्येवं मनोरमाकारः स्मृतः । अतश्च सौभाग्यरत्नाकररचनाकालपूर्ववर्तित्वमेव तस्योचितं प्रतिभाति । निश्चितः समयस्तु मनोरमाकारस्य नावबुध्यते साम्प्रतम् ।

२. संकेतपद्धत्यादिषु दृष्टा अन्येऽपि श्लोकाः सेतुबन्धकारेण मूले स्थापिताः । तद्यथा—अर्थरत्नावल्यां ( पृ० १०७ ) संकेतपद्धतिनाम्नोद्धृतः "त्रिपुरा त्रिपुरेशी च" इत्यादिकः श्लोकः सेतुबन्धे ( पृ० ८२-८३ ) मूले स्थापितः । एवमन्यत्रापि ।

स्वसंविदित्यादिकः श्लोकार्धो दीपिकायां स्थलद्वये (पृ० २५०, ३०९) प्रामाणिकवचने-नाभियुक्तवचनत्वेन चोद्धृतः। शब्दस्पर्शादय इति श्लोकार्धश्च विनैव नामनिर्देशं तत्र दृश्यते, यदा ह्यमृतानन्देन चतुश्शतीश्लोकान् समुद्धरता सर्वत्र तन्नामनिर्देशोऽकारि। एतेन संभाव्यते गच्छता कालेन संकेतपद्धतिप्रभृतीनां ग्रन्थानां विरले प्रचारे तत्रत्याः श्लोका [1]मनोरमाकारादीनां समये मूले प्रक्षिप्ता इति तस्य नातिप्राचीनत्वम्, किन्तु शिवानन्दाद्यपेक्षयाऽर्वाचीनत्वमेवेति।

"सार्धत्रिंशदधिकचतुश्शतश्लोकघटिताया अस्याः पञ्चपटल्याश्चतुश्शतीति समाख्यासमर्थनार्थं प्रथमचक्रोद्धारान्ते सार्धत्रयाणां द्वितीयचक्रोद्धाररूपाणां सप्तदशाना-मत्रत्यानां दशानां च श्लोकानां त्यागः" (पृ० १७६) इत्येष आक्षेपोऽपि सेतुबन्धकारस्य न ऋजुविमर्शिन्यां घटते, तत्र द्वितीयचक्रोद्धाररूपाणां सप्तदशश्लोकानामुपलब्धेः। न चापतत्यर्थरत्नावल्यादिषु, तैश्चतुश्शतीत्वसमाख्याया एवानङ्गीकारात्। वस्तुतस्तु चतुश्शतीसमाख्यासमर्थनार्थमेव शिवानन्देन द्वितीयचक्रोद्धाररूपाः सप्तदशश्लोका मूले संनिवेशिताः। ऋजुविमर्शिनीं सेतुबन्धं च विहाय न दृश्यन्त इमे श्लोकाः क्वापि मूले। वामकेश्वरीमतविवरणे ( पृ० ३२ ) तु रसमहोदधिस्था इमे श्लोका इति स्पष्टमेवोक्तम्। एवं च ग्रन्थस्यास्य चतुश्शतीति समाख्या न प्राचीना, यद्यप्यमृतानन्दादिभिः शिवानन्द-परवर्तिभिस्तदङ्गीकृता।

## नित्याषोडशिकार्णवयोगिनीहृदययोर्भिन्नशास्त्रत्वम्

एतच्चास्माभिर्योगिनीहृदयस्यानुप्रास्ताविके साधितम्। अत्र तु किमपि नूतन-मुच्यते। गणेशग्रहनक्षत्रेत्यादिकेऽत्रत्ये प्रथमसूत्रे स्थितानि गणेशग्रहनक्षत्रराशिपदानि शिवानन्दविद्यानन्दाभ्यां प्रपञ्चसारमनुसृत्य व्याख्यातानि, न तु योगिनीहृदयम्। वाम-केश्वरतन्त्रे कादिविद्यासमुद्धारः, योगिनीहृदये तु मन्त्रसङ्केते सम्प्रदायार्थप्रकरणे हादि-विद्या समुद्धृता। अत्र करशुद्धिकरीत्यादिका मूलविद्यया सहाष्टौ विद्या एव दृश्यन्ते, योगिनीहृदये तु सप्तमीं मूर्तिविद्यामङ्गीकृत्य विद्यानां नवकं परिदृश्यते। प्रथमे स्वयम्भ्वा-दीनि त्रीणि लिङ्गानि, उत्तरषट्केऽप्येवमेव दृश्यते; द्वितीये तु परलिङ्गस्यापि समावे-शाच्चत्वारि लिङ्गानि। एवं च—"पूर्वोत्तरचतुश्शत्योरेकवाक्यता त्वविवादा, पूर्वोत्तर-समाख्याबलात्। पूर्वतन्त्रे कथितानां करशुद्ध्यादिन्यासानामुत्तरतन्त्रेऽकथनेन तत्रोद्धृताया

---

१. सौन्दर्यलहरीटीकायां लक्ष्मीधरायां (पृ० १८८–१८९) "पाशाङ्कुशौ" इति, "करणेन्द्रिय" इति च श्लोकौ वामकेश्वरतन्त्रे आत्मपूजायां वर्तेते इत्युक्तम्। तेन तत्समयेऽपि श्लोका इमेऽत्रत्या एव परिज्ञाता आसन्निति निश्चीयते। म० म० हरप्रसादशास्त्रिसंदृब्धायां सूच्यां (भा० १, पृ० ७१) विवृते १३५४ ई० वर्षे लिखिते वामकेश्वरीमतटिप्पणे तु "कालमृत्यु-यमादिभिर्न बाध्यते" इति समाप्तिवाक्यदर्शनादधिका इमे श्लोकास्तत्र नासन्निति। लक्ष्मी-धरायां (पृ० १६३) कामकलाविलासश्लोका उद्धृताः। तत्कर्ता पुण्यानन्दश्च शिवानन्द-पराग्भव इति साधितमन्यत्र। अतोऽपि शिवानन्दादीनां प्राचीनत्वमवगम्यते।

मूर्तिविद्यायाः पूर्वतन्त्रेऽनुद्धारादिना च ज्ञापकेन परस्परसाकाङ्क्षत्वाच्च' (पृ० ७) इति सेतुबन्धकारस्योक्तिर्न क्षोदक्षमा, पूर्वोक्तोदाहरणैस्तत्रैकवाक्यताया अदर्शनात्, पूर्वोत्तरसमाख्यायाः सेतुबन्धकारेणान्यैर्वा कैश्चिद् तदानीन्तनैर्ग्रन्थकारैः कल्पितत्वादमृतानन्दनटनानन्दादीनां ग्रन्थेषु तददर्शनाच्च। योगिनीहृदयस्य वामकेश्वरतन्त्राज्ञातार्थप्रकाशत्वात्तत्साकाङ्क्षत्वं स्यान्नाम, वामकेश्वरस्य तु न योगिनीहृदयाकाङ्क्षा, तत्र मूर्तिविद्यायाः सर्वथाऽनुपलम्भात्। एवं चानयोर्भिन्नत्वमेवाङ्गीकर्तव्यम्[1]। भिन्नयोरेतयोः शास्त्रयोरभिन्नत्वमारोप्य सेतुबन्धकारः शिवानन्दविद्यानन्दामृतानन्दादिषु तत्र तत्र दोषानुद्भावयति। तत्परिहारश्च बाहुल्येनानयोर्भिन्नशास्त्रत्वेऽङ्गीकृतेऽनायासेन भवतीति स्वयमेव विचिन्वन्तु विपश्चिद्वर्याः। अस्माभिश्च तत्र तत्र टिप्पण्यादिष्वत्र च तत्प्रदर्शितमेव।

## नित्याषोडशिकार्णवस्यैव पञ्चषष्टितमतन्त्रत्वम्

तच्च सेतुबन्धकारेणैवं प्रदर्शितम्—

"सुन्दरीतन्त्रेष्वपि यानि कुलार्णवज्ञानार्णवस्वच्छन्दपरानन्दभैरवीदक्षिणामूर्तिप्रभृतीनि तेषु प्रायेण बहिर्यागस्यैव प्रपञ्चो भूयान्, आन्तरस्य त्वल्पः। वामकेश्वरतन्त्रे तु तद्वैपरीत्यमेवेति सर्वतन्त्रोत्तमत्वादान्तरोपास्तिशीलस्यैवोपासकमूर्धन्यस्यात्राधिकारः। तदेतदुक्तं श्रीमदाचार्यभगवत्पादैः—

चतुष्षष्ट्या तन्त्रैः सकलमभिसंधाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रः पशुपतिः।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम्॥ (सौ० ३१) इति।

---

१. शिवानन्देन गुरुपङ्क्तिसमाराधनस्थानं निर्णीतं प्रपञ्चसारप्रामाण्येन (पृ० २२५); यद्यपि दृश्यते योगिनीहृदयेऽपि तत्स्थाननिर्णयः। भास्कररायं विहाय सर्वैरेव टीकाकारैः पञ्चपटलात्मको ग्रन्थ एव व्याख्यातः, अत एव योगिनीहृदयदीपिकारम्भेऽमृतानन्दः 'अनन्योद्घाटितम्', 'नेदं व्याकृतं पुरा' (पृ० २) इति वदति। किमेतेनैतत्संभावयितुं शक्यते यदेतेषां प्राचीनानां टीकाकाराणां समये योगिनीहृदयं नासीदिति। वामकेश्वरीमतविवरणसंपादकेन केषाञ्चन श्लोकानां स्थलनिर्देशे योगिनीहृदयमङ्कितम्। वस्तुतस्तु न सन्ति तत्रत्या इमे श्लोकाः, उद्धरणानामेकांशस्यैव तत्रोपलब्धेः। योगिनीहृदये (२।७७) महाज्ञानार्णवः स्मर्यते। तस्मिंस्तदनुसारिण्यन्यस्मिन् वा ग्रन्थे एते श्लोकाः स्युः। विद्यायाः षडर्थप्रतिपादनं ग्रन्थविस्तराधानमात्रफलमिति वदन् जयरथस्तन्न प्रमाणयति (पृ० १३६–१३७)। नित्याषोडशिकार्णवयोगिनीहृदययोरैक्येऽङ्गीकृते तत्कथं संभाव्येत। एवं सति डॉ० प्रबोधचन्द्रबागचीमहोदयेन 'स्टडीज इन दी तन्त्राज' इत्याख्ये ग्रन्थे ब्रह्मयामलविवरणावसरे (पृ० १०५) विद्यापीठतन्त्रेषु परिगणितं योगिनीहृदयमितो भिन्नमेव स्यात्।

चतुष्षष्टितन्त्राणि नामनिर्देशेनानूद्य पुनर्देवीकृतप्रश्नस्यास्मिन्नेव तन्त्रे दर्शनाल्लिङ्गादिदमेव तन्त्रमस्मिन् श्लोके पञ्चषष्टितमत्वेनाभिप्रेतमित्युन्नीयते। ज्ञानार्णवपरं स्वतन्त्रपदमिति तु गौरीकान्तः। अन्ये तु—तन्त्रराजतन्त्रमेव पञ्चषष्टितमम्, स्वतन्त्रविशेषणस्येहोक्तस्य तत्रैव दर्शनाल्लिङ्गात्। तथा च स्मर्यते—

तेषामन्योन्यसापेक्ष्याज्जायते मतिविभ्रमः।
तस्मात्तु निरपेक्षं मे तन्त्रं तासां वद प्रभो॥ ( त० १।३ )

इतीत्याहुः। वस्तुतस्तु मोक्षस्य बहिरङ्गसाधने बहिर्यागे तस्य तन्त्रान्तरोक्तकर्मानपेक्षत्वेऽप्यन्तरङ्गसाधनेऽन्तर्यागेऽस्यैव नैरपेक्ष्यम्। तन्त्रान्तरेष्वेतावतोऽन्तर्यागप्रपञ्चस्याभावादेव। प्रत्युत तन्त्रराजस्याप्येतत्सापेक्षतैव दृश्यते। यदुक्तं तत्रैव—"नित्याहृदयसंप्रोक्तस्फुटोपायेन भावयेत्" ( ३६।१३ ) इति। नित्याहृदयमित्येतत्तन्त्रोत्तरार्धस्य योगिनीहृदयस्य संज्ञा" ( पृ० ५–६ ) इति।

तदेतन्मतं प्रमाणान्तरैः स्थूणानिखननन्यायेन सुदृढीक्रियते। "शिवः शक्त्या युक्तः" ( श्लो० १ ), "हरिस्त्वामाराध्य" ( श्लो० ५ ) इत्यादीनां सौन्दर्यलहरीस्थानां श्लोकानामवलोकनेन स्पष्टं विज्ञायते यदेषां निर्माणवेलायां नित्याषोडशिकार्णवस्थाः "परो हि शक्तिरहितः" ( ४।६ ), 'एतामेव पुराराध्य" ( ४।६७ ) इत्यादयः श्लोका मनस्युपारूढा आसन्निति। अत्रैव चतुष्षष्टितन्त्राणि परिगणितानि, अतः "इदमेव तन्त्रमस्मिन् श्लोके पञ्चषष्टितमत्वेनाभिप्रेतम्" इति सेतुबन्धकारस्योन्नयनं युक्तिमदेव। "स्वतन्त्रमन्यनिरपेक्षं ज्ञानार्णवादिरूपं कादिमतेतिप्रसिद्धं स्वतन्त्राख्यतन्त्रं वा" इति सौन्दर्यलहरीव्याख्यायां गौरीकान्तभट्टाचार्य आह। "स्वतन्त्रं तन्त्रं कादिमताख्यम्" इति सौभाग्यवर्धनीकारः। अन्ये त्वित्यादिनोद्धृतं मतं कस्येति साम्प्रतं न ज्ञायते। इदमत्रावधेयम्—"अखिलपुरुषार्थकघटनास्वतन्त्रं ते तन्त्रम्' इत्यत्र ते तव त्रिपुरसुन्दर्यास्तन्त्रमखिलपुरुषार्थकघटनासु स्वतन्त्रमित्येवान्वय उचितः प्रतिभाति। विशेषणमुखेनैवात्र स्वतन्त्रपदं प्रवर्तते, न विशेष्यमुखेन। एवं च ज्ञानार्णवादिरूपमिति वदन् गौरीकान्तः सर्वाणि त्रैपुरतन्त्राण्यत्र संगृह्णाति। त्रैपुरतन्त्रेषु च वामकेश्वरतन्त्रं प्राचीनतमम्। अत्रत्या द्वादशश्लोकी कादिमते ( २।८८–९९ ) समुद्धृता। कादिमते ( १।२ ) दृश्यते यदितः पूर्वं नित्यानां नव तन्त्राण्यासन्निति। किञ्च, योगिनीहृदयापरपर्यायं नित्याहृदयं कादिमते स्मर्यते, योगिनीहृदये च वामकेश्वरतन्त्रमिति कादिमतापेक्षया पूर्वं क्षितितलं वामकेश्वरतन्त्रमेवावातीतरदिति निष्प्रचमङ्गीकर्तव्यम्। एवं च 'इदम्' इति पदेन वामकेश्वरतन्त्रमेव सौन्दर्यलहरीकारस्याभिप्रेतमिति सेतुबन्धकारोक्तिरेवात्र ज्यायसी।

## नित्याषोडशिकार्णवस्य व्याख्यानानि

वामकेश्वरीमतमिति नित्याषोडशिकार्णवस्यैव नामान्तरम्। अत्र जयरथकृतं विवरणं कश्मीरसंस्कृतग्रन्थमालायां मुद्रितमुपलभ्यते। भास्कररायविरचितं सेतुबन्धव्याख्यानमानन्दाश्रमग्रन्थमालायां प्रकाशितं सुप्रसिद्धमेव। ऋजुविमर्शिनी चार्थरत्नावली

चेमे अधुना प्रकाश्येते। एवमेतद्व्याख्यानचतुष्टयमस्य ग्रन्थस्य साम्प्रतं मुद्रितमुपलभ्यते। म० म० हरप्रसादशास्त्रिसंदृब्धायां नेपालग्रन्थसूच्यां १३५४ ई० लिखिता वामकेश्वरीमतटिप्पणमातृका कर्तृनामरहिता दृश्यते। आफ्रेख्ट्बृहत्सूच्यां ( पृ० ५६३ ) वाराणसीवास्तव्यमुकुन्दलालकृतं व्याख्यानं सदानन्दकृतं च व्याख्यानं न्यदर्शि। तत्रैव निर्दिष्टं वामकेश्वरतन्त्रदर्पणं विद्यानन्दकृतमर्थरत्नावलीसमाख्यं व्याख्यानमेव। "पूर्वाचार्या अप्याहुः—आश्रीदीपकनाथतो ह्यगणितैरद्यापि वृत्तिः कृता" ( पृ० ११५ ) इत्यादिजयरथोद्धृतपूर्वाचार्यवचनप्रामाण्यतः [1]श्रीदीपकनाथोऽस्य ग्रन्थस्य प्रथमो वृत्तिकार इति ज्ञायते। सेतुबन्धे ( ४।९ ) दीपकाचार्य उद्ध्रियते। त्रिपुरसुन्दरीदण्डकं स्तुतिरूपम्। वृत्तिरेषा ततो भिन्नैव स्यात्। तस्याश्च नोपलब्धः कोऽप्युल्लेखः साम्प्रतमस्माभिः क्वापि। [2]ईश्वरशिवो [3]विश्वावर्तश्चेत्याचार्यद्वयं त्रैपुरसम्प्रदायस्य कश्मीरेष्ववतारकमिति जयरथ ( पृ० ४८ ) आह। तत्रेश्वरशिवो रसमहोदधिश्लोकानां साक्षात् प्रवर्तयिता। रसमहोदधिश्च वामकेश्वरीमतव्याख्यानपरः कारिकामयो ग्रन्थः प्रतीयते। अस्य विस्तृतान्युद्धरणानि जयरथविवरणे द्रष्टव्यानि। जयरथविवरणे ( पृ० ९, १२, ३० ) वार्त्तिककारस्यानेकानि वचनानि दृश्यन्ते। एष वार्त्तिककारो विश्वावर्तोऽन्यो वेति प्रमाणाभावान्न वक्तुं शक्यते। "एतान् सद्गुरुलब्धान् विश्वावर्तः प्रवर्तितवान्" ( पृ० ३६ ) इति, "ततश्च विश्वावर्तमुखेनैव लक्ष्यते यत् तदेवेदमस्मत्पर्यन्तं शिष्यप्रशिष्यक्रमेण सर्वेषामपि प्राप्तम्" ( पृ० ४८ ) इति च वदन् जयरथस्तस्य महत्त्वं ख्यापयति। शङ्कर-राशिर्वामकेश्वरीमतस्य व्याख्यातेति जयरथधृतवचनाभ्यां ( पृ० ४८, ५४ ) प्रतीयते। एवमेव [4]अल्लटोऽपि वामकेश्वरीमतव्याख्याता। अस्य व्याख्यानं जयरथेन पदे पदे साक्रोशं खण्डितम्। कल्याणवर्मणाऽपि वामकेश्वरीमतं व्याख्यातमिति तत ( पृ० १३७ ) एव ज्ञायते। कादिमते ( २।८८–९९ ) द्वादशश्लोकीव्याख्यानावसरे सुभगानन्दः [5]काश्मीरव्याख्यानं स्मरति। कश्मीरेष्वन्यत्र च बहूनि व्याख्यानान्यस्य ग्रन्थस्य विरचितानीति—"महाविभूतिसमुदयस्थाने नित्याषोडशिकार्णवे यत्पूर्वैर्व्याकर्तृभिर्व्याकारि, यच्चास्माभिः किञ्चिद् व्याक्रियते, तत्रान्तरं त्यक्तावलेपमात्सर्याः स्वयमेव विपश्चितो विचिन्वन्तु" (पृ० १२) इति शिवानन्दवचनेन, [6]"उभे च चतुश्शत्यौ यद्यपि प्राचीनैर्बहुभिर्व्याख्याते एव,

---

१. "त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च" ( सा० सु०, व० २०, अ० २, पृ० २४ ) इत्यत्र द्रष्टव्यं दीपकनाथविषये।

२. आचार्याणामेषां परिचयो डॉ० कान्तिचन्द्रपाण्डेयविरचिते 'अभिनवगुप्त' इत्याख्ये ग्रन्थे ( पृ० ५७८–५८३ ), उपर्युक्ते निबन्धे च ( पृ० २०–२१ ) द्रष्टव्यः।

३. उपर्युक्ते निबन्ध एव ( पृ० १७, टि० २–३ ) द्रष्टव्यम्।

४. द्रष्टव्यम्—वामकेश्वरीमतविवरणम्, पृ० ५४।

५. ग्रन्थस्याष्टमपृष्ठस्य द्वितीया टिप्पणी द्रष्टव्या।

६. उत्तरचतुश्शती केवलममृतानन्देनैव व्याख्याता, नान्येन केनचन प्राचीनेन व्याख्याकारेण। भास्कररायपरवर्तिनः काशीनाथस्यैवात्र तृतीयं व्याख्यानमुपलभ्यते।

परन्तु ताष्टीका अस्थाने विस्तृताः, स्थाने संकुचिताः, क्वचिन्न्यायविरुद्धाः, क्वचित् सम्प्रदायविरुद्धाः, क्वचिन्मूलस्वरसविरुद्धाः, क्वचित् त्यक्तमूलश्लोकाः, क्वचित् तन्त्रान्तरविरुद्धाः, क्वचित् पक्षपातकलुषिता इति तत्तदंशान् परिहृत्यातीव निष्कृष्येतरांशेषु तत्प्रदर्शितदिशैव संक्षिप्य व्याख्यातुमयमुद्योगः" (पृ० ७) इति भास्कररायवचनेन च ज्ञायते। भास्कररायोऽत्र स्वव्याख्यानस्य वैशिष्ट्यं प्रतिपादयन् पूर्वव्याख्यानानि कटाक्षयति। अत्र च यद्वक्तव्यं तदुच्यत एव तत्र तत्र प्रसङ्गानुसारम्।

## उपलब्धव्याख्यानानां प्रत्येकं वैशिष्ट्यम्

उपलब्धेषु चतुर्षु व्याख्यानेषु जयरथकृतं विवरणमेव प्राचीनं प्रतीयते। अत्र ईश्वरशिव-विश्वावर्त-शङ्करराशिप्रभृतय आचार्या अस्य शास्त्रस्य कश्मीरेष्ववतारका इत्युक्तम्। तदनुयायिनां केषाञ्चन व्याख्याकाराणां मतानि दूषयन् जयरथ ईश्वरप्रत्यभिज्ञातन्त्रालोकादिप्रामाण्येन स्वकीयं विवरणमतिशाययति। अत्र समालोचितानि कानिचन मतानि बीजोद्धारादीनि चार्थरत्नावलीकारेण प्रमाणीकृतानि। अतः सेतुबन्धवज्जयरथविवरणस्यापि प्राचीनव्याख्यानानां युक्तायुक्तत्वविषयका विचाराः सावहितं परीक्षणमपेक्षन्ते। तन्त्रालोकविवेककार एव विवरणकारः कथ्यते तत्संपादकैः। विवेककारस्य प्रौढिमा प्रतिभा च नात्र प्रस्फुरति तादृशी। अत्र मूलविद्यासमुद्धारावसरे कादिविद्या समुद्धृता।

[1]अर्थरत्नावल्या मद्रासभिन्नमातृकासु (पृ० २१४) ऋजुविमर्शिनी स्मर्यते, किन्तु तत्रत्यः श्लोकः प्रस्तुतायामृजुविमर्शिन्यां नोपलभ्यते। अन्या काचन ऋजुविमर्शिन्यत्र स्मृता भवेत्। ऋजुविमर्शिनी-अर्थरत्नावलीकारौ समसामयिकौ स्याताम्। तथापि दार्शनिकदृष्ट्या वर्तते कोऽपि विशेष ऋजुविमर्शिन्याम्। क्षेमराजकृतायाः शिवसूत्रविमर्शिन्याः स्पन्दनिर्णयस्य च व्याख्यानपद्धतिः, प्रतिपादनचातुरी, भाषा, प्रमाणवचनावली चात्रानुकृता शिवानन्देनेति तत्र तत्र ग्रन्थस्थासु टिप्पणीषु स्पष्टम्। नित्याषोडशिकार्णव-उत्तरषट्कप्रदर्शितस्त्रिपुरापदनिर्वचनलभ्यस्त्रितत्त्वधामलिङ्गबीजशक्तिवादोऽपि सम्यग् व्याख्यायत एव, सहैवात्र संकेतपद्धत्यनुसारी तत्त्व-धाम-बीज-शक्तिचतुष्टयवादोऽपि दृश्यते। तत्प्रसङ्गेनाऽनाख्यातत्त्वमत्र व्याख्यातम्। व्याख्यानमेतत् प्राधान्येन ग्रन्थस्य प्रत्यभिज्ञादर्शनानुसारिणीं व्याख्यामुपस्थापयति। तत्र तान्येव प्रमाणवचनानि प्राधान्येन समुपस्थाप्यन्ते, यानि क्षेमराजेन प्रमाणीकृतानि। तन्त्रालोकोऽत्र त्रिशिकाशासन-षडध्वसारशास्त्रप्रभृतिनामभिर्नैकशः स्मर्यते। गणेशेत्यादिप्रथमसूत्रव्याख्यानावसरे गुरुपङ्क्तिसमाराधनस्थलादिनिर्णये चात्र न योगिनीहृदयं स्मर्यते, अपि तु प्रपञ्चसारः सर्वत्र प्रमाणीक्रियते। अत्र हि नागभट्टविरचितस्त्रिपुरासारसमुच्चयो वारत्रयं स्मृतः, शिवस्तोत्रावली स्पन्दकारिका च रहस्यगुरुप्रवरकृतित्वेन निर्दिष्टा, मन्त्रमातृकापीठमुद्रादीनि च महासंविदात्मकतया व्याख्यातानि। मूलविद्यासमुद्धारप्रकरणेऽत्र हादिविद्या प्रतिपादिता, हादिविद्यापरम्परा च दिव्य-सिद्ध-मानवौघत्रयवती समदर्शि। ऋजुविमर्शिनी कौलिकीं

---

१. अर्थरत्नावल्यां (पृ० २५३) मद्रासमातृकासु केचित्पदेन ऋजुविमर्शिनी स्मृता स्यात्।

प्रक्रियां सूचयत्येव. प्रायः सा सर्वाण्येव मूलपदानि प्रत्यभिज्ञादर्शनपद्धत्या तान्त्रिकान्त-र्यागपद्धत्या वाऽध्यात्मपरत्वेन योजयति। प्रसन्नगम्भीरा, सरलविशदा, पारम्परिकपदार्थोन्मीलिनी, प्रमाणवचनावलीविराजिताऽपि संक्षिप्तपदेयं विमलाशया ऋजुविमर्शिनी मन्ये बलादिव विदुषां मनांस्यावर्जयेन्नूनम्।

अर्थरत्नावली प्राधान्येन कौलिकं मतमनुव्याख्याति स्पष्टतया। [1]उत्तरषट्कशास्त्रं सिद्धनाथपादः संकेतपद्धतिश्चास्या व्याख्यायाः प्रधानमवलम्बनम्। मतशास्त्रं मतोत्तरं चात्रोद्ध्रियते। टीकेयं हादिविद्यामेव यद्यपि बहु मानयति, तथाप्यत्र तत्र तत्र प्रकरणेषु कादिविद्यानुसारिणीं व्याख्यामुपस्थाप्यैवानन्तरं हादिविद्या व्याख्यायते। ऋजुविमर्शिनी-सेतुबन्धादिषु व्याख्यातश्चक्रोद्धारस्य द्वितीयः प्रकारो नात्र दृश्यते। सेतुबन्धकार ऋजुविमर्शिनीं तत्र तत्र प्रमाणयत्यपि, अर्थरत्नावली तु तेन सर्वथैवाप्रमाणीकृता। नित्याषोडशिकार्णवे त्रिसंख्याकं कौलिकमते चतुःसंख्याकं क्रममते च पञ्चसंख्याकं पदार्थजातं प्रतिपाद्यते। अर्थरत्नावल्यां पीठपञ्चक-वामादिपञ्चक-इच्छादिपञ्चक-अकारपञ्चक-इकार-पञ्चकादीनां हतानाहतोत्तीर्णानां नादानामनिकेत-रसत्रितयादिपदानां च संकेतपद्धति-प्रामाण्येन विवरणं दृश्यते। तेन संकेतपद्धतेरस्याश्च टीकायाः क्रमदर्शनानुवर्तित्वमपि संकेत्यते। पदानामेतेषामत्रत्यं विवरणं चिद्गगनचन्द्रिका-वातूलनाथसूत्रवृत्ति-महानय-प्रकाश-महार्थमञ्जरीपरिमलसमुपलब्धं स्वरूपं सर्वथा समर्थयतीति तत्रैव द्रष्टव्यं जिज्ञासुभिः। नात्र विस्तरभयात् प्रपञ्च्यते। तेनास्या व्याख्यायाः कुलमतक्रमदर्शनानुगतत्वं साम्प्रदायिकपदार्थानुवर्तित्वं च सम्यक् ख्याप्यते।

सेतुबन्धः कादिविद्याप्रतिपादकं व्याख्यानम्। ऋजुविमर्शिनी अर्थरत्नावली चात्र शतशः समालोच्यते, न केवलं हादिकादिसम्प्रदायभेददृष्ट्यैव, किन्तु विविधपदव्याख्यान-प्रसङ्गादिष्वपि। उत्तरषट्क-प्रपञ्चसार-संकेतपद्धतिप्रभृतिप्राचीनग्रन्थप्रामाण्यमनुसरत् प्रवृत्तमुक्तं व्याख्यानद्वयं सेतुबन्धे योगिनीहृदय-कादिमत-ज्ञानार्णवादिप्रामाण्येन पराक्रियते। एतादृशेषु कल्पभेदेन वैकल्पिकव्यवस्थाकल्पनमुचितम्, न तु प्रमाणपरिगृहीतस्यार्थस्य सम्प्रदायान्तरसम्मतस्य सर्वथा खण्डनम्। सेतुबन्धस्य व्याख्याद्वयसमालोचकानि प्रायः सर्वाणि स्थलानि ग्रन्थभागे टिप्पणीषु स्थापितानि। तदवलोकनेन ज्ञायते यद् व्याख्यानद्वयातिरिक्तमन्यदपि व्याख्यानं तेन समालोच्यते। द्वादशश्लोकीव्याख्यान-प्रसङ्गे कादिमतमनोरमोद्धृतं काश्मीरव्याख्यानं तेन सेतुबन्धे स्मर्यते। तदेवात्र समालोचितमन्यद्वेति कथं ज्ञायेत। अपि च, उद्धृतानामेषां व्याख्यानद्वयांशानामवलोकनेनेदमपि स्पष्टीभवति यदत्र क्वचन टीकांशानां भावार्थाः, कुत्रचिच्चान्यथाकृत्वाऽपि ते समुद्धृता इति। परवर्तिषु तान्त्रिकदर्शनाचार्येषु वर्तते किमपि वैशिष्ट्यं भास्कररायस्य सौभाग्यभास्कर-सेतुबन्ध-वरिवस्यारहस्यादिप्रणेतुः। सेतुबन्ध-

१. पञ्चमे पटले स्वयम्भ्वादिलिङ्गत्रयव्याख्यानावसरे विद्यानन्देनोत्तरषट्कमेव प्रमाणीकृतम्, न तु लिङ्गचतुष्टयबोधकं योगिनीहृदयम्। अत्र विद्यानन्दभास्करराययोर्मतभेदः प्रमाणभेदप्रयुक्त एव।

व्याख्यानेन टीकाद्वयव्याख्याता अस्पष्टांशाः सुबोधा जायन्ते, मानवस्वभावसुलभास्त्रुटयः परिमार्ज्यन्ते, यत्र क्वचनाभिनवश्चार्थो युक्त्यनुसारी प्रतिपाद्यते। भास्कररायव्याख्यातं तान्त्रिकं दर्शनं दर्शनान्तरानुप्राणितं समवलोक्यते। दृश्यते च सुन्दरीतापिनीप्रभृतीनामुपनिषदां परानन्द-दक्षिणामूर्तिसंहिता-क्रमसंहिताप्रभृतीनां तन्त्रग्रन्थानां पुराणादीनां चात्र प्रमाणतया समुल्लेखः।

## ऋजुविमर्शिनीकारः शिवानन्दः

महार्थमञ्जरीकारेण महेश्वरानन्देन स्वकीये परिमले पञ्चसु स्थलेषु (पृ० ११२, १२३, १२९, १७८, १९३) ऋजुविमर्शिनी परमगुरुकृतित्वेन स्मर्यते। तत्रत्यानि चत्वारि वचनान्यत्र प्रकाशितायामृजुविमर्शिन्यां (पृ० १३३, ९, ३३, ११३-११४) क्रमशो दृश्यन्ते। १२३ तमे पृष्ठे तत्रत्यं किमपि वचनं नोद्धृतम्, किन्तु "स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा" इति श्लोकार्धमुद्धृत्य "एतच्चास्मत्परमगुरुकर्तृके श्रीमदृजुविमर्शिन्यादौ विमर्शनीयम्" इत्यभाणि। श्लोकार्ध एष तन्त्रराज(कादिमत)तन्त्रे (३५।१३) समवलोक्यते। व्याख्यायते च ऋजुविमर्शिन्याम्—"देशकालाकारैरनियन्त्रितस्वभावत्वान्महत्त्वोपेता त्रित्वावस्थितसमस्तधर्मपूरणी चिदानन्दघनस्वात्मपरमार्था स्पृहणीयतया हृदयहारिणी संवित्" ( पृ० ४७ ) इत्यादिना तत्र तत्र महात्रिपुरसुन्दर्यभिधाना ललिता। एवमेव सुभगोदयः, सुभगोदयवासनाभिधा क्रमवासना, सौभाग्यहृदयस्तोत्रं च तत्र परमगुरुकृतित्वेन स्मृतम्। अत्रत्यान्यपि सर्वाणि वचनानि परिशिष्टांशे प्रकाशितेषु ग्रन्थेषु द्रष्टुं शक्यन्ते। तेन ऋजुविमर्शिनीकारः शिवानन्दो महेश्वरानन्दस्य परमगुरुरिति परिज्ञायते।

महार्थमञ्जरीपरिमल एव (पृ० १९७) "अथ सा कालयोगेन शिवानन्दस्य धीमतः" इत्युक्त्वा—

अथ कालक्रमवशाच्चोलदेशशिरोमणिः।
महाप्रकाशो नामासीद् देशिको दृक्क्रियोत्तरः॥
तस्य शिष्योऽभवद् धीमान् गोरक्षो[1] नाम वश्यवाक्।
महेश्वरानन्द इति प्राप्तपूज्याह्वयो महान्॥

---

१. महार्थमञ्जरीकारो गोरक्षापरनामधेयो महेश्वरानन्द एष नवनाथेष्वन्यतमाद् गोरक्षनाथादभिन्न इति केचन संगिरन्ते, तन्न; गोरक्षनाथेन सिद्धसिद्धान्तपद्धतौ—"उक्तं च शिवानन्दाचार्यैः—"सर्वशक्तिप्रसरसंकोचाभ्यां जगत्सृष्टिः संहृतिश्च भवत्येव न सन्देहः। तस्मात् तां मूलमित्युच्यते। अतः प्रायेण सर्वसिद्धा मूलाधाररता भवन्ति" (पृ० २०) इत्येवं विनैव विशेषणं शिवानन्दाचार्यः स्मर्यते। यद्यप्यस्मदुपलब्धेषु शिवानन्दग्रन्थेषु नैतद्वचनमवलोक्यते, तथापि यदि गोरक्षनाथो महेश्वरानन्दश्चाभिन्ने व्यक्ती स्याताम्, तर्हि तेन स्वकीयः परमगुरुः शिवानन्द एवात्र स्मृतो भवेत्। अत्रत्यं च शिवानन्दाचार्य इति पदं तेनापरिचयमेव तस्य प्रख्यापयति।

इत्युच्यते। एतेन शिवानन्दस्यापि चोल(केरल)देशेऽवस्थितिरनुमातुं शक्यते। सपरिमलस्य महार्थमञ्जरीग्रन्थस्य मातृकाः केरललिप्यामेव प्राय उपलब्धाः। शिवानन्दस्यान्ये ग्रन्था अपि बाहुल्येन दक्षिणापथ उपलभ्यन्ते। न केवलं शिवानन्दस्य, पुण्यानन्दामृतानन्दादीनां ग्रन्था अपि दाक्षिणात्येषु पुस्तकालयेषु प्रायेणावलोक्यन्ते। कामकलाविलासस्य योगिनीहृदयदीपिकायाश्च सार्वत्रिकः प्रचारस्तयोर्महत्त्वं ख्यापयति, किन्तु तद्विरचितानामन्येषां ग्रन्थानां मातृकाः प्रायेण दाक्षिणात्येष्वेव पुस्तकालयेषु दृश्यन्ते। अतः सर्वे एते आचार्या दाक्षिणात्या इति वयं संभावयामः। महार्थमञ्जरीकारिका[1] महाराष्ट्रप्राकृतनिबद्धाः। ऋजुविमर्शिनी प्रत्यभिज्ञादर्शनमनुसरतीति कृत्वा शिवानन्दः काश्मीराभिजन इति नैव शङ्कनीयम्, काश्मीरस्य प्रत्यभिज्ञाक्रमदर्शनानुसरणस्य महेश्वरानन्दग्रन्थेऽपि दर्शनात्, तेन च स्वयमेव स्वकीयस्य [2]चोलदेशाभिजनत्वस्य ख्यापनात्। "सम्प्रदायस्य कश्मीरोद्भूतत्वात्" (ऋजु० पृ० १४४) इति वचोभङ्ग्याऽपि शिवानन्दस्य कश्मीरानभिजनत्वं व्यज्यते।

शिवानन्दस्य देशकालादिविषयेऽस्माभिरन्यत्र[3] परामृष्टम्। अपि च, "स्वच्छन्दभैरवे तन्त्रे" इत्यादिकमाचार्यवचनमृजुविमर्शिनी (पृ. २२५) प्रमाणयति। ईशानशिवगुरुदेवपद्धत्यां सोमशम्भुकृतित्वेनैतदस्मारि, उपलभ्यते चैतद्वचनं सोमशम्भुविरचितायां कर्मकाण्डक्रमावल्याम् (पृ. ५५)। सोमशम्भुना ग्रन्थोऽयं ११३० वैक्रमे वत्सरे ( १०७३ ई० ) पूरितः। तमिमं ग्रन्थं प्रमाणयता शिवानन्देन तत्परवर्तिनैव भाव्यम्। सौन्दर्यलहरीव्याख्यातुर्लक्ष्मीधरस्य समयः श्रीमता [4]चिन्ताहरणचक्रवर्तिमहोदयेन १४९७-१५३९ ई. मध्ये निर्धारितः। लक्ष्मीधरेण कामकलाविलासः स्मर्यते। कामकलाविलासकारश्च शिवानन्दपश्चाद्भव इति कृत्वा शिवानन्दस्य स्थितेः पूर्वापरे सीमनी पूर्वोक्तयोः कालयोरभिमन्तव्ये।

शिवानन्दस्य ग्रन्थचतुष्टयमत्र प्रकाश्यते। शम्भुनिर्णयदीपिकाऽस्यैव शिवानन्दस्य कृतिः। अस्या अपूर्णा मातृका मद्रपुरीराज्यपुस्तकालये विद्यते। एवमेव सुभगोदयप्रभाऽपि शिवानन्दस्यैव कृतिः। मद्रासराज्यपुस्तकालये एकस्यामेव मातृकायां R. ४४४५b संख्याकायां १-१०a पत्रेषु सुभगोदयः सुभगोदयवासना च वर्तते। ग्रन्थद्वयमपि तत्र सुभगोदयवासनानाम्ना विव्रियते। तदनन्तरं R. ४४४५b संख्याका मातृका १०a-१३b संख्यकेषु पत्रेषु वर्तते सुभगोदयप्रभायाः। अत्रत्येषु विवरणश्लोकेषु दृश्यते यच्छिवानन्देन सुभगोदये नित्यपूजाविधिरुक्तः, सुभगोदयप्रभायां च नैमित्तिकविधिरुच्यते। अथ च तेन शाम्भवोदयनामा ग्रन्थोऽपि रचित इति। तद्यथा—

---

१. "महाराष्ट्रभुवं भाषां प्रयुञ्जाना स्मितोत्तरम्" (पृ० १९८) इति, "किञ्च भाषा तदीयैव माधुर्यामृतवर्षिणी" (पृ० १९९) इति च महार्थमञ्जरीपरिमले।

२. चोलास्ते सततोत्सवा जनपदाः····(म० ५०, पृ० २०२)।

३. "त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च" इत्याख्ये निबन्धे, सारस्वती सुषमा, व. २०, अ. २, पृ. २४-२५।

४. दी तन्त्राज : स्टडीज ऑन देयर रिलीजन एण्ड लिटरेचर, पृ. ७२।

संग्रहोक्तमनुक्तं वा यत्किञ्चित् सुभगोदये ।
द्रष्टव्यं तदशेषेण मदुक्ते शाम्भवोदये ॥ इति ।

संवित्स्तोत्रं त्रिपुरसुन्दरीमन्दिरस्तोत्रं च शिवानन्दकृतित्वेन महार्थमञ्जरीपरिमले[1] उट्टङ्कितम् । स्वतन्त्रानन्दकृतिर्मातृकाचक्रविवेकः शिवानन्दरचितया टीकया सह सरस्वतीभवनग्रन्थमालायां प्रकाशितः । सोऽयं शिवानन्द[2] ऋजुविमर्शिनीकारतो भिन्नः । सिंहसिद्धान्तसिन्धुकारो जगन्निवासात्मजो गोस्वामिशिवानन्दश्चाभ्यां भिन्नः । एतावता ग्रन्थनवकं साम्प्रतं शिवानन्दस्य कृतित्वेन निश्चीयते निष्प्रत्यूहम् ।

महेश्वरानन्दस्य परमगुरुर्महाप्रकाशस्य गुरुरयं शिवानन्दः स्वात्मानन्दस्य[3] शिष्यः प्रतिष्ठानन्दस्य[4] सूनुरिति ऋजुविमर्शिनी-शम्भुनिर्णयदीपिकोपोद्घातपद्यैः परिज्ञायते । मानवौघगुरुष्वन्तिमो वासुदेवमुनिरेव स्वात्मानन्द इति वयं प्रतीमः । तेन हि ( वासुदेवमुनिना ) पुत्रीकृत ऋजुविमर्शिनीकर्ता शिवानन्दमहायोगी ( ऋजु. पृ. २२४ ) । सौभाग्यसुधोदये मानवौघगुरुष्वन्तिमे द्वे नामनी परमानन्दः स्वात्मानन्द इति दृश्येते । एते च ऋजुविमर्शिन्यादिप्रदर्शितरत्नदेव-वासुदेवस्थानीये । तेन वासुदेव एव स्वात्मानन्दः । तेन पुत्रीकृतत्वाच्छिष्यत्वेन परिगृहीतत्वात् शिवानन्दस्तस्य शिष्यः । मद्रपुरीराज्यपुस्तकालय एव R. ४४४६ संख्याका निष्कलक्रमचर्चाया मातृका वर्तते । तस्या अयं प्रथमः श्लोकः—

श्रीशिवानन्दपौत्रेण श्रीचिदानन्दसूनुना ।
श्रीकण्ठानन्दमुनिना चर्च्यते निष्कलक्रमः ॥ इति ।

स्वच्छन्दपद्धतिकर्ता चिदानन्दः शिवानन्दस्य पुत्रः शिष्यश्च । चिदानन्देन[5] प्रार्थितः शिवानन्दः शम्भुनिर्णयदीपिकां रचयामास । चिदानन्दस्य पुत्रः श्रीकण्ठानन्दो निष्कलक्रमचर्चाकारः । एवं चायमत्र वंशपरम्पराक्रमः—प्रतिष्ठानन्दः, शिवानन्दः, चिदानन्दः, श्रीकण्ठानन्द इति ।

## सुभगोदयः सुभगोदयवासना च

"ऋजुविमर्शिन्यां विद्या न लिख्यन्ते, सुभगोदये लिखितत्वात् । ऋजुविमर्शिन्यां तु ग्रन्थविवरणं क्रियते । इदमप्युक्तमस्माभिः—

---

१. द्रष्टव्यम्—पृ. १२९, १९५ ।

२. अत्र प्रमाणं पूर्वोक्तेऽस्मदीये निबन्धे २५ पृष्ठस्थ ४ टिप्पण्यां द्रष्टव्यः ।

३. स्वात्मानन्दमहेशानचरणान्तेनिवासिना । ( ऋजु. पृ. २ )

४. "अजेशप्रभुपात्रेण प्रतिष्ठानन्दसूनुना" इति, "प्रतिष्ठानन्ददुग्धाब्धेः शिवानन्देन्दुरुत्थितः" ( श. दी. उपोद्घाते ) इति च ।

५. "अकरोदर्थितो व्याख्यां चिदानन्देन धीमता" ( श. दी. उपोद्घाते ) ।

पूर्वं[1] विद्यां गुरोर्लब्ध्वा मूलमृजुविमर्शिनीम् ।
महासारं सुकृतिनः पश्यन्तु सुभगोदयम् ॥"

( ऋजु० पृ० १०६–१०७ )

अत्र मूलग्रन्थं नित्याषोडशिकार्णवं तद्व्याख्यामृजुविमर्शिनीं च दृष्ट्वा महासारं सुभगोदयं पश्यन्तु सुधिय इति शिवानन्द ऊचे । नित्याषोडशिकार्णवस्य प्रथमपटलस्थः सर्वोऽपि विषयोऽत्र संक्षेपेण प्रतिपादितः, तत्र सूचिताः सर्वा विद्याश्च समुद्धृता इत्यस्य महासारत्वविशेषणं समुचितमेव । [2]सुभगोदयस्त्रिपुरसुन्दरीनित्यपूजाप्रतिपादकः संक्षिप्ततमः पद्धतिग्रन्थ इत्यवगन्तव्यम् । ऋजुविमर्शिन्यां बहुश एतत् स्मर्यते । तत्रत्यानि सर्वाणि स्थलानि मुद्रितेऽस्मिन् सुभगोदये समुपलभ्यन्ते । मूलविद्या सुभगोदये न लिखिता, अतिरहस्यत्वात् । नित्याषोडशिकार्णवे पञ्चदशतिथिनित्याविद्या नोद्धृताः, सुभगोदये तु ( पृ० २८९-२९० ) दृश्यते तासां समुद्धारः ।

सुभगोदयवासना त्रिपुरसुन्दर्या आन्तरवरिवस्यां समुपदिशति । सुभगोदयः सुभगोदयवासना च भिन्नावेतौ ग्रन्थौ । महेश्वरानन्दः सुभगोदयवासनां क्रमवासनानाम्ना स्मरति, सुभगोदयं च तन्नाम्नैव । त्रिवेन्द्रम्-मातृकायां सुभगोदय एवास्ते, न सुभगोदय-वासना । मद्रासपुस्तकालये तु मातृकायामेकस्यामेवोभौ ग्रन्थौ प्राप्येते, सुभगोदयवासना-नाम्नैकग्रन्थत्वेन च तौ विवृतौ । सुभगोदयवासना योगिनीहृदयदीपिकायां चिद्वल्ल्यां च स्मर्यते । अनयोर्ग्रन्थयोः साहाय्येनैवास्माभिरत्रत्य एकः श्लोको मातृकायामनुपलब्धः समुद्धृतः । सुभगोदये सुभगोदयवासनायां सुभगोदयप्रभायां च सप्ततिसंख्यामिताः श्लोकाः सन्तीति स्वयमेव ग्रन्थकारो वदति । महेश्वरानन्दोऽपि महार्थमञ्जर्यां सप्ततिसंख्यामिताः कारिका अनुबध्नाति । शिवानन्दमहेश्वरानन्दयोरस्यां संख्यायामभिनिवेशः किंमूलक इति विचार्यम् ।

अम्बास्तवटीकायाम्[3]—"श्रीशङ्कराचार्यकृतौ सौभाग्यविद्यासुभगोदयाख्यौ" इति दृश्यते । एतौ ग्रन्थौ तत्र नैकत्रोद्धृतौ । लक्ष्मीधरायामपि सव्याख्यानः सुभगोदयो नैकत्र स्मृतः ( पृ० ४६, ७६, ८०, ८१, ९९, ११०, १४९, १५०, १७२, १७९, १८०,

---

१. एष श्लोकोऽस्माभिर्दृष्टेषु शिवानन्दग्रन्थेषु नोपलभ्यते । "संग्रहोक्तमनुक्तं वा यत्किञ्चित् सुभगोदये । द्रष्टव्यं तदशेषेण मदुक्ते शाम्भवोदये ॥" इति सुभगोदयप्रभावचनादेतज्ज्ञायते यत् शिवानन्देन शाम्भवोदयनामा विस्तृतो ग्रन्थो लिखितः, यत्र हि सुभगोदये संक्षेपेणोक्ता अनुक्ता वा विषयाः प्रतिपादिता इति । तत्रत्य एवैष श्लोको भवेत् ।

२. सुभगोदयप्रभा शिवानन्दस्य नैमित्तिकपूजाप्रतिपादिको ग्रन्थः । यदुक्तं ग्रन्थारम्भे—

एवं समाप्य विधिवन्नित्यपूजामनन्तरम् ।
नैमित्तिकविधिं वक्ष्ये भक्तानामनुकम्पया ॥ इति ।

३. सरस्वतीभवनपुस्तकालयस्थितायाः २१९२२ संख्यकाया मातृकाया द्वितीयं पत्रं द्रष्टव्यम् ।

१८७, ३०५, ३०७ )। "सुभगोदयव्याख्यानावसरे निपुणतरमुपपादितमस्माभिः" ( पृ० ८१, १८० ), "एतत्सर्वं सुभगोदयव्याख्यानावसरे चन्द्रकलायां सम्यङ्निरूपितमस्माभिः" ( पृ० ११० ) इत्यनेनोद्धरणद्वयेन ज्ञायते यत्स्वयं लक्ष्मीधरेणैव सुभगोदयव्याख्यानं व्यरचि। "यथोक्तं भगवत्पादैः सुभगोदयव्याख्याने—शिखिज्वालारूपः समय इह सैवात्र समया, तयोः संभेदो मे दिशतु हृदयाब्जैकनिलयः। इति" ( पृ० १७५ ) अनेन च ज्ञायते यदत्र भगवत्पादव्याख्यानमप्यासीत्। ८० तमे पृष्ठे "परोऽपि शक्तिरहितः" इत्यादिकः श्लोकः सुभगोदयनाम्नोद्धृतः। एष च श्लोको नित्याषोडशिकार्णवे ( ४।६ ) दृश्यते। एवं प्रतीयते यद्यथा सौन्दर्यलहर्यां नित्याषोडशिकार्णवस्थाः केचन विषयाः संनिविष्टास्तथैव सुभगोदयेऽपि ते संनिविष्टाः स्युरिति। अत्रैव ९९ तमे पृष्ठे सुभगोदयस्य कश्चन गद्यांशः समुद्धृतः। तेन ग्रन्थ एष गद्यपद्यात्मक आसीदिति संभाव्यते। सुभगोदयस्य लल्लेन विरचितायाष्टीकाया उल्लेखो भास्कररायेण स्वकीये ललितासहस्रनामभाष्ये ( पृ० ७७ ) कृतः। एष ग्रन्थश्चात्र ( पृ० ७६ ) वासनासुभगोदयनाम्नापि स्मृतः। ग्रन्थ एष शिवानन्दमुनेः सुभगोदयात् सुभगोदयवासनातश्च भिन्न एव, अत्रत्यानामुद्धृतानां श्लोकानां तत्रानुपलब्धेः। सौभाग्यवर्धनीकारेण कैवल्याश्रमेण तु शिवानन्दमुनिरेव स्मृतः, तत्रोद्धृतस्य ( पृ० ३६ ) सार्धैकस्य श्लोकस्यात्रोपलब्धेः ( पृ० २८४ )। गौडपादाचार्यकृतिरूपेण प्रसिद्धा सुभगोदयस्तुतिर्न कचन प्राचीनेष्ववर्वाचीनेषु वा ग्रन्थेषूद्धृतोपलभ्यते। सा च पूर्वोद्धृताभ्यां ग्रन्थाभ्यां पृथगेव।

## अर्थरत्नावलीकारो विद्यानन्दः

योगिनीहृदयानुप्रास्ताविके ( पृ० घ ) टिप्पण्यामस्माभिः सौभाग्यरत्नाकरादिकर्ता विद्यानन्द एवार्थरत्नावलीकार इत्युदलेखि। नवीनोपलब्धैः प्रमाणैस्तु भिन्नावेतौ ग्रन्थकारौ भवतः। सौभाग्यरत्नाकरकर्तुर्विद्यानन्दस्य गुरुः सच्चिदानन्दनाथः, अर्थरत्नावलीकारस्य तु रत्नेशः। प्रथमः कादिविद्यापद्धतिकारः, द्वितीयश्च हादिमतानुसारिणीं[1] पद्धतिमारचयति। अर्थरत्नावलीकारो यद्यपि स्वात्मानं सम्प्रदायद्वयज्ञत्वेन[2] ख्यापयति, नित्याषोडशिकार्णवसूत्राणि च प्रथमं कादिमतानुसारं व्याख्याति; तथापि तस्य वर्तते कोऽपि पक्षपातो हादिविद्यायाम्। अत एव भास्कररायः सर्वथा तद्व्याख्यानं खण्डयति, अनुमोदयति च सौभाग्यरत्नाकरकारमतानि सर्वत्र स्वकीयेषु ग्रन्थेषु।

हादिविद्यामनुसरतो विद्यानन्दस्योपलभ्यते ग्रन्थद्वयं साम्प्रतम्—अर्थरत्नावली, ज्ञानदीपविमर्शिनी च। अर्थरत्नावली प्रकाशितैवात्र। साऽस्य ग्रन्थकारस्य प्रथमा कृतिः, ज्ञानदीपविमर्शिन्याः स्थलत्रयेष्वर्थरत्नावलीस्मरणदर्शनात्[3]। ज्ञानदीपविमर्शिन्या मातृका

---

१. "....लोपामुद्रामतस्थितैः। सद्भिः संसेवनीयेयं ज्ञानदीपविमर्शिनी॥" इति ज्ञानदीपविमर्शिनीस्थ उपोद्घातश्लोकः ( १ क )।

२. सम्प्रदायद्वयज्ञेन ( अर्थ० पृ० ४ )।

३. द्रष्टव्यम्—२८ क, ४३ ख, ५६ क।

गायकवाडशोधसंस्थायां केरलविश्वविद्यालयग्रन्थागारे नेपालस्थवीरपुस्तकालये च सन्ति।

सेयं ज्ञानदीपविमर्शिनी योगिनीहृदयदीपिकायां ( पृ० १६० ) स्मर्यते। अर्थरत्नावल्या मातृका १६२३ वैक्रमे वत्सरे लिखिता गायकवाड़शोधसंस्थायां वर्तते। तत्रत्याया एव ज्ञानदीपविमर्शिनीमातृकाया लिपिशास्त्रदृष्ट्या परीक्षणे कृते चतुर्दशशताब्दीतो नवीनः कथमपि न शक्येत साधयितुं समयस्तस्याः। सोमशम्भुग्रन्थः कर्मकाण्डक्रमावली विद्यानन्देन विमलस्वात्मशम्भुना ज्ञानदीपविमर्शिन्यां ( पृ० ३४ ख ) स्मृतः। सोमशम्भुना चैष ग्रन्थः ११३० वैक्रमे वत्सरे पूरित इति पूर्वमुक्तम्। अतो विक्रमस्य द्वादशत्रयोदशचतुर्दशशताब्दीषु कश्चन समयोऽस्य स्वीकर्तव्यः। शिवानन्दविद्यानन्दौ समसामयिकौ स्यातामित्यस्माभिः संभाव्यते।

अर्थरत्नावलीमङ्गलाचरणश्लोकेषु प्रथमे महावनः, द्वितीये प्रियानन्दः, चतुर्थपञ्चमयोश्च गुरू रत्नेशः प्रणम्यते। तदनु शिवः, कामेश्वरी, त्रिविधा दम्पती, कङ्कालप्रभृतयः सिद्धाः, गणनाथः, वटुकः, योगिनीवृन्दम्, भैरवाश्च स्तूयन्ते। एषु महावनमुनेः श्लोक एष दृश्यते महार्थमञ्जरीपरिमले—

अलिपिशितपुरन्ध्रीभोगपर्याकुलोऽहं
बहुविधकुलयोगारम्भसंभावितोऽहम्।
पशुजनविमुखोऽहं भैरवीसंश्रितोऽहं
गुरुचरणपरोऽहं भैरवोऽहं शिवोऽहम्॥ ( पृ० १७० )

अर्थरत्नावली प्राधान्येन कौलमतं व्याख्यातीति पूर्वमुक्तम्। एष श्लोकोऽपि तन्मतपोषक एव। अत्र रत्नेशो विद्यानन्दस्य गुरुः, प्रियानन्दः परमगुरुः, महावनमुनिश्च परमेष्ठिगुरुरिति संभाव्यतेऽस्माभिः। शिवः, कामेश्वरी, त्रिविधा दम्पती, कङ्कालप्रभृतयश्च सिद्धाः क्रमोदयप्रकरणे व्याख्यास्यन्ते। गणनाथः, वटुकः, योगिनीवृन्दम्, भैरवाश्च कौलमतस्य विशिष्टा देवता इति संकेतपद्धतिज्ञानदीपविमर्शिनीप्रभृतिषु ग्रन्थेषु मङ्गलाचरणश्लोकेषु स्तूयन्ते।

## अमृतानन्दस्तस्य सौभाग्यसुधोदयचिद्विलासे

योगिनीहृदयस्यानुप्रास्ताविके पुण्यानन्दामृतानन्दयोः कृतीरभिलक्ष्य किञ्चिदुक्तम्। योगिनीहृदयदीपिकायां कृतीनामेतासामुद्धरणावसरे दृश्यते द्विप्रकारकः पाठः। मुद्रिते दीपिकाग्रन्थे सर्वत्र तेषु स्थलेषु 'इत्यस्मद्गुरूक्तरीत्या' इति पाठो मूले स्थापितः, 'अस्मदुक्तरीत्या' इति पाठस्तु पाठसंकलनात्मिकासु टिप्पणीषु। एवमेव 'सौभाग्यसुभगोदय' इति पाठो मूले, टिप्पणीषु च 'सौभाग्यसुधोदय' इति दृश्यते। पाठद्वयमेतदस्माभिः बड़ोदा-बम्बई-पूनास्थसंस्थास्थितासु दशाधिकासु मातृकासु संवादितम्। सर्वत्र द्वितीय एव पाठः समुपालम्भि। अत्र यद्वक्तव्यं तदस्माभिस्तत्त्वविमर्शिनीपरिचयावसरे प्रतिपादयिष्यते। भास्कररायप्रभृतिभिः सौभाग्यसुधोदयनाम्नैव स्मृतत्वादिदमेवास्य ग्रन्थस्य नाम। अत्र सन्ति षट् प्रपञ्चाः। तत्र प्रथमे प्रपञ्चे वाक्चतुष्टयम्, वर्णोत्पत्ति-

प्रकारः, तत्त्वानां स्वरूपमुत्पत्तिक्रमश्च प्रादर्शि। षट्त्रिंशत्तत्त्वप्रतिपादका अत्रत्याः श्लोका एव कश्मीरग्रन्थमालायां षट्त्रिंशत्तत्त्वसंदोहनाम्ना प्रकाशिताः। द्वितीये हादिविद्यासमुद्धारः प्रदर्श्यते। तृतीयचतुर्थपञ्चमेषु श्रीचक्रप्रपञ्चः, षष्ठे च प्रपञ्चे गुरुपङ्क्तिक्रमः प्रपञ्च्यते।

चिद्विलासस्य गपुस्तकेऽमृतानन्दस्तत्कर्तृत्वेन निर्दिष्टः, घपुस्तके च पुण्यानन्दः। 'अस्मद्गुरूक्त' इत्यस्य स्थाने 'अस्मदुक्त' इति पाठस्यैव बाहुल्येनोपलब्धेः, "कायति नानानामप्रपञ्चरूपेण मातृका देवी" (सौ० सु० १।६) इति सौभाग्यसुधोदयोद्धरणस्थले 'अस्मदुक्त' इति पाठस्यैव स्वारसिकत्वाद् दीपिकायां सर्वत्र स एव पाठः परिग्राह्यः। तेन च चिद्विलासस्तवकारोऽमृतानन्द एव सिद्ध्यति।

अत्र च गुरुपादुकास्मरणप्रभृतिविसर्जनान्तो मानस उपचारविधिः प्रदर्शितः। भट्टगङ्गाधरस्तोत्र-गीतानिष्यन्द-संकेतपद्धति-विज्ञानभैरवप्रभृतिग्रन्थेषु सूच्यते सा मानसिकी पूजापद्धतिः, या आन्तरवरिवस्यानाम्ना तन्त्रशास्त्रेषु परिगीयते। सुभगोदय-वासनायामपि श्रीचक्रस्यान्तरमाराधनमारचितम्। दृश्यते चैवंविधं व्याख्यानमृजुविम-र्शिन्यामर्थरत्नावल्यामपि च नित्याषोडशिकार्णवस्य। योगिनीहृदयं त्वन्तर्यागप्रधानमेव स्वीक्रियते।

एवमत्र सम्पादितानां ग्रन्थानां तत्कर्तॄणां च विषयं विविच्याधुना नित्याषोड-शिकार्णवस्य प्रारम्भे परिगणितानि चतुष्षष्टितन्त्राण्युद्दिश्य विचार्यते।

## चतुष्षष्टितन्त्राणि

चतुष्षष्टितन्त्रनामानि जयरथकृततन्त्रालोकविवेकधृतायां श्रीकण्ठ्यां संहितायाम्, नित्याषोडशिकार्णवे, कुलचूडामणौ, सर्वोल्लासतन्त्रे, महासिद्धसारतन्त्रपरिगणितेषु विष्णुक्रान्ता-रथक्रान्ता-अश्वक्रान्ताविभागेषु च दृश्यन्ते। तत्र श्रीकण्ठ्यां संहितायामभेद-प्रधानानां चतुष्षष्टिभैरवागमानां समुल्लेख इत्येकः प्रकारः। नित्याषोडशिकार्णवस्थः प्रकारो द्वितीयः, यत्र हि मुख्येषु विभिन्नेषु तान्त्रिकमतेषु तदानीन्तनेषु प्रथितानां तन्त्राणां समावेशः। एतच्चाग्रे प्रतिपादयिष्यते। कुलचूडामणिरिममेव प्रकारमनुसरति। सर्वोल्लासादितन्त्रस्थः प्रकारस्तृतीयः। अत्र विष्णुक्रान्तादिविभागेषु च केषाञ्चन मानव-कृतीनामपि समावेशादिमानि तन्त्राणि कालक्रमापेक्षया पश्चादाविर्भूतानीव प्रतीयन्ते। विस्तरभयादत्रापहाय प्रकारद्वयं नित्याषोडशिकार्णवस्थः प्रकार एव प्राधान्येन चर्च्यते। चतुष्षष्टिभैरवागमा अष्टाष्टकविभागेनाष्टभिर्भैरवैरुपदिष्टा इति तन्त्रालोकविवेकधृत-श्रीकण्ठीयसंहितावचनेभ्यः स्पष्टम्। तत्र स्वच्छन्दादीनि भैरवतन्त्राणि बहुरूपेण, मत-तन्त्राणि चण्डेन, मङ्गलातन्त्राणि क्रोधेशेन, चक्राष्टकम् असिताङ्गेन, अन्धकाद्यं बहु-रूपाष्टकं रुरुणा, वागीशाष्टकं कपालीशेन, शिखाष्टकम् उन्मत्तेन भैरवेण भाषितानि। यामलाष्टकप्रवक्तुर्भैरवस्य नामात्र न दृश्यते। एवमेव भैरव-यामल-मताष्टकेषु प्रत्येकं सप्तैव तन्त्राणि परिगणितानि। श्रीकण्ठीग्रन्थमवलम्ब्यैव भैरवतन्त्राणां परिगणनं द्वित्रेषु ग्रन्थेषु दृश्यते। तत्र काशिकनागरीप्रचारिणीसभाप्रकाशितविश्वकोशस्य पञ्चमे खण्डे 'तन्त्रसाहित्य' इति शब्दविवरणे प्रतिपादितः क्रम एव ग्रन्थानुसारी।

नित्याषोडशिकार्णवेऽत्रत्यं भैरवाष्टकं बहुरूपाष्टकं यामलाष्टकं च निर्दिष्टम्, नामानि तु न परिगणितानि। मताष्टकनामानि यद्यपि परिगणितानि, तथापि तानि श्रीकण्ठीनामावलीतो भिन्नान्येव। [1]नित्याषोडशिकार्णवोक्तचतुष्षष्टितन्त्रपरिगणने वर्तते मतभेदष्टीकाकाराणाम्। तत्र वामकेश्वरीमतविवरणपाठे, सौन्दर्यलहरीव्याख्याकार-लक्ष्मीधरधृतपाठे च चतुषष्टिसंख्यासंपत्तिः सूपपादा, यद्यप्यनयोर्नामावल्योर्नैव साम्य-मवलोक्यते। सेतुबन्धाङ्गीकृते कुलचूडामणिस्थे च पाठे सा दुरुपपादेति तत्संपत्तये कश्चन मार्गोऽन्वेषितस्तत्र। तथा हि—

"अत्र ऋजुविमर्शिन्यां महामायातन्त्रं शम्बरतन्त्रं चेति तन्त्रद्वयपरं व्याख्यातम्। [2]लक्ष्मणेन तु महामायाशम्बराख्यमेकं तन्त्रमित्युक्तम्। अर्थरत्नावल्यां तु द्वयमपि नोक्तम्। महालक्ष्मीमतं देवेत्यादि वक्ष्यमाणं श्लोकद्वयं कैश्चित्परित्यक्तम्, अन्यैस्तु स्वीकृतम्। परन्तु सर्वेषामेव मते चतुष्षष्टिसंख्यासंपत्तिर्दुरुपपादा। वस्तुतस्तु तत्संपत्त्यर्थमेवास्मिन् श्लोके पूर्वार्धे चत्वारि तन्त्राणि। तत्त्वशम्बरमेकं भैरवाष्टकं चैकमिति षट्तन्त्राणि। केचित्तु—

असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च।
कपाली भीषणश्चेति संहारश्चाष्टभैरवाः॥

इत्युक्तानामष्टानां भैरवाणामष्टौ तन्त्राणीत्याहुः। अन्ये[3] तु—सिद्धिभैरव-बटुकभैरव-कङ्कालभैरव-योगिनीभैरव-महाभैरव-शक्तिभैरव-मायिकभैरव-कङ्कालाग्निभैरवाष्टक-प्रतिपादकं तन्त्राष्टकमित्याहुः। तदुभयमपि संख्यासम्पत्तिविरोधाद् यामलादिशब्दवद् भैरवशब्दस्य तन्त्रेषु क्वापि प्रयोगादर्शनाच्च चिन्त्यम्। तस्मात् षोडशनित्यानामेक-तन्त्रवदष्टभैरवाणामेकमेव तन्त्रमिति व्याख्येयम्।....." (पृ० २२) इति सेतुबन्धे।

अत्र यद्वक्तव्यं तद्यथावसरं वक्ष्यते। अधुना चतुष्षष्टितन्त्राणि परिगण्यन्ते—

१–५. महामायाशम्बरं योगिनीजालशम्बरं तत्त्वशम्बरं चेति त्रीणि तन्त्राणीति लक्ष्मीधरः। गौरीकान्तो लक्ष्मणमेवानुसरति। महामाया-शम्बर-योगिनी-जालशम्बर-तत्त्वशम्बररूपाणि पञ्च तन्त्राणीत्यन्ये सर्वेऽपि व्याख्यातारः। अर्थरत्नावलीकारेण तु ग्रन्थांश एष न व्याख्यातः। बौद्धतन्त्राणां भोटानुवादेषु महामाया-जालशम्बर-माया-जालप्रभृतीनि तन्त्राण्युपलभ्यन्ते। नगेन्द्रनाथवसुसंगृहीते विश्वकोशे शम्बर-डाकिनीजाल-योगिनी-योगिनीजाल-मायाजाल-प्रभृतीनि बौद्धतन्त्राणि प्रदर्शितानि। म० म० हरप्रसाद-शास्त्रिसंदृब्धायां नेपालग्रन्थसूच्यां डाकिनीजालशम्बर-योगिनीजालतन्त्रयोर्मातृके दृश्येते। सर्वाण्येतानि तन्त्राणि भगवता बुद्धेन तदवतारभूतेन वा बोधिसत्त्वादिनोपदिष्टानि स्युः। अत्र तु "एवमेतानि शास्त्राणि तथान्यान्यपि कोटिशः॥ भवतोक्तानि मे देव" (१।२१-२२) इति वचनाच्छिवोपदिष्टानीमानि तन्त्राणीति ज्ञायते। अस्मिन् विषये नाधुना किमप्यधिकं वक्तुं पार्येत।

---

१. वामकेश्वरीमतपाठ एव चतुष्षष्टितन्त्रपरिगणनात्मकोऽत्र प्राधान्येनादृतोऽस्माभिः।

२. लक्ष्मणेन = सौन्दर्यलहरीव्याख्यात्रा लक्ष्मीधरेण।

३. लक्ष्मीधरगौरीकान्तप्रभृतयः।

६-१३. भैरवाष्टकविषये भास्कररायलक्ष्मीधरयोर्मतवैभिन्न्यमनुपदमेव प्रदर्शितम् । मन्ये श्रीकण्ठीया तन्त्रनामावली भैरवाष्टकप्रतिपादिका भास्कररायेण लक्ष्मीधरेण च नैव दृष्टा । "असिताङ्गाद्यष्टभैरवाणां पूजाशास्त्राणि" ( पृ० ४३ ) इत्यर्थं रत्नावलीकार आह । सेतुबन्धस्थः श्लोकस्तु तेन नोद्धृतः । एतदनुकारः श्लोक उत्तरषट्के दृश्यते । एतेऽसिताङ्गादयोऽष्टौ भैरवाः प्रपञ्चसार-त्रिपुरासारसमुच्चय-ईशानशिवगुरुदेवपद्धतिप्रभृतिषु ग्रन्थेषु दृश्यन्ते । श्रीकण्ठीयसंहितायां तु स्वच्छन्द-चण्ड-क्रोध-उन्मत्त-असिताङ्ग-महोच्छुष्म-कपालीशाख्याः सप्त भैरवा निर्दिष्टाः, अष्टमस्य तु नाम न दृश्यते । ब्रह्मयामले स्वच्छन्द-क्रोध-उन्मत्त-उग्र-कपालि-झङ्कार-शेखर-विजयाख्या अष्टौ भैरवा उपदिष्टाः । स्वच्छन्दतन्त्रे कपालीश-शिखिवाहन-क्रोधराज-विकराल-मन्मथ-मेघनादेश्वर-सोमराज-विद्याराजाख्या अष्टौ भैरवाः सन्ति परिगणिताः । एवं तन्त्रेषु परस्परं मतभेदे जाग्रति भैरवतन्त्राणामुपलब्धानामुद्धृतानां वा परिमार्गणे क्रियमाणे समुपलब्धानि भवन्तीमानि नामधेयानि ग्रन्था वा—स्वच्छन्दतन्त्रं मुद्रितमुपलभ्यत एव । स्वच्छन्द-चण्ड-त्रिशिरो-भैरवा नेत्रतन्त्रोद्योते ( भा० १, पृ० २२५ ) स्मृताः । त्रिशिरोभैरवस्तन्त्रालोके तद्विवेके च बहुशः स्मर्यते । उन्मत्तभैरव ऋजुविमर्शिन्या ग.मातृकायामुल्लिखितः । उच्छुष्मभैरवस्तन्त्रं च क्षेमराजेन शिवसूत्रविमर्शिन्यां स्वच्छन्दोद्योतादिषु चोद्धृतम् । उच्छुष्मतन्त्रं बौद्धतन्त्रग्रन्थेऽद्वयवज्रसंग्रहेऽपि ( पृ० २८ ) स्मर्यते । मन्थानभैरवस्य ५८१९ संख्याका मातृका कलिकातास्थ-एशियाटिकसोसाइटी-संस्थायां वर्तते । एवं च बहूनां भैरवतन्त्राणामुपलम्भादत्राष्टौ भैरवतन्त्राणि परिगणितानि, न तु भैरवाष्टकमेकमिति मन्तव्यम् ।

१४-२१. बहुरूपाष्टकं शक्तितन्त्राष्टकमिति शिवानन्दः । ब्राह्म्यादयः सप्त मातरः शिवदूत्येकेत्यष्टानां प्रतिपादकान्यष्टौ बहुरूपतन्त्राणीति लक्ष्मीधरो गौरीकान्तश्च । अन्धक-रुरुभेद-अजाख्य-मूलाख्य-वर्णभण्ठ-विडङ्ग-ज्वालिन-मातृरोदनात्मकं बहुरूपाष्टकमिति श्रीकण्ठीयसंहिता । "बहुरूपाष्टकं शास्त्रं संक्षिप्य चतुश्शतसंख्यापरिमितैर्ग्रन्थैस्तत्सारमुद्धर्तुकामः·····" ( पृ० ४, ३४ ) इति विद्यानन्दः । कादिमतमनोरमाकारः सुभगानन्दनाथो नवनित्यातन्त्रेषु बहुरूपाष्टकमेकं परिगणयति । बहुरूपाष्टकतन्त्रं ( बहुरूपाष्टकप्रस्तारो वा ) सौभाग्यभास्करे ( पृ० ४०, १९०) भास्कररायेण समुद्धृतम् । विद्यानन्द-सुभगानन्द-भास्करराया बहुरूपाष्टकमेकं तन्त्रमङ्गीकुर्वन्ति । अत्र बीजं न जानीमः ।

२२. ज्ञानम् । भास्कररायेण ज्ञानपदं ज्ञानार्णवपरं व्याख्यातम् ( से० पृ० २४ ) । एतच्च तन्त्रं "नित्यानां षोडशानां च नव तन्त्राणि कृत्स्नशः" ( १।२ ) इति कादिमत-( तन्त्रराज )श्लोकव्याख्यानावसरे मनोरमाकारेण सुभगानन्दनाथेन—"नव तन्त्राणि सुन्दरीहृदय-नित्याषोडशिकार्णव-चन्द्रज्ञान-मातृकातंत्र-संमोहनतंत्र-वामकेश्वर-बहुरूपाष्टक-प्रस्तारचिन्तामणि-मेरुप्रस्ताराख्यानि वर्तन्ते" इत्यत्र परिगणितेषु नवनित्यातन्त्रेषु न दृश्यते । अतो ज्ञानार्णवतन्त्रमेतन्नित्याषोडशिकार्णव-कादिमतादिभ्यः पराचीनमेवेति चतुष्षष्टितन्त्रेषु न तस्य समावेशः । नित्याषोडशिकार्णव-योगिनीहृदयादिषु डाकिन्यादयः

षड्योगिन्यः स्मर्यन्ते, व्याख्यायते च तथैव प्राचीनैष्टीकाकारैः। ज्ञानार्णवे (१४।९६-१०३) तु सप्त योगिन्यो निरूपिताः। किञ्च, सौन्दर्यलहरीप्रभृतिषु ग्रन्थेषु त्रैपुरं हादिकादि-विद्याद्वयमेव दृश्यते, ज्ञानार्णवे तु द्वादशविद्याः समुद्धृताः। एतदपि तस्य तन्त्रस्य परवर्तित्वमेव पोषयति। एवं च ज्ञानार्णवानुरोधेन नित्याषोडशिकार्णव-योगिनीहृदयादि-ग्रन्थानामन्यथा व्याख्यानं[1] प्राचीनाचार्यव्याख्यानखण्डनं च कथं नाम संगच्छताम्? राजेन्द्रलालमित्रसंदृब्धायां सूच्यां ज्ञानतन्त्रं दृश्यते। महाज्ञानार्णवो योगिनीहृदये (२।७७) स्मर्यते। ज्ञानमहार्णवो भोटानुवादेषूपलभ्यते। तत्राणामेतेषां भिन्नाभिन्नत्वादि-विषये साम्प्रतं किमपि वक्तुमशक्यम्।

२३–३०. ब्रह्मयामल-विष्णुयामल-रुद्रयामल-जयद्रथयामल-स्कन्दयामल-उमा-यामल-लक्ष्मीयामल-गणेशयामलान्यष्टौ"[2] (पृ० ४३) इत्यर्थरत्नावलीकारः। श्रीकण्ठ्यां ब्रह्मयामल-विष्णुयामल-स्वच्छन्द-रुरु-आथर्वण-रुद्र-वेतालाख्यानि सप्तैव यामलानि परिग-णितानि। ब्रह्मयामले रुद्रयामल-स्कन्दयामल-ब्रह्मयामल-विष्णुयामल यमयामल-वायु-यामल-कुबेरयामल-इन्द्रयामलानि सन्ति। एतेषु ग्रन्थरूपेणोद्धरणरूपेण वेमानि यामलानि समुपलभ्यन्ते—रुद्रयामलं मुद्रितमुपलभ्यते, सज्जीक्रियते चास्यान्यत् संस्करणं वाराणसेय-संस्कृतविश्वविद्यालयस्थेन योगतन्त्रविभागेन। ब्रह्मयामलस्य जयद्रथयामलस्य च मातृकाः समुपलब्धाः। विष्णुयामलं स्पन्दप्रदीपिकायामुत्पलवैष्णवेन, स्कन्दयामलं च तन्त्रालोकेऽभिनवगुप्तेन स्मृतम्। रघुनन्दनेन प्राणतोषिणीकारेण चापि स्मृते एते यामले। प्रथमस्य मातृका अपि समुलभ्यन्ते। गणेशयामलस्य ग्रहयामलस्य च मातृका आफ्रेख्ट-बृहत्सूच्यां निर्दिष्टाः। उपर्युद्धृतेभ्यो यामलेभ्यो भिन्नानि देवीयामल-वीरयामल-सङ्कर्षणी-यामलानि क्रमशस्तन्त्रालोके तद्विवेके स्वच्छन्दोद्योते च, विज्ञानभैरवविवरणे, तन्त्रालोक-विवेके च स्मृतानि। शक्तियामल-कृष्णयामलयोर्मातृकाः सरस्वतीभवनग्रन्थालये दृश्यन्ते। आफ्रेख्टबृहत्सूच्यामपि वर्ततेऽनयोर्निर्देशः। भैरवयामलं लक्ष्मीधरायां सौन्दर्य-लहरीटीकायाम्, कामकलाविलासटीकायां चिद्वल्ल्याम्, विज्ञानभैरवटीकायां[3] विज्ञा-नेन्दुकौमुद्यां च स्मृतम्।

३१. चन्द्रज्ञानमष्टादशरुद्रागमेष्वन्यतमम्। ग्रन्थ एष शिवसूत्रविमर्शिनी-महार्थ-मञ्जरीपरिमलप्रभृतिषु स्मृतः। मातृकाऽप्यस्य[4] साम्प्रतमुपलभ्यते। सुभगानन्दनाथेन[5]

---

१. मूलग्रन्थे ७ पृष्ठस्था ५ टिप्पणी द्रष्टव्या।

२. सेतुबन्धेऽष्टयामलनामक्रमे कश्चन व्युत्क्रमोऽवलोक्यते। नामान्येतान्येव। कूलचूडामणि-भूमिकायां (पृ० ६) तु व्युत्क्रमविभ्रमेणान्य एवार्थः कल्पितः, ग्रहयामलस्य च तत्र समावेशोऽकारि।

३. ब्रह्मविष्णुरुद्रभैरवाख्ययामलेषु (पृ० ३)।

४. रौरवागमप्रथमभागे पृ० २११ द्रष्टव्यम्। अपि च, श्रीविद्याप्रतिपादकस्य चन्द्रज्ञानागम-संग्रहस्य द्वे मातृके D ५६२४–२५ संख्याके मद्रासराजकीयपुस्तकालये विद्येते।

५. कादिमतमनोरमायाम् १।२।

नवनित्यातन्त्रेषु चन्द्रज्ञानं स्मर्यते। भैरवयामलान्तर्गता चन्द्रज्ञानविद्या लक्ष्मीधरेण—"भैरवयामले चन्द्रज्ञानविद्यायाम्" (पृ० ९९) इत्येवं स्मृता। उक्तं च—"चन्द्रज्ञानविद्यायां षोडशनित्याप्रतिपादनम्। नित्याप्रतिपादकत्वेऽपि कापालिकमतान्तःपातित्वाद् हेयमेव। उपादेयचन्द्रज्ञानविद्या चतुष्षष्टितन्त्रातीता" (पृ० १३८) इति। अत्र चन्द्रज्ञानमातृकाया अवलोकनानन्तरमेव किमपि याथातथ्येन वक्तुं पार्येत, तथापि चन्द्रज्ञानविद्यातश्चन्द्रज्ञानागमो भिन्न एव स्यात्। उपादेयचन्द्रज्ञानविद्यापदेन लक्ष्मीधरस्य चन्द्रकलाविद्याष्टकमभिप्रेतम्। एवं स वदति—"चन्द्रकलाविद्याष्टकं श्रीविद्याप्रतिपादकं तन्त्रम्। चन्द्रकला, ज्योत्स्नावती, (कलानिधिः[1]), कुलार्णवम्, कुलेश्वरी, भुवनेश्वरी, बार्हस्पत्यम्, दूर्वासमतं चेति" (पृ० १४०) इति। मद्राससंस्करणे सप्तैव तन्त्राणि परिगणितानि। अष्टमस्य नाम न दृश्यते। मुद्रणजन्या त्रुटिरत्र कारणम्। एतानि मिश्रतन्त्राणि, कुलसमयोभयमार्गप्रतिपादकत्वात्। चतुष्षष्टितन्त्राणि कुलतन्त्राणि[2]। समयमार्गप्रतिपादकं शुभागमपञ्चकमेव वैदिकैरादरणीयमित्यादिको लक्ष्मीधरप्रतिपादितः सिद्धान्तस्तत एवावलोकनीयः (पृ० १३७-१४१)। तन्त्रज्ञानमिति कुलचूडामणिस्थः पाठः।

३२. वासुकिपदस्थाने मालिनीपदं पठति लक्ष्मीधरः। मालिनीविद्या समुद्रयानोपायहेतुः। एवं च मालिनीपदेन मालिनीविजयमपि लक्ष्मीधरस्य नाभिप्रेतम्। वासुकितन्त्रं नाद्यावध्यस्माभिः क्वाप्युद्धरणेष्वपि दृष्टम्।

३३. महासंमोहनम्। अत्र सर्वे टीकाकारा ग्रन्थाश्च संवदन्ति। श्रीकण्ठ्यां संमोहमिति शिखाष्टकेषूपलभ्यते। संमोहनमिति विष्णुक्रान्तातन्त्रेषु। डॉ० प्रबोधचन्द्रबागचीसमुद्धृते कम्बुजशिलालेखे शिरश्छेद-विनाशिख-संमोह-नयोत्तराख्यस्य तन्त्रचतुष्टयस्य समुल्लेखो दृश्यते। शिखाष्टकेषूपलब्धं शिरश्छेद-वीणाशिख-संमोहाख्यं तन्त्रत्रयमत्र स्मृतमिति श्रीगुरवः। महासंमोहनं चैतद्भिन्नमेव तन्त्रं स्यात्। कुलचूडामणौ समुल्लेखे सत्यपि तन्त्रज्ञान-वासुकि-महासंमोहनानि तत्रत्यायां भूमिकायां न प्रदर्शितानि।

३४. महोच्छुष्मम्। उच्छुष्मभैरवं तन्त्रं वा भैरवाष्टकविभागे चर्चितम्। ततो भिन्नमेतत्तन्त्रम्। श्रीकण्ठ्यां भैरवाष्टकेष्वेतत्परिगणितम्। महासूक्ष्ममिति कुलचूडामणिस्थः पाठः। तत्रत्यायां भूमिकायां तु महोच्छुष्यमिति नाम। एष एव पाठः सेतुबन्धे दृश्यते। भूमिकालेखकः कुलचूडामणिस्थं पाठमविगणय्य सर्वत्र सेतुबन्धस्थमेव पाठमङ्गीकुरुते। अत्र भास्करराय:—"महादेवेति संबुद्धिः। महोच्छुष्ममहादेवमिति पठन्तोऽष्टाक्षरमेकं नामेति तु केचित्। द्वयमपि भिन्नमेवेति गौरीकान्तः। वामजुष्टं महादेवमिति पठित्वा

१. मैसूरसंस्करणे सरस्वतीभवनस्थायां १९४३१ संख्याकायां मातृकायां चैतन्नाम दृश्यते।

२. अत्र "वैदिकमार्गदूरवर्तित्वात्।....सकलविद्वल्लोकप्रतारकाणीमानि चतुष्षष्टितन्त्राणि" (पृ० १३७–१३८) इति लक्ष्मीधरः। एतच्च वचनं समयमार्गप्रतिपादकशुभागमपञ्चकपक्षपातित्वमेव तस्य द्योतयति, नित्याषोडशिकार्णव-सौन्दर्यलहरीस्वारस्यविरोधात्; प्राचीनानां सर्वविधानां तन्त्राणामत्र समावेशदर्शनाच्च। एतच्च तत्र तत्र मूल एव व्यक्तीक्रियते।

वामजुष्टं नाम वामकेश्वरचतुःशतीत्युच्यत इत्यपि व्याचख्यौ" ( पृ० २३ ) इति। अत्र केचित्पदेन प्रदर्शितं व्याख्यानमुपलब्धासु नित्याषोडशिकार्णव-सौन्दर्यलहरीटीकासु नोपलभ्यते। "वामजुष्टमहादेवतन्त्रे वामाचारप्रवर्तके इति हेये"(पृ० १३९) इति लक्ष्मीधरः। "वामजुष्टं वामकेश्वरतन्त्रं चतुःशतीत्यपि कथ्यते। महादेवतन्त्रं बटुकादिसिद्धिकुलाचारप्रदर्शकम्" इति गौरीकान्तः। गौरीकान्तः सौन्दर्यलहर्या व्याख्याता न तु नित्याषोडशिकार्णवस्येति प्रतिपादितमस्माभिरन्यत्र[1]। लक्ष्मीधरगौरीकान्तौ विहाय सर्वैष्टीकाकारैर्महादेवपदं संबुद्धिबोधकमेव व्याख्यातम्।

३५-३६. वातुलं वातुलोत्तरं च शैवागमेषु तदुपागमेषु च दृश्येते। तत्र वातुलोत्तरं शतरत्नसंग्रहे, वातुलं च नानाग्रन्थेषूद्धृतं वर्तते। वाथुलं च नयोत्तरमिति वाक. ख. पाठः। वातुलस्य वाथुलस्य वा मातृका अपि समुपलभ्यन्ते। नयोत्तरमेतत् कम्बुजशिलालेखे स्मृतेषु तन्त्रचतुष्टयेष्वन्यतमदवगन्तव्यम्। एवं च निश्वासतत्त्वसंहिताया भागविशेषो नयोत्तरमिति डॉ०[2] बागचीमहोदयस्य कल्पनं व्यर्थम्, चतुष्षष्टितन्त्रेषु तस्य परिगणितत्वात् स्वतन्त्रस्यैव तस्य ग्रन्थस्य सद्भावात्। तस्य स्वतन्त्रग्रन्थत्व एव ब्रह्मयामलजयद्रथयामलाद्युक्तं नयोत्तरस्य वामस्रोतस्कत्वम्, निःश्वासतत्त्वसंहितायाश्च मध्यमस्रोतउद्भूतत्वं संगच्छते। वाहनं वाहनोत्तरमिति कुलचूडामणिस्थः पाठः।

३७. हृद्भेदतन्त्रं नास्माभिः क्वाप्युद्धृतमवलोकितम्।

३८. मातृभेदम्। मातृकाभेदतन्त्रमुपलभ्यते। ततो भिन्नमेतत्तन्त्रमभिन्नं वेति नाधुना निर्णेतुं शक्यम्। लक्ष्मीधरगौरीकान्तभास्कररायग्रन्थेषु तन्त्रभेदमिति पाठः।

३९. गुह्यतन्त्रम्। गुप्ततन्त्रं क्षेमराजेन नेत्रतन्त्रोद्योते स्मर्यते। ततोऽभिन्नमेतत्तन्त्रं भवेत्।

४०. कामिकं दशशैवागमेषु प्रथमं ग्रन्थाक्षरेषु मुद्रितमुपलभ्यते।

४१. कलावादम्। कालपादमिति वाक.ख.पाठः। ग्रन्थ एष शिवदृष्टौ स्थलद्वये ( ३।११; ३।६३ ), मालिनीविजयवार्त्तिके ( पृ० २० ) च स्मर्यते। शिवदृष्टिवृत्तावुत्पलदेवेन तदेतत् कालोत्तरनाम्नाऽभ्यधायि ( पृ. १०२, १२२ )।

४२. कलासारम्। कालसारमिति वाक. ख. पाठः। कालज्ञानं वातुलोपागमेषु दृश्यते।

४३. कुब्जिकामतम्। श्रीमतनाम्नोद्धृतमेतत्तन्त्रमर्थरत्नावल्याम्। अस्य मातृकाः कलिकातास्थ-एशियाटिक-सोसाइटीसंस्थायाम्, नेपालस्थवीरपुस्तकालये चोपलभ्यन्ते। कुण्डिकामतमिति लक्ष्मीधरगौरीकान्तधृतः पाठः। मतशास्त्रनाम्नाऽन्यत्रास्य विवरणमुपस्थापितमस्माभिः।

४४. मतोत्तरम्। तन्त्रमेतदर्थरत्नावल्यां बहुशः स्मर्यते। नयोत्तरमिति वाक. ख. पाठः। नयोत्तरविषये पूर्वमेवोक्तम्। वाक. ख. ग्रन्थयोर्नयोत्तरस्य नाम वारद्वयं दृश्यते।

---

१. श्रीचन्द्रशेखरशास्त्री-अभिनन्दनग्रन्थ, संस्कृतविभाग, पृ० १५।

२. स्टडीज इन दी तन्त्राज, पृ० ४–६।

तन्त्रोत्तरमिति से. पाठः, मायोत्तरमिति कु. पाठः। मतोत्तरस्य मातृकाया विवरणं म० म० हरप्रसादशास्त्रिसंदृब्धनेपालग्रन्थसूच्यां दृश्यते।

४५. वीणाख्यम्। वीणाद्यमिति वाक. ख. पाठः। "वीणाद्यमिति वीणाशिखोत्तरम्" (पृ० १७) इति जयरथः। तन्त्रमेतत् श्रीकण्ठ्यां शिखाष्टकेषु प्रदर्शितम्, [1]कम्बुजशिलालेखे च विनाशिखनाम्ना स्मृतम्। शिवागमभेदेषु द्वितीयस्य योगजस्योपागमेषु वीणाशिखोत्तरं पठ्यते।

४६-४७ त्रोतलं त्रोतलोत्तरं च। त्रोतुलं त्रोतुलोत्तरमिति वाक. ख. पाठः। तोतुलतन्त्रं क्षेमराजेन नेत्रतन्त्रोद्योते स्वच्छन्दोद्योते च समुद्धृतम्।

४८. पञ्चामृतम्। तन्त्रमेतत् तन्त्रालोकविवेके जयरथेन स्मृतम् ( भा० ९, आ० १५, पृ० १४० )। अहल्याकामधेनुग्रन्थे पञ्चामृतमुद्धृतमिति 'आफ्रेख्ट'-बृहत्सूचीतो ज्ञायते।

४९. रूपभेदम्। नास्य विषये किमपि ज्ञायते।

५०. भूतोड्डामरम्। भूतडामरमिति ऋ.कु.गौ.पाठः। रथक्रान्ताविष्णुक्रान्ताविभागयोरपि भूतडामरतन्त्रं दृश्यते। "भूतडामरमिति भूततन्त्रं डामरतन्त्रम्" (पृ० ४४) इति शिवानन्दः। ख. मातृकायां तु "भूतोड्डामरमिति भूतोड्डामरतन्त्रम्" इति पाठः। सटीकस्य भूतडामरस्य मातृकाणां विवरणमाफ्रेख्टबृहत्सूच्यां दृश्यते। तत्र मातृकाणां मूलद्वयमुपदर्शितम्। तन्त्रमेतद्भोटभाषायामप्यनूदितमुपलभ्यते।

५१. कुलसारम्। तन्त्रमेतत् शिवसूत्रविमर्शिन्यां ( पृ० १३५-३६ ) स्मर्यते।

५२. कुलोड्डीशम्। राजेन्द्रलालमित्रसंदृब्धायां सूच्यामस्या मातृकाया विवरणं दृश्यते। उड्डीशतन्त्रादेतत् पृथगपृथग् वेति परीक्षणीयम्।

५३. कूलचूडामणिः शिवसूत्रविमर्शिन्यां (पृ० ५८) स्मृतः। अत्रत्यः श्लोको मुद्रिते कुलचूडामणितन्त्रे नोपलभ्यते। तन्त्रं विश्वात्मकमिति तु कु. पाठः।

५४. सर्वज्ञानोत्तरम्। तन्त्रमेतत् तन्त्रालोक-तद्विवेक-शिवसूत्रविमर्शिनी-मृगेन्द्रवृत्ति-शतरत्नसंग्रहादिषु बहुशः स्मर्यते। "ज्ञानोत्तरे इति सर्वज्ञानोत्तरे" ( भा० ९, आ० ९, पृ० ४५ ) इति वदन् जयरथो ज्ञानोत्तरं सर्वज्ञानोत्तरं चाभिन्नमेव तन्त्रमङ्गीकुरुते। "सर्वज्ञानादितन्त्रपञ्चकं कापालिकसिद्धान्तैकदेशिदिगम्बरमतमिति दूरत एव हेयम्" ( पृ० १४० ) इति वदन् लक्ष्मीधरस्तदनुयायी गौरीकान्तश्चानवलोक्यैव तन्त्राणीमानि यथेच्छमुच्छास्त्रं व्याख्यातवन्ताविति प्रतीयते। अत एवाह भास्करराय:—"एवं स्थिते यत्सौन्दर्यलहरीव्याख्याने केनचित् प्रलपितमिमानि तन्त्राण्यवैदिकानीत्यादि, तत्प्रतारकभ्रान्तान्यतरजल्पितत्वादुपेक्ष्यम्" ( पृ० २४ ) इति। सर्वज्ञानोत्तरस्य मातृका म० म० हरप्रसादशास्त्रिसंदृब्धायां नेपालसूच्यां विवृता। सर्वज्ञानोत्तरवृत्तिरघोरशिवाचार्यविरचिता आफ्रेख्टबृहत्सूचीतः परिज्ञायते। सर्वज्ञानात्मकमिति कु. पाठः।

---

१. द्रष्टव्यम्—डॉ० प्रबोधचन्द्रबागचीविरचिते 'स्टडीज इन दी तन्त्राज' इत्याख्ये ग्रन्थे, पृ० १-२।

५५. महापिचुमतम् । पिचुशास्त्रं तन्त्रालोके स्मर्यते स्थलचतुष्टयेषु ( भा० १०, आ० २७, पृ० ३६३, ३६५; भा० ११, आ० २८, पृ० १६३, १७५ ) तत्संबद्धमेवैतत्तन्त्रं स्यात् । महाकालीमतमिति से. ल. पाठः, महापितृमतमिति कु. पाठः ।

५६ महालक्ष्मीमतम् । मततन्त्रषट्कप्रतिपादकं "महालक्ष्मीमतम्" इत्यादिकं पङ्क्तित्रयं लक्ष्मीधरायामृजुविमर्शिन्यां[1] गौरीकान्तीये च न दृश्यते । जयरथविवरणे, कूलचूडामणौ, सेतुबन्धे च विद्यते । अस्या महालक्ष्मीमतभट्टारकनाम्नी मातृका नेपालसूच्यां दृश्यते ।

५७. सिद्धयोगीश्वरीमतम् । त्रिकदर्शनेषु प्रथिततममेतत्तन्त्रं तन्त्रालोकादिषु बहुशः स्मर्यते । सिद्धयोगीश्वरतन्त्रं नेपालसूच्यां दृश्यते ।

५८-५९. कुरूपिकामतं रूपिकामतं च । द्वितीयस्य देवरूपिकामतमिति संज्ञेति भास्करराय:, "अत्र प्रथमं देवपदं संबुद्धिः । द्वितीयं तु तन्त्रसंज्ञान्तःप्रविष्टमिति सुवचम्" ( पृ० २३ ) इति हि तदुक्तिः । "डाकिनीरूपिकागणः" ( ४।५० ) इत्यत्र रूपिका काचन देवी पठ्यते । तेन महालक्ष्मीमतकुब्जिकामतादिवद् रूपिकामतमित्येवोचितं नाम प्रतिभाति ।

६०. सर्ववीरमतम् । तन्त्रमेतद् ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां ( भा० ३, पृ० ३११ ) स्मृतम् । तन्त्रालोक-तद्विवेक-शिवसूत्रविमर्शिनी-स्वच्छन्दोद्योत-नेत्रतन्त्रोद्योत-प्रत्यभिज्ञाहृदय-महार्थमञ्जरीपरिमलादिषु स्मृतः सर्ववीरः सर्ववीरभट्टारको वा तन्त्रादस्मादभिन्न एव स्यात् ।

६१. विमलामतम् । न ज्ञायते किमपि ।

६२. अरुणेशम् । तथैव ।

६३. मोदनेशम् । मोहिनीशमिति से., मोदिनीशमिति ल. ऋ., मोहनेशमिति कु० पाठः । इतोऽधिकं न ज्ञायते किमपि ।

६४. विशुद्धेश्वरम् । तन्त्रमेतद् भास्कररायेण योगिनीहृदयसेतुबन्धे ( पृ० २७४ ) समुद्धृतम् । तन्त्रसार-शाक्तानन्दतरङ्गिणी-आगमतत्त्वविलासादिष्वप्येतत् स्मर्यते । "विशुद्धेश्वरतन्त्रान्तश्च चतुष्षष्टितन्त्रोद्देशः" ( ऋजु. पृ. ४४ ) इति शिवानन्दः ।

चतुष्षष्टितन्त्रपरिगणनप्रकरणे—

पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् ।
तन्त्रं वैशेषिकं ज्ञानं वीरावलि तथा परम् ॥

इत्येष श्लोकः पाठभेदैः सह ल.ऋ.से.कु.पुस्तकेषु दृश्यते । वामकेश्वरीमतविवरणे प्राचीनायां बड़ोदामातृकायां चैष नास्ति । प्रक्षिप्तस्यास्य श्लोकस्य समावेशेनैव लक्ष्मीधरो मततन्त्रषट्कप्रतिपादकं सार्धैकं श्लोकं परित्यजति, भास्कररायश्च भैरवाष्टकप्रतिपादकमेकं तन्त्रमित्युच्छास्त्रं वदति । "विमलं विमलोत्थं च देवीमतमतः परम्"

---

१. ऋजुविमर्शिन्याः क.मातृकायामिमे चतुष्षष्टितन्त्रपरिगणनात्मकाः श्लोकाः सन्ति, अर्थरत्नावल्यां तु न तथा । कानिचन पदान्येव च तत्र व्याख्यातानि ।

इत्युत्तरार्धपाठो लक्ष्मीधरायाम्। "पूर्वादिदेवीपर्यन्तं दिगम्बरैकदेशक्षपणकमतमिति तत्ततोऽपि दूरत एव हेयम्" (पृ० १४०) इति लक्ष्मीधरः। 'पूर्वाम्नायादिसंज्ञाभिः प्रसिद्धाश्चत्वार आम्नायाः। निरुत्तरपदेनोर्ध्वाम्नायतन्त्रम्। तस्यानुत्तराम्नायपदेनापि व्यवहारः। तन्त्रं वैशेषिकमित्येकम्। ज्ञानमिति ज्ञानार्णवपदेन प्रसिद्धम्। वीरावलीत्येकम्।" (पृ० २३-२४) इति भास्कररायः। अत्र शिवस्य पञ्चवक्त्रेभ्यो निःसृतानां शास्त्रसमूहात्मकानामाम्नायानां तत्तत्तन्त्रपरकतया संकोचो भास्कररायेण निष्प्रमाणकमेवाचरितः। ज्ञानार्णवविषये पूर्वमेवोक्तम्। वीरावलीशास्त्रं प्राचीनं तन्त्रालोक-तद्विवेक-शिवसूत्रविमर्शिन्यादिषूद्धृतम्। वीरावलीहृदयं वीरावलीकुलं वा तस्य नामान्तरम्। कूलचूडामणौ तु शिवाबलिमिति पाठः।

एवं व्याख्यातानि चतुष्षष्टितन्त्रनामानि। अथाधुना शिवानन्दविद्यानन्दामृतानन्दस्मृतान् ग्रन्थान् ग्रन्थकारांश्चाधिकृत्य विविच्यते त्रिपुरादर्शनसंबद्धसाहित्यपरिचयाय।

## शिवानन्दादिस्मृता ग्रन्था ग्रन्थकाराश्च

**अनन्तशक्तिभट्टारकः**

> यत्प्रोतं विश्वमेतद्भुवनविरचनात्तत्त्ववर्णाद्यमुद्य-
> न्मन्त्रस्फारानुषक्तं व्रतनपदकलाद्वैतरूपं विभाति।
> तद्दीपं शक्तिसूत्रं परमशिवमहापूगदेदीप्यमानं
> वन्दे पूजाक्रमस्य प्रचुरफलविधौ हेतुभूतं स्वहृत्स्थम्॥

अर्थरत्नावलीकारविद्यानन्दविरचितायां [1]ज्ञानदीपविमर्शिन्यामनन्तशक्तिभट्टारककृतित्वेनैष श्लोकः समुद्धृतः। वातूलनाथसूत्राणां वृत्तिकारोऽनन्तशक्तिपादोऽस्माद्भिन्नोऽभिन्नो वेति साम्प्रतं निश्चयेन वक्तुं न शक्येत। अनन्तशक्तिपादो बहुरूपगर्भस्तोत्रस्यापि व्याख्याकार इति वातूलनाथसूत्राणां भूमिकातोऽवगम्यते। अस्या मातृका लक्ष्मणपुर(लखनऊ)स्थितसंस्कृतपरिषत्पुस्तकालये वर्तते।

**आज्ञावतारः**

> स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि।

इत्येष श्लोकार्धं आज्ञावतारस्थश्चतुर्वारं (पृ० १५, ९४ः २६४, ३०७) योगिनीहृदयदीपिकायामुद्धृतः। सेतुबन्धेऽप्येष दृश्यते (पृ० २६७)। एवमेव —

> विश्वग्रसनशीलं तद्रूपं तेजोमयं ततः।

इत्ययमपरः श्लोकार्धस्तत्रत्यो योगिनीहृदयदीपिकायामेव (पृ० २६३) किञ्चिद्व्यत्यस्तरूपेण दृश्यते। संशोधितः पाठोऽत्र स्थापितः।

---

१. बड़ोदानगरस्थगायकवाड़शोधसंस्थानमातृका १९६१ संख्याका, प. ३८ क।

**आद्यवर्णत्रिशिका**

एष ग्रन्थो ज्ञानदीपविमर्शिन्यां स्मृतः समुद्धृतश्च । तद्यथा—[१]"आद्यवर्णत्रिशिकायामाद्यवर्णस्यैव वाग्भवत्वमुक्तम्—

अबिन्दुं सविसर्गं च अका(रो?रं) जपतो महान् ।
उदेति देवि सहसा ज्ञानौघः पारमेश्वरः ॥" इति ।

**उत्तरषट्कम् ( उत्तरपदम् )**

उत्तरषट्कस्य श्लोका अर्थरत्नावल्यां नामोद्देशपूर्वकम्, ऋजुविमर्शिन्यां च विनैव नामनिर्देशमुद्धृता दृश्यन्ते । अत्रत्य एव—

व्योमाम्बुजे सहस्रारे सितकेसरसंकुले ।
तत्राशीनं महादेवमपृच्छत् कुलनायिका ॥

इत्याद्यः श्लोक उत्तरपदग्रन्थस्येति योगिनीहृदयदीपिका । अतोऽनुमीयते उत्तरषट्कग्रन्थ उत्तरपदनाम्नापि प्रथितो भवेत् । अथवा पाठव्यत्यासमात्रमेवात्र स्यात् । उत्तरषट्कमेतद्बहुषु तन्त्रग्रन्थेषूद्धृतं कुलदीपिकाव्याख्यानयुतं मद्रपुरीराजकीयपुस्तकालये केरलविश्वविद्यालयपुस्तकालये चोपलभ्यते । तद्दर्शनेन ज्ञायते ग्रन्थ एष रुद्रयामलस्यैवांशभूत इति, त्रिपुरासिद्धान्तश्चात्र प्रतिपादित इति ।

**उदयाकरपद्धतिः**

उदयाकरपद्धतिस्था बहवः श्लोका ज्ञानदीपविमर्शिन्यां दृश्यन्ते । तद्दर्शनेन ज्ञायते यदेष विशिष्टस्त्रिपुरोपासनापद्धतिग्रन्थो विमर्शिनीवद् बाह्याभ्यन्तरोभयविधपूजादिप्रदर्शक इति । "कस्तूरीघुसृणेन्दुचन्दनसुधाभिश्चक्रराजं लिखेत्" इत्येष योगिनीहृदयदीपिकायां ( पृ० २५१ ) समुद्धृतः श्लोकांशोऽत्रत्य एवेति विमर्शिनीदर्शनेन[२] ज्ञायते ।

**उद्धारोर्ध्वतन्त्रम्**

एतत्तन्त्रं योगिनीहृदयदीपिकायां ( पृ०२८ ) स्मर्यते । तद्यथा—"तदुक्तमुद्धारोर्ध्वतन्त्रे रमाशक्तिबीजोद्धारे—चन्द्रः शक्तिर्महाशक्तिर्ब्रह्माणी कामिकादिकम्" इति ।

**उन्मत्तभैरवः**

ऋजुविमर्शिन्या ग.मातृकायामस्य वचनद्वयं समुपलभ्यते । तद्यथा—

उक्तं च श्रीमदुन्मत्तभैरवेण—

सर्वनामानि नित्यायाः सत्यानन्दघनात्मनः ।
एकात्मनो लक्षकाणि लक्ष्या सा साक्षिणी चितिः ॥" ( पृ० १९९ )

श्रीमदुन्मत्तभैरवगुरुणापि—

सुरुचं गीडारामु च महिमोचितजनिजरापरुजमस्यै ।
वद संसिद्ध्यै बुद्ध्यै वाचं याचामहे महेशस्य ॥" ( पृ० २१६ )

---

१. तत्रैव, प. २१ क ।  २. तत्रैव, प. १३ ख ।

**उपचारोपनिषद्**

एषोपनिषद् योगिनीहृदयदीपिकायां समुद्धृतैवम्—

"बहिरपि गन्धपुष्पधूपदीपनैवेद्यानि पृथिव्याकाशवायुतेजःसलिलभावनया देव्यै समर्पयेत्" ( पृ० २७२ ) इति ।

मुद्रितासु मातृकासूचीषूपनिषत्संग्रहेषु च क्वाप्यस्या नाम नोपलभ्यते । ऋजुविमर्शिन्यां पूजा-धूप-गन्ध-नैवेद्य-ध्यान-होमादिप्रतिपादकाः श्लोकाः पूजोपनिषत् ( पृ० ८९ ), धूपगन्धदीपनैवेद्योपनिषत् ( पृ० १३४ ), ध्यानोपनिषत् ( पृ० १४८ ), होमोपनिषत् ( पृ० २७० ) इत्येवं स्मृताः । पूजादिरहस्यमिति तत्तदर्थोऽभिमन्तव्यः । तथैवात्रापि दीपिकायामुपचारोपनिषत्पदेनोपचाररहस्यमेव बोधितं स्यात् । नह्यत्रोपचारोपनिषत्पदं कस्यचनोपनिषद्ग्रन्थस्य बोधकमिति वयं संभावयामः ।

**क्रमोदयः**

प्रविष्टेऽन्तः सिन्धुरसे भेदनिर्हरणात्मके ।
स्थैर्यमेति चमत्कारो विना विषयसङ्गतिम् ॥

इत्येष क्रमोदयश्लोको योगिनीहृदयदीपिकायां ( पृ० २६६ ) दृश्यते । अस्योत्तरार्धस्तत्रैव २८३ पृष्ठे सेतुबन्धे च ( पृ० २८६ ) उद्धृतः । महार्थमञ्जरीपरिमले—

रागो माया कलाऽविद्या नियतिः काल एव च ।
पञ्चवृत्त्याश्रयाः सर्वे पाशाश्चेति प्रकीर्तिताः ॥ ( पृ० ५० ) इति,

स्त्रियः सर्वेषु वर्णेषु योगिन्यः स्युर्न संशयः ।
देहवद् योनिशुद्धिस्तु आत्मवल्लिङ्गशोधनम् ॥
योनौ नवाक्षरीं न्यस्य लिङ्गे सप्तदशाक्षरीम् ।
गुरुचक्रस्य पूजार्थं कुर्याद् योगिनिमेलनम् ॥
नवाक्षर्या तु मन्त्रेण स्थापयेल्लिङ्गपीठवत् ।
शिवशक्त्यात्मभावेन पुरुषो मन्थकः स्मृतः ॥
मन्थयेदात्मनः शक्तिं मधुवच्छुक्लशोणितम् । ( पृ० ८९ )

इति च क्रमोदयश्लोका दृश्यन्ते । अत्रत्यः 'प्रविष्टेऽन्तः' इत्यादिकः प्रथमः श्लोको महानयप्रकाशे त्रिवेन्द्रंसंस्कृतग्रन्थमालायां मुद्रिते ( ९।४३ ) वर्तते । तत्र 'सिन्धुरसे' इत्यस्य स्थाने 'सीधुरसे' इत्युचितः पाठः । अन्ये श्लोकास्तु तत्र न सन्ति, अतो महानयप्रकाशतो भिन्न एवैष ग्रन्थ इति प्रतीमः ।

**क्षेमराजः**

प्रत्यभिज्ञाहृदयादिग्रन्थप्रणेताऽभिनवगुप्तपादप्रियशिष्यो नानागमादिव्याख्याता च क्षेमराज ऋजुविमर्शिन्यामेवं स्मृतः—"अस्यार्थः साम्बपञ्चाशिकाविवृतिरचने श्रीक्षेम-

राजाचार्यंकृते द्रष्टव्यः" ( पृ० २२९ ) इति । बहूक्तमस्य विषये डॉ० कान्तिचन्द्रपाण्डेयप्रभृतिभिरिति नात्र वक्तव्यमवशिष्यते । एतावानेव विशेषो यदनेन ज्ञायते शिवानन्दः क्षेमराजपराग्भव इति ।

**गङ्गाधरमिश्रः**

अस्य श्लोका ऋजुविमर्शिन्याम्, योगिनीहृदयदीपिकायाम्, चिद्वल्ल्यां च दृश्यन्ते । "इति भट्टगङ्गाधरस्तोत्रे धूप( गन्ध )दीपनैवेद्योपनिषद्" ( पृ० १३४ ) इत्यृजुविमर्शिनीप्रामाण्यादनेन कश्चन स्तोत्रग्रन्थो रचित इति ज्ञायते। इमेऽत्र तत्रत्याः श्लोकाः—

अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः ।
क्लेशावहो जुगुप्सश्च सर्वधर्मबहिष्कृतः ॥
आनन्दकणभिक्षार्थं शब्दस्पर्शादिपक्कणे ।
अटत्यविरतं येन तद्दारिद्रयं विदुर्बुधाः ॥
( ऋ० पृ० ६९ )

आत्मेशजगतां भेदं यो नरः कुरुतेऽमतिः ।
स महापातकी सत्यं पातकस्य महत्त्वतः ॥
( ऋ० पृ० ८० )

देहप्रमातृताशान्तिर्येन सिद्धयति तं भजे ।
विश्वेन्धनं निजं धूपं ज्ञानपावकसम्भवम् ॥
संविन्मार्गगतो योऽयं प्रयत्नस्त्वात्मसंश्रयः ।
तमेव संश्रये गन्धमानन्दोदयकारणम् ॥
यस्मिन् सर्वमिदं भाति यः सर्वत्रावभासते ।
कल्पयामि प्रकाशं तं दीपं पूजाविधौ निजे ॥
विश्वं शिवादिभूम्यन्तं चमत्काररसाश्रयम् ।
महीयसे महाभोक्त्रे महेशाय निवेदये ॥
( ऋ० पृ० १३४ )

अत्रत्याः प्रथमद्वितीयान्तिमाः श्लोका योगिनीहृदयदीपिकायामभियुक्तवचनत्वेन प्रथमाधंश्च चिद्वल्ल्यां ( पृ० ६० ) विनैव नामनिर्देशमुद्धृताः ।

**गीतानिष्यन्दः**

"तदुक्तं क्षेमेन्द्रेण गीतानिष्यन्दे" ( पृ० ७८ ) इत्यृजुविमर्शिनीप्रामाण्येन गीतानिष्यन्दः क्षेमेन्द्रकृतिरिति विज्ञायते । अत्रत्याः श्लोका ऋजुविमर्शिन्याम् ( पृ० ७८, १५१ ), महार्थमञ्जरीपरिमले ( पृ० ११२, १२२ ), चिद्वल्ल्यां च कामकलाविलासटीकायां ( पृ० १७ ) दृश्यन्ते । सोऽयं क्षेमेन्द्र औचित्यं काव्यजीवातुरिति सिद्धान्तस्य प्रतिष्ठापयितुः क्षेमेन्द्राद् भिन्नोऽभिन्नो वेति विचारणीयम् । इमे चोपलभ्यमानास्तत्रत्याः श्लोकाः—

तावद् व्याघ्रभयं नृपानलभयं वेतालकृत्याभयं
शून्यारण्यभयं महाशनिभयं दुःस्वप्नशङ्काभयम् ।
वातोत्पातभयं ग्रहज्वरभयं क्षुब्धाब्धिवेलाभयं
वैराग्येण न यावदेव गलितः कायाभिमानभ्रमः ॥

उत्सृज्यात्मसमाधानं ये ध्यायन्त्यन्यदेवताः ।
भिक्षन्ते भूरिवित्तास्ते भिक्षित्वापि बुभुक्षिताः ॥

न पादपतनं भक्तिर्व्यापिनः परमात्मनः[1] ।
भक्तिर्भावस्वभावानां तदेकीभावभावनम् ॥

अन्तिमः श्लोको विज्ञानभैरवोद्योतेऽपि दृश्यते । तत्र कर्तुर्नाम नोट्टङ्कितम् ।

**चिद्गगनचन्द्रिका**

कालिदासकृतित्वेन प्रसिद्धा चिद्गगनचन्द्रिका साम्प्रतं मुद्रितोपलभ्यते । स एष ग्रन्थो महार्थमञ्जरीपरिमले योगिनीहृदयदीपिकायां च नैकश उद्धृतः, ऋजुविमर्शिन्या-मर्थरत्नावल्यां ज्ञानदीपविमर्शिन्यां च कुत्रापि न स्मृतः, नतरां चाभिनवगुप्तक्षेमराजादि-ग्रन्थेषु । लक्ष्मीधरादिप्रामाण्येन पञ्चस्तवीकर्ता कालिदास इत्यङ्गीकरणीयम् । स एष कालिदासो लघुनुतिकर्ता धर्माचार्य एवेति संभावितमस्माभिः[2] । चिद्गगनचन्द्रिकारः कालिदासः क इत्यपि प्रश्नः परीक्षणीयताकोटिमेव साम्प्रतमाटीकते । एष ग्रन्थो महार्थ-सम्प्रदायस्येति नात्र विसंवादः ।

**ज्ञानदीपविमर्शिनी**

ज्ञानदीपविमर्शिनी योगिनीहृदयदीपिकायां ( पृ० १६० ) समुद्धृता । अस्या मातृका गायकवाड़प्राच्यशोधसंस्थायां केरलविश्वविद्यालयग्रन्थागारे नेपालस्थवीरपुस्त-कालये च सन्ति । अस्याः प्रणेताऽर्थरत्नावलीकारो विद्यानन्द एव । अत्र [3]स्थलत्रयेऽर्थ-रत्नावलीसमुद्धरणादस्यास्तदपेक्षया परवर्तित्वमवसीयते ।

**ज्ञानसारः**

ज्ञानसारश्लोका अर्थरत्नावल्यां ( पृ० १८३ ) दृश्यन्ते । इमे श्लोका ऋजु-विमर्शिन्यामपि ( पृ० १८५ ) सन्ति । तत्र ग्रन्थनामनिर्देशो नास्ति । अर्थरत्नावल्या मद्रासमातृकास्वेव तन्निर्देशो दृश्यते । वाराणसीस्थे सरस्वतीभवनग्रन्थागारे वर्तते ज्ञानसारमातृका । तत्र नोपलब्धा इमे श्लोकाः ।

---

१. 'परमेशितुः' इति विज्ञानभैरवोद्योते पाठः ।

२. द्रष्टव्यम्—सारस्वती सुषमा, व० २०, अ० २, पृ० १३-२६ ।

३. द्रष्टव्यम्–प. २८ क, ४३ ख, ५६ क ।

**तत्त्वविमर्शिनी**

''इन्द्रेशानदिशोर्मध्ये स्थानमन्यत्प्रकीर्तितम् ।
नैर्ऋताम्बुदिशोर्मध्ये स्थानमन्यत्प्रकीर्तितम् ।।

तत्त्वविमर्शिन्यामस्मद्गुरूक्तरीत्या'' इति दृश्यते योगिनीहृदयदीपिकायाम् ( पृ० २३५)। 'अस्मद्गुरूक्त' इत्यस्य स्थाने 'अस्मदुक्त' इति पाठ उपलभ्यतेऽन्यासु मातृकासु। एवमेव—

चिदम्बुधिमहाभङ्गभिन्नसंकोचसुन्दरः ( पृ० १९६ ) ।
यद्यद् बाह्यं वक्ष्यमाणं तत्तदान्तरमाचरेत् ( पृ० २४५ ) ।
कादिठान्तं चादिठान्तं वर्णजातं क्रमोऽक्रमात् ।
द्वयं द्वयं प्रयोक्तव्यं कलाश्च तदनन्तरम् ।। ( पृ० २५५ )
कामो[1] देवः स काम्यत्वात् ( पृ० २६३ ) ।
श्वासद्वयनिरोधेन कुण्डलीत्रयमेलनात् ।
यज्जीवशिवयोरैक्यं तेनासावान्तरो बलिः ।। ( पृ० ३३९ )

इत्येतेषूद्धरणेष्वपि तथैव ।

चिद्वल्ल्याममृतानन्दयोगिन इमे श्लोका उद्धृताः—

बैन्दवे[2] परमाकाशे सच्चिदानन्दलक्षणे ।
निष्प्रपञ्चे निराभासे निर्विकल्पे निरामये ।।
अनुत्तरचमत्कारपरामर्शपवित्रिते ।
निरुत्तरमहाशून्ये शून्यशून्यान्तवर्जिते ।।
स्त्रीपुंनपुंसकाख्याभिः कल्पनाभिरकल्पिते ।
आदिमध्यान्तनिर्मुक्ते भावपञ्चकभासिते ।।
सर्वोपमानरहिते प्रकाशानुभवात्मिके ।। ( पृ० २४-२५ ) ।
रश्मिचक्रं च परितो भक्तिनम्रः प्रपूजयेत् । ( पृ० ५४-५५ ) ।

अमृतानन्दविरचितस्य तत्त्वविमर्शिनीग्रन्थस्य मातृका केरलविश्वविद्यालय-ग्रन्थालये विद्यते । सर्वाणीमान्युद्धरणानि तत्रत्यान्येव स्युरिति वयं संभावयामः । यतो हि दीपिकायाम् ( पृ० १०६ )—''कायति नानानामप्रपञ्चरूपेण मातृका देवी'' ( १।६ ) इति सौभाग्यसुधोदयोद्धरणावसरे 'अस्मदुक्त' इति पाठस्यैवौचित्यम्, न तु 'अस्मद्गुरूक्त' इत्यस्य । यदीमान्युद्धरणानि तत्रोपलभ्यन्ते, तदैतन्निश्चयेन वक्तुं शक्येत यद् दीपिकायां सर्वत्र 'अस्मद्गुरूक्त' इत्यस्य स्थाने 'अस्मदुक्त' इत्येव पाठ उचित इति । तदैव च तत्त्वविमर्शिनीचिद्विलासस्तवयोरमृतानन्दकृतित्वं निर्विचिकित्सं सिद्ध्येत ।

---

१. ''कामो देवः प्रकाम्यमानत्वात्'' ( ४।३ ) इति सौभाग्यसुधोदयस्थः पाठः । एतेनापि 'अस्मदुक्त' इति पाठस्यैवौचित्यं प्रतीयते ।

२. ''बैन्दवे'' इत्यादिकः श्लोकः ६८ पृष्ठेऽपि वर्तते चिद्वल्ल्यामेव ।

**तन्त्रसद्भावः**

तुलामेलकयोगः श्रीतन्त्रसद्भावशासने ।
य उक्तः शम्भुनाथेन स मया दर्शितः क्रमात् ॥ (३०।२१४)

इति तन्त्रालोकप्रामाण्यात्तन्त्रसद्भावशासनं शम्भुनाथकृतिरिति डॉ० कान्तिचन्द्रपाण्डेयमहोदयाः प्रतिपादयन्ति[1]। शिवसूत्रविमर्शिन्यामृजुविमर्शिन्यां चिद्वल्ल्यां च तत्रत्या बहवः श्लोका दृश्यन्ते। तेषां दर्शनेन ज्ञायते भगवता शङ्करेण भगवत्यै उमायै शास्त्रमेतदुपदिष्टमिति। चिद्वल्ल्यां (पृ० ३५) स्पष्टमस्यागमशास्त्रत्वमङ्गीकृतम्। शम्भुनाथोऽभिनवगुप्तस्य साक्षात् कौलिकदीक्षागुरुरिति तन्त्रालोकादिषु तत्र तत्र स्पष्टमेव। तदत्र विशये एवं समाधातुं शक्यते—अद्वैतवादिष्वागमदर्शनेषु साधकस्य शिवाद्याराध्याभिन्नत्वं तत्सहधर्मिण्याः साधिकायाश्च देव्यभिन्नत्वमावेशदशायामङ्गीक्रियते। अस्यां दशायामवतीर्णानां शास्त्राणामागमत्वव्यपदेशोऽकारि साधकैः। तन्त्रसद्भावक्रमसद्भावादीनि शासनान्येवमेवाविर्भूतानि स्युः। अस्मिन् प्रसङ्गे श्रीमतां चिन्ताहरणचक्रवर्तिमहोदयानां ग्रन्थो[2] विशेषजिज्ञासुभिरवश्यं द्रष्टव्यः।

**तन्त्रालोकः**

ऋजुविमर्शिन्यां त्रिकशास्त्र-त्रिकसारशास्त्र-त्रिशिकाशासन-षडध्वसारशास्त्रवचनत्वेनोद्धृताः प्रायः सर्वे श्लोकास्तन्त्रालोके समुपलभ्यन्ते, अतो नेमानि ग्रन्थान्तराणि। सर्वत्र ग्रन्थकारेण तन्त्रालोक एव तत्तन्नाम्ना स्मृतः। तन्त्रालोकश्चाभिनवगुप्तपादस्य कृतित्वेन प्रथिततम एव।

**तिमिरोद्घाटः**

करन्ध्रचितिमध्यस्था ब्रह्मपाशावलम्बिकाः ।
पीठेश्वर्यो महाघोरा मोहयन्ति मुहुर्मुहुः ॥

इत्येष तिमिरोद्घाटश्लोकः शिवसूत्रविमर्शिन्यां स्थलद्वये (पृ० १७, १०२), ऋजुविमर्शिन्यां (पृ० २८) च दृश्यते।

यः प्रियो यः सुहृद्बन्धुर्यो दाता योऽतिवल्लभः ।
तदङ्गभक्षणाद् देवि ह्युत्पतेद् गगनाङ्गना ॥

इति शिवसूत्रविमर्शिन्यां (पृ० ६८) दृष्टेऽस्यैव ग्रन्थस्य वचने स्थितेन 'देवि' इति संबोधनपदेनास्यागमकोटौ समावेशो भवति।

**त्रिपुरसुन्दरीकल्पलता**

"त्रिपुरसुन्दरीकल्पलतायामभियुक्तोक्तिः—
प्राणो देवीसखाद्यो दशशतनयनः शम्भुरग्निस्त्रिमूर्तिः
शून्यश्चन्द्रार्धनादः शिखिरुचिरुचिरो वाग्भवोऽसावकीलः।"

---

१. द्रष्टव्यम्—अभिनवगुप्त, पृ० ५८३ (द्वितीयं संस्करणम्)।

२. "तन्त्राज् : स्टडीज् ऑन देयर रिलीजन एण्ड लिटरेचर" इत्याख्यस्य ग्रन्थस्य "आथरशिप ऑफ द तन्त्राज्" इति शीर्षकस्तृतीयोऽध्यायः, पृ० १९-२८।

ऋजुविमर्शिन्यामेतद् दृश्यते ( पृ. १११ )। अर्थरत्नावल्यां तु—"तत्र सन्ध्यावन्दन-न्यासमण्डलार्घशुद्धिपर्यन्तं श्रीमहात्रिपुरसुन्दरीकल्पलतायामुक्तप्रकारेण द्रष्टव्यम्" (पृ. ११५) इति नाम्नि कश्चन भेदोऽवलोक्यते। ज्ञानदीपविमर्शिन्यां[1] विनैव नाम-निर्देशमिमे श्लोका दृश्यन्ते—

प्राणो देवीसखाद्यो दशशतनयनः शम्भुरग्निस्त्रिमूर्तिः
शून्यश्चन्द्रार्धनादोऽहिमरुचिरुचिरो वाग्भवोऽसावकीलः।
सोऽयं ध्यानाज्जपाद्वा मुखकुहरलसद्गद्यपद्यप्रबन्धं
छन्दोऽलङ्कारतर्कागमविशदमतिर्वाक्पतिर्जायते च॥
त्रिस्थाने जननस्थितिक्षयतया यच्छैवबीजत्रयं
सृष्ट्यः स्पष्टमयोऽपि शक्तिमदनाच्चैन्द्रं तु बीजं स्थितेः।
संहारस्य तथाऽनलस्तदनु खं चन्द्रस्त्रिमूर्तिध्वनी
रक्तं ध्यायति कामराजकमिदं यस्तस्य वश्यं जगत्॥
सोमः कामश्च शक्रः पशुपतिरनलो वैष्णवी पूर्णचन्द्रो
नादः शक्त्याख्यबीजं तदिदमनिलसत्कीरकुन्देन्दुगौरम्।
यो ध्यायेद्धयेतदन्तर्भवति हि निखिला खेचरी दिव्यसिद्धि-
र्देव्या लोकैकमात्रा उपशमति च विषं याति कैवल्यतां सः॥

इमे च श्लोकास्त्रिपुरसुन्दरीकल्पलताया एवेति ऋजुविमर्शिनीदर्शनादुन्नीयते।

चक्रं बैन्दवमम्बिकामयमिदं वामा त्रयो ये भ्रमा
ज्येष्ठेयं यदिदं पुरन्दरपुरे रेखाचतुष्कं बहिः।
योऽयं शक्त्यनलत्रिकोणनिवहो रौद्रीयमित्यामृशन्
योऽर्चाधारमकृत्रिमं कलयते मातः स ते पूजकः॥

इत्येष श्लोकोऽर्थरत्नावल्यां (पृ० ८३) वामकेश्वरीमतविवरणे (पृ. २९) च,

आ श्रीदीपकनाथतो ह्यगणितैरद्यापि वृत्तिः कृता
यस्याऽन्यैश्च करिष्यते गुरुवरैः स्वस्वाशयौचित्यतः।
देवि त्वच्चरणाब्जरेणुशरणः कामस्थमित्यादिक-
श्लोकस्यार्धयुतस्य तस्य सुकृती कोऽप्यर्थवित्तत्त्वतः॥

इत्ययं श्लोको वामकेश्वरीमतविवरणे ( पृ. ११५ ),

पिण्डो वाचकविस्तरस्य महतः संस्कारशेषस्थिति-
र्नादोऽसौ तव देवि मूर्ध्नि समनासीमानमुल्लङ्घयन्।
घण्टाक्वाण इव क्रमेण विरमन्नन्यामणीयस्तरी-
माजिघ्रन् परचिद्दशामनुभवन् मूर्ति पुराणीं मम॥ (पृ.१३१,३१५-१६)

---

१. द्रष्टव्यम्—प. २० ख।

विश्वक्षिप्तपदप्रमेयसुभगां ब्राह्मीं महावाग्भवे
विश्वोत्तीर्णमहाप्रकाशवपुषं शक्तिं च नैसर्गिकीम् ।
प्रामाण्यप्रवणत्रिशक्तिखचितां मध्ये तु चातुर्दशीं
संचिन्त्याम्ब समिन्धयन्नुभयतो मथ्नामि तन्त्रारणिम् ॥ (पृ. २६४-६५)

इतीमौ च श्लोकौ योगिनीहृदयदीपिकायां दृश्येते । कस्यचनैकस्यैव स्तवस्येमे श्लोकाः स्युरिति संभाव्यते ।

**त्रिपुरार्णवः**

कामं प्राणं प्रकुर्वीत मन्मथं कारयेत्तनुम् ।
कन्दर्पं मन्दिरं कृत्वा द्विधाभूतं च पार्वति ॥
मकरध्वजं न्यसेद्देवि षट्स्थानेष्वस्य सुव्रते ।
मोहनाभ्यन्तरे कृत्वाऽऽवेष्टयेत्तस्य मायया ॥

अर्थरत्नावल्यां (पृ. २४२) श्लोकावेतौ त्रिपुरार्णवस्येति प्रदर्शितम् । नित्याषोडशिकार्णव-सेतुबन्धे ( पृ. १५० ) तन्त्रान्तरवचनत्वेनोद्धृताविमौ श्लोकौ । अनयोरर्थस्तत्रैवावलोक-नीयः । त्रिपुरासम्प्रदायस्य प्राचीन एष आगमग्रन्थः प्रतीयते । नानाग्रन्थेषु बाहुल्येनो-द्धृतान्यस्य वचनानि ।

**देवीसंस्थानम्**

एष ग्रन्थो ज्ञानदीपविमर्शिन्यामेवमुद्धृतः[1]—

"तदुक्तं देवीसंस्थाननाम्न्यागमे—

आत्मा त्वादित्यहंसोऽयं पक्षौ चास्य सितासितौ ।
तदन्तर्वर्तते राहुस्तत्र सन्ध्ये गमागमे ॥
कृष्णे संक्रमते नाडी शुक्ले निष्कलवाहिनी ।
एतत्पक्षद्वयं वाहे प्राणाचार्यस्तु चन्द्रमाः ॥" इति ।

**नवशतीशास्त्रम्**

अस्य ग्रन्थस्य—

अनन्तं परमं ज्योतिः सर्वप्राणिहृदि स्थितम् ।

श्लोकार्धमात्रमेतद् योगिनीहृदयदीपिकायां ( पृ ६३ ) समुद्धृतं दृश्यते । 'अनन्तम्' इत्यस्य स्थाने 'अनच्कम्' इति पाठान्तरं मातृकासु कासुचित् । चतुश्शतीशास्त्रं यथा चतुश्शतश्लोकानां समाहारस्तथैव शास्त्रमेतन्नवशतश्लोकमयं स्यात् । 'अनच्कं यत्परं ज्योतिः सर्वप्राणिहृदि स्थितम्" इत्यादिकः सार्धद्वयश्लोकः सिद्धनाथपादकृतेः कुलरत्न-

---

१. द्रष्टव्यम्—प. ८ क ।

शास्त्रस्येत्यर्थरत्नावलीतो ( पृ. २०५ ) ज्ञायते। किमेतत् कुलरत्नशास्त्रमेव नवशतीशास्त्रम् ? तन्त्रालोकादिषूद्धृता कुलरत्नमाला रत्नमाला वाऽभिन्नो ग्रन्थ इति तत्रोद्धृतवचनानां पर्यालोचनेन ज्ञायते। परमार्थसारस्य योगराजकृतायां टीकायां ( पृ. १६३ ) कुलरत्नमालिका साहस्रिकेतिविशेषणेन संयोजिता। तेन सहस्रश्लोकात्मकोऽयं ग्रन्थ इत्यायाति। कुलरत्नशास्त्रं कुलरत्नमाला चोद्धरणेभ्यः कौलमतप्रतिपादको ग्रन्थ इत्यध्यवसीयते। सर्वाणीमानि वचनानि तन्त्रालोकार्थरत्नावल्यादिषूपलब्धान्येकस्यैव ग्रन्थस्य सिद्धनाथपादकृतेः स्युरिति वयं संभावयामः। नवशतीशास्त्रस्य सहस्रश्लोकात्मकता सेतुबन्धप्रदर्शित( पृ. १७६ )रीत्या समाधेया। कुलरत्नमालायामुपलभ्यमानानि देवीत्यादीनि संबोधनपदानि तन्त्रसद्भावपरिचये प्रदर्शितरीत्या समाधेयानि।

**नागभट्टः**

त्रिपुरासारसमुच्चयकारो नागभट्टः सुप्रसिद्धस्तन्त्रवाङ्मये योगशास्त्रग्रन्थेषु च। ऋजुविमर्शिन्यां ( पृ. ११९ ) भट्टनागनाम्नाऽयमुद्धृतः। अन्यान्यपि द्वित्रवचनानि विनैव नामनिर्देशमत्रोट्टङ्कितानि। ग्रन्थोऽयं सवृत्तिकः प्रकाशितः कलिकातानगरीतः। योगशास्त्रग्रन्थेष्वप्यस्योल्लेखः किमपि वैशिष्ट्यमस्य प्रख्यापयति। सरस्वतीभवनस्थसटीकलघुस्तवमातृकायां[1] त्रिपुरासारसमुच्चयः कविहस्तमल्लोक्त इति समुदटङ्कि।

**पद्महस्तभट्टारकः**

एष ग्रन्थो ज्ञानदीपविमर्शिन्यामुद्धृतः[2]। अत्रत्य एक एव श्लोकस्तत्र दृश्यते—

प्राणार्कौ सन्नयेत् पश्चात् शश्यन्तमयते यदा।
त्रिपथे जायते सन्ध्या त्वन्तस्था कुलयोगिनाम्॥ इति।

अस्यैव ग्रन्थस्य केरलविश्वविद्यालयमातृकायां "श्रीपद्महस्तभट्टारके" इत्यस्य स्थाने "तथा षट्सहस्रभट्टारकेणापि सन्ध्यानिर्णयः कृतो यथा" इति पाठो वर्तते।

**परापञ्चाशिका**

ग्रन्थ एष योगिनीहृदयदीपिकायां चिद्वल्ल्यां सौन्दर्यलहरीटीकायां सौभाग्यवर्धन्यां च समुद्धृतो वर्तते। अत्रत्याः सर्वेऽपि श्लोकाः कश्मीरग्रन्थमालायां प्रकाशितायामादिनाथविरचितायामनुत्तरबोधपञ्चाशिकायां दृश्यन्त इति तदभिन्न एवैष ग्रन्थ इति मन्तव्यम्। अशुद्धिभूयिष्ठमेतत्संस्करणम्। सरस्वतीभवनपुस्तकालयेऽन्यत्र चास्या द्वित्रा मातृकाः समुपलभ्यन्ते। तासामाधारेण नूतनमस्य संस्करणमावश्यकम्।

---

१. द्रष्टव्यम्—२३६१६ संख्याकाया जैनाचार्यसोमतिलकसूरिकृतटीकासहिताया लघुस्तवमातृकायास्तृतीयं पत्रम्।

२. द्रष्टव्यम्—प. ८ क।

**प्रपञ्चसारः**

पद्मपादाचार्यविरचितेन भाष्येण सह शङ्कराचार्यप्रणीत एष ग्रन्थः साम्प्रतं मुद्रित उपलभ्यते। ऋजुविमर्शिनीकारेणाभियुक्तवचनत्वेन बहुश उद्धृत एष ग्रन्थो भगवता आद्येन शङ्कराचार्येण विरचितोऽन्येन वा तच्छिष्यपरम्परासु स्थितेनेत्यत्र विवदन्ते ऐतिहासिकाः साम्प्रतिकाः। अर्थरत्नावलीकारेण विद्यानन्देन [1]ज्ञानदीपविमर्शिन्यां स्वकृतौ प्रपञ्चसारस्थः "मूलाधारात्" (१०।७) इत्यादिकः श्लोकः शङ्कराचार्यकृतित्वेनोल्लिख्यते। ईशानशिवगुरुदेवपद्धत्यां प्रपञ्चसारस्थाः श्लोका दृश्यन्ते। एष ईशानशिवः सोमशम्भुग्रन्थं स्मरति। सोमशम्भुना कर्मकाण्डक्रमावलिः ११३० वैक्रमे वत्सरे समापिता। ईशानशिवगुरुदेवपद्धतिश्च तत्त्वप्रकाशव्याख्यात्रा कुमारेण स्मर्यते। कुमार एष गुर्जरचालुक्यनृपतेर्मूलराजस्य गुरोः कुमारशिवादभिन्नो यदि स्वीक्रियेत तर्हि ख्रीष्टीयैकादशशताब्द्या अन्तिमो भाग ईशानशिवस्य स्थितिकालः सिद्ध्यति। प्रपञ्चसारस्य रचना ततः पूर्वं संजातेत्यङ्गीकर्तव्यमेव। शिवभूषणे पद्धतिप्रणेतारोऽष्टादश शिवाचार्याः श्रूयन्ते—

> उग्रोत्तरज्योतिरथोपसद्यः श्रीरामकण्ठोऽपि च वैद्यकण्ठः।
> नारायणश्चापि विभूतिकण्ठः श्रीनीलकण्ठावपि सोमशम्भुः॥
> ईशानशम्भुर्हृदयादिना स्याद् विरञ्चिवैराग्यकयुग्मवाच्यौ।
> ज्ञानस्त्रिणेत्रो वरुणेश्वरौ तावित्यादयस्ते स्युरघोरशम्भुः॥ इति।

प्रायश्चित्तसमुच्चय–निमित्तक्रियानुसन्धान-प्रतिष्ठादर्पणप्रभृतिषु प्राचीनेषु पद्धतिग्रन्थेषु गवेषितेषु प्रपञ्चसारस्य स्थितिकाल इतोऽपि प्राचीनः साध्येत।

प्रपञ्चसारः शारदातिलकं च यद्यपि तन्त्रशास्त्रग्रन्थौ, तथापि नेमौ शैवं शाक्तं वैष्णवं स्कान्दं गाणपत्यं वा मतमैकान्त्येन प्रतिपादयतः। स्मार्तपञ्चायतनपूजायां यथा सर्वेषामेषां पूजनं विधीयते, तथैवानयोर्ग्रन्थयोरासां सर्वासां तन्त्रदृष्टीनां समन्वयो विराजते। अनयोर्ग्रन्थयोर्विषयप्रतिपादने किमुत श्लोकानुपूर्व्यामपि तत्र तत्र वर्तते साम्यम्, अतः कश्चिदेकोऽन्यमनुकरोतीत्यङ्गीकर्तव्यम्। अनयोरेकस्य कर्ता शङ्कराचार्यंभगवत्पादः, अन्यस्य चाभिनवगुप्तगुरुर्लक्ष्मणोऽभिमन्यते। अनेन प्रपञ्चसारस्य प्राचीनत्वमायाति। वैदिकधर्मस्य पुनः प्रतिष्ठापयित्राऽऽद्येन शङ्कराचार्येण वेदबाह्यान् मतान् निरस्यता वेदानुवर्तिनीनां दृष्टीनां समन्वयः स्मार्तधर्मप्रतिष्ठामुखेनाकारीति श्रूयते। ब्रह्मसूत्रतर्कपादव्याख्यानप्रसङ्गे यद्यप्येता दृष्टयः समालोचिताः, तथापि प्रपञ्चसारे दृश्यते नाम तत्समन्वयः। तन्त्रग्रन्थेष्वेवंविधेषु प्रपञ्चसार इदम्प्रथमतया प्रवृत्तः, उताऽऽसन्नन्येऽपीदृशा ग्रन्थाः पूर्वमित्यन्वेषणीयम्।

---

१. द्रष्टव्यम्–पृ० ११ क।

**मतशास्त्रम्**

यत्र यत्र मनस्तुष्टिस्तत्र तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥

इत्येष श्लोको [1]मतशास्त्रस्येत्यर्थरत्नावलीकारः (पृ० ८०) । एवमेव—"संवर्तामण्डलान्ते क्रमपदनिहितानन्दशक्तिः सुभीमा" इत्येष श्लोकखण्डोऽप्यर्थरत्नावल्यां ( पृ. २०५ ) मतशास्त्रस्यैवोद्धृतः । एष च श्लोकखण्डः कुब्जिकामतस्येति तत्रैव टिप्पण्यामस्माभिः प्रतिपादितम् । नित्याषोडशिकार्णवे चतुष्षष्टितन्त्रेषु कुब्जिकामतं परिगणितम् ।

वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम् ।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम् ॥

[2]अभिनवगुप्तप्रभृतिभिरुद्धृतेऽस्मिन् वचने मतसिद्धान्तः पृथगेव परिगणितः । अस्मिन् विषयेऽस्माभिस्त्रिपुरादर्शनविषयके निबन्धे १६-१७ पृष्ठयोष्टिप्पण्यामुक्तपूर्वम् । कुब्जिकामतस्य प्रकाशनानन्तरमेव विषयेऽस्मिन् निश्चयेन किमपि वक्तुं शक्यते । अभिनवगुप्तेन परात्रिंशिकाव्याख्यायाम्—"तथा च कुब्जिकामते खण्डचक्रविचारेऽमुमेवार्थं प्रधानतयाधिकृत्यादिष्टम्—मायोपरि महामाया त्रिकोणानन्दरूपिणी । इत्यादि" इत्येवं कुब्जिकामतमुद्धृतम् । महार्थमञ्जरीपरिमलादिष्वपि ( पृ. ४ ) तद्वचनान्युपलभ्यन्ते । तन्त्रालोके तद्विवेके च सिद्धयोगीश्वरीमतमपि मतनाम्ना स्मृतम् । कुब्जिकामतसिद्धयोगीश्वरीमतयोर्मतनाम्नोद्धृतानां वचनानां विवेकोऽनयोर्मातृकयोः परिदर्शनानन्तरमेव संभवेत् ।

**मतोत्तरम्**

अर्थरत्नावल्यामिमे श्लोका मतोत्तरीया उद्धृताः सन्ति—

एतत्तन्मण्डलं दिव्यं यत्र विश्वं प्रतिष्ठितम् ( पृ. १९ )
पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितः ।
रूपं बिन्दुः समाख्यातो रूपातीतं तु निष्कलम् ॥ ( पृ. २४ )
भैरवोऽहं कुलोऽहं वै बिन्दुस्त्वं नादकुण्डली ।
उभयोः सङ्गमो योऽयं परानन्दस्वभावकः ॥ ( पृ. १३९ )

अत्रत्यं द्वितीयमुद्धरणं योगिनीहृदयदीपिकायां ( पृ. ५९ ) सेतुबन्धे ( पृ. ६० ) च स्वच्छन्दसंग्रहवचनत्वेनोद्धृतम् । ऋजुविमर्शिन्यां ( पृ. १३३ ) त्रैलोक्यमोहनमित्यादि नवमं सुरसुन्दरीत्यन्तं सार्धश्लोकद्वयं मतोत्तरीयमुद्धृतम् । अत्र द्वयोर्मातृकयोर्ग्रन्थस्य नाम वामिकोत्तरमिति दृश्यते । मतोत्तरस्य मातृकाया विवरणं म०म० हरप्रसादशास्त्रिसंदृब्धनेपालग्रन्थसूच्यां द्रष्टव्यम् ।

---

१. स्वल्पेन पाठभेदेन सहैष विज्ञानभैरवेऽपि ( श्लो. ७४ ) दृश्यते ।

२. द्रष्टव्या—परात्रिंशिकाविवृतिः, पृ. ९२

**महाज्ञानार्णवः**

एष ग्रन्थो योगिनीहृदये "महाज्ञानार्णवे दृष्टः शङ्का तत्र न पार्वति" ( २।७७ ) इत्येवं स्मृतः। जयरथेन च विवरणे "महाज्ञानार्णवे दृष्टं ष( ङ्कं?ट्कं ) तन्त्रेऽत्र पार्वति" ( पृ. १३९ ) इत्यागमवचनमुद्धृतम्। उभयत्रापि षड्विधमन्त्रार्थप्रकरणे तत्स्मर्यते, अत उभयत्रापि प्रकरणमेतन्महाज्ञानार्णवानुसारि व्याख्यायत इति मन्तव्यम्। विवरणे आगमवचनेन योगिनीहृदयमेव स्मर्यत इति तत्संपादकाभिमतं न रोचतेऽस्मभ्यम्, अत्रोद्धृतानां वचनानां सर्वेषां योगिनीहृदयेऽनुपलम्भात्। अतः पृथग् ग्रन्थद्वयमेतदङ्गीकर्तव्यम्। तदाधारभूतश्च ग्रन्थो महाज्ञानार्णव इति। अत्र यद्वक्तव्यं तत् १२ पृ. १ टि. उक्तम्।

**मुख्याम्नायक्रमः, मुख्याम्नायरहस्यविधिश्च**

योगिनीहृदयदीपिकायाम्—

"स्वीकुर्यात् सततं वस्तु यदानन्दसुखं भवेत्" ( पृ. २६५ )।

इत्येष श्लोकार्धो मुख्याम्नायक्रमनाम्नोद्धृतः। एवमेव—

इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवता।<br>
स्वाभेदेन समाराध्या ज्ञातुः सोऽयं महामखः॥

इति श्लोको मुख्याम्नायरहस्यस्थ इत्युक्तम् (पृ. १९६, २७२)। एष श्लोकः सेतुबन्धेऽपि ( पृ. १९८ ) आम्नायरहस्यश्लोकत्वेनोक्तः। महार्थमञ्जरीपरिमले ( पृ. ६६ ) चैषोऽभियुक्तवचनत्वेनोद्धृतः। मुख्याम्नायक्रमो मुख्याम्नायरहस्यं च भिन्नौ ग्रन्थावभिन्नौ वेति विचार्यम्।

**मृत्युञ्जयभट्टारकः**

तन्त्रालोक-शिवसूत्रविमर्शिनी-ऋजुविमर्शिन्यादिषु मृत्युञ्जयभट्टारकनाम्नोद्धृताः सर्वेऽपि श्लोका नेत्रतन्त्रे समुपलभ्यन्ते। अतो नेत्रतन्त्रमेव मृत्युञ्जयभट्टारक इति निश्चप्रचम्। एतच्च तन्त्रं कश्मीरग्रन्थमालायां प्रकाशितमुपलभ्यते।

**यागसारः**

देव्यासनोपयोग्यस्य तीरे यस्य सुवर्तुला।<br>
तुर्यास्रे दिग्विदिक्सूत्रैः पातितैर्वृत्तिमालिखेत्॥<br>
तदन्तरेषु रेखाष्टौ सूत्राणि समया ततः।<br>
तदन्तस्तु त्रिधा वृत्ति समन्तात् परिवर्तयेत्॥<br>
दलाग्रं दलसन्धिं च केशराणि च कर्णिकाम्।<br>
क्रमशः संविधायाशु रजोभिस्तत्र नोन्नतम्॥<br>
पीता च कर्णिका रक्ता नवभिः कृष्णबीजकैः।<br>
मूलमध्याग्रसंस्थानि पीतरक्तसितानि वा॥

केशराणि दलान्याशु श्वेतवारणरेखया ।
शुक्लानि प्रोन्नताग्राणि भुक्तिकामस्य वर्तयेत् ॥
समानि मुक्तिकामस्य दलोग्राणि विजानता ।
कन्दर्पादिषु योगेषु तीक्ष्णाग्राणि शुभानि च ॥
दिगीशैः संचराग्राणि गोकर्णाग्राणि चान्यथा ।
विघ्नेशानां ग्रहाणां च प्रमथानां निगद्यते ॥
मण्डलाग्राणि कार्याणि वाणीदुर्गार्चनेषु च ।
बोधिपत्राग्रतान्येव विदधीत गुरूत्तमः ॥
प्रत्यक्षमिव संपाद्य देव्या आसनपङ्कजम् ।
मध्याद्यन्ताधिकं चान्यद् यन्न्यूनं तत्समं भवेत् ॥

यागसारस्था इमे श्लोका ज्ञानदीपविमर्शिन्यामुद्धृता विद्यानन्दनाथेन (प. १४ ख–१५ क) ।

**रससारसंग्रहः**

"विद्यां तु नवमीं सम्यक्" इत्यादि "वाग्भवोऽसावकीलितः" इत्यन्ता रससारसंग्रहस्थाः श्लोका ऋजुविमर्शिन्याम् ( पृ. ११० ) अर्थरत्नावल्यां ( पृ. ११४ ) चिद्वल्ल्यां ( पृ. ३९ ) च समुपलभ्यन्ते। "कीलिता या रहस्यत्वान्मादनेत्यादितः क्रमात्" इत्यत्र मादनं तदधः शक्तिः ( १।१११ ) इत्यादिनित्याषोडशिकार्णववचनपरामर्श इत्युन्नीयते ।

प्रोत्कीलनं विधायास्या देवदेवेन दर्शितम् ।
चतुर्विंशतिसाहस्रे रससारकसंज्ञके ॥

इत्यृजुविमर्शिनीधृताभियुक्तवचनप्रामाण्यतो रससारसंग्रह एष चतुर्विंशतिसहस्रश्लोकप्रमाणो देवदेवेन शिवेन प्रोक्त आगमग्रन्थ इति प्रतीयते। अत्र चतुर्थचरणस्य 'रससारकसंग्रहे' इति पाठ उचितः प्रतिभाति। अत्र हादिविद्यायाः समुद्धारादेष न प्रमाणीकृतः सेतुबन्धकारेण ( पृ. ६५ ) कादिविद्योपासकेन ।

**रुद्रयामलम्**

नित्याषोडशिकार्णवे वारद्वयं रुद्रयामलं स्मृतम्। "एवं मन्त्रफलावाप्तिरित्येतद्रुद्रयामलम्" ( श्लो. ३६ ) इत्येतस्मिन् परात्रीशिकान्तिमश्लोकेऽस्य ग्रन्थस्य रुद्रयामलसारभूतत्वमवगम्यते। "श्रुतं देव मया सर्वं रुद्रयामलसंभवम्" (श्लो. १) इत्येतस्मिन् विज्ञानभैरवाद्यपद्ये "रुद्रयामलतन्त्रस्य सारमद्यावधारितम्" ( श्लो. १६२ ) इत्युपान्त्ये पद्ये च स्पष्टमेव रुद्रयामलं निर्दिष्टम्। नित्याषोडशिकार्णवे चतुष्षष्टितन्त्रपरिगणनप्रकरणे यामलाष्टकेष्वन्यतमदेतत्सर्वटीकाकारसम्मतं तन्त्रम्। अर्थरत्नावल्यादिषूद्धृतमुत्तरषट्कं रुद्रयामलस्यैव भाग इति तत्पुष्पिकावाक्येभ्यः परिज्ञायते। एवं विशिष्टेष्वागमग्रन्थेषु स्मृतस्यास्य रुद्रयामलस्य वैशिष्ट्यं प्राचीनत्वं च निर्विवादम्। ग्रन्थस्यास्य मातृकाः प्रायः

सर्वेष्वेव ग्रन्थालयेषु समुपलभ्यन्ते । सन्ति च स्तोत्रपटलादीनि बहूनि पुस्तकानि रुद्रयामलान्तर्गतत्वेन निर्दिष्टानि। रुद्रयामलसंबद्धयावदुपलब्धसामग्रीसंकलनमुखेन ग्रन्थस्यास्य प्रामाणिकं संस्करणं नितान्तमपेक्षितम् । तच्च सज्जीक्रियते वाराणसेयसंस्कृतविश्वविद्यालयस्थेन योगतन्त्रविभागेनेत्युक्तमेव ।

**लक्षणसारः**

अत्रत्या इमे श्लोका ऋजुविमर्शिन्यामुद्धृता वर्तन्ते—

अनेन हेतुना सर्वपापविध्वंसकारिणा ।
समस्ताज्ञासिद्धिदेहदायिना तर्पयेज्जगत् ॥ ( पृ० १३५ )
अर्घान्नसलिलं पात्रं सहेतु दत्तपुष्पकम् ।
समन्त्रं नेत्रपात्रेण त्रिधा शान्तिबलिं भजेत् ॥
मुक्तकेनालिवर्णेन सर्वविघ्नविनाशिना ।
सर्वसिद्धिप्रदेनैव ध्यात्वा भूतादिवेष्टितम् ॥ ( पृ० १४०-१४१ )
जातवेदसि भूतेशे यातुधाने समीरणे ।
देवीमौलौ चतुर्दिक्षु क्रमाद् हृदादिकं यजेत् ॥ ( पृ० २२५ )

ऋजुविमर्शिन्या गमातृकायां ( पृ० २२५ ) ग्रन्थस्यास्य लक्षणसागर इति नाम ।

**वत्सराजः**

सौन्दर्यलहरीटीकायामरुणामोदिन्याम्—

"कामसिद्धिस्तोत्रे भगवतीभक्तिलोलचूडामणिः श्रीवत्सराजोऽप्याह—

लोकाश्चतुर्दश महेन्द्रमुखाश्च देवा
मूर्तित्रयं मुनिगणाश्च वसिष्ठमुख्याः ।
सद्यो भवन्ति न भवन्ति समस्तमूर्ते-
रुन्मीलनेन तव देवि निमीलनेन ॥" ( पृ० २२१ )

इत्येवं वत्सराजविरचितस्य कामसिद्धिस्तोत्रस्योल्लेखो विद्यते। नेपालस्थवीरपुस्तकालये वर्ततेऽशेषकुलवल्लरीमातृका । तस्यां मातृकायामादितश्चतुर्थपत्रस्य निरङ्कपृष्ठपर्यन्तं महाराजाधिराजविद्याधरचक्रवर्तिवत्सराजविरचिता वामकेश्वरीस्तुतिर्दृश्यते । तत्रान्वेष्टव्य एष श्लोकः ।

**विरूपाक्षपञ्चाशिका**

विरूपाक्षपञ्चाशिकावचनानि महार्थमञ्जरीपरिमले ( पृ० ५४, ७३, ७६, ७७, १२४, १३६ ) कामकलाविलासटीकायां चिद्वल्ल्यां ( पृ० ४, १५, १७, ३१, ४३. ६८ ) च समुद्धृतानि सन्ति । एष ग्रन्थः सव्याख्यस्त्रिवेन्द्रंसंस्कृतग्रन्थमालायां प्रकाशितः । ग्रन्थस्यास्य वैशिष्ट्यमनेनैव प्रतीयेत यदेष शिवपुराणे– "श्रीविरूपाक्षनिर्मिते । शास्त्रे पञ्चाशिके" ( ६।१९।४४ ) इत्येवं स्मृतः ।

**श्रीकण्ठसंहिता**

पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन ।
ज्ञानमूलमिदं सर्वमन्यथा न प्रसिद्ध्यति ।।
आदिमान्तिमहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।।
गुरोर्लक्षणमेतावदादिमान्त्यं च वेदयेत् ।।

श्लोकाविमौ श्रीकण्ठसंहिताया इत्यृजुविमर्शिन्यामुक्तम् । श्रीकण्ठीयसंहितेति ख. ग. पाठः । शिवसूत्रविमर्शिन्यामत्रत्यः प्रथमः श्लोकः श्रीकण्ठीयसंहितास्थ इत्युक्तम् ( पृ० ४८ ), स्तवचिन्तामणिविवृतौ ( पृ० ९३ ) तु श्रीकण्ठसंहितास्थ इति । अत्रत्याः श्लोकास्तन्त्रालोकविवेक-स्वच्छन्दोद्योतादिषु दृश्यन्ते ।

**श्रीपराक्रमः**

योगिनीहृदयदीपिकायां श्रीपराक्रमस्थाः श्लोका दृश्यन्ते २४५, २५४, २६३ पृष्ठेषु ।

**संकेतपद्धतिः**

अर्थरत्नावल्याम्, ज्ञानदीपविमर्शिन्याम्, योगिनीहृदयदीपिकायाम्, सौन्दर्यलहर्याः सौभाग्यवर्धनीव्याख्यायां च संकेतपद्धतिवचनानि बहुश उद्धृतानि । अत्रत्यानि बहूनि वचनानि शिवानन्देनाभियुक्तवचनत्वेन पूजोपनिषदित्यादिनोपनिषद्विशेषणत्वेन च निर्दिष्टानि स्वकीयायामृजुविमर्शिन्याम्, चिद्वल्ल्यां नटनानन्देन ( पृ० ३५ ) त्वागमवचनत्वेन । ज्ञानदीपविमर्शिन्यां विद्यानन्देन यथा गणेशवटुकादयः स्तुताः, तथैवात्रापि गणेशादीनां स्तुतिपराः श्लोका [1]दृश्यन्ते । अन्येषामप्यत्रत्यानां सर्वेषां वचनानां परीक्षणेनेदमेवावसीयते यदेष पद्धतिग्रन्थः केनचन हादिविद्यानुयायिना मनीषिणा विरचित इति, यो हि पश्चात्तनानां पद्धतिकाराणां व्याख्याकाराणां च साम्प्रदायिकपदार्थपरिज्ञानाय प्रधानमवलम्बनमासीत् । हन्त ! साम्प्रतमेष ग्रन्थो नोपलभ्यते । ग्रन्थस्यास्य परिमार्गणेऽवधातव्यमन्वेषणरुचिभिर्विद्वद्भिः ।

अकारस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधं स्मृता ।।

इत्येष संकेतपद्धतिस्थः श्लोकस्तन्त्रालोकविवेकेऽपि ( भा० २, पृ० ८० ) दृश्यते । अत्रत्य एव विषयो वातूलनाथसूत्रवृत्तौ ( पृ० १६-१७ ) विद्यते ।

स्वेच्छाविभावितानन्तजगद्रश्मिवितानवत् ।
नौमि संविन्महापीठं शिवशक्तिपदाश्रयम् ।।

इत्येष ऋजुविमर्शिन्यां ( पृ० ११ ) चिद्वल्ल्यां ( पृ० १२, २९ ) च समुद्धृतः श्लोकः संकेतपद्धतेर्मङ्गलाचरणमिति वयं संभावयामः । अनेन श्लोकेन सह चिद्वल्ल्यां द्वितीय एष श्लोको दृश्यते—

---

१. द्रष्टव्या—योगिनीहृदयदीपिका, पृ० २६८

अखण्डितस्वभावोऽपि विचित्रां मातृकल्पनाम् ।
स्वहृन्मण्डलचक्रे यः प्रथयेत्तं नुमः शिवम् ॥ (पृ० १२) इति ।

एवमेव—

अनेककोटिभेदैस्तु गदितं त्रैपुरं महः ।
तन्मध्ये तु परा दीप्ता महात्रिपुरसुन्दरी ॥
प्रोत्कीलनं विधायास्या देवदेवेन दर्शितम् ।
चतुर्विंशतिसाहस्रे रससारकसंज्ञके ॥ ( पृ० १०७-१०८ )

इत्येवमृजुविमर्शिन्यामभियुक्तवचनत्वेनोद्धृताविमावपि श्लोकौ तत्रत्यावेव स्याताम् । अत्रत्यः प्रथमः श्लोकश्चिद्वल्ल्यामपि ( पृ० ५५ ) दृश्यते । यावदुपलब्धानामस्य श्लोकानां संग्रहोऽन्यत्र विधास्यते ।

**साम्बमिश्रः**

ऋजुविमर्शिन्याम्—"या सा मित्रावरुणसदनादुच्चरन्ती" ( पृ० २२९ ) इत्येतावानंशः साम्बमिश्रकृतेरुद्धृतः । एष च साम्बपञ्चाशिकायाः पञ्चमश्लोकस्य प्रथमश्चरणो वर्तते । क्षेमराजाचार्यकृतया विवृत्या सह साम्बपञ्चाशिका निर्णयसागरमुद्रणालयतः प्रकाशिता । अन्यया कयाचन टीकया सहैष ग्रन्थस्त्रिवेन्द्रंसंस्कृतग्रन्थमालायामपि प्रकाशितो विद्यते ।

**सिद्धनाथपादः**

सिद्धनाथपादस्य श्लोका अर्थरत्नावल्यां ( पृ० ४१, १३४, १७१, २०५, २६८-२६९ ) दृश्यन्ते । अत्रत्यौ २६८-२६९ पृष्ठस्थौ श्लोकावृजुविमर्शिन्यां ( पृ० २६८-२६९ ) ज्ञानदीपविमर्शिन्यां ( प० ३२ ख ) चापि दृश्येते । शिवसूत्रविमर्शिन्याम्—

श्रयेत् स्वातन्त्र्यशक्तिं स्वां सा श्रीकाली परा कला । ( पृ० ९२ )

इत्येष श्लोकार्धः श्रीनाथपादानामुद्धृतः । श्रीनाथपादा इमे सिद्धनाथपादतो भिन्ना अभिन्ना वेति परीक्षणीयमास्ते । एवमेव स्पन्दप्रदीपिकायां ( पृ० ४ ) योऽभेदकारिकाकृत् सिद्धनाथः स्मर्यते, तद्विषयेऽपि मन्तव्यम् ।

**सिद्धामतम्**

मात्र कुण्डलिनी बीजं जीवभूता चिदात्मिका ।
तज्जं ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥

इत्येष श्लोकः सिद्धामतस्येत्यृजुविमर्शिनीकारः । अस्य ग्रन्थस्य सिद्धान्तमतमिति कपुस्तके नाम, ओड्डामरमिति खपुस्तके, सिद्धामृतमिति शिवसूत्रविमर्शिन्याम्, सिद्धयोगीश्वरीमतमिति तन्त्रालोके । सिद्धयोगीश्वरीमतं चतुष्षष्टितन्त्रेषु परिगणितम्, तन्त्रालोके च बहुशः स्मृतम् । अतो ग्रन्थस्यास्यैतदेव नाम वास्तविकम् । सिद्धामतमिति मतमिति वा तस्य संक्षिप्तं नाम । सिद्धातन्त्रनाम्नाप्येतत् स्मर्यते । त्रिकशास्त्रस्य प्रधानतमेषु तन्त्रालोकविवेकस्मृतेषु ( भा० १, पृ० ४९ ) सिद्धा-नामक-मालिन्याख्येष्वन्यतमदेतत्तन्त्रं परि-

गण्यते। नानाग्रन्थेषूपलभ्यन्ते वचांस्यस्य। नेपालपुस्तकालये सिद्धयोगीश्वरतन्त्रमुपलभ्यते। तत्रान्वेषणीयानि तानि।

**सोमशम्भुग्रन्थः**

ज्ञानदीपविमर्शिन्यां विद्यानन्दनाथेन पवित्रारोपणपद्धत्याम् ( पृ० ३४ ख )—"सौवर्णं राजतं ताम्रं कृतादिषु यथाक्रमम्" इत्यादिः "सादाख्यः सर्वदेवाश्च क्रमेण नवतन्तुषु" इत्यन्तः सोमशम्भुग्रन्थः समुद्धृतः। इमे च श्लोकाः सोमशम्भुविरचितकर्मकाण्डक्रमावल्यां ( पृ० ४२ ) समुपलभ्यन्ते। एवमेव—"स्वच्छन्दभैरवे तन्त्रे" इत्यादिक ऋजुविमर्शिन्यामाचार्यवचनत्वेनोद्धृतः श्लोकोऽप्यत्रैव ( पृ० ५५ ) दृश्यते। एष ग्रन्थो द्वाभ्यां संस्थानाभ्यां प्रकाशित उपलभ्यते।

**स्वच्छन्दसंग्रहः**

योगिनीहृदयदीपिकायां महास्वच्छन्दं महास्वच्छन्दसंग्रहः स्वच्छन्दभैरवं स्वच्छन्दसंग्रह इति चत्वारो ग्रन्थाः पृथक् पृथगुद्धृताः। स्वच्छन्दतन्त्रं मुद्रितमुपलभ्यते। तत्र महास्वच्छन्दस्य स्वच्छन्दभैरवस्य च वचनानि दृश्यन्ते, महास्वच्छन्दसंग्रहस्य स्वच्छन्दसंग्रहस्य तु प्रायो न। "भैरवागमेषु दक्षिणस्रोतःसमुत्थेषु स्वच्छन्दचण्डत्रिशिरोभैरवादिषु' ( १०।१-१० ) इति नेत्रतन्त्रोद्योतवचनाधारेण स्वच्छन्दतन्त्रमेव स्वच्छन्दभैरवमित्युन्नीयते, तस्य दक्षिणस्रोतःसमुत्थत्वेन भैरवागमत्वस्य निष्प्रत्यूहत्वात्।[1] महास्वच्छन्दवचनस्य स्वच्छन्दतन्त्रे समुपलम्भेऽपि तस्य भिन्नत्वाभिन्नत्वविषये न किमपि वक्तुं साम्प्रतं शक्येत। महास्वच्छन्दसंग्रह-स्वच्छन्दसंग्रहयोः पृथक्त्वापृथक्त्वविषयेऽपि तथा। स्वच्छन्दसंग्रहस्य भूयांसि वचांसि योगिनीहृदयदीपिकायां कानिचनान्यत्रापि च दृश्यन्ते। आगमिकयोगशास्त्रस्य विशिष्टस्यास्य ग्रन्थस्य न कापि मातृकाऽस्माकं दृग्गोचरीभूता, न च कासुचिदपि मातृकासूचीषु तस्योल्लेखो दृश्यते। नितान्तं महत्त्वपूर्णोऽयं ग्रन्थोऽवश्यमेवान्वेषणीय आगमिकयोगदर्शनयोरनुशीलनपरायणैर्मनीषिभिः।

**हंसनिर्णयो हंसभेदो वा**

घोषः कांस्यं तथा घण्टा वीणा वेणुश्च वांशकम्।
दुन्दुभिः शङ्खघोषश्च नवमं निर्विशेषकम्॥

एष श्लोको हंसनिर्णयस्येत्यर्थरत्नावल्यामुक्तम् ( पृ० ३६ )। अत्र क. ग. पुस्तकयोर्ग्रन्थस्य हंसनिर्भेद इति संज्ञा. छपुस्तके तु हंसभेद इति। हंसभेदस्थाः केचन श्लोका महार्थमञ्जरीपरिमले ( पृ० ६, ५७, ११९ ) दृश्यन्ते। हंसभेद एव हंसनिर्णयः, भिन्नो वैष ग्रन्थ इति साम्प्रतं नैव वक्तुं पार्यते।

**हंसपारमेश्वरम्**

"मा शक्तिस्तु" इत्यादि "निष्कीलितात्मकौ" इत्यन्ता हंसपारमेश्वरस्थाः श्लोका ऋजुविमर्शिन्याम् ( पृ० ११० ) अर्थरत्नावल्यां ( पृ० ११४-११५ ) चिद्वल्ल्यां (पृ० ३९)

---

१. द्रष्टव्यम्—स्वच्छन्दोद्योते, भा० १, पृ० ८

च समुपलभ्यन्ते । अत्र हादिविद्यायाः समुद्धारादेष न प्रमाणीकृतो भास्कररायेण ( नि० से० पृ० ६५ ) कादिसम्प्रदायानुयायिना । अत्रत्या चतुर्थी पङ्क्तिर्योगिनीहृदयदीपिकायामप्युद्धृता ( पृ० १५८ ) । नेत्रोद्योते ( भा० २, पृ० १२२-१२३ ) क्षेमराजेन—

सर्वार्चनं स्थण्डिले स्यान्न च तत्राधिवासनम् ।

इत्युपक्रम्य "निष्कलः सकलः" इत्यादि "बीजाभिख्यासमन्वितम्" इत्यन्तं हंसपारमेश्वरं समुद्धृतम् । स्वच्छन्दोद्योतेऽपि—

शिवशक्तिरमोघेयं कर्तरी परिकीर्तिता । ( भा० ४, पृ० ८१ )

इति श्लोकार्धोऽत्रत्यो दृश्यते । स्पन्दप्रदीपिकायां च—

पशुभावे स्थिता मन्त्राः केवला मन्त्ररूपिणः ।<br>
सौषुम्णेऽध्वन्युच्चरिताः पतित्वं प्राप्नुवन्ति ते ॥ ( पृ० ३३ )

इति तत्रत्यः श्लोकः स्मृतः ।

एतावता ग्रन्थपरिचयप्रपञ्चः प्रदर्शितः । अथ वामकेश्वरशास्त्रसारभूते नित्याषोडशिकार्णवस्याद्ये गणेशेत्यादिके सूत्रे सूचितानां विषयाणां प्रतिपादनाय प्रथमं तन्त्रशास्त्रावतारक्रमस्तद्वैशिष्ट्यं तच्छाखाप्रशाखाश्च विविच्यन्ते ।

## तन्त्रशास्त्रावतारक्रमस्तद्वैशिष्टयं च

भारतीये वाङ्मये निगमागमशब्दौ बहुलप्रचारौ । वैदिकवाङ्मयमभिलक्ष्य प्रवर्तते निगमशब्दः, तान्त्रिकं च वाङ्मयं सूचयत्यागमशब्दः । नह्ययमैकान्तिको नियमः, [1]भर्तृहरिप्रभृतिभिरागमपदस्य निगमार्थेऽपि प्रयुक्तत्वात् । अथापि परवर्तिनि काले न केवलं दशाष्टादशवस्वष्टभेदभिन्नेषु शैवरौद्रभैरवागमेषु, वैष्णवाद्यागमेष्वपि प्रायुज्यत स शब्दः । तन्त्रशब्दोऽपि तत्समानार्थक एव, वैष्णवाद्यागमेषु लक्ष्मीतन्त्र-पाद्मतन्त्र-पारमेश्वरतन्त्रप्रभृतिग्रन्थदर्शनात् । एवं सत्यपि वैष्णवेषु शैवेषु चागमशब्दः, शाक्तेषु बौद्धेषु च तन्त्रशब्दो बाहुल्येन प्रयुज्यते । एवं चागमतन्त्रशब्दाभिलप्यस्य वाङ्मयस्य निगमशब्दबोध्यवाङ्मयापेक्षया केनापि वैशिष्ट्येन भाव्यम् ।

महाभारते नारायणीयोपाख्याने—

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।<br>
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥<br>
( शान्ति० मोक्ष० ३४९।६४ )

इति श्रूयते, "स्वयंप्रमाणान्येतानि न हातव्यानि हेतुभिः" इत्यादिना च तेषां प्रामाण्यमङ्गीक्रियते; तथापि भगवता बादरायणेन ब्रह्मसूत्रतर्कपादे वेदबाह्यैर्बौद्धजैनमतैः सह मतानामेतेषामवैदिकत्वं संप्रासाधि, व्याख्यातं च तथैव शङ्करभगवत्पादैः । "विरोधे त्वन-

---

१. द्रष्टव्यम्—वाक्यपदीये, १।१३२

पेक्षं स्यादसति त्वनुमानम्", "हेतुदर्शनाच्च" (१।३।३-४) इति जैमिनिसूत्रद्वयं व्याचक्षाणा कुमारिलभट्टपादा अपि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थमतानामवैदिकत्वमाचक्षीरन्। परवर्तिनि काले यामुनाचार्यप्रभृतिभिः पाञ्चरात्रादितन्त्राणां वैदिकत्वसाधने यद्यप्यायस्तम्, "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति" (श्लो० ७) इति महिम्नस्तोत्रदिशा प्रस्थानभेदमाश्रित्य धर्मशास्त्रनिबन्धकारैर्भास्कररायप्रभृतिभिश्च[१] यद्यपि स्मृतिसतत्त्वं तन्त्राणामङ्गीक्रियते, तथापि तेषु तेषु तन्त्रेषु वेदानामधरशासनत्वं ख्याप्यमानं बादरायणकुमारिलशङ्कराद्युक्तिमेव परिपुष्णाति।[२]

भगवतो बुद्धस्य महावीरस्य च प्रादुर्भावसमयेऽत्र नानादृष्टयः प्रसृता आसन्, परवर्तिनि काले वा प्रादुर्भूताः। ताश्च वेदानुवर्तिन्यः, वेदविरुद्धाः, स्वतन्त्राश्चेति विभागत्रयेषु संग्रहीतुं सुशकाः। वेदविरुद्धा दृष्टयः सौगतानां निर्ग्रन्थानां च, स्वतन्त्राश्च सांख्ययोगपाञ्चरात्रादिविदाम्। भगवद्गीतासून्मिषितया भारतीयदर्शनानां समन्वयात्मिकया दृष्ट्या महाभारते पुराणेषु स्मृतिषु तन्त्रेषु निबन्धग्रन्थेषु च प्रस्थानभेदाधिकारिभेदमुखेन विरोधः प्रक्षीणतामानायि दृष्टीनामेतासाम्। भगवता शङ्कराचार्येण माहेश्वरा भागवताश्च वेदबाह्यत्वेन प्रत्याख्यायन्त, किन्तु शैवाः पाञ्चरात्रिकाश्च साम्प्रतं वेदानां प्रामाण्यमुखेनैव प्रवर्तन्ते। अत्र हेतुरयमेव यताः स्वतन्त्रा दृष्टयो गच्छता कालेन स्वस्वातन्त्र्यं परिहाय शनैः शनैर्वेदकुक्षिनिक्षिप्ता अभूवन्।

तान्त्रिकीषु वैदिकीषु च दृष्टिषु वर्तते बहुविधं वैभिन्न्यम्। वाक्चतुष्टयात्मकस्य शब्दब्रह्मण उपासनं षडध्वमुखेन जगत्प्रपञ्चसर्जनप्रविलापनं च तान्त्रिकदृष्टीनामेकं वैशिष्ट्यम्। शास्त्रेषु स्त्रीशूद्रादीनामधिकारप्रयुक्तं वैभिन्न्यमपि तत्र जागर्तितराम्। यद्यपि व्याकरणागमेऽपि शब्दब्रह्मण उपासनं श्रूयते, वर्तते च वाक्चतुष्टयप्रतिपादिका श्रुतिः—"चत्वारि वाक्परिमिता पदानि" (ऋ० १।१६४।४५) इत्यादिका, सूच्यते च —"अकारः सर्ववर्णाग्र्यः.....अनयोः सामरस्यं तत्परस्मिन्नहमि स्फुटम्" इत्यादिसंकेतपद्धतिविवृतोऽर्थः—"अ इति ब्रह्म तत्रागतमहमिति" (ऐ० आ० २।३।८), "अकारो वै सर्वा वाक्" (ऐ० आ० २।३।६), "छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसः" (ऐ० आ० ३।२।३), "वाचीमा विश्वा भुवनान्यर्पिता" (तै० ब्रा० २।८।८।४), "वागक्षरं प्रथमजा ऋतस्य" (तै० ब्रा० २।८।८।५), "अनाहतशीर्ष्णी वाग् जुषाणा सोमस्य तृप्यतु" (तै० सं० ३।२।५।१) इत्यादि-

---

१. वरिवस्यारहस्यप्रकाशे, पृ० ७

२. द्रष्टव्यानि—"उत्तमाः पञ्चरात्रस्था मध्यमास्तु त्रयीमयाः" (२२।३६) इति लक्ष्मीतन्त्रे, "सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्" (२।७) इति कुलार्णवे, "वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्" (पृ० ९२) इत्यादीनि च परात्रिंशिकाव्याख्यादिषूद्धृतानि वचनानि।

ष्वारण्यकब्राह्मणसंहितावचनेषु, तथापि षडध्वमुखेन शब्दब्रह्मणः प्रपञ्चो यथा दृश्यते तन्त्रेषु न तथा वेदेषु। वेदाध्ययनादिषु स्त्रीशूद्रादीनामधिकारो नैवाङ्गीक्रियते। तन्त्रेषु तु वर्तते सर्वेषामधिकारः[1]।

अत्रैवमैतिहासिका विवेचयन्ति—भिन्नप्रकृतिकमेतच्छास्त्रद्वयं वैदिकं तान्त्रिकं चेति। सिन्धुसभ्यताचिह्नानां शिवलिङ्गवृषभयोगिप्रभृतीनां वेदेष्वदर्शनाद् वैदिकसभ्यतातो भिन्ना तत्र काचन सभ्यताऽवर्तत। ततः प्रावर्तत तान्त्रिकी धारा। वैदिकसभ्यतया संजातेऽस्याः संपर्के प्रकृतिपुरुषयोरिव धर्माणां संक्रमस्तत्र समजायत। अस्यामेव प्रक्रियायामथर्ववेदे तान्त्रिकं कर्मकाण्डम्, यजुर्वेदे च तान्त्रिकः शिवो रुद्ररूपेण प्रतिष्ठामलभत। अथर्ववेदस्य प्रामाण्यविषये न्यायमञ्जरीकारो जयन्तभट्टस्तर्कानाश्रयते। वेदेषु त्रयीशब्दप्रयोगोऽप्यर्थगर्भः। एवं च वैदिकी तद्भिन्ना चेति संस्कृतिद्वयमत्र प्रचलदासीत्। एकत्र विशिष्टानामेवापरत्र साधारणानामपि जनानां प्रवेशोऽधिकारश्च स्वीक्रियते स्मेति।

यद्यपि संभावनामात्रमेतत्, तथापि बादरायणकुमारिलशङ्कराचार्यवचनैस्तन्त्रशास्त्रेषु तत्र तत्र परिदृश्यमानाभिर्वेदविषयिणीभिरुक्तिभिश्च स्पष्टमेतावत्परिज्ञायते यद् यद्यपि बौद्धार्हतवन्नैताभिर्दृष्टिभिः सर्वथैव वेदप्रामाण्यं प्रत्याख्यातमथापि कियताऽप्यंशेन लोकसंग्रहाय बाऽन्यस्मै वा कस्मैचित्प्रयोजनाय तत्परित्यक्तमेव। वेदविरुद्धा अप्येता दृष्टयो भारतीये समाजे संमानिता अभूवन्। दक्षिणे भारते आळवारादीनां परम्परासु, उत्तरे च भारते सिद्ध-नाथ-सन्तप्रभृतीनां वचनेषु स ज्ञानप्रवाहो निर्बाधं प्रवहति साम्प्रतमपि।

वेदवन्मन्यते दृष्टीनामासामप्यपौरुषेयत्वमेव। ब्रह्मा पूर्वकल्पस्थितान् वेदान् स्मरति, तन्त्राणि च तानि तानि शिवनारायणबुद्धप्रभृतिभिर्ऋषिमुनिपरम्परासूपदिश्यन्ते। ऐतिहासिकास्तु नैतदङ्गीकुर्वते। कालक्रमेण तन्त्रशास्त्रं नानाशाखाप्रशाखासु प्रावर्ततेति वर्तते तेषां सिद्धान्तः।

## तन्त्राणां शाखाप्रशाखाः

> सिद्धान्ते भूततन्त्रे च वामे स्रोतसि दक्षिणे॥
> भैरवे च तथान्येषु पशुपाशुपतादिषु।
> विष्णुतन्त्रे च बौद्धे च तथा दिक्पालदर्शने॥ (२।२२-२३)

इत्यजितागमे क्रियापादे,

> गारुडं भूततन्त्रं च भैरवं वामतन्त्रकम्॥
> कापालं पाञ्चरात्रं च लाकुली कुलशास्त्रकम्।

---

१. एतच्च—"अस्यां च पूजायां सर्वजातीनामधिकारः" (पृ० २२३) इत्यादिना सन्दर्भेण भास्कररायेण सौभाग्यभास्करे प्रतिपादितम्।

तन्त्रं पाशुपतं.................................. ॥
.......................बौद्धमार्हतं मतमेव च । ( १।११४-११६ )

इत्यजितागमभूमिकाधृतकामिकागमे,

शैवं[1] चतुर्विधं ज्ञेयं शैवं पाशुपतं तथा ।
सोमं लाकुलमित्येते चतुर्भेदाः प्रकीर्तिताः ॥ ( २६।५८ )

इत्यजितागमभूमिकाधृतपूर्वकारणागमे,

गारुडे भूततन्त्रे च वाग्विधानेषु सर्वतः ॥
.................................................... ।
यामले[2] चैकवीरे च नवके त्रिकभेदतः ॥
समभेदे च देव्याख्ये दुर्गाख्ये विन्ध्यवासिनि ।
चण्डिकाद्ये चतुष्के च स्वयम्भूत्थे महेश्वरे ॥
प्राक्प्रतिष्ठितरूपे वा ऋषिमानुषयोजिते ।
आयुधे विविधे चैव विद्यापीठेषु सर्वतः ॥
सर्वपातालतन्त्रेषु नागेषु द्रामिडेषु च । ( १३।३८-४२ )

इति नेत्रतन्त्रे,

शैववैष्णवदौर्गार्कगाणपत्येन्दुसंभवैः[3] ।
मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं प्रकाशते ॥ ( २।२९ )

इति कुलार्णवे च तन्त्राणां विविधा भेदा दरीदृश्यन्ते । सर्वानन्यान्[4] भेदोपभेदान् परिहायात्र केवलं शैवशाक्ततन्त्राणि चर्चयिष्यन्ते । एतेष्वपि—

---

१. चतुर्विधाः शैवा अस्माभिः "शिवपुराणीयं दर्शनम्" इत्याख्ये निबन्धे व्याख्याताः । द्रष्टव्या—पुराणपत्रिका, व० ७, अ० १, पृ० १६२-१६५ ।

२. "यामल इति ब्रह्मयामलरुद्रयामलादौ, एकवीर इति परात्रींशिकामतत्रिंशिकादौ, नवक इति नवात्मचक्रादौ, त्रिक इति षडर्धनयेषु, समभेदे चेति समविषमाख्येषु मतनयेषु, देव्याख्ये इति महाघोराजयादिभेदेषु, विन्ध्यवासिनीत्येतदाख्यदेवताप्रतिपादके, चण्डिकाद्ये चतुष्क इति दक्षिणवामस्रोतसि तत्तद्देवताचतुष्टयाराधनप्रतिपादिनि" इति नेत्रतन्त्रोद्योते ।

३. इन्दुसंभवं जैनदर्शनम् ( सौ० भा०, पृ० १९४ ) ।

४. प्रसङ्गेऽस्मिन् "तन्त्राज् स्टडीज ऑन देयर रिलीजन एण्ड लिटरेचर" इत्याख्यस्य ग्रन्थस्य श्रीचिन्ताहरणचक्रवर्तिरचितस्य ५०–५८ पृष्ठानि दर्शनार्हाणि ।

वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम् ।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम् ॥ ( पृ० ९२ )

इति परात्रिंशिकाव्याख्योद्धृतवचनतः,

[1]वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित् ।
संस्कार्यो भैरवे सोऽपि कुले[2] कौले त्रिकेऽपि सः ॥ ( पृ० ९२ )

इति तत्रैवोद्धृतनिशाचारवचनतः,

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं [3]शैवाद्दक्षिणमुत्तमम् ॥
दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं नहि ॥ ( २।७-८ )

इति कुलार्णववचनतश्चाधरोर्ध्वीभावः प्रतिपाद्यते ।

तदेवं तरतमभावेन स्थितानामेषां तन्त्राणां [4]त्रिविधो विभागो दृश्यते । तत्र प्रथमः स्रोतोविभागः, अपरः पीठविभागः, तृतीयश्चाम्नायविभाग इति ।

**त्रिस्रोतोविभागः**

तेषु स्रोतोभेदः प्रथमतस्त्रिविधो दृश्यते,

वामदक्षिणसिद्धान्तस्त्रिविधं शुद्धशैवकम् ।
मूलावतारतन्त्रादि शास्त्रं यद्वामशैवकम् ॥

---

१. वामशब्दार्थस्तन्त्रालोके (१५।२७९) तद्विवेके च व्याख्यातः । वामपदस्यात्र पृथगुपादानात् कुलकौलमते इतो भिन्ने । "वेदशैववामकौलत्रिकादेः" ( पृ० २२ ) इत्यस्मिन्नृजुविमर्शिनीवचनेऽपि वामकौलमतयोः पार्थक्यमेव ।

२. अत्र कुल-कौलशब्दयोः पृथगुल्लेखेन मतद्वयमेतदिति ज्ञायते । अत्र—
होत्री दीक्षा तु सिद्धान्ते तन्त्रे योजनिका स्मृता ।
त्रिके समावेशवती कुले स्तोभात्मिका मता ॥
सामरस्यमयी कौले दीक्षा पञ्चविधोदिता ।
इति तन्त्रालोकविवेक( भा० ८, पृ० १८२ )धृतवचनमेतत् कुलकौलमतयोर्भिन्नत्वं पोषयति ।

३. शैवशब्देनात्र चतुर्धा विभक्तेषु शैवदर्शनेषु शैवसिद्धान्तभिन्नस्य विभागत्रयस्य परामर्शः ।

४. डा० प्रबोधचन्द्रबागचीमहोदयेन 'स्टडीज इन द तन्त्राज" ( पृ० ३ ) इत्यत्र विभागत्रयमेतत् प्रतिपादितम् ।

स्वच्छन्दादीनि तन्त्राणि दक्षिणं शैवमुच्यते ।
कामिकादीनि तन्त्राणि सिद्धान्ता इति कीर्तिताः ॥ ( २६।५९-६० )

इत्यजितागमभूमिकाधृतपूर्वकारणागमवचनात्, "वामदक्षिणसिद्धान्तभेदत्रयविभेदतः" ( १६।२ ) इति नेत्रतन्त्रापराभिधमृत्युञ्जयभट्टारकवचनाच्च । शिव एव सदाशिव-भैरव-[1]तुम्बुरुरूपधारी सिद्धान्त-वाम-दक्षिणस्रोतसामुपदेष्टेति नेत्रतन्त्रत[2] एव ज्ञायते । सिद्धान्तशिखामणौ तु शैवागमश्चतुर्धा व्याख्यातः—

शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।
सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम् ॥ ( ५।११ )

एतच्च वचनं पूर्वोक्तं कारणागमवचनमुपोद्बलयद् मिश्राख्यं चतुर्थं विभागं प्रतिपादयति । डा०[3]बागचीमहोदयैर्भैरवस्रोतश्चतुर्थत्वेन परिगणितम् । अजितागमभूमिकायां च कापाल-कालामुख-अघोरादयो वामभेदे, स्वच्छन्दभैरवादिद्विनवतिशैवागमाश्रितं त्रिकमिति संज्ञितं कश्मीरशैवदर्शनं च दक्षिणभेदेऽन्तर्भावितम् । उभयत्र मूलं मृग्यम् । "भैरवागमेषु दक्षिण-स्रोतःसमुत्थेषु स्वच्छन्दचण्डत्रिशिरोभैरवादिषु" ( भा० १, पृ० २२५ ) इति नेत्रतन्त्रो-द्योते क्षेमराजो भैरवागमानां दक्षिणस्रोतोऽनुवर्तित्वमेव प्रदर्शयति । कापाल-कालामुख-अघोरादीनि तन्त्राणि त्रिकशास्त्रं च भिन्नान्येव । नहि तानि शुद्धशैवविभागे क्वापि परिगणितानि । त्रिकदर्शनं च तदनुयायिभिः सर्वत्र पृथगेव पर्यगण्यत । साम्प्रतं तन्त्राणां [4]वामदक्षिणमार्गभेदेन द्विविधो विभागः प्रचलितो दृश्यते । तदनुरुध्य यथाकथञ्चिदेत-त्समाधातुं शक्येत ।

**पञ्चस्रोतोविभागः**

नेत्रतन्त्रे "पञ्चस्रोतोविनिर्भिन्नम्" ( १९।३३ ) इत्यत्र पञ्च स्रोतांसि सूचि-तानि, परिगणितानि च तानि मृगेन्द्रागमे चर्यापादे—

---

१. तुम्बुरोश्चतुर्मुखेभ्यो विनिःसृतानि शिरश्छेद-विनाशिख-संमोह-नयोत्तराणि तन्त्राणीति शिलालेखदर्शनात्, योगवासिष्ठ( निर्वाण० १।१८।२३–२६ )प्रामाण्याच्च तुम्बुरुभैरवौ शिवस्यावताराविति डा० प्रबोधचन्द्रबागचीमहोदयाः प्रतिपादयन्ति ( स्टडीज इन द तन्त्राज, पृ० २, २२ )। तुम्बुरोः शिवावतारत्वं नेत्रतन्त्रप्रामाण्येनापि ( ९।११ ) समर्थ्यते, किन्त्वत्र वाममार्गोपदेष्टृत्वं तुम्बुरोरुच्यते। कम्बुजशिलालेखे तुम्बुरोरेव चतुर्मुखेभ्यश्चतुर्णां शास्त्राणामवतार इति विशेषः ।

२. "शिवः सदाशिवश्चैव भैरवस्तुम्बुरुस्तथा" ( ९।११ ) इति नेत्रतन्त्रे, "सिद्धान्तवाम-दक्षिणादिशास्त्रोक्तं....." इति तत्रैवोद्योते ।

३. स्टडीज इन द तन्त्राज, पृ० ३

४. अत्र "वामावर्तेन पूजयेत्" (१।१७६) इत्यत्रत्यो नित्याषोडशिकार्णवसेतुबन्धः (पृ०८९-९०), ललितासहस्रनामस्थितस्य 'सव्यापसव्यमार्गस्था' ( श्लो० २२०, पृ० १८१-१८४ ) इति नाम्नः सौभाग्यभास्करव्याख्यानं चेति भास्कररायस्य ग्रन्थद्वयमवलोकनीयम् ।

स्रोतांसि कामिकाद्यूर्ध्वमसिताङ्गादि दक्षिणम् ।
संमोहाद्युत्तरं प्राच्यं त्रोतलादि सुविस्तरम् ॥
आप्यं चण्डासिधारादि चण्डनाथपरिग्रहम् । ( १।३५-३६ )

आप्यं पश्चिममित्यर्थः ।

तन्त्रालोकविवेकधृतश्रीकण्ठयामपि[1] दशाष्टादशभेदभिन्नं शिवरुद्राभिधं ज्ञानमूर्ध्व-मुखोद्गतमेवाङ्गीकृतम् । चतुर्विंशतिभेदो[2] दक्षिणो मार्गः, चतुष्षष्टिरद्वयप्रधाना भैरव-भेदाश्च दक्षिणवक्त्रनिःसृताः, तत्पुरुषवक्त्रतोऽष्टाविंशतिभेदं गारुडं तन्त्रम्, पश्चिमतो भूततन्त्राणि च निःसृतानीति तत्रोक्तम् । वामदेवमुखात्तु यज्जातं तत्तत्र नोद्धृतम् ।

शतरत्नसंग्रहोल्लेखनीधृतकामिकागमे—

सिद्धान्तं गारुडं वामं भूततन्त्रं च भैरवम् ।
ऊर्ध्वपूर्वकुबेराप्ययाम्यवक्त्राद् यथाक्रमम् ॥

इति दृश्यते । व्याख्यातं च तत्र—"ऊर्ध्वपूर्वकुबेरवरुणयाम्यसंबन्धाद् मुक्तिप्रदसिद्धान्त-सर्वविषहरणगारुड-सर्ववशीकरणवाम-भूतग्रहनिवारकभूततन्त्र-शत्रुक्षयकरभैरवसंज्ञकम्" ( पृ० ९ ) इति ।

अजितागमेऽन्यत्र[3] च दशाष्टादशभेदभिन्नाः शैवा रौद्राश्चागमाः शिवस्य पञ्च-वक्त्रेभ्यो विनिर्गता इत्युक्तम् । तदयमजितागमस्थः क्रमः—

ऊर्ध्व(ईशान)मुखोद्भवाः—कामिकं योगजं चिन्त्यं कारणम् अजितं दीप्तं सूक्ष्मं सहस्रम् अंशुमत् सुप्रभेदं च ।

सद्योजातमुखोद्भवाः—विजयं पारमेशं निश्वासं प्रोद्गीतं मुखबिम्बं च ।

वामदेवमुखोद्भवाः—सिद्धं सन्तानं शर्वोक्तं चन्द्रज्ञानं विमलं च ।

अघोरमुखोद्भवाः—स्वायम्भुवं वीरं रौरवं मकुटं किरणं च ।

तत्पुरुषमुखोद्भवाः—ललितम् आग्नेयं वातुलं च ।

अन्यत्र[4] तु—

ईशानमुखोद्भवाः – प्रोद्गीतं ललितं सिद्धं सन्तानं शर्वोक्तं पारमेश्वरं किरणं वातुलं च ।

---

१. द्रष्टव्यानि ४०–४४ पृष्ठानि प्रथमभागस्य ।

२. चतुर्विंशतिभेद एष दक्षिणो मार्गो नान्यत्र क्वापि विवृतो दृश्यते ।

३. मालिनीविजयवार्त्तिके ( पृ० ३६–३८ ) तदनुवर्तिनि तन्त्रालोकविवेके च ( भा० १, पृ० ३६–४१ ) शिवस्य पञ्चवक्त्रेभ्यो दशानां शैवागमानामष्टादशानां रौद्रागमानां चतुष्षष्टिसंख्याकानां च भैरवागमानामाविर्भावप्रकारो निरूपितः । एष च विषयः परमश्रद्धा-स्पदैः कविराजमहोदयैः "तान्त्रिक वाङ्मय में शाक्तदृष्टि" इत्याख्ये स्वकीये ग्रन्थे (पृ० ४६-४९ ) स्पष्टं व्याख्यातस्तत एवावलोकनीयः ।

४. रौरवागमप्रथमभागभूमिकाया एकादशं पृष्ठम्, हिन्दीविश्वकोशस्य पञ्चमे खण्डे 'तन्त्रसाहित्य' इति शब्दस्य विवरणं ( पृ० २८० ) च द्रष्टव्यम् ।

सद्योजातमुखोद्भवाः—कामिकं योगजं चिन्त्यं कारणम् अजितं च ।
वामदेवमुखोद्भवाः—दीप्तं सूक्ष्मं सहस्रम् अंशुमत् सुप्रभेदं च ।
अघोरमुखोद्भवाः—विजयं निश्वासं स्वायम्भुवम् अनलं वीरं च ।
तत्पुरुषमुखोद्भवाः -रौरवं मकुटं विमलं चन्द्रज्ञानं बिम्बं च ।

इति क्रमो दृश्यते । आगमानामेतेषां वक्तारोऽनुवक्तारः श्रोतारश्च, श्लोकसंख्या, २०७ संख्याका उपागमाश्चाजितागमेऽन्यत्र चोपवर्णिताः । पाठभेदादिप्रदर्शनमुखेन त इमे पाण्डिचेरीतो मुद्रिते रौरवागमप्रथमभागे चर्चितास्तत एवावलोकनीयाः ।

**अनुस्रोतांसि**

मृगेन्द्रागमे चर्यापादेऽनुस्रोतास्यष्टौ कथितान्येवम्—शैवम्, मान्त्रेश्वरम्, गाणम्, दिव्यम्, आर्षम्, गौह्यकम्, योगिनीकौलम्, सिद्धकौलं च । तत्र—

योगिन्यो लेभिरे ज्ञानं सद्यो योगावभासकम् ।
येन तद्योगिनीकौलं नोत्तीर्णं ताभ्य एव तत् ॥ ( १।४० )

इति योगिनीकौललक्षणम् । अन्येषां लक्षणानि तत एवावसेयानि । इति स्रोतोविभागप्रपञ्चः ।

**पीठविभागः**

अधुना पीठविभागः प्रदर्श्यते । स च चतुर्विधः, विद्यापीठ-मन्त्रपीठ-मुद्रापीठ-मण्डलपीठभेदात् । डा० बागचीमहोदयेन[1] ब्रह्मयामलस्य स्रोतोनिर्णयाख्यस्य ३९ तमपटलस्याधारेणैष विभागः परिगणितः । विवरणं तु तत्र न दृश्यते । ब्रह्मयामलस्य मातृका नास्त्यस्माकं सविधे, अतोऽत्र·विषये न किमपि विशेषेण वक्तुं पारयामः । अस्मिन्नेव[2] ग्रन्थेऽन्यत्रोद्धृतेभ्यो ब्रह्मयामलवचनेभ्य एतावदेव ज्ञायते यद्भैरवाष्टकं यामलाष्टकं च विद्यापीठाद्विनिर्गतम्, योगिनीजाल-योगिनीहृदय-मन्त्रमालिनी-अघोरेशी-अघोरेश्वरी-क्रीडाघोरेश्वरी-लाकिनीकल्प-मारीचि-महामारी-उग्रविद्यागणतन्त्राणि विद्यापीठसंबद्धानि, वीरभैरव-चण्डभैरव-गुडकाभैरव-महाभैरव-महावीरेशा मुद्रापीठसंबद्धा इति । जयद्रथयामलं विद्यापीठसंबद्धमेवेति तत्पुष्पिकावाक्येभ्यो ज्ञायते । स्वच्छन्दोद्योतधृते[3] सर्ववीरे तु भैरवाष्टकं मन्त्रपीठात्मकमित्युक्तम् । स्वच्छन्दं[4] चतुष्पीठं महातन्त्रमिमि स्वच्छन्दतन्त्रमाह । एनं चार्थमुपोद्बलयति तत्रैव स्वच्छन्दोद्योते समुद्धृतमेतत्सर्ववीरवचनम्—

---

१. स्टडीज इन द तन्त्राज, पृ. ३

२. तत्रैव, पृ. १०४–१०५

३. स्वच्छन्दभैरवश्चण्डः क्रोध उन्मत्तभैरवः । ग्रन्थान्तराणि चत्वारि मन्त्रपीठं वरानने ॥ ( भा० १, पृ० १० )

४. चतुष्पीठं महातन्त्रं चतुष्टयफलोदयम् ॥ ( १।५ )

मुद्रामण्डलपीठं तु मन्त्रपीठं तथैव च ।
विद्यापीठं तथैवेह चतुष्पीठा तु संहिता ॥ इति ।

अर्थरत्नावलीधृतसंकेतपद्धतिग्रन्थे[1] ओड्याण-पूर्णगिरि-जालन्धर-कामरूपपीठानि क्रमश आज्ञापीठ-मन्त्रपीठ-विद्यापीठ-मुद्रापीठत्वेन व्याख्यातानि । किमेतेन नैतदुन्नेतुं शक्येत यदेतेभ्यश्चतुर्भ्यः पीठेभ्य आविर्भूतानि तानि तानि तन्त्राणि विद्यापीठादिविभागेषु विभक्तानीति । तर्हि पूर्वोद्धृतस्वच्छन्द-सर्ववीरवचनयोश्चतुष्पीठात्मकतन्त्रसंहिताप्रतिपादकयोः का गतिः ? महार्थमञ्जरीपरिमलधृतचरणसूत्रे पीठचतुष्टयस्यास्य व्याख्यानमेवं दृश्यते—

विद्येति मातृकापीठं तत् पार्थिवमुदाहृतम् ।
मण्डलं कुण्डलीपीठं तदाप्यं परिकीर्तितम् ॥
मन्त्रसंज्ञं क्रियापीठं तैजसं तत् प्रकीर्तितम् ।
ज्ञानपीठं तु मुद्राख्यं तद्वायव्यं सुरेश्वरि ॥
परेच्छामुखतो व्योम पीठत्वेनेह नादृतम् । इत्यादि ।

अत्र हि पीठानां पार्थिवत्वादिकं प्रतिपाद्यते । विषयान्तरोपादानादेतदुपस्थितानां प्रश्नानां समाधानाय नालम् । तन्त्रालोके स्थलद्वयमेतत्संबद्धमवलोक्यते । तत्रैकोनत्रिंशाह्निके जयरथः—"इह विद्यामन्त्रमुद्रामण्डलात्मतया चतुष्पीठं तावच्छास्त्रम् । तत्र मन्त्रमुद्रात्मनः पीठद्वयस्य संप्रदाय उक्तः । इदानीमत्रैवावशिष्टस्य विद्यामण्डलात्मनोऽप्यस्य संप्रदायं निरूपयति" ( पृ० ११४ ) इत्यवतरणिकामाह । पूर्वोद्धृतस्वच्छन्दसर्ववीरवचनानुगुणमेतद्व्याख्यानम् । तेनैवं प्रतीयते यद्यथा सिद्धान्ताद्यागमा ज्ञानक्रियाचर्यायोगप्रतिपादकास्तथैव दक्षवामकौलाद्यागमा विद्यामन्त्रमुद्रामण्डलाभिधायका इति । अग्रे च सप्तत्रिंशाह्निके शास्त्रस्य पञ्चस्रोतोमयत्वमभिधाय पीठचतुष्टयात्मकत्वं न्यरूप्यत । उपसंहृतं चैवम्—

विद्यापीठप्रधानं च सिद्धयोगीश्वरीमतम् ॥
तस्यापि परमं सारं मालिनीविजयोत्तरम् । ( ३७।२४-२५ )

अत्रागमशास्त्रस्य स्रोतोविभागवत् पीठविभागोऽप्यङ्गीक्रियते । अत्रैवं समाधातुं शक्यते यत्कानिचन तन्त्राणि विद्यापीठादिषु कस्यचनैकस्यैव प्रतिपादकानि, अन्येषु च पीठचतुष्टयमपि व्याख्यायत इति । विषयोऽयमन्येषां ब्रह्मयामलादीनां प्राचीनानां तन्त्राणां संजाते प्रकाशने विशदीभवेत् ।

**आम्नायविभागः**

तृतीय आम्नायविभागो विभागद्वयापेक्षया प्रसिद्धतर इति डॉ० [2]बागचीमहोदयाः ।

---

१. अत्रत्यानि २२०-२२२ पृष्ठानि द्रष्टव्यानि ।

२. द्रष्टव्यम्—स्टडीज इन द तन्त्राज, पृ० ३ ।

इमे चाम्नायाः[१] शिवस्य तत्पुरुष-सद्योजात-अघोर-वामदेव-ईशानाख्येभ्यः पञ्च वक्त्रेभ्यो निःसृताः क्रमशः पूर्व-पश्चिम-दक्षिण-उत्तर-ऊर्ध्वाम्नायपदभाजो विद्यन्ते[२]। स एष दिग्विभागक्रमस्तन्त्रालोकेऽपि ( १५।२०४-२०५ ) स्वीकृतः। स्रोतोविभाग आम्नायविभागश्च शिवस्य पञ्चवक्त्रेभ्यो विनिर्गत इति नामभेदं विहाय न कोऽपि भेदोऽत्र दृश्यते, अथापि स्रोतोविभागः शैवागमसंमतः, आम्नायविभागश्च शाक्तागमसंमत इति वक्तुं शक्यते, स्रोतोविभागे शैवागमानामाम्नायविभागे च [३]शाक्तागमानामूर्ध्ववक्त्रोद्भवत्वस्य स्वीकारात्। कुलार्णवेऽत्र कश्चन विशेषः परिदृश्यते—

मन्त्रयोगं विदुः पूर्वं भक्तियोगं च दक्षिणम्।
पश्चिमं कर्मयोगं च ज्ञानयोगं तथोत्तरम्॥
पूर्वाम्नायस्य संकेताश्चतुर्विंशतिरीरिताः।
दक्षिणाम्नायसंकेताः पञ्चविंशतिरीरिताः॥
पश्चिमाम्नायसंकेता द्वात्रिंशत् समुदाहृताः।
विदुः षट्त्रिंशदाम्नाये संकेताः श्रीमदुत्तरे॥
ऊर्ध्वाम्नायस्य चैतानि न सन्ति कुलनायिके। ( ३।४२-४५ )

नित्याषोडशिकार्णवे तु "चतुराज्ञाकोशभूताम्" ( १।१२ ) इत्यत्र चत्वार एवाम्नाया अङ्गीकृताः। व्याख्यातं च तथैव शिवानन्दविद्यानन्दाभ्याम्। अमृतानन्दादिग्रन्थेष्वपि तथैव दृश्यते। भास्कररायेण तु "ऊर्ध्वाम्नायस्यापि चतुःपदमुपलक्षकम्" ( से० पृ० २० ) इति वदता पञ्चाम्नाया अत्राङ्गीकृताः। वरिवस्यारहस्यप्रकाशे तु तेनापि—"अन्वयाः प्राग्दक्षिणपश्चिमान्वया उत्तरान्वयश्च। एत एव समयपदेनाम्नायपदेन च कथ्यन्ते" ( पृ० २३ ) इत्येवं चत्वार एवाम्नाया इति प्रतिपादितम्। अत्राम्नायविभागः समयपदेनान्वयपदेनापि चाख्यातः। दृश्यते चैतयोः पदयोः प्रयोगोऽमृतानन्दादिग्रन्थेष्वपि।

सौन्दर्यलहर्यां "रसाम्नायमहसा" ( १।१० ) इति पदेन षडाम्नायाः सूच्यन्ते। "रसाम्नायाः :षडाम्नायाः :पूर्वदक्षिणपश्चिमोत्तरोर्ध्वानुत्तराः" (पृ० १७) इति व्याख्यातं च कैवल्याश्रमेण। नेत्रतन्त्रोद्योतेऽपि—

---

१. कुलार्णवेऽपि—

मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः।
पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा॥
ऊर्ध्वाम्नायश्च पञ्चैते मोक्षमार्गाः प्रकीर्तिताः। ( ३।७)

२. पञ्चभिर्मुखैः पञ्चाम्नायान्....प्रणिनाय" (१।२) इति परशुरामकल्पसूत्रव्याख्याने तु—"पञ्चभिर्मुखैः सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशानसंज्ञकैः पञ्चाम्नायान् पूर्वाम्नाय-दक्षिणाम्नाय-पश्चिमाम्नाय-उत्तराम्नाय-ऊर्ध्वाम्नायनामकान्" (पृ० २१) इति क्रमो दृश्यते।

३. कुलार्णवतन्त्रस्य तृतीय उल्लासोऽवलोकनीयः।

गारुडे मातृतन्त्रे च वामे स्रोतसि दक्षिणे।
ज्येष्ठे चण्डासिधारे च प्रत्यक्षफलदा क्रिया ॥ ( १६।७६ )

इत्यस्य व्याख्याने षट्स्रोतांसि व्याख्यातानि। तद्यथा—"गारुडे पूर्वस्मिन्, मातृतन्त्रादौ पश्चिमे, जयादिनये वामे, भैरवशास्त्रे च दक्षिणे, चण्डासिधारादावूर्ध्वे, ज्येष्ठे च मतकुलादौ रहस्ये स्रोतसि" इति। तन्त्रालोकोऽप्येनमर्थमुपोद्बलयति। तद्यथा—

ईश ऊर्ध्वं प्रकाशत्वात् पूर्वं वक्त्रं प्रसारि यत्।
पुरुषो दक्षिणा चण्डो वामा वामस्तु सौम्यकः ॥
पराङ्मुखतया सद्यः पश्चिमा परिभाष्यते।
पातालवक्त्रमधरमप्रकाशतया स्थितेः ॥ ( १५।२०४-२०६ )

व्याख्यातं च विवेककारेण—"यद् यस्मादीशः प्रकाशैकरूपत्वादूर्ध्वा दिगुच्यते, तत्पुरुषः प्रकाशौन्मुख्येन प्रसरणात् पूर्वा, अघोरः प्रसृतप्रकाशोद्रेकानुकूल्याद् दक्षिणा, वामदेवस्तत्प्रातिकूल्याद् मेयेन्दुसंस्पर्शप्रधाना वामा उत्तरा, सद्योजातः प्रकाशवैमुख्यात् पश्चिमा, पिचुवक्त्रं प्रकाशसंस्पर्शायोग्यत्वादधरा चेति" ( पृ० १०२ ) इति। एवं च षडाम्नायविभागोऽपि प्राचीन एवाभिमन्तव्यः।

## आम्नायविभागे त्रिपुरोपास्तेः स्थानम्

तदेवमत्र शैवानां शाक्तानां च तन्त्राणां त्रिस्रोतोविभागः, पञ्चस्रोतोविभागः, अनुस्रोतोविभागः, पीठविभागः, चतुःपञ्चषडाम्नायविभागश्च व्याख्यातः। तत्र स्रोतोविभागः प्राधान्येन शैवानाम्, पीठविभागो भैरवागमानां कौलागमानां च; आम्नायविभागश्च शाक्तागमानामभिमत इति प्रतीयते।

त्रिपुरा विद्या चतुराम्नायसाधारण्यपि दक्षिणपक्षपातिनीति विद्यानन्दः ( अर्थ० पृ० ४१ ) ऊचे। इममर्थममृतानन्दोऽपि (दी० पृ० ११०) संमनुते। दक्षिणपक्षपातिनीतिपदेन भैरवागमानुवर्तित्वमस्याः ख्याप्यते। त्रिपुरसुन्दरीदण्डके—"सुस्फुटं वाममार्गस्य सर्वोत्तमत्वं समुपदिश्यते" इत्युक्तवता दीपकनाथेन त्रिपुराविद्याया वाममार्गसेव्यत्वमप्युपदिष्टम्। एवं च दक्षवामाभ्यामुभाभ्यामपि मार्गाभ्यां रुचिभेदेन देवो महात्रिपुरसुन्दरी समुपास्यते साधकैः। तत्र वामो मार्गः कौलानाम्, दक्षश्च तदितरेषामिति वक्तुं शक्यते।

## लक्ष्मीधरप्रतिपादितं त्रिपुरोपास्तिमतत्रयम्

सौन्दर्यलहरीव्याख्यात्रा लक्ष्मीधरेण तु त्रिपुरोपासनायां मतत्रयमुपपादितम्—कौलमतम्, मिश्रमतम्, समयिमतं चेति[१]। तत्र कौलानां चतुष्षष्ट्यागमा [२]नित्याषोडशिकार्णवे प्रदर्शिताः। मिश्रमतानुयायिनामष्टौ आगमाश्चन्द्रकलाज्योत्स्नावतीप्रभृतयः। समयिनां तु शुभागमपञ्चकम्। त्रिविधानामेषामागमानां परिचयस्तेन "चतुष्षष्ट्या तन्त्रैः" (१।३१) इति श्लोकस्य व्याख्याने विस्तरेण प्रत्यपादीत्युक्तप्रायम्। वसिष्ठसनक-

१. द्रष्टव्यम्—पृ० १३७-१४१।

२. प्रथमे पटले १४—२१ श्लोकेषु। एते च पूर्वमत्र निर्दर्शिताः।

शुकसनन्दनसनत्कुमारैः पञ्चभिर्मुनिभिः शुभागमपञ्चकनाम्ना प्रथितासु पञ्चसु संहितासु प्रदर्शितो मार्गः समयाचारनाम्ना व्यवह्रियते। समयाचारो नाम आन्तरपूजारतिः। समयिनां मते समयस्य सादाख्यतत्त्वस्य सपर्या सहस्रदलकमल एव क्रियते, न तु बाह्ये पीठादौ। कुलाचारो नाम बाह्यपूजारतिरिति लक्ष्मीधर आह ( पृ० ६४, १२९)। अपि च, श्रीचक्रस्य वियच्चक्रमिति नामान्तरमस्ति। वियच्चक्रत्वं तु वियत्पूज्यत्वात्। वियत्पूज्यत्वं द्विविधम्—दहराकाशजं बाह्याकाशजं चेति। बाह्याकाशजं नाम बाह्याकाशावकाशे पीठादौ[1] भूर्जपत्रशुद्धपटहेमरजतादिपट्टतले लिखित्वा समाराधनम्। एतदेव कौलपूजा। दहराकाशजं नाम हृदयाकाशावकाशे चक्रस्य पूजनम्। इदमेव समयपूजा (पृ० ६४)। किञ्च, पञ्चशक्तिचतुर्वह्निसंयोगात् श्रीचक्रस्य निष्पत्तिः सर्वत्र प्रतिपाद्यते। स्वाभिमुखाग्रत्रिकोणपरम्परायाः शक्तिसंज्ञात्वम्, विपरीताया वह्निसंज्ञात्वमिति समयः ( ऋजु० पृ० ५० )। कौलमतानुसारेण त्वधोमुखानि चत्वारि त्रिकोणानि शिवात्मकानि ऊर्ध्वंमुखानि पञ्च त्रिकोणानि शक्त्यात्मकानि (ल० पृ० ७२)। कौलमते संहारक्रमेण श्रीचक्रस्य लेखनं भवति, समयिनां मते तु सृष्टिक्रमेण ( ल० पृ० ७२, ७९, ८१-८३ )।

कौलमतं द्विविधम्—पूर्वकौलम्, उत्तरकौलं च। तत्र "शरीरं त्वं" ( १।३४ ) इत्येष श्लोकः पूर्वकौलमतप्रतिपादकः। अत्र भैरवीभैरवयोर्नवविधैक्यं प्रतिपाद्यते। "मनस्त्वं" ( १।३५ ) इत्यादिकश्च श्लोक उत्तरकौलमतप्रतिपादकः। "त्वया हृत्वा" ( १।२३ ) इत्यस्मिन् श्लोकेऽप्युत्तरकौलसिद्धान्त एव प्रतिपाद्यते। उत्तरकौलसिद्धान्ते शक्तितत्त्वादन्यत् शिवतत्त्वं नास्ति। अतश्च शिवतत्त्वं शक्तितत्त्वेऽन्तर्भूतमिति तदेवोपास्यम् ( पृ० १२२ )। "तवाज्ञाचक्र" ( १।३६ ) इत्यादिश्लोकषट्केन सामयिकं मतं निरूप्यते। एवमेव "कदा काले" ( २।४९ ) इत्यत्र चरणनिर्णेजनजलमिति वदता समयिमतमेवोक्तम्। कौलमते भुजगाकारेणैव देव्या अवस्थानाच्चरणनिर्णेजनजलस्याभावात् सहस्रकमल एव चरणनिर्णेजनजलस्योपलब्धेः। अत एव "सुधाधारासारैः" ( १।१० ) इतीदमर्धं समयिमतप्रतिपादकम् "अवाप्य स्वां" ( १।१० ) इतीदमर्धं च कौलमतप्रतिपादकम् ( पृ० २८२ )। शिरःस्थितं चन्द्रमण्डलं सर्वयोगशास्त्रसिद्धम्। तत्तु समयिनां मते श्रीचक्रमेव चन्द्रमण्डलम्, षोडशकलात्मकत्वात्। श्रीविद्यायाः प्रतिपदादिषोडशदिनेषु कलावृद्धिक्षययोर्वक्ष्यमाणत्वाच्चन्द्रमण्डलमेतदेव। अतश्च शिरःस्थितसहस्रदलकमलान्तर्गतश्रीचक्रात्मकशशिबिम्बमध्यस्थिताया भगवत्याश्चरणकमलनिर्णेजनजलैः सुधामयैः साधकस्य सकलशरीरं संप्लाव्य पुनर्भुजङ्गरूपेणाधारकुण्डं प्रविश्य सुषुम्नामवष्टभ्य सा भगवती स्वपितीति श्लोकस्यास्याभिप्रायः (पृ० ७६)। एवमुपर्युद्धृतस्थलेषु श्लोकेषु "सरस्वत्या लक्ष्म्या" ( २।५८ ) इति श्लोकव्याख्यायां च लक्ष्मीधरेण समयिसिद्धान्तरहस्यं कौलसिद्धान्तरहस्यं च साधु प्रतिपादितम्। विशेषजिज्ञासुभिस्तत्तत एवावलोकनीयम्।

---

१. "भूवस्त्रकायपीठाख्यं धाम चोत्कर्षभाक् क्रमात्" ( २९।१५ ) इति तन्त्रालोके।

चन्द्रकलाविद्याष्टकं तु कुलसमयानुसारित्वेन मिश्रकमित्युच्यते। चतुष्षष्टितन्त्राणि कुलमार्ग एव। ''मिश्रकं कौलमार्गं च परित्याज्यं हि शाङ्करि'' इतीश्वरवचनाद् मिश्रकमतं कौलमार्गं च परित्याज्यम्। शुभागमपञ्चकमेव वैदिकैरादरणीयम्, केवलसमयमार्गप्रदर्शनपरत्वात् ( ल० पृ० १४०-१४१ )।

एवमस्यां लक्ष्मीधरप्रतिपादितायां समयिमताख्यत्रिपुरोपासनायां तान्त्रिकोपासनाया वैदिकीकरणप्रक्रिया परिसमाप्यते। एवमत्र प्रतीयते—हिंसाबहुलं वैदिकं कर्मकाण्डं बुद्धमहावीरादिभिः समालोचितं सद् यथा साम्प्रतं विरलतामापेदे, तथैव सौन्दर्यलहरीकारेण लक्ष्मीधरप्रभृतिभिश्च—''अर्घपात्रं यागधाम दीप इत्युच्यते त्रयम्। रहस्यं कौलिके यागे तत्रार्घः शक्तिसंगमात्॥'' ( तन्त्रा० २९।१४-१५ ) इत्यभिनवगुप्तप्रदर्शितं रहस्यात्म कौलिकं बाह्यमर्चनं निषिध्य योगप्रधानमान्तरमर्चनं समयिमतनाम्ना वैदिकप्रक्रियायां परिगृहीतमिति।

अर्थरत्नावल्यां ( पृ० ७४ ) अकुल-कुल-कुलाकुल-कौल-शुद्धकौलाख्यकुलपञ्चकशास्त्रं स्मर्यते। सरस्वतीभवनस्थायां २१९२२ संख्याकायामम्बास्तवव्याख्यामातृकायां २१३ पृष्ठे सुभगोदयादिप्रामाण्येन कौलानां सप्तभेदाः प्रदर्शिताः। तदित्थम्—तत्र कौला द्विविधाः—पूर्वकौला उत्तरकौलाश्च। तत्रापि पूर्वकौलास्त्रिविधाः—मूलाधारनिष्ठाः, स्वाधिष्ठाननिष्ठाः, उभयनिष्ठाश्चेति। उत्तरकौलाश्चतुर्विधाः—मातङ्गी, वाराही, कौलामुखी, तन्त्रनिष्ठा चेति। पदोत्तिष्ठकौल महाकौल-मूलकौल-योगिनीकौल-वह्निकौल-वृषणोत्थकौल-सिद्धकौलाख्या इतो भिन्नाः सप्तभेदाः कौलज्ञाननिर्णये व्याख्याता दृश्यन्ते। एतेषु योगिनीकौलसिद्धकौलौ मृगेन्द्रागमचर्यापादप्रदर्शिताऽनुस्रोतोविभागे पठितौ। चतुष्षष्टितन्त्राणां कौलिकादिमतप्रतिपादकत्वेन हेयत्वदर्शनपरं लक्ष्मीधरव्याख्यानमत्र पूर्वं समालोचितम्। श्रीचक्रस्योभयविधमपि समुपासनं लक्ष्मीधरेण समयिमतकौलिकमतनाम्नोपपादितमृजुविमर्शिन्यामर्थरत्नावल्यां च दृश्यते। शाक्तागमेषु शक्तिपारम्यपक्ष एवाश्रीयत इति प्रतिपादयिष्यते पुरस्तात्। कुलार्णवादिषु शाक्तागमग्रन्थेषु कौलसिद्धान्तस्य सर्वोत्कृष्टत्वं ख्याप्यते। अभिनवगुप्तपादोऽपि कौलिकं सिद्धान्तं श्रद्धया समुपास्ते, भास्कररायोऽपि। एवं च लक्ष्मीधरस्यैतत्कुलसमयिमतप्रतिपादनं तस्य वैदिकसिद्धान्तेषु श्रद्धातिशयमेव ख्यापयति, न वस्तुस्थितिम्। कौलिकसिद्धान्तानां तेषां भेदोपभेदानामुपासनापद्धतेश्च सम्यगधिगमाय प्राचीनानां ग्रन्थानामभिनवगुप्तप्रभृतिभिः सूचितानामधिगतिरावश्यकी। तदनन्तरमेव प्रामाण्यपुरस्सरं लक्ष्मीधरमतसमालोचनं विधीयेत।

## नित्याषोडशिकार्णवप्रथमसूत्रावतारणम्

नित्याषोडशिकार्णव ऋजुविमर्शिन्यां त्रिकदर्शनानुगुणमर्थरत्नावल्यां च कौलमतानुगुणं व्याख्यातः, वामकेश्वरदर्शननाम्ना च संकेतपद्धत्याम्। अत्रत्यः सर्वोऽपि विषय आद्ये सूत्रे क्रोडीकृत्य दर्शित इति तदेवात्र व्याख्याद्वयमाधृत्य विव्रियते।

गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकापीठरूपिणीम् ॥

योगिनीहृदयेऽन्यत्र च विनायकवाचित्वेन प्रसिद्धोऽपि गणेशशब्दोऽत्र ऋजुविमर्शिन्यामर्थरत्नावल्यां च प्रपञ्चसारप्रामाण्येन श्रीकण्ठादिरुद्रपरत्वेन व्याख्यातः। किमत्र बीजमिति न जानीमः। ग्रहनक्षत्रयोगिनीराशयः सर्वत्रैकार्थका एव। यत्र विशेषस्तन्मूलग्रन्थटिप्पणीषु दर्शितः। देवीशब्दोऽत्र ऋजुविमर्शिन्यां ( पृ० ९ ) महार्थमञ्जरीपरिमले च ( पृ० १८० ) सम्यग् व्याख्यातः। नास्त्यत्र किमप्यधिकं वक्तव्यमस्माकम्। योगिनीपदस्य टीकाटिप्पणीषु व्याख्यातेभ्योऽर्थेभ्यो व्यतिरिक्तोऽक्षोभ्यादिचतुष्षष्टियोगिनी[1]रूपोऽर्थस्तन्त्रशास्त्रेषु विशेषतः कुलागमेषु दृश्यते, [2]अष्टाष्टकपूजासु तदर्थस्यैव परिग्रहणात्। सप्तकोटिमन्त्राणां जननी मातृकैव, अतोऽत्र मन्त्रपदविवरणात् पूर्वं मातृकैव व्याख्यायते। तदनु च मन्त्रपीठौ।

## मातृकास्वरूपविमर्शः

नित्याषोडशिकार्णवे द्वादशश्लोक्यां प्रथमेष्वेकादशश्लोकेषु मातृकैव स्तूयते। परावागात्मानाहतभट्टारकपरमशिवस्वरूपा षट्त्रिंशतत्त्वप्रसरणहेतुभूता संविदत्र ऋजुविमर्शिन्यां ( पृ० ९ ) मातृकापदेनोक्ता। शब्दराशिर्मातृका मालिनी कालिकेत्यादिभिः पदैस्तत्र तत्र शास्त्रेषूच्यमाना परभैरवीयपरावागात्मिका मातृका ज्येष्ठारौद्र्यम्बिकाख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयकारणभूता वर्णसंघट्टशरीराणां सप्तकोटिमहामन्त्राणां जननी। अत एव तन्त्रसद्भावे—"सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये। शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका॥" इत्येवं सा वर्णिता। "अखिलमनाहतमूर्तिर्मात्युत्तीर्णस्वरूपिणी तरति। कायति नानानामप्रपञ्चरूपेण मातृका देवी॥" ( १।६ ) इति च तस्या निरुक्तिरुक्ता सौभाग्यसुधोदये। अत्रायं भावः—शिवशक्त्यादिप्रतिनियतव्यपदेशासहिष्णुरनाख्यः परपरामर्शात्माऽनुत्तरः प्रकाश एव परं तत्त्वम्। स एव स्वस्वातन्त्र्याद्विश्वमवबिभासयिषुः प्रथमं शिवशक्तिरूपतां स्वात्मन्यवभासयति, अकारादिहकारान्तां मातृकामुल्लासयतीति यावत्। अत्रानुत्तरलिपिरकारः, विमर्शलिपिश्च हकारः। एनमर्थम्—"अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः। हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः॥" इति संकेतपद्धतिवचनमुपोद्बलयति। तन्त्रालोके –"अकुलस्यास्य देवस्य कुलप्रथनशालिनी। कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः॥" ( ३।६७ ) इत्यनेन स एवार्थः प्रतिपादितः।

---

१. सरस्वतीभवनस्थायां २३६१६ संख्याकायां मातृकायां १७ तमे पत्रे, २५६१० संख्याकायां मातृकायां प्रथमे पत्रे च चतुष्षष्टियोगिनीनामानि दृश्यन्ते, तत्र न दृश्यतेऽक्षोभ्या। प्रपञ्चसारे ( ११।१६-२४ ), शारदातिलके ( ७।३५-४३ ) च योगिनीनामस्वक्षोभ्याऽऽदौ न परिगणिता। अतोऽत्र कौलिकाष्टाष्टकपूजासु परिगणितानां योगिनीनां नामावली गवेषणीया।

२. द्रष्टव्यम्—योगिनीहृदयदीपिकायाम्, पृ० ३३५।

**वाक्चतुष्टयात्मिका मातृका**

एष ह्यनुत्तरनाथोऽवस्थाचतुष्टयात्मना नादरूपेणावतिष्ठते[1]। तच्चावस्थाचतुष्टयं विलयक्रमेण हत-अनाहत-अनाहतहत-अनाहतहतोत्तीर्णरूपम्। अत्रानाहतहतोत्तीर्णा परा वाक्, अनाहतहता पश्यन्ती, अनाहता मध्यमा, हता च वैखरी। एतच्च वातूलनाथ-सूत्रेषु[2] तद्वृत्तौ च स्पष्टम्। एवं च परावागात्मानाहतेत्यत्रानाहतपदेन ऋजुविमर्शिनी-कारस्यानाहतहतोत्तीर्णावस्थैवाभिप्रेता।

---

१. नादोऽसौ तन्त्रालोके (५।९७-१००) ब्रह्मयामलप्रामाण्येन रावनाम्ना प्रतिपादितः। परावाग्रूपस्याहंविमर्शात्मनो रावस्य प्रथमं तावद्धृदादिभवत्वात् पश्यन्तीमध्यमावैखरीरूपतया त्रैविध्यम्, प्रत्येकं च स्थूलसूक्ष्मपरत्वेन त्रैविध्ये नवधात्वम्। एषां नवानामपि भित्तिभूतः परावागात्मा दशमः। सेयं परावागात्मा राविणी—

नदते दशधा सा तु दिव्यानन्दप्रदायिका।
चिनीति प्रथमः शब्दश्चिञ्चिनीति द्वितीयकः॥
चीरवाकी तृतीयस्तु शङ्खशब्दश्चतुर्थकः।
तन्त्रीघोषः पञ्चमश्च षष्ठो वंशरवस्तथा॥
सप्तमः कांस्यतालस्तु मेघशब्दरवस्तथा।
नवमो दावनिर्घोषो दशमो दुन्दुभिस्वनः॥
नवशब्दान् परित्यज्य दशमो मोक्षदायकः।

इत्येवं विवृता जयरथोद्धृतागमवचनैः। एष एवार्थो नेत्रतन्त्रोद्योते (२१।३९), चिद्वल्लीधृत-परमहंसोपनिषदि (पृ० ४९) च दशविधनादपदेनोक्तः। "चिञ्चिनोचीरवाकादिप्रभेदाद्दशधा ध्वनिः" (१२।१२) इति मालिनीविजये तु ध्वनिपदेनोक्तः सः। तन्त्रालोकविवेकधृतवचने (आ० ३, पृ० ७६) रावोऽयमेवं स्तुतः—

अनाहतहतोत्तीर्णो महाविषमचिद्गतिः।
वीरहृद्घट्टनोद्युक्तो रावो देव्या विजृम्भते॥

शिवपुराणादिषु हठयोगग्रन्थेषु च नादानुसन्धानविधेः कोऽपि महिमा वर्ण्यते। तदन्यत्र विस्तरेण प्रतिपादयिष्यते।

२. अत्र च—"वाक्चतुष्टयोदयविरामप्रथासु स्वरः प्रथते" (७ सू०) इत्यादीनि सूत्राणि द्रष्टव्यानि। तेषु त्रयोदशसूत्रस्था वृत्तिरियं विशेषतोऽवधेया—"अकारस्य हतानाहतानाहत-हतानाहतहतोत्तीर्णतया चतूरूपत्वम्। तत्र हतस्तावद् हृत्कण्ठताल्वादिस्थानकरणसंनिवेशै-र्हतोऽकारादिहकारपर्यन्तनानापदार्थावभासकः। अनाहतश्चास्वरमूलोल्लसितपरनादविस्फार-स्तन्त्रीमध्यमास्वरसंकेतक आकण्ठकूपान्तादुपचारतः कृतप्रतिष्ठः। अनाहतहतश्चोभया-श्रितोन्मिषितोऽहतो विश्रान्तशष्कुलीश्रवणगोपनोद्भिन्नप्रथः श्रवणयुग्ममध्यवर्त्याकाशात् तत्त्वप्रतिबिम्बतत्त्वदेहतोऽपि हतोऽनाहतहतः। अनाहतहतोत्तीर्णश्च महानिरावरणधाम-समुल्लसितोऽविकल्प ईषच्चलत्तात्मकमहास्पन्दप्रथमकोटिरूपः स्वरः संकोचविकासविरहात् परमविकासरूपोऽस्पर्शधर्मानुच्चार्यमहामन्त्रप्रथात्मकः। तथा चानाहतहतोत्तीर्णो यः स

सा हि परा वाक् स्वस्वातन्त्र्योल्लासस्पन्दादेकाऽप्यनेकधा वितता भवति । तेन च वर्णाम्बिकायाः पश्यन्तीरूपमभिव्यज्यते । तच्चैकादशधा विभक्तं भवति । तद्यथा—अकारस्य शिवरूपस्य वामाज्येष्ठारौद्र्यम्बिकाख्यकलाचतुष्टयं तत्समष्टिरूपमकार इति पञ्चकम्, शक्तिरूपस्य हकारस्य इच्छाज्ञानक्रियाशान्ताख्यकलाचतुष्टयं तत्समष्टिरूपेण हकारेण सह पञ्चकम् । एवं द्वाभ्यां शिवशक्तिवर्णाभ्यामाद्यन्ताभ्यां दशकं जातम् । तयोः परस्परं बीजाङ्कुरन्यायेन समरसभावादेकमित्येकादशधा पश्यन्ती । एष चार्थः—"आदावस्य[1] शिरो रौद्री" इत्यादिना संकेतपद्धतावुक्तः, व्याख्यातश्च तथैव [2]विद्यानन्दपुण्या[3]-नन्दामृतानन्दादिभिः[4] । सौभाग्यसुधोदयेऽपि—

एकाऽप्येकादशधा जाता माता परैव पश्यन्ती ॥
पश्यति सर्वं स्वात्मनि करणानां सरणिमपि यदुत्तीर्णा ।
तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माता ॥ ( पृ० ३०७ )

पश्यन्तीतोऽनाहताख्या नादनवकमयी मध्यमा वाग् भवति । शून्यस्पर्शनादध्वनिबिन्दुशक्ति बीजाक्षरक्रमात्मना विकृतनादाष्टकं तत्समष्टिरूपं नवममित्येवं [5]नादनवकमवगन्तव्यम् ।

---

शृङ्गाटकाकारो रौद्रीस्वभावस्तुर्यः । अनाहतहतश्चानच्ककलात्मकवक्त्रसंस्थानो वामारूपः सुषुप्तः । अनाहतश्च बाहुरूपाम्बिकाशक्तिर्या आगमे निरूपिता तत्स्वरूपः स्वप्नः । हतश्चायुधाकारो ज्येष्ठास्वभावो जाग्रत्" ( पृ० १६–१७ ) इति । अनेन—

अकारस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधं स्मृता ॥

इति श्लोकार्थोऽपि विवृतो भवति ।

१. योगिनीहृदयदीपिका, पृ० १७०-१७१ ।
२. अर्थरत्नावली, पृ० ३५ ।
३. कामकलाविलासः, पृ० ४३, श्लो० २३-२४ ।
४. योगिनीहृदयदीपिका, पृ० १७० ।
५. शून्यः स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च ।
शक्तिबीजाक्षरं चैवेत्यष्टधाऽनाहतः स्मृतः ॥

इति संकेतपद्धतिवचनव्याख्यानमुखेनार्थरत्नावल्यादिष्वेतन्नादनवकं वर्ण्यते । एतच्च मूलाधारादिषट्के नादे नादान्ते ब्रह्मरन्ध्रे चावतिष्ठत इति भास्करराय: ( व० र०, पृ० १७ ) आह । अर्थरत्नावलीकार इतो भिन्नमपि नादनवकं हंसनिर्णयप्रामाण्येन वर्णयति । तद्यथा—

घोषः कांस्यं तथा घण्टा वीणा वेणुश्च वांशकम् ।
दुन्दुभिः शङ्खघोषश्च नवमं निर्विशेषकम् ॥ ( पृ० ३६ )

अस्मिन् प्रसङ्गे नेत्रतन्त्रोद्योते ( २१।३९ )—

यतो हीयं पश्यन्तीव न केवलमुत्तीर्णा, नापि वैखरीव बहिः स्फुटतरनिखिलावयवा, किन्तु मध्यगता, अतो मध्यमापदाभिलप्या। नवनादात्मिकया मध्यमया नववर्गात्मिका वैखरी वागभिव्यज्यते।

स्थानकरणप्रयत्नैरभिहतपवनप्रवर्तितार्णत्वात्।
हतनामधेयमस्या विहितं वर्णोदयक्रमाभिज्ञैः ॥ (सौ० सु० १।१४)

वै निश्चयेन स्पष्टतरत्वात् खं कर्णविवरवर्तिनभोरूपश्रोत्रेन्द्रियं राति गच्छतीति [1]वैखरी-पदनिर्वचनं भवति। अस्यां वैखर्यां वाचि सप्तचत्वारिंशत्संख्याकान्यकारादिसकारान्तान्य-क्षराणि भवन्तीति संकेतपद्धत्यामुक्तम्, व्याख्यातं च तथैव विद्यानन्दामृतानन्दाभ्याम्। अत्र क्षकारः ककारषकारसंयोगजत्वान्न पृथग् गण्यते। ळकारस्यापि लकारान्तःपातित्वान्न पृथग् गणनम्। एवं च सप्तचत्वारिंशद्वर्णात्मिका वैखरी, नवनादात्मिका मध्यमा, एकादशधा पश्यन्ती चेत्याहृत्य सप्तषष्टिवर्णात्मकं [2]मातृकापीठं संपद्यते। "दश पञ्च च बिन्द्वन्ताः स्वरा मताः" (१।१६) इति सौभाग्यसुधोदये। एवं च पञ्चदश स्वराः,

---

घोषो रावः स्वनः शब्दः स्फोटाख्यो ध्वनिरेव च।
झाङ्कारो ध्वङ्कृतश्चैव ह्यष्टौ शब्दाः प्रकीर्तिताः ॥

इति स्वच्छन्दतन्त्र( ११।६–७ )प्रामाण्येन निगदिताः, स्वच्छन्दोद्योते च धर्मशिवाचार्य-पद्धतिप्रामाण्येन विवृता अष्टौ शब्दा अत्रैव ६३ तमपृष्ठस्थायां टिप्पण्यां दशधा प्रतिपादितै रावध्वनिपदैस्तुलनीयाः। भास्कररायेण वरिवस्यारहस्ये ( १।१२–१३ ) बिन्द्वर्धचन्द्रप्रभृतीनां नवानां समष्टिर्नाद उच्यते, "यद्यपि बिन्दुविनिर्मुक्तानामष्टानामेव नादसंज्ञा मन्त्रशास्त्रे, तथापि व्यवहारसौकर्याय तत्सहितानामेव साऽत्र कृतेति" ( पृ० ११–१२ ) इति च तत्प्रकाशे व्याख्यायते। विस्तरेणैतदन्यत्र प्रतिपादयिषितं न इत्युक्तमेव।

१. सर्वोऽयं विषयो भास्कररायेणापि वरिवस्यारहस्यप्रकाशे ( पृ० १७ ) शब्दसृष्टिप्रक्रिया-निरूपणे प्रतिपादितः।

२. एतत्प्रघट्टकार्थो योगिनीहृदयदीपिकोद्धृत(पृ० १७०–१७१ )संकेतपद्धत्यामेवं व्याख्यातः—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥
अनयोः सामरस्यं यत्परस्मिन्नहमि स्फुटम्।
वामाद्यैः पञ्चभिर्योऽसावीश्वरः परिकीर्तितः ॥
आदावस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैव नखाग्रजा ॥
एता हार्धकलारूपा रूपपञ्चतया स्थिताः।
अवर्णः सर्ववर्णानां न पृथग् भासते बहिः ॥
इच्छा शिरःप्रदेशस्था ज्ञाना च तदधोगता।
क्रिया पादगता ह्यस्य शान्ता हृन्मध्यगा भवेत् ॥

पञ्चविंशतिः स्पर्शाख्याः, यरलवशषसाश्चेति सप्त। आहृत्य वैखरीवर्णानां संख्या सप्तचत्वारिंशद्भवति। किन्त्वत्राकारस्य परिगणनं भवति, हकारस्य नेत्यत्र किं विनिगमकम्? एकादशधा भिन्नायां पश्यन्त्यां वाचि हकारस्येवाकारस्यापि समावेशो भवतीत्यत्राकारस्यापि परिगणनं मास्तु? क्षकारस्य ळकारस्य चासमावेशे कथं नाम नववर्गात्मिका वैखरी वाक् संपद्येत? स्वरेषु विसर्गस्यापरिग्रहणे किं विनियोजकम्? प्रश्नानाममीषां समाधानं साम्प्रतं संकेतपद्धत्युपलम्भसापेक्षम्। अर्थरत्नावल्या मद्रासमातृकासु—"स्वरा द्वाविंशतिः, पञ्चविंशतिः स्पर्शाख्याः, दशधा व्यापकाः, यमाश्चत्वारः, जिह्वामूलीयोपध्मानीयौ द्वौ, अनुस्वारविसर्गौ च। इत्थमेभिः कलानादाभ्यां च सप्तषष्टिवर्णाः प्रोक्ताः। अनेनापि नयेन सप्तषष्टिवर्णरूपा मातृका" (पृ० ३९) इति पाठो दृश्यते। एतदुपोद्बलकानि प्रमाणवचनानि तु तत्र न सन्ति।

अत्र संकेतपद्धत्यनुसारिणि व्याख्याने वैखरी वाग् हतनामधेया, मध्यमाऽनाहतनामा, पश्यन्ती चोत्तीर्णोच्यते। एवं च तत्र पश्यन्तीमध्यमावैखरीस्वरूपनिरूपणमक्रियत—

शिखण्डचण्डरसन्यायः शिबिकाख्यो द्वितीयकः।
अयःशलाकासंज्ञोऽन्यस्त्रिविधो न्यायवैभवः॥
त्रिविधं न्यायमुत्सृज्य वर्णानामुदयक्रमम्।
ये वदन्ति न ते योग्या वामकेश्वरदर्शने॥ इति।

वातूलनाथसूत्रवृत्तौ (पृ० १६) तु पश्यन्ती अनाहतहता, परा चानाहतहतोत्तीर्णोच्यत इति पूर्वमेवोक्तम्। तत्रैव (पृ० ९) परायां वाचि मयूराण्डरसन्यायः, पश्यन्त्यां वटधानिकान्यायः, मध्यमायां च शिम्बिकाफलन्यायो न्ययोजि। एवं च न केवलं वैखरी, चतुर्विधापि वाग् मातृकापदाभिधेया भवति। किं बहुना, संविदेव भगवती परावागात्मनाहतभट्टारकपरमशिवस्वरूपा षट्त्रिंशत्तत्त्वप्रसरणहेतुभूता मातृकापदेनोच्यते।

**वर्णाभिव्यक्तिप्रकारः**

शिवसूत्रविमर्शिनी-ऋजुविमर्शिनी-तन्त्रालोकविवेकधृतेषु तन्त्रसद्भाववचनेषु वर्णविकासक्रम उपदिष्टः। तत्प्रघट्टकार्थश्च तन्त्रालोकविवेके संक्षेपेणैवमुपस्थाप्यते—"परैव

---

अष्टधाऽनाहतः प्रोक्तः शून्यादिप्रविभागतः।
शून्यः स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च॥
शक्तिबीजाक्षरं चेति ह्यष्टधाऽनाहतः स्मृतः।
चत्वारिंशत्सप्तसंख्यो हतः स परिकीर्तितः॥
क्षकारः कथितो योऽसौ संयोगाद् द्विविधः स्मृतः।
सप्तषष्ट्याख्यमेवं हि मातृकापीठमुत्तमम्॥
अनाहतहतोत्तीर्णैस्त्रिभिर्भेदैः समन्ततः।
स्थितो योऽसौ महापीठो मातृकाख्यो जयत्यसौ॥

सूक्ष्मा कुण्डलिनी शक्तिः शिवेन सह परस्परसामरस्यरूपमथ्यमन्थकभावात्मकं संघट्टमासाद्योत्थिता सतीच्छाज्ञानक्रियारूपतामाश्रित्य रौद्रीत्वमुन्मुद्रयन्ती, शृङ्गाटकाकारतामम्बिकात्वमवलम्बमाना, उकारात्मकशशाङ्कशकलाकारतां ज्येष्ठात्वमधितिष्ठन्ती च शशिबिन्दूदितकालाग्निरुद्ररेफात्मकबिन्दुविश्रान्तस्पष्टरेखाकारतामाभासयतीत्याद्यवर्णशरीरमुल्लासयतीति" ( ३।६७; पृ० ७७ )। अस्मिन्नर्थे—

[1]अकारस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधं स्मृता॥

इति च प्रमाणवचनं तत्र (पृ० ८०) समुपस्थापितम्। एवं शक्तेरुदरगतेन चतुष्कलात्मना बिन्दुनाऽनुत्तरादिमुखेन नववर्गकः सन्तानः प्रजायते।

योगिनीहृदये ( १।३६-४० ) परा वागम्बिकारूपा, पश्यन्ती वामारूपेच्छाशक्तिः, मध्यमा ज्येष्ठारूपा ज्ञानशक्तिः, वैखरी रौद्रीरूपा क्रियाशक्तिर्वर्णिता। अत्र तन्त्रसद्भावयोगिनीहृदयवर्णने नाम्नि वैषम्यमिवावलोक्यते, तथापि तन्त्रसद्भावेऽपि वाक्चतुष्टयविकासपद्धत्यैव वर्णनिष्पत्तिप्रक्रिया प्रतिपादितेति योगिनीहृदयवर्णनेन स्पष्टीभवति। सेयं वर्णोत्पत्तिप्रक्रिया परापञ्चाशिकासौभाग्यसुधोदययोः संक्षेपेण, तन्त्रालोके तृतीयाह्निके च विस्तरेणोपपादिता, नात्र प्रपञ्च्यते विस्तरभयात्।

**मातृकावर्गाः**

वर्णसंघट्टशरीरेयं मातृका [2]बीजयोन्यात्मना विभक्ता सप्तवर्गात्मिका, अष्टवर्गात्मिका, नववर्गात्मिका च तेषु तेषु शास्त्रेषु भण्यते। तत्र प्रपञ्चसारे—"अकचटतपयाद्यैः सप्तभिर्वर्णवर्गैः" इति प्रथमे मङ्गलाचरणश्लोके सप्तवर्गात्मिका मातृका पठ्यते। शैवेषु सिद्धान्तागमेषु नित्याषोडशिकार्णवे चाष्टवर्गात्मिका सा प्रतिपाद्यते, मालिनी-[3]विजये च नववर्गात्मिका। संकेतपद्धतिमनुसरद्भिः शिवानन्दविद्यानन्दामृतानन्दादिभिरपि स्वस्वग्रन्थेषु यथायथमष्टवर्गात्मिका नववर्गात्मिकापि च मातृका व्याख्यायते। अत्रायमस्माकमभिप्रायः—नित्याषोडशिकार्णवप्रभृतिषु तन्त्रग्रन्थेषु वर्णितं वर्णानां स्वरूपं ब्राह्मीं लिपिमनुसरति प्राधान्येन। अतो वर्णमातृकादीनां स्वरूपविचारस्तावत् प्राचीनोऽभिमन्तव्यः। अमरकोशरचनाकाले ब्राह्म्याद्याः सप्त मातरः प्रसिद्धा आसन्। एता देव्यो द्वादशज्योतिर्लिङ्गेष्वन्यतमस्य एलापुरपीठवसतेर्भगवतो घुष्णेश्वरस्य सविधे स्थितेषु 'एलोरा' गुहामन्दिरेषूत्कीर्णा उपलभ्यन्ते। सिद्धान्तशिखामणौ मातृतन्त्राणि स्मृतानि। एवं चैतासां प्रसिद्धानां सप्तमातृकाणामाश्रयेण सप्तवर्गात्मिका वर्णमातृका तान्त्रिकै-

---

१. एतच्च वचनं संकेतपद्धतिस्थं पूर्वमत्रोद्धृतम्। तत्र 'अकारस्य' इत्यस्य स्थाने 'आदावस्य' इति पाठः। 'अकारस्य' इत्येव पाठः शोभनः प्रतिभाति।

२. "बीजयोन्यात्मकाद्भेदाद् द्विधा बीजं स्वरा मताः॥ कादिभिश्च स्मृता योनिः" ( मा० वि० ३।१०-११ )।

३. मालिनीविजयोत्तरे, ३।११

रङ्गीकृता। तासु मातृकासु महालक्ष्मीं परिगणय्य नित्याषोडशिकार्णवेऽष्टवर्गात्मिका मातृका परिगीयते।

**मातृकावर्णाः**

मातृकाणां वर्गसंख्याविषये यथा मतभेदो दृश्यते तन्त्राणाम्, तथैव वर्णसंख्याविषयेऽपि सैव स्थितिः। सप्तचत्वारिंशद्वर्णरूपा वैखरी वाक् प्रत्यपाद्यत संकेतपद्धत्याम्। शैवेषु तन्त्रेषु पञ्चाशदक्षरा सा प्रोच्यते। शाक्तेषु प्राधान्येनैकपञ्चाशदक्षरा। संकेतपद्धत्यां सप्तषष्टिवर्णरूपिणी सोक्ता, व्याख्यातं च तथैवार्थरत्नावल्यामिति प्रागेवोक्तम्। चतुर्थे पटले षडध्वप्रविलापनविधौ (पृ० २०९) त्वर्थरत्नावल्यां शैवागमवत् पञ्चाशदक्षरैव मातृका व्याख्याता। लक्ष्मीधरोऽपि तथैवाह। तथाहि—"भगवत्याः स्वरूपं तु पञ्चाशद्वर्णात्मिका मातृकैव।....सेयं पञ्चाशद्वर्णात्मिका मातृकाऽष्टवर्गात्मिका भवति। ते चाष्टवर्गा अकचटतपयशादयः। अकारादयः षोडश स्वराः प्रथमवर्गः। कादयः पञ्च द्वितीयः। चादयः पञ्च तृतीयः। टादयः पञ्च चतुर्थः। तादयः पञ्च पञ्चमः। पादयः पञ्च षष्ठः। यादयश्चत्वारः सप्तमः। शादयः पञ्च अष्टमः। एवमष्टवर्गात्मिका भगवती मातृका त्रिपुरसुन्दरी" (पृ० १०८) इत्यादि। एकपञ्चाशदक्षरा मातृकेतिवादिनां मते शवर्गः षडक्षरः। यवर्गषवर्गयोरपि पञ्चपञ्चवर्णात्मकतैवेति मतविशेषः सूचितः सेतुबन्धकारेण (पृ० ५१)। शिवानन्दरचितसुभगोदयकमातृकायां (पृ० २८७) तदेतद् दृश्यते। अस्मिन् मते "शवर्गे कौलिनी तथा" (१।७९) इत्यत्र 'षवर्गे' इति पाठः कल्पनीयः स्यात्। शवर्गः षडक्षर इति वादिनां मते "कौलिनीपञ्चमं देवि" (१।९४) इत्यत्र ळकारस्यैव पञ्चमत्वेऽपि यथा क्षकारस्य ग्रहणं पञ्चमत्वेन भवति, तथा सेतुबन्धे उपपादितं (पृ० ५६) तत एवावलोकनीयम्।

**मालिनी**

मातृका मालिनीति चानर्थान्तरमिति पूर्वमुक्तम्। तत्र नादिफान्ता वर्णमाला मालिनीति विशेषः। तत्रायं क्रमः—न ऋ ॠ ऌ ॡ थ च ध ई ण उ ऊ ब क ख ग घ ङ इ अ व भ म ड ढ ठ झ ञ ज र ट प छ ल आ स अः ह ष क्ष म श अं त ए ऐ ओ औ द फ इति। क्रम एष मालिनीविजये (३।३७-४१) प्रदर्शितः।

**भूतलिपिः**

शारदातिलके (७।१-४) द्वाचत्वारिंशदक्षरा नववर्गमयी भूतलिपिरुपदिष्टा। तत्रायं वर्णविन्यासक्रमः—

| | |
|---|---|
| अ इ उ ऋ ऌ | इति प्रथमो वर्गः। |
| ए ऐ ओ औ | इति द्वितीयो वर्गः। |
| ह य र व ल | इति तृतीयो वर्गः। |
| ङ क ख घ ग | इति चतुर्थो वर्गः। |
| ञ च छ झ ज | इति पञ्चमो वर्गः। |

| | |
|---|---|
| ण ट ठ ढ ड | इति षष्ठो वर्गः । |
| न त थ ध द | इति सप्तमो वर्गः । |
| म प फ भ ब | इत्यष्टमो वर्गः । |
| श ष स | इति नवमो वर्गः । |

कामकलाविलासे ( २७ श्लो० ) सूक्ष्मा स्थूला चेति द्विविधा मध्यमा प्रत्यपाद्यत । तत्र सूक्ष्मा नवनादमयी, स्थूला च भूतलिप्याख्या । अस्या भूतलिपेः[१] श्रीचक्रे विनियोगप्रकारो यथाऽवसरं प्रतिपादयिष्यते ।

वर्णसंघट्टशरीराणां सप्तकोटिमहामन्त्राणां जननी मातृकेति प्रतिपादितम् । अथ मन्त्रविचारः प्रस्तूयते ।

## मन्त्रस्वरूपविमर्शः

तन्त्रशास्त्रेषु मनुशब्दो मन्त्रपर्यायत्वेन प्रयुज्यते, स्त्रीदेवत्याश्च मनवो विद्यापदेनाभिधीयन्ते । नित्याषोडशिकार्णवे मूलविद्यापदेनाभिधीयमाना त्रिपुराविद्या प्राधान्येन समुद्धृता । तदङ्गतया करशुद्धिप्रभृतयो विद्याः, वशिन्यादीनां [२]बीजानि, कामकलाक्षरं चात्र प्रदर्शितानि प्रथमे पटले । चतुर्थे पटले मूलविद्याया बीजानां व्यस्तसमस्तोपासनविधिः फलं चोपदर्शितम् । अत्रैव करशुद्ध्यादिविद्यानां कर्म रुद्रयामले प्रोक्तमित्युक्त्वा देव्या आयुधबीजानि तत्रैव सूचितान्यत्रापि समुद्धृतानि । मुद्राबीजान्यत्रार्थरत्नावल्यां तृतीयपटलान्ते दृश्यन्ते नित्याषोडशिकार्णवप्रामाण्येनोद्धृतानि । मूलग्रन्थे तु तानि क्वापि नोपलभ्यन्ते ।

---

१. लिपीनां भूतत्वं नाम चेष्टाविशेषाक्षरविन्यासाभिव्यङ्ग्यत्वम् । तच्च कल्पनामात्रमेव ( चिद्वल्ली, पृ० ५० ) ।

२. मन्त्रा एकाक्षराः पिण्डाः कर्तर्यो द्व्यक्षराः स्मृताः ।
वर्णत्रयं समारभ्य नवार्णावधि बीजकाः ॥
ततो दशार्णमारभ्य यावद्विंशानि मन्त्रकाः ।
तत ऊर्ध्वं गता मालास्तासु भेदो न विद्यते ॥ ( ३५। २८-२९ )
इति तन्त्रराजे पिण्ड-कर्तरी-बीज-मन्त्र-मालानां लक्षणानि । अर्थरत्नावल्यां ( पृ० ९३–९५ ) चतुष्पिण्डात्मक-षट्पिण्डात्मक-पञ्चपिण्डात्मकेत्यादिषु पिण्डपदप्रयोग एकाक्षरवाचित्वेन कृतः । क्षेमराजेन तु—

बीजैः कूटैस्तथा पिण्डैर्मालामन्त्रैरशेषतः ।
वाच्यवाचकभेदेन सर्वसिद्धिफलप्रदाः ॥ ( ने० त० १६।७ )

इत्यत्रान्यविध एवार्थः प्रतिपादितः । तथाहि—"बीजैः स्वरैः । कूटैः पिण्डपदात्मभिः । पिण्डैर्नवात्मादिभिः । मालामन्त्रैः पदसमुदायरूपैः ।...परावाक्प्राधान्येन बीजानाम्, पश्यन्तीदृशा पिण्डानाम्, मध्यमायुक्त्या मालामन्त्राणाम्, पश्यन्तीमध्यमाभ्यां कूटानाम्" इति ।

मन्त्रा मननत्राणधर्माणश्चिन्माहात्म्यावमर्शकाः। गुप्तार्थभाजः पिण्डबीजात्मानः पुरुषवाच्याध्यासिताश्च मन्त्राः। त एव संवेद्यमानस्फुटार्थरूपा मालामन्त्राः स्त्रीरूपवाच्याध्यासिताश्च सन्तो विद्यापदेन परिचीयन्ते ( पृ० ४२-४३ ) इति शिवानन्दः। मन्त्रा आणवशाक्तशाम्भवोपायसंबन्धिनः ( पृ० ४२, ७० ) इति विद्यानन्दः। ''मोचयन्ति च संसाराद्योजयन्ति परे शिवे। मननत्राणधर्मित्वात्तेन मन्त्रा इति स्मृताः॥'' ( २१।७५-७६ ) इति मृत्युञ्जयभट्टारकः। तदयं विषयो नेत्रतन्त्रे ( मृत्युञ्जयभट्टारके ) एकविंशाधिकारे—''मन्त्राः किमात्मका देव किंस्वरूपाश्च कीदृशाः। किंप्रभावाः कथं शक्ताः केन वा संप्रचोदिताः॥'' ( २१।१ ) इत्यादिप्रश्नमुखेन विस्तरेण प्रपञ्चितः। मन्त्रस्वरूप-मन्त्रवीर्य-मन्त्रावस्था-मन्त्रसामर्थ्यप्रभृतीन् मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वरप्रभृतीन्, पिण्ड-कर्तरी-बीज-मालाप्रभृतींश्च भेदोपभेदान् मन्त्रदोषसंस्कारादिकांश्च विषयानाश्रित्य सुहृद्वरेण डॉ० शिवशङ्कर-अवस्थीमहोदयेन 'मन्त्र और मातृकाओं का रहस्य' इत्याख्ये ग्रन्थे नेत्रतन्त्र-शिवसूत्र-परात्रिंशिका-विज्ञानभैरव-स्पन्दकारिका-शिवसूत्रविमर्शिनी-प्रत्यभिज्ञाहृदय-शारदातिलक-सौभाग्यभास्करप्रभृतिग्रन्थानां साहाय्येन विशदतया न्यरूपि, तत्तत एवावलोकनीयम्। नेत्रतन्त्रे द्वित्रेषु स्थलेषु मन्त्रविषयको विचारो वरीवर्ति। उपर्युक्ते ग्रन्थेऽस्पृष्टानि स्थलान्यत्र विचार्यन्ते।

अभिनवगुप्तप्रभृतिभिराचार्यैरुद्धृतत्वान्नेत्रतन्त्रस्य प्राचीनत्वं तावन्निर्विवादम्। नेत्रतन्त्रोद्योते क्षेमराजेन नेत्रतन्त्रीयमन्त्रविषयकस्थलव्याख्यानप्रसङ्गेनोच्छुष्मतन्त्रं प्रमाणीकृतम्। एतच्च तन्त्रं बौद्धतन्त्रेष्वपि दृष्टप्रामाण्यम्। एवं च तदाधारेणात्रोपस्थापयिष्यमाणस्य विषयजातस्य प्रामाण्ये गरिमा कोऽप्यभिमन्तव्य एव शारदातिलकादिपरवर्तिग्रन्थप्रतिपादनापेक्षया।

**भावादिहीना मन्त्रा न सिद्धिदाः**

कीदृशा मन्त्रा न सिद्धिं प्रयच्छन्तीति प्रथममाह मृत्युञ्जयभट्टारकः—

भावहीनास्तु ये मन्त्राः शक्तिहीनास्तु कीलिताः।
वर्णमात्राविहीनास्तु गुर्वागमविवर्जिताः॥
भ्रष्टाम्नायविहीना ये आगमोज्झितविघ्निताः।
न सिद्ध्यन्ति यदा देवि जप्ता इष्टाः सहस्रशः॥
असिद्धा रिपवो ये च सर्वांशकविवर्जिताः।
आद्यन्तसंपुटेनैव साद्यर्णेन तु रोधिताः॥

( ने० त० ८।५९-६२ )

**मन्त्रेषु दशधा दोषोत्पादनम्**

विद्वेषिभिर्हि मन्त्राणामुच्चार्यमाणानां कीलनादिकं क्रियते। अतो सुगुप्ते स्थाने जपहोमादिकं विधेयम्—

कीलनं चैव मन्त्राणां भेदनं मोहनं तथा।
संत्रासं ताडनं चैव जम्भनं स्तम्भनं तथा॥
रिपुत्वकरणं चान्यत् प्रत्यङ्गिरत्वमेव हि।
सर्वहानिविधायित्वं क्रियते दुष्टमन्त्रिभिः॥
एवं दशप्रकारेण प्रयतन्ते हि हिंसकाः।
तस्मात् सर्वंप्रयत्नेन सुगुप्ते शरणोपरि॥
स्वगृहे कारयेद्यत्नाद् यागं होमं जपं तथा।
( ने० त० १६।३३-३६ )

[1]कीलनमन्यादृशत्वापादनम्। भेदनं साध्यसांमुख्यत्यागम्। मोहनं निर्वीर्यीकरणम्। जम्भनं कार्यकरणासाध्यसामर्थ्याधानम्। स्तम्भनं निश्चेष्टत्वापादनम्। प्रत्यङ्गिरत्वं भूतादिदमनप्रयुक्तस्य मन्त्रस्य प्रयोक्तारं प्रति विरुद्धकारित्वम्।

**नवविधो मन्त्रवादः**

एतद्दोषपरिहाराय[2] मन्त्रिणा मन्त्राणां दीपनादिविधिरवश्यं परिज्ञातव्यः—

दीपनं बोधनं चैव ताडनं चाभिषेचनम्॥
विमलीकरणं चैव तथेन्धननिवेशनम्।
संतर्पणं गुप्तिभाव आप्यायो नवमस्तथा॥
एवं नवप्रकारेण मन्त्रवादमशेषतः।
यो जानाति स जानाति मन्त्रसाधनमुत्तमम्॥
( ने० त० १८।६-८ )

दीपनं[3] मन्त्रस्य प्रणवेन। बोधनं नमःशब्देन। ताडनं फट्कारेण। अभिषेचनं वौषट्कारेण। विमलीकरणं स्वाहाशब्देन। इन्धननिवेशनं दाह्यपाशविषादिदहने विनि-

---

१. एतत्प्रकरणद्वयप्रतिपादितोऽर्थः शारदातिलके "छिन्नो रुद्धः" ( २।६४ ) इत्यादिना विस्तृत्योक्तः।

२. "इत्यादिदोषदुष्टांस्तान् मन्त्रानात्मनि योजयेत्। शोधयेदूर्ध्वपवनो बद्धया योनिमुद्रया॥" ( २।१११ ) इति शारदातिलके। ये न योगिनो योनिमुद्रानभिज्ञाः पवनधारणाशक्ताश्च तान् प्रति मन्त्राणां दशसंस्कारोपदेशः। मन्त्रदोषपरिहाराय योनिमुद्राबन्धविधिर्नानातन्त्रेषूपदिश्यते। अर्थरत्नावल्युद्धृते उत्तरषट्केऽप्युक्तम्—"यद्यदुच्चरते मन्त्री मन्त्रवर्णं शुभाशुभम्। तत्तत्सिद्ध्यति देवेशि योनिमुद्रानिबन्धनात्॥" ( पृ० ७० ) इति। उत्तरषट्कमातृकायामितः पूर्वं छिन्नादयो मन्त्रदोषाः प्रदर्शिताः। योनिमुद्रास्वरूपविचारश्चाग्रे मुद्राप्रकरणे द्रष्टव्यः।

३. अत्र टीकायामुच्छुष्मतन्त्रं प्रमाणरूपेणोद्धृतम्। अत्रत्यानि सर्वाण्येव प्रमाणवचनानि तस्यैव स्युरिति वयं संभावयामः। वचनानीमानि तत्रैवावश्यं दर्शनार्हाणि।

योजनम् । हुँकारेण संपुटीकरणम् । तर्पणं बलवत्ताधानम्, तच्च प्रतिवर्णं लांकारेण संपुटीकरणम् । गुप्तिभावो रक्षणम्, तच्च नेत्रनाथसंपुटीकृतस्य अयुतजपाद्भवति । आप्यायनं पुनर्जातबलस्य पुष्ट्याधानम्, तच्च वांकारेण प्रतिवर्णं संपुटीकारात् । एष एवार्थः शारदातिलके ( २।११२ ) मन्त्राणां दशविधसंस्कारमुखेनोक्तः ।

**मन्त्राणामेकादशधा विनियोगः**

एवं सुगुप्ते स्थले दोषपरिहारगुणाधानमुखेन मन्त्रान् जपसंपादनार्हान् विदधीत । मन्त्राश्चेमे यथाप्रयोजनमेकादशधा विनियुक्ता भवन्ति—

संपुटं ग्रथितं ग्रस्तं समस्तं च विदर्भितम् ॥
आक्रान्तं च तथाद्यन्तं गर्भस्थं सर्वतोवृतम् ।
तथा युक्तिविदर्भं च विदर्भग्रथितं तथा ॥
इत्येकादशधा मन्त्रा नियुक्ताः सिद्धिदाः स्मृताः ।
( ने० त० १८।१०-१२ )

[1]आद्यन्तयोर्मन्त्रन्यासः संपुटवत् । प्रत्यर्णं मन्त्रसंपुटीकारो ग्रथनम् । मध्यस्थस्य नाम्नो दिक्चतुष्टये मन्त्रनिवेशो ग्रस्तम् । मन्त्रादनन्तरं नाम, पुनरप्येवमिति समस्तलक्षणम् । नामान्तरं सकृन्मन्त्र इति विदर्भणम् । मध्यस्थस्य नाम्नो मन्त्रो यदि वेष्टनया न्यस्त आक्रान्तम् । मन्त्रादनन्तरं नाम, ततस्त्रिर्मन्त्र इत्याद्यन्तम् । मध्यस्थस्य मन्त्रस्य चतुर्दिक्कं साध्यनामन्यासो गर्भस्थत्वम् । मन्त्रस्य आद्यन्तयोः साध्यनामनिवेशः सर्वतोवृतत्वम् । पश्चान्न्यस्तमन्त्रस्य नाम्नश्चतुर्निवेशो युक्तिविदर्भणम् । नाम्नः पश्चात् त्रिर्मन्त्रन्यासो विदर्भग्रथनम् ।

शारदातिलके ( २३।१३६ ) तु शान्तिवश्यस्तम्भनविद्वेषोच्चाटनमारणाख्येषु षट्कर्मसु[2] ग्रथन-विदर्भ-संपुट-रोधन-योग-पल्लवाख्या विन्यासा उक्ताः । लक्षणान्येतेषां तत्रैवावलोकनीयानि ।

---

१. अत्रापि टीकायामुद्धृतानि प्रमाणवचनान्युच्छुष्मतन्त्रस्यैव स्युः ।

२. कर्माण्यपि षड् भवन्ति, शान्तिवश्यस्तम्भनविद्वेषणोच्चाटनमारणभेदात् । तत्र शान्तिरुपद्रवनिवृत्तिः । वश्यं राजादीनां स्वायत्तीकरणम् । स्तम्भनं प्रकृतिनिरोधः । विद्वेषणं स्नेहभङ्गः । उच्चाटनं स्थानान्तरप्रापणम् । प्रसिद्धमन्यत् । परे तु रक्षाशान्तिजयलाभनिग्रहनिधनभेदात् षाड्विध्यमाहुः । प्रसज्यमानोपद्रवप्रागभावपरिपालनं रक्षा । प्रसक्तोपद्रवध्वंसः शान्तिः । रणद्यूतादिविजयो जयः । वाणिज्यादिभिरिष्टप्राप्तिलाभः । व्याध्युत्पादनं निग्रहः । शेषं प्रसिद्धम् । अत्र स्तम्भनस्य रक्षायां वश्याकर्षणयोर्जये विद्वेषोच्चाटनयोर्निग्रहेऽन्तर्भावमिच्छन्ति ॥'' ( पृ० १०८ ) इति सेतुबन्धे । अत्रत्यो द्वितीयः पक्षः—''रक्षा शान्तिर्जयो लाभो निग्रहो निधनं तथा । षट् कर्माणि'' ( ६।३५ ) इत्येवं कादिमतेऽप्यवलोक्यते । एतानि तान्त्रिकाणि षट्कर्माणि । मनुस्मृत्यादिषु तु—अध्या-

**मन्त्राणां सिद्धत्वादिभेदास्तज्ज्ञानोपायश्च**

साधकेन सिद्धः सुसिद्धश्चैव मन्त्र आराधनीयः—

सिद्धं साध्यं सुसिद्धं च तथैवारित्वमेव च ॥
ज्ञात्वा सर्वमशेषेण मन्त्रन्यासं समाचरेत् ।

(ने० त० १८।१२-१३)

सिद्धादिमन्त्रपरिज्ञानोपायः स्वच्छन्दतन्त्रे प्रतिपादितः—

मन्त्राक्षरं तु विश्लेष्य मात्राबिन्दुसमन्वितम् ।
आत्मनामाक्षरं तद्वदधोभागेऽस्य योजयेत् ॥
आत्मवर्णात् समारभ्य यावन्मन्त्रार्णमागतम् ।
यस्मिन् समापयेद् देवि तमाद्यं परिकल्पयेत् ॥
रेखाङ्गुलिगतं तं तु कथयामि समासतः ।
पर्वणि प्रथमे सिद्धः साध्यश्चैव द्वितीयके ॥
तृतीयेऽपि सुसिद्धः स्यादरिर्ज्ञेयश्चतुर्थके ।
अरिसाध्यौ परित्यज्य दातव्यश्चुम्बकेन तु ॥
सिद्धश्चैव सुसिद्धश्च भुक्तिमुक्तिफलप्रदः ।

(स्व० त० ८।२४)

**मन्त्राणामुदयादिकम्**

एवं मन्त्रानाराधयतः साधकस्य मन्त्राणामुदयास्तमयव्याप्त्यादिकं परिजानतः सर्वज्ञत्वमाविर्भवति । तदुक्तम्—

उदयास्तमयौ व्याप्तिं ध्यानं मुद्रां स्वरूपतः ॥
यो वेत्त्येवं स सर्वज्ञः सर्वकृत् साधकोत्तमः ।

(ने० त० १८।१३-१४)

उदयास्तमयाविति उन्मिषत्ताविश्रान्ती हृद्द्वादशान्तपदयोः । व्याप्तिं वीर्यम् । मन्त्राणां ध्यानं मन्त्रविषयम् । तदुचितामेव च मुद्राम् । स्वरूपत इति वीर्यात्मना स्वरूपेण ।

---

पनमध्ययनं यजनं याजनं दानं प्रतिग्रहश्चेति षट्कर्माण्युपदिष्टानि ( १०।७५ ) । सन्ध्या स्नानं जपो देवतार्चनं वैश्वदेवमातिथ्यं चेति षट्कर्माणि बृहत्पराशरादिषु ( २।७ ) स्मृतिषु प्रतिपाद्यन्ते । पराशरस्मृतौ ( १।३९ ), मार्कण्डेयस्मृतौ ( पृ० २५ ) च होमः स्वाध्यायश्चान्तर्भाव्यतेऽत्र । षट्कर्मपदस्यास्मिन् स्मार्तेऽर्थे एव साम्प्रतं 'खट्कर्म' इति भाषायां शब्दः प्रयुज्यते । हठयोगग्रन्थेषु तु—धौतिर्बस्तिर्नेतिस्त्राटकं नौलिकं कपालभातिश्चेति षट् कर्माण्युपदिश्यन्ते । एतेषां लक्षणानि हठयोगप्रदीपिकादिषु ( २।२२–३५ ) द्रष्टव्यानि ।

तन्त्रालोके—"उदये सङ्गमे शान्तौ त्रिलक्षो जप उच्यते" (२९।८३) इत्यत्र जपप्रसङ्गेन मन्त्रस्यैतास्तिस्रोऽवस्थाः प्रदर्शिताः। "उदये इति प्राणशक्त्युदयस्थाने जन्माधारे। सङ्गमे इति नानानाडिसंभेदभाजि हृदये। शान्ताविति प्राणनिरोधाय युगपद्गाढावधानात्मक इत्यर्थः" इति तत्रत्ये विवेके। उत्तरषट्के तु—"आधारे उदयो देवि लयो हृदय उच्यते। विश्रामं ब्रह्मरन्ध्रे तु त्रिलक्षं परिकीर्तितम् ॥" इत्येवमेषोऽर्थः प्रतिपादितः। अर्थरत्नावल्यां श्रीमूलविद्याया वाग्भवबीजस्योदयो मूलाधारे, मूलादि-ब्रह्मरन्ध्रान्तं व्याप्तिः, विश्रान्तिस्तु जिह्वाग्रे (पृ० २३१), तथैव कामराजबीजस्योदयो मूलाधारे, भ्रूमध्यान्ते व्याप्तिः, विश्रान्तिर्ब्रह्मरन्ध्रे (पृ० २४७) प्रदर्शिता।

**मन्त्राणां शिवशक्त्यात्मरूपत्वम्**

विद्यानन्देन मन्त्रा आणवशाक्तशाम्भवोपायसंबन्धिन उक्ताः (पृ० ४२, ७०), नेत्रतन्त्रे तु तेषां शिवशक्त्यात्मरूपत्वमेव[1] प्रतिपादितम्। तद्यथा—

यत्तेषां सर्ववेदित्वं सर्वशक्तित्वमेव च ॥
तच्छिवत्वं समाख्यातं शक्तित्वं सर्वकर्तृता।
सर्वानुग्रहकर्तृत्वं सर्वत्र फलदायकम् ॥
आत्मत्वं तत्स्वरूपं तु त्रिविधं साधनं स्मृतम्।
मन्त्रो ध्यानं तथा मुद्रा........................ ॥ (२१।७८-८०)

प्राणबुद्धिदेहाश्रयमन्त्रोच्चारध्यानमुद्रोपायत्वात् त्रिविधं मन्त्राणामात्मत्वमणुत्वम्। दीक्षा मण्डलमधिवासाद्यात्मा संस्कारो यजनं जपनं होमक्रिया यन्त्रलेखनं चैतदन्तो मन्त्रस्य प्रपञ्च.। एवं च दीक्षामण्डलाधिवासादिमन्त्रलेखनान्तविधिमुखेनाणवशाक्तशाम्भवोपाय-संबन्धिनां मन्त्राणामुन्मिषत्ताविश्रान्तिव्याप्तिपरिज्ञानद्वारा धारणायोगाभ्यासबलेन तेष्वात्मशक्तिशिवाभिव्यक्तिमापादयतो योगिनः सर्वज्ञत्वे को नाम विवादस्यावसरः? साधकस्य हि पुरतो मन्त्राः पञ्चधाऽवतिष्ठन्ते। तदुक्तमुत्तरषट्के—

स्पर्शनं चावलोकश्च संभाषा बिन्दुदर्शनम्।
स्वयमावेशनं चैव मन्त्राणां पञ्चलक्षणम् ॥

अस्यार्थोऽत्रैव २५१ पृष्ठस्थटिप्पण्यामवलोकनीयः। एवं चाणवशाक्तशाम्भवोपाय-संबन्धिनो मन्त्राः स्वयमेवान्ततः शिवशक्त्यात्मरूपेण साधकमाविशन्ति। एवं सति विंशाधिकारे मृत्युञ्जयभट्टारके यदुक्तम्—

यदीच्छेदुत्तमां सिद्धिं मोक्षं वा शाश्वतं ध्रुवम् ॥
मन्त्रवादो न कर्तव्य इत्याह परमेश्वरः।

इति, तत्काम्यप्रयोगेषु मन्त्रवादाश्रयनिषेधपरत्वेन योजनीयम्।

---

१. मन्त्राणामाणवशाक्तशाम्भवात्मकत्वमृजुविमर्शिन्यामपि (पृ० ५) दृश्यते।

**मन्त्रार्थो मन्त्रचैतन्यं च**

मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
न सिद्धयति वरारोहे कल्पकोटिशतैरपि ॥

इति प्राणतोषिणी ( पृ० ४१८-४१९ ) । अत्र योनिमुद्रा व्याख्यातपूर्वा, मुद्राप्रकरणे च व्याख्यास्यते । मन्त्राधिष्ठातृदेवतैव मन्त्रचैतन्यम् । अत्र शिवानन्देन—"ननु देवताः कुत्र निवसन्ति ? मन्त्रेष्विति ब्रूमः । यच्छ्रुतिः— क स्थः क वः सद्यो हव्यं वक्ष्याम इति छन्दस्स्वित्यब्रुवन्…" ( पृ० १७१ ) इत्याद्युक्त्वा "मन्त्रं मणिवदालम्ब्य प्रभावन्मन्त्रदेवताम् । जपध्यानादिकं कुर्यान्न ताटस्थ्येन कुत्रचित् ॥" इति स्वच्छन्दोद्योतोद्धृत(भा० १, प० २, पृ० ७८ )वचनस्य पूर्वार्धं उद्धृतः । एवमत्र मन्त्रदेवतैव मन्त्रचैतन्यत्वेन व्याख्याता । मन्त्रचैतन्यस्य वैशद्येन तान्त्रिकं व्याख्यानं प्राणतोषिण्यां ( पृ० ४१८ ) द्रष्टव्यम् । "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्" ( नि० १।५।२ ) इत्येवं निरुक्तेऽप्यर्थमहिमा वर्णित इति मन्त्रार्थस्त्ववश्यं परिज्ञातव्य एव । अत एव योगिनीहृदये मन्त्रसंकेतपटले षड्विधो मन्त्रार्थः श्रीविद्यायाः प्रदर्शितः, भास्कररायेण च वरिवस्यारहस्ये पञ्चदशविधोऽर्थः । श्रीविद्याया अक्षरार्थस्तु सौभाग्यसुधोदये द्वितीये प्रपञ्चे द्रष्टव्यः ।

## मुद्रास्वरूपविमर्शः

"मन्त्रमुद्राशब्देन ज्ञानक्रिये लिलक्षयिषिते" ( ऋजु० पृ० ४६ ) इति "ज्ञानक्रियासतत्त्वेन मन्त्रमुद्राक्रमेण तु" ( सु० वा० ३५ ) इति चाह शिवानन्दः । एतेन मन्त्रमुद्रयोर्ज्ञानक्रियाशक्तिरूपत्वमायाति । स्वच्छन्दतन्त्रे चोच्यते—"मन्त्रो वै ज्ञानशक्तिश्च मुद्रा चैव क्रियात्मिका" ( ४।३७५ ) इति । नेत्रतन्त्रेऽप्यात्मस्वरूपाभिव्यक्तेः साधनत्रयं मन्त्रध्यानमुद्रात्मकमुपदिश्यते । तदत्र प्रसङ्गागतं मुद्रास्वरूपं विविच्यते ।

प्रस्तुते ग्रन्थे तृतीये पटले दश मुद्राः प्रतिपादिताः । अत्र शिवानन्दः—"मुद्रानाम काश्चन शक्तयः । उक्तं च—"मोचयन्ति ग्रहादिभ्यः पाशौघं द्रावयन्ति च । मोचनं द्रावणं यस्मान्मुद्रास्ताः शक्तयो मताः ॥" ( पृ० १७४ ) इत्येवं मुद्रापदनिरुक्तिमाह । अत्र मुद्रापदेनाङ्गुलिसन्निवेशविशेषमात्रं नाभिप्रेतं शिवानन्दस्य, यद्यपि प्राधान्येन भवत्यस्मिन्नेवार्थे प्रयोगो मुद्रापदस्य । मुद्राणां प्रदर्शनेन तास्ताः शक्तय आविर्भवन्तीति तस्याभिप्रायः । तन्त्रालोके ( ३२।१-२ ) मुद्राणां परस्वरूपप्रतिबिम्बता श्रीदेवीयामलप्रामाण्येन प्रतिपादिता, "मुदं स्वरूपलाभाख्यं देहद्वारेण चात्मनाम् । रात्यर्पयति यत्तेन मुद्रा शास्त्रेषु वर्णिता ॥" ( ३२।३ ) इति च तस्या निरुक्तिरुक्ता । संविदेव क्रियाशक्तिरूपेण विश्वस्य मोदनं द्रावणं च कुर्वती मुद्राख्यां लभत इति योगिनीहृदये ( १।५७ ) । तत्र हि ( १।५८-७१ ) सशक्तिकानामेतासां मुद्राणामान्तरं स्वरूपं प्रतिपादितम् ।

विद्यानन्देन बाह्याभ्यन्तरभेदेन द्विविधा मुद्रा भवतीत्युक्तम् ( पृ० १८८ ) । बाह्या कररचनारूपा, बन्धस्त्वान्तरः ( १८२, १९० ) । खेचरीप्रकरणे शिवानन्देन

त्रिविधा खेचरी प्रदर्शिता—अङ्गुलिविरचनात्मा, बोधगगनचारिता, संस्थानविशेषानुसरणरूपा च ( पृ० १८४-८५ ) । सर्वासामेव मुद्राणां त्रैविध्यं स्वच्छन्दतन्त्रे ( २।१०२ ) प्रतिपाद्यते। तच्च क्षेमराजेन तत्रैव—"मनोजा गुरुवक्त्रस्था वाग्भवा मन्त्रसंभवा। देहोद्भवाङ्गविक्षेपैर्मुद्रेयं त्रिविधा स्मृता ॥" इत्याम्नायप्रामाण्येन स्पष्टीकृतम् । तन्त्रालोके ( ३२।९ ) तु चतुर्विधा मुद्रा प्रतिपादिता। व्याख्यातं च तत्रैव जयरथेन—"अङ्गुलिन्यासभेदेन करजा बहुमार्गगा । सर्वावस्थास्वेकरूपा वृत्तिर्मुद्रा च कायिकी ॥···· मन्त्रतन्मयता मुद्रा विलापाख्या प्रकीर्तिता। ध्येयतन्मयता मुद्रा मानसी परिकीर्तिता ॥" इति।

अत्राङ्गुलिसन्निवेशविशेषरूपा मुद्राः प्रायः सर्वेष्वेव तन्त्रग्रन्थेषु प्रतिपाद्यन्ते परश्शतैर्नामभिर्भेदैश्च। बन्धरूपाः संस्थानविशेषानुसरणरूपा वा मुद्रा बन्धपदेन मुद्रापदेनापि वा हठयोगग्रन्थेषु[1] प्रतिपाद्यन्ते। खेचर्यादीनामेतादृशीनां मुद्राणां प्रारम्भिकः प्रपञ्चो मालिनीविजयोत्तरतन्त्रालोकादिषु त्रिकशास्त्रेष्वपि दृश्यते। तन्त्रालोके मुद्राह्निके ( ३२।५-६ ) करङ्किणी-क्रोधना-भैरवी-लेलिहानिकानाम्न्यो मुद्राः खेचर्या एव प्रपञ्च इत्युक्तम्। एताः पञ्च मुद्रा विज्ञानभैरवे क्रमदर्शनग्रन्थेषु च चिद्गगनचन्द्रिकामहार्थमञ्जर्यादिषु करङ्किणी ज्ञानसिद्धानां मुद्रा, क्रोधिनी मन्त्रसिद्धानाम्, भैरवी मेलापसिद्धानाम्, लेलिहाना शाक्तसिद्धानाम्, खेचरी शाम्भवसिद्धानामित्यादिना प्रकारेण विस्तृत्य प्रकाशितास्तत एवावलोकनीयाः सलक्षणाः। एतासां क्षेमराजेन निर्दिष्टे देहोद्भवविभागे समावेशः कर्तुं शक्यते। जयरथेन निर्दिष्टम्—सर्वावस्थास्वेकरूपा वृत्तिः कायिकी मुद्रेतिलक्षणं तु नात्र संगच्छेत। गीतानिर्दिष्टं स्थितप्रज्ञलक्षणमेतदनुकरोति। "पञ्चमुद्राधरं चैतद्व्रतं सिद्धनिषेवितम्" ( आ० ३३, पृ० ३०८ ) इति जयरथोद्धृतवचनेनैवं प्रतीयते यदेषा कायिकी मुद्रा पाशुपतशास्त्रे प्रतिपादिता भवेत्। ग्रन्थानामलाभे न किमपि याथातथ्येन वक्तुं शक्यते। "मुद्रा स्वात्मनः परमेश्वरत्वोपपादनाय स्वशरीरं प्रति कल्प्यमानः करचरणादिसन्निवेशविशेषो वेषधारणविशेषश्च" (पृ० ११०) इति महार्थमञ्जरीपरिमलधृतमुद्रालक्षणं क्षेमराजकृते देहोद्भवविभागे संगच्छते। तेन यामुनाचार्येणागमप्रामाण्ये ( पृ० ४७ ) कर्णिका-रुचक-कुण्डल-शिखामणि-भस्म-यज्ञोपवीताख्य मुद्राषट्कम्, कपालखट्वाङ्गाख्यमुपमुद्राद्वयं च पाशुपतमतीयं यदुपदर्शितम्, तदपि देहोद्भवविभागेऽन्तर्भविष्यति। पाञ्चरात्रप्रभृतिषु वैष्णवागमेषु शङ्खचक्रादिभिः शरीरतापनं मुद्रापदेनोच्यते। ता यथा शरीरे आरोप्यन्ते, तथैव पाशुपतागमे मुद्रापदेनोच्यमानानि द्रव्याणि शरीरे धार्यन्ते। एताभिरङ्गुलिसन्निवेशविशेषाणां संस्थानविशेषानुसरणरूपाणां वा मुद्राणां भेदो यद्यपि स्पष्ट एव, तथापि सर्वा एता देहोद्भवविभागेऽन्तर्भावयितुं शक्यन्ते। तन्त्रालोके रहस्याह्निके (आ० २९, पृ० २९-३०) कुलसन्ततिपरिचयाय मुद्रादीनामुपयोगः प्रतिपादितः। तत्र पाञ्चरात्रपाशुपतादिष्वागमेष्वेतदर्थं बाह्यमुद्राणामुपदेशः, रहस्यप्रधानेषु च तन्त्रेषु मुद्रास्वपि रहस्यमाहितम्।

१. "महामुद्रा महाबन्धो" इत्यादिना प्रतिपादितं मुद्रादशकं हठयोगप्रदीपिकायां तृतीयोपदेशे द्रष्टव्यम्।

न केवलं स्वसन्ततिपरिचयायैवापि तु स्वाभिन्नसंविदभिव्यक्तये चापि बाह्याभ्यन्तरपूजासु तासामुपयोग उपवर्ण्यते। नेत्रतन्त्रे (२१।८०) स्वात्मस्वरूपाभिव्यक्तेस्त्रिविधं साधनं मन्त्र-ध्यान-मुद्रा-रूपमुपपादितम्। अद्वयप्रधानेषु तन्त्रेषु सर्वं स्वात्मरूपमेव। अतोऽत्र मुद्रापि परसंवित्तिरूपैव। सा च व्याख्यानानर्हेति शिवानन्द ( पृ० १८४ ) आह। क्षेमराजेन तु शिवसूत्रविमर्शिन्यां ( पृ० ५७-५८ ) तन्त्रसद्भावप्रदर्शितदिशा सा मनाङ् निर्दिष्टा। बोधगगनचारितारूपमेतन्मुद्रास्वरूपं क्षेमराजजयरथोद्धृते मानसे विभागेऽन्तर्भावयितुं शक्यते। अत्र गुरुवक्त्रस्यैव बोधगगनरूपत्वमवसेयम्। मन्त्रसंभवा मन्त्रतन्मयतारूपा वा वाचिकी विलापाख्या वा मुद्राऽत्र प्रकरणे चतुर्थी विधा, या व्याख्याद्वयोपेते नित्याषोड-शिकार्णवे न निर्दिष्टा।

नित्याषोडशिकार्णवे लक्षितासु प्रथमा त्रिखण्डामुद्राऽऽवाहनार्थं विनियुक्ता। शिष्टा नव मुद्राः सन्ति। तास्त्रैलोक्यमोहनादिसर्वानन्दमयान्तेषु नवचक्रेष्वेकैकमेकैकं चक्रस्य बीजोच्चारणपूर्वकं प्रदर्शनीयाः। नवमुद्राणां बीजान्यर्थरत्नावल्यां ( पृ० १८८-१८९ ) द्रष्टव्यानि। दर्शनीयासु मुद्रासु भवति प्रथमा सर्वसंक्षोभिणी मुद्रा। अत्र ( ३।२७ ) चान्तिमा योनिमुद्रापि प्रथमा मुद्रा प्रतिपादिता। अत्र शिवानन्दः—"नवम्यपीयं मुद्रा प्रथमा उत्कृष्टा, योन्युद्भूतत्वात् सर्वासां मुद्राणाम्। अत्राभियुक्तवचनम्—"एका चैव महामुद्रा योनिमुद्रात्वमागता। तया विभक्तः स्वात्मा तु संक्षोभादिप्रभेदतः॥ इति" ( पृ० १८८ ), "बाह्यपूजायां सर्वसंक्षोभिणीमुद्रायाः प्राथम्यमभिमतं परमेश्वरेण। अन्त-र्यजनवेलायां श्रीमहायोनिमुद्रायाः प्राथम्यमिति" ( पृ० १८८ ) इति तु विद्यानन्दः। "गुदमेढ्रान्तरे योनिस्तामाकुञ्च्य प्रबन्धयेत्" ( ऋजु० पृ० १४७ ) इत्युत्तरषट्कवचने योनिमुद्राबन्धो निर्दिष्टः। योनिमुद्राबन्धस्य मन्त्रगतसकलदोषनिराससामर्थ्यं तन्त्रेषूप-वर्ण्यते। उत्तरषट्केऽप्युक्तम्—

> यद्यदुच्चरते मन्त्री मन्त्रवर्णं शुभाशुभम्।
> तत्तत्सिद्ध्यति देवेशि योनिमुद्रानिबन्धनात्॥ इति।

योनिमुद्रावत् खेचरीमुद्राया अपि किमपि वैशिष्ट्यं विराजते। खेचरीमुद्रा-रूपायाः कुण्डलिन्याश्चन्द्रसूर्यात्मिके द्वे अङ्गुली, ते मध्यमे मध्यमनाड्यां परिवर्त्य प्रविलाप्य पार्थिवस्थानरूपके शिरसि युक्त्वा योगी खेचरतां प्रपद्यते। खेचरीभेदलक्षणादि-विचारोऽत्र ग्रन्थे १८०-१८६ पृष्ठेषु द्रष्टव्यः।

शैवेषु शाक्तेषु बौद्धेषु च कौलिकतन्त्रग्रन्थेषु मद्य-मांस-मत्स्य-मुद्रा-मैथुनात्मकं पदार्थपञ्चकं विभिन्नाभिः परिभाषाभिरान्तरायां बाह्यायां चोपासायां समुपवर्ण्यते। तत्र मुद्रापदेन शक्तेर्ग्रहणं भवति बाह्येऽर्चने। आन्तरी च मुद्रा—

> कुलयोगिन उद्रिक्तभैरवीयरसासवात्।
> घूर्णमानस्य यः कश्चित् कोऽप्युदेति यथा तथा॥
> शरीरगः समावेशो मोदनद्रावणात्मकः।
> सा स्वीकृतजगन्मुद्रा मुद्रा नैरुत्तरे मते॥ ( पृ० ११७ )

इत्येवं मालिनीविजयवार्त्तिके प्रदर्शिता। तन्त्रशास्त्रेष्वेवं सत्स्वपि नानाविधेष्वर्थेषु मुद्राशब्दस्य प्रयोगः साम्प्रतं प्राधान्येनाङ्गुलिविरचनात्मनि विधौ रूढ इव दृश्यते। एष एव प्रकारोऽत्र नित्याषोडशिकार्णवे प्रतिपादितः। साम्प्रतं सन्ध्योपासादिषु चतुर्विंशतिभेदेन तत्प्रकारः प्रदर्श्यते। तान्त्रिकसंस्कृतेरेष प्रभावस्तत्रावगन्तव्यः।

एवमत्र ज्ञानशक्तिविजृम्भितानां मन्त्राणां सहकारितया क्रियाशक्तिस्फूर्जिता मुद्रा निरूपिताः। अथ पीठविचारः प्रस्तूयते।

## पीठस्वरूपविमर्शः

नित्याषोडशिकार्णवे द्वादशश्लोक्या द्वादशे पद्ये चत्वारः पीठा उपवर्णिताः। पीठानि महासंविदुपलब्धिस्थानानि। पीठसंबन्धिविचारो डॉ० दिनेशचन्द्रसरकारनिबद्धे ''दी शाक्त पीठाज्'' इत्याख्ये निबन्धग्रन्थे विस्तरेणोपलभ्यते। अत्र विदुषा लेखकेन महापीठनिरूपणापराभिधस्य पीठनिर्णयनाम्नो लघुकायस्य ग्रन्थस्य सम्पादनप्रसङ्गे नानाग्रन्थसाहाय्येन पीठसंख्यास्थानादीनां सुविशदो विवेकः समुपस्थापित इति तत्तत एवावलोकनीयं मनीषिभिः। ततो यद्विशेषस्तदत्रोच्यते।

तन्त्रालोके ( १५।८२-९६ ) तद्विवेके च नैशसञ्चारशास्त्रप्रामाण्येन पीठोपपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्राणि वर्णितानि। शास्त्रेषु सदा यागयोग्यं स्थानं पीठनाम्नाऽभिधीयते। तच्च बाह्याभ्यन्तरभेदेन बहिर्देहे च विराजते। तद्यथा—भगवतः शिवस्येच्छाशक्तिरेव पीठभावमयते। सचराचरस्य जगत आधारभूतं तत्, अत एव तस्याः शक्तेर्नैमित्तिकमिदमभिधानं पीठमिति। शक्तिपीठाद्बिन्दुनादमयं पीठद्वयं जायते। बिन्दुपीठो वामभागे, दक्षिणे च नादपीठः। एवं पीठत्रयं निष्पद्यते। शक्तिपीठं कामरूपं प्रथमम्, दक्षिणे नादपीठं पूर्णगिरिः, उत्तरे च बिन्दुपीठमुड्डियानाख्यम्। एवमेतत्पीठत्रयं मुख्यम्। शक्तिपीठात् कौण्डलीपदमध्यगं शाक्तम्, बिन्दुपीठाच्चतुष्कलमगोलकं बैन्दवम्, नादजं च व्याप्त्यधो द्विरन्ध्रस्योर्ध्वगमित्युपपीठानां त्रयी निष्पद्यते। देवीकोट्टं शाक्तम्, उज्जयिनी बैन्दवम्, कुलगिरिश्च नादजमुपपीठम्। ललनागर्तवर्ती शाक्तः सन्दोहः, पुटमध्ये बैन्दवः, व्याप्तिमध्ये च नादजः। ललनायां पुण्ड्रवर्धनसंज्ञः, पुटमध्ये वारेन्द्राख्यः, व्याप्तिमध्ये चैकाम्राख्यः सन्दोहो भवति। हृदम्भोजदलाष्टकं क्षेत्राष्टकमभिधीयते। प्रयागः, वरणा, अट्टहासः, जयन्तिका, वाराणसी, कालिङ्गम्, कुलूता, लाहुला इति तेषां नामानि। हृदम्भोजदलाग्राष्टकमुपक्षेत्राष्टकम्। विरजा, ऐरुडिका, हाला, एलापूः, क्षीरिका, राजपुरी, मायापुरी, मरुदेश इति तेषामभिख्याः। हृत्पद्मदलसन्ध्यष्टकमुपसन्दोहाष्टकं जालन्धर-नैपाल-कश्मीर-गर्गिका-हर-म्लेच्छ-दिग्द्वारवृत्ति-कुरुक्षेत्र-खेटकाख्यम्।

देहे द्विपथ-त्रिपथ-चतुष्पथा अपि भवन्ति। वामदक्षाभ्यां नाड्योर्वाहः प्रथमः, परया सह मेलनाद् द्वितीयः, तृतीयश्च शक्तिमतो लयाद्भवति। चतुष्पथश्चायं स्थानचतुष्टयेऽवतिष्ठते। व्याप्त्यधः पिण्डस्थाने प्रथमः, तालुमध्ये द्वितीयः, चूलिकाग्रे तृतीयः, चतुर्थश्च भ्रूमध्ये

विराजते । नासान्त-तालु-चूलिकाग्राख्यं स्थानत्रयं शाम्भवं धाम, नाभि-कन्द-महानन्दाख्यं शाक्तं धाम, भ्रूमध्य-कण्ठ-हृत्संज्ञमाणवं धाम । एतदेव पर्वताग्रं नदीतीरम् एकलिङ्गं चोच्यते । किं बहुना, संवित्तौ सर्वमवतिष्ठते । संविदेव प्राणात्मना परिणमते, स च देहेऽवतिष्ठत इति सर्वमपि देह एव भावनीयम् । योगमार्गविशारदाः संविद्देव्यो बहिरनुग्रहनिमित्तं तत्तत्स्थानेष्वभिव्यक्तिमासादयन्तीति तद्बाह्यं पीठमुच्यते ।

एवमत्र पीठोपपीठसन्दोहानां त्रिकत्रयम्, क्षेत्रोपक्षेत्रोपसन्दोहानामष्टकत्रयं च निरूपितम् । आहत्य त्रयस्त्रिंशत्स्थाननामान्यत्र दृश्यन्ते । ज्ञेयसंकल्पनारूपमर्धपीठं तन्त्रालोके दृश्यते । विवेककारेण तु तन्नाङ्गीकृतम् । [1]तदावश्यकमिति वयं भणामः । नाम तु तस्यात्र नोपलभ्यते । तच्च [2]अर्बुदमिति कौलज्ञाननिर्णयतो ज्ञायते । पीठोपपीठसन्दोहक्षेत्रोपक्षेत्रपदान्यपि तत्रोपलभ्यन्ते ( पृ० २४ ) । नामानि तु केवलं कामाख्या-पूर्णगिरिओडियानपीठानाम्, ( पृ० २४ ), अर्धपीठस्यार्बुदस्य ( पृ० २४ ), करवीर-महाकालदेवीकोट्ट-वाराणसी-प्रयाग-चरित्र-एकाम्रक-अट्टहास-जयन्तीक्षेत्राणां ( पृ० २३ ) दृश्यन्ते । अत्र क्षेत्रपदस्य स्थाने [3]क्षत्रपदपाठो लिपिभ्रंशादित्यवगन्तव्यम् ।

तन्त्रालोके एकोनत्रिंशाह्निके पीठन्यासादिप्रसङ्गेऽपि पीठनामानि दृश्यन्ते । तद्यथा—

अट्टहासं शिखास्थाने चरित्रं च [4]करन्ध्रके ।
श्रुत्योः कौलगिरिं नासारन्ध्रयोश्च जयन्तिकाम् ॥ ५९ ॥
भ्रुवोरुज्जयिनीं वक्त्रे प्रयागं हृदये पुनः ।
वाराणसीं स्कन्धयुगे श्रीपीठं विरजं गले ॥ ६० ॥
एडाभीमुदरे हालां नाभौ कन्दे तु गोश्रुतिम् ।
उपस्थे मरुकोशं च नगरं पौण्ड्रवर्धनम् ॥ ६१ ॥
एलापुरं पुरस्तीरं सक्थ्यूर्वोर्दक्षिणादितः ।
कुड्याकेशीं च सोपारं मायापूःक्षीरके तथा ॥ ६२ ॥
जानुजङ्घे गुल्फयुग्मे त्वाम्रातनृपसद्मनी ।
पादाधारे तु वैरिञ्चीं कालाग्न्यवधिधारिकाम् ॥ ६३ ॥

---

१. जयरथोपपादिता उपसंहारविरुद्धत्व-अनागमित्व-अनार्षत्वदोषा नात्र प्रवर्तन्ते । उपसंहारे नवधेति पदेन पीठानामेव परामर्शः, न त्वर्धपीठस्यार्बुदस्यापि । अर्बुदस्यार्धपीठत्वे आगमस्तु कौलज्ञाननिर्णयाख्योऽनुपदं संवाद्यत एव । अत एवानार्षत्वमपि दूरापास्तम् ।

२. "अर्बुदमर्धपीठं तु" ( ८।२२ ) इति ।

३. नानास्थलेष्वेवमेव लिपिदोषादिभिर्भ्रष्टोऽप्ययं ग्रन्थो निर्विचिकित्सं प्राचीनत्वात्तदानीन्तनानां कौलिकसिद्धान्तानां परिज्ञानाय नितान्तमुपादेय इति साम्प्रदायिकैस्तन्त्रालोकादिसाहाय्येन संशोध्य पठनीयः ।

४. "करन्ध्रं ब्रह्मबिलमिति यावत्" ( त० वि०, आ० २९, पृ० ५९ ) ।

शिखास्थाने द्वादशान्ते, हालामिति अलिपुरम्, गोश्रुतिमिति गोकर्णम्, नृपसद्म राजगृहम्, वैरिञ्चीमिति ब्रह्माणीं श्रीशैलाख्यं तु तत्पीठमित्यर्थ इति जयरथः।

एवमेव तत्रैव नवयागप्रसङ्गे विवेकोद्धृतमाधवकुलग्रन्थे—

मातङ्गीवेश्म सुभगे प्रयागं परिकीर्तितम्।
कज्जली वरुणाख्यं तु सौनी कुलगिरिः प्रिये॥
कार्मुकी चाट्टहासं च जयन्ती चमंकारिणी।
चरित्रं ध्वजिनी प्रोक्तमेकाम्रास्थिविदारणी॥
देवीकोट्टं धीवरी तु हिरण्यपुरमेव च।
नवमं चक्रिणीपीठं यत्सुरैरपि दुर्लभम्॥ (पृ० ४६-४७)

इति नवस्थानानि दृश्यन्ते। इमानि च [१]कौलज्ञाननिर्णयधृतनवक्षेत्रनामतः प्रायोऽभिन्नानि। करवीरोऽत्र कुलगिरिपदेन, वाराणसी च वरुणापदेनोक्त इति प्रतीयते। महाकालो हिरण्यपुरमिति भिन्ने नामनी। अन्यानि नामान्युभयत्र समानानि।

तन्त्रालोकस्यास्मिन्नेवाह्निके षण्णां राजपुत्राणां मुद्राछुम्मादिप्रतिपादके प्रकरणे जयरथेन कुलक्रीडावतारग्रन्थ उद्धृतः। तत्र तेषां निकेतनान्येवं दृश्यन्ते—

त्रिपुरोत्तरे निकेतं सिद्धिस्थानं च तद्विदुः।
अमरस्य वरारोहे वरदेवस्य कामरुः॥
चित्रस्य अट्टहासं वै देवीकोट्टमलेस्तथा।
दक्षिणं चैव विन्ध्यस्य गुडिका कौलगिर्यता॥ (पृ० २९)।

एवं चात्र पीठषट्कं राजपुत्रषट्कस्य निकेतनस्थानीयमुपदिश्यते।

बौद्धमतीये हेवज्रतन्त्रे प्रथमकल्पस्य सप्तमे पटले पीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोप-[२]सन्दोहमेलापकोपमेलापकपीलवोपपीलवश्मशानोपश्मशानभेदेन द्वादशभूमयो निरूपिताः। तद्यथा—

पीठं जालन्धरं ख्यातमोड्डियानं तथैव च।
पीठं पौर्णगिरिश्चैव कामरूपं तथैव च॥
उपपीठं मालवं प्रोक्तं सिन्धुर्नगरमेव च।
क्षेत्रं मुन्मुनि प्रख्यातं क्षेत्रं कारुण्यपाटकम्॥
देविकोटं तथा क्षेत्रं क्षेत्रं कर्मारपाटकम्।
उपक्षेत्रं कुलटा प्रोक्तमर्बुदश्च तथैव च॥
गोदावरी [३]हिमाद्रिश्च उपक्षेत्रं हि संक्षिपेत्।
सन्दोहं हरिकेलं च लवणसागरमध्यजम्॥

---

१. द्रष्टव्यम्—८।१६-१७; पृ० २३

२. अत्र मुद्रितपुस्तके छन्दोहोपछन्दोहेति लिपिदुष्टः सम्प्रदायदुष्टो वा पाठः।

३. 'हि माद्रिश्च' इति मुद्रितः पाठो मुद्रणाशुद्धिजः।

लम्पाकं काञ्चिकं चैव सौराष्ट्रं च तथैव च।
कलिङ्गमुपसन्दोहं द्वीपं चामीकरान्वितम् ॥
को(ङ्)कणं चोपसन्दोहं समासेनाभिधीयते।
पीलवं च ग्रामान्तस्थं पीलवं नगरस्य च ॥
चरित्रं कोशलं चैव विन्ध्या कौमारपौरिका।
उपपीलवं तत्सन्निवेशो वज्रगर्भ महाकृप ॥
श्मशानं प्रेतसं(हा?घा)तं श्मशानं चोदधेस्तटम्।
उद्यानं वापिकातीरमुपश्मशानमुच्यते ॥ (१२-१८)

अत्रत्य:[1] पीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोपसन्दोहविभागस्तन्त्रालोकेऽपि वर्णित:। "क्षेत्रं मेलापस्थानम्" (तन्त्रा० आ० ४, पृ० २९०)इति जयरथ:। अत्र तु मेलापकोपमेलापकौ पृथक् परिगण्येते। तयोर्भेदास्तु न प्रदर्शिता:। पीलवशब्द: परिज्ञातेषु संस्कृतकोशग्रन्थेषु क्वापि नोपलभ्यते। स्वच्छन्दतन्त्रे तदुद्योते च (प० २, पृ० ९७-९८) कामरूपोज्जयिनीकाश्मीरकाञ्चीकरवीरदेवीकोट्टोड्डियानहिरण्यपुरवासिन आमर्दक-अग्निककालाख्य-एकपाद-त्रिपुरान्तक-अग्निजिह्व-करालि-भीमवक्त्राख्या अष्टौ श्मशानेशा: प्रकीर्तिता:।

तन्त्रालोके कौलज्ञाननिर्णये च पीठत्रयमेव दृश्यते। तत्र जालन्धरं न परिगणितम्। तन्त्रालोके उपसन्दोहाष्टके जालन्धरं परिगण्यते। हेवज्रतन्त्रे तु पीठचतुष्टयेषु तस्य प्राथम्यम्। अनेनैतदुन्नेतुं शक्येत यज्जालन्धरस्य पीठेषु समावेश: पश्चात्कालिक इति। साधनमालाख्ये बौद्धतन्त्रसंग्रहग्रन्थे उड्डियान-जालन्धर-कामरूप-श्रीहट्टाख्याश्चत्वार: पीठा: प्रदर्शिता:। अत्र पूर्णगिरिपीठस्य स्थाने श्रीहट्टस्य समावेश:। एष विभागो नैव प्रचारमलभत। कामरूप-पूर्णगिरि-जालन्धर-उड्डियानाख्यचतुष्पीठविभाग एव सार्वत्रिक:

---

१. हेवज्रतन्त्रसंपादकेन ग्रन्थस्यानुवादखण्डटिप्पणीषु प्रदर्शितं यत्पीठसंबन्धी विचारो डॉ० बागचीमहोदयेन दोहाकोशे ( पृ० ११३ ), प्रो० टुच्चीमहोदयेन च 'इण्डो-तिबैटिका' ( III २, पृ० ३८-४५ ) इत्यत्र कृत इति। पुस्तकद्वयमेतद् दृष्टमस्माभि: कलिकातास्थराष्ट्रीयपुस्तकालये एशियाटिकसोसाइटीपुस्तकालये च। तत्र "क्षेत्रोपक्षेत्रादि सर्वं हि चतुर्विंशतिस्थानानि" ( पृ० ११३ ) इति प्रथमे पुस्तके दृश्यते। "चतुर्विंशतिभेदेन पीठाद्यत्रैव संस्थितम्। अतस्तद्ग्रहणार्थेन खेद: कार्यो न तात्त्विकै: ॥" (पृ० ११४ ) इति च तत्रैव टीकायाम्। द्वितीये च पुस्तके चित्तमण्डल-वाङ्मण्डल-कायमण्डलवर्तीनि क्रमेण मलय-जालन्धर-उड्डियान-अर्बुद-गोदावरी-रामेश्वर-देवीकोट्ट-मालवाख्यानि कामरूप-चम्पा-( उद्र )-तिस्कुन-कोशल-कलिङ्ग-लम्पाक-काञ्ची-हिमालयाख्यानि, प्रेतपुरी-गृहदेवता-सौराष्ट्र-सुवर्णद्वीप-नागर-सिन्धु-मेरु-कुलूताख्यानि चाष्टकत्रयात्मकान्याहत्य चतुर्विंशतिस्थानानि प्रदर्शितानि।

समुपलभ्यते साम्प्रतम् । नित्याषोडशिकार्णवे योगिनीहृदये[1] चायमङ्गीकृतः । व्याख्यातं च तथैव व्याख्याकारैः सर्वैः । अर्थरत्नावल्यां ओजापूकास्पर्शाख्यं पीठपञ्चकमुदटङ्कि (पृ० ११) । अर्थरत्नावल्युद्धृते उत्तरषट्कशास्त्रे तु कामरूप-कोल्लगिरि-सोपार-उड्डियान-मलयगिरि-कुलान्तक-जालन्धर-देवीकोट्टाख्यान्यष्टौ पीठानि दृश्यन्ते । ईशानशिवगुरुदेव-पद्धत्यां मन्त्रपादे ( १५।४१; १७।६ ), ज्ञानार्णवतन्त्रे ( ४।६६-६७ ) च पठितान्येतानि ।

योगिनीहृदये ( ३।३७-४३ ) पीठन्यासप्रसङ्गे, प्रपञ्चसारप्रयोगक्रमदीपिकायां (पृ० ५७९ ) च योगिनीन्यासविधौ एकपञ्चाशत्पीठनामानि परिगणितानि । तान्येतानि ज्ञानार्णवेऽपि (१४।११४-२३) सन्ति । तत्र तेषां संख्या पञ्चाशदेव । "ज्ञानार्णवे पञ्चाशच्छब्दोऽप्येकपञ्चाशत्परः" ( पृ० २१३ ) इति योगिनीहृदयसेतुबन्धे वदन् भास्कर-रायस्तथैव ज्ञानार्णवग्रन्थं संवादयति । तदुचितमेव । ज्ञानार्णवापेक्षया योगिनीहृदयं प्राचीनमित्यन्यत्र प्रतिपादितमस्माभिः । स्वल्पेन नामभेदेन सह योगिनीहृदयस्यैव नामावली दृश्यतेऽत्र । पूर्वं तन्त्रालोकादिषूद्धृतानां प्रायः सर्वेषामेव पीठोपपीठादीनां समाहारोऽत्र संपद्यते ।

शारदातिलकटीकायां राघवभट्टेन "अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम्" (१।८५) इत्यस्य व्याख्यानप्रसङ्गे चतुष्षष्टिपीठप्रतिपादकं श्लोकत्रयमुद्धृतम् । तद्यथा—

मायामङ्गलनागवामनमहालक्ष्मीचरित्रा भृगु-<br>
च्छायाछत्रहिरण्यहस्तिनमहेन्द्रोड्डीशचम्पापुरम् ।<br>
षष्ठक्षीरकमञ्जनेश्वरपुरैलाश्चन्द्रपूः श्रीगिरिः<br>
कोलाकुल्लकपूर्णपर्वतकुरुक्षेत्रैकलिङ्गार्बुदाः ॥<br>
काश्मीरैकाम्रकाञ्चीमलयगिरिवरैकारकन्धूतदेवी-<br>
कोट्टाम्रातेशजालन्धरसुरभिमनीषाद्रिकाशीप्रयागाः ।<br>
त्रिस्रोतः कामकोट्टोज्जयिनीसमथुरं कोशला कान्यकुब्जो-<br>
ड्यानीङ्काराट्टहासा विरज इह ततः कुण्डिनं राजगेहम् ॥<br>
नेपालपुण्ड्रवर्धनसालवपरसीरकामरूपकेदाराः ।<br>
विन्ध्यमहापथगोश्रुतिकाम्पिल्यश्रीपीठमरुदीशाः ॥ (पृ० ५२-५३)

अर्थरत्नावल्यां (पृ० ७४) पीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोपसन्दोहशब्दा दृश्यन्ते । परवर्तिनि काले विभाग एष नाङ्गीकृतः, सर्वाणि च तानि स्थानानि पीठशब्दकुक्षि-निक्षिप्तान्यभूवन् ।

सिद्धान्तागमेषु २२४ संख्याकानि भुवनानि भवन्ति । अत्रत्येषु पीठनामसु कानि-चनाट्टहास-गोकर्ण-कुरुक्षेत्र-आम्रातकेश्वर-श्रीशैलप्रभृतीनि नामानि तत्राप्यवलोक्यन्ते । एवमत्र प्रतीयते यत्पूर्वं तेषु तेषु शाक्तेषु सम्प्रदायेषु तानि तानि तन्त्रप्रधानानि पूजास्थानानि तत्तदाचार्याविर्भावस्थलानि वा तरतमभावेन पीठोपपीठादिनाम्ना प्रथितान्यभूवन् । कालक्रमेण तेषां वैशिष्ट्यं विस्मृतिं जगाम, शैवानि वैष्णवानि च तीर्थानि तत्र समा-

१. अत्रत्य आन्तरपीठक्रमो दर्शनप्रकरणे प्रतिपादयिष्यते ।

वेशितानि । साम्प्रतं विभिन्नेषु ग्रन्थेषु पठितानि पीठनामानि पञ्चशताधिकानि भवन्ति । तान्यक्षरक्रमेण यथासंभवं परिचयादिपुरःसरं स्थापितानि 'दी शाक्त पीठाज्' इत्याख्ये ग्रन्थ इति तत एवावलोकनीयानि । विस्तृतायामस्यां सूच्यां तन्त्रालोकादिषूपरिपठितेषु ग्रन्थेषूद्धृतानि कुलूता-लाहुला-एडाभी-ऐरुडिका-कुड्याकेशी-खेटक-र्गगिकाप्रभृतीनि नामानि नोपलभ्यन्ते । लिपिदोषपाठभेदादिना वृद्धिमापिता पीठनामावली तेषां तेषां स्थानानां प्राचीनानामाधुनिकानां च नाम्नां सामञ्जस्येनैव लघ्वीक्रियेत । हन्त ! प्राचीनान्यनेकानि स्थानानि साम्प्रतं विस्मृतिगर्ते पतितानि । बहिस्थं सर्वमपि देह एव भावनीयमिति भावनाप्रवणैः प्रधानतमेषु पीठचतुष्टयेषु जालन्धरपूर्णगिरिपीठयोः, द्वादश-ज्योतिर्लिङ्गेषु च द्वित्राणां ज्योतिर्लिङ्गानां यदा निश्चिता स्थितिर्नावबुद्धयते, तदा का कथा एकपञ्चाशतां चतुष्षष्टीनामष्टोत्तरशतपीठानां वा निश्चितस्य स्वरूपपरिचयस्य ? अत्र धर्मभीरुभिः साम्प्रदायिकैरवश्यं[1] यतनीयमित्येवाधुना वक्तुं शक्यते ।

एवमत्र नित्याषोडशिकार्णवप्रथमसूत्रोपात्तानि गणेशग्रहनक्षत्रयोगिनीराशिदेवी-मन्त्रमातृकापीठपदानि प्रसङ्गोपात्तमुद्रापदेन सह व्याख्यातानि । तेन च प्रसङ्गेनात्रत्यः प्रथमतृतीयचतुर्थपटलप्रतिपादितो विषयः समालोचितः । अथ चतुर्थपटलस्याद्येषु विंशति-प्रायेषु श्लोकेषु निरूपितं त्रैपुरं दर्शनं विव्रियते ।

## त्रैपुरं दर्शनम्

शैवेषु शाक्तेषु चाद्वैतागमदर्शनेषु [2]प्रकाशशब्दः शिवतत्त्ववाचकत्वेन, विमर्शशब्दश्च शक्तितत्त्ववाचकत्वेन प्रसिद्धः । शिवपारम्यवादिनः शैवाः, शक्तिपारम्यवादि[नः] शाक्ता इत्येव प्रधानो भेद एतेषु दर्शनेषु । प्रक्रियान्तरं प्रायः समानमेव । शिवदृष्टौ तद्वृत्तौ च

---

१. बौद्धानां 'महामायूरी' इत्याख्ये ग्रन्थे यक्षाणां तद्वसतीनां च विस्तृता नामावली वर्तते । ग्रन्थ एष "सिनो-इण्डियन स्टडीज" (भा० ३, सं० १-२, पृ० १३-८७; अप्रैल-जुलाई १९४७) इत्यत्र मुद्रितः । ग्रन्थस्यास्य संपादकेन डॉ० प्रबोधचन्द्रबागचीमहोदयेन स्थानपरिचयादिषु महदायस्तम् । पीठनाम्नां स्थानानां च निर्णयायैतत्साहायकमाचरेत् ।

२. "विश्वस्य शिवादेर्भूम्यन्तस्य·······अस्फुटस्य स्फुटीकारः प्रकाशः, इदन्तया हृदयङ्गमी-भावो विमर्शः" ( पृ० ७० ) इति योगिनीहृदयदीपिका । "अत्र प्रकाशत्वं नाम 'इच्छामि', 'जानामि', 'करोमि' इत्युत्तमपुरुषान्तर्गतस्फुरणरूपाहंपरामर्श एव" ( पृ० ५ ) इति, "विमृश्यते परामृश्यत इदमिति विमर्शः प्रपञ्चः । इदमित्येव हि परमात्मना सृष्टस्य जगतः प्रसिद्धः परामर्शः" ( पृ० ३ ) इति, विमर्शो नाम अनवधिकाकारविस्फुरणशक्तिः" ( पृ० १५ ) इति च चिद्वल्ली कामकलाविलासटीका । "अथवा जगदुत्पत्तिस्थितिलयहेतु-भूताकृत्रिमाहंभावपरामर्शो विमर्शः । तथा नागानन्दाः—विमर्शो नाम विश्वाकारेण वा, विश्वप्रकाशेन वा, विश्वोपसंहारेण वाऽकृत्रिमोऽहमिति स्फुरणम्" ( पृ० ४ ) इति तत्रैव प्रदर्शितं विमर्शपदव्याख्यानान्तरं तु शक्तिपारम्यवादिनां पक्षमुपस्थापयति ।

तृतीयाह्निकारम्भे चतुःखण्डात्मकशिवसूत्रव्याख्यातृभट्टकल्लटशिष्यस्य भट्टप्रद्युम्नस्य तत्त्वगर्भस्तोत्रीयं

यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया ।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे ॥

पद्यमेतदुद्धृत्य शक्तिपारम्यपक्षः प्रतिक्षिप्तः । अत्रेदं बोध्यम्—षडध्वान्तःपाति षट्त्रिंशत्तत्त्वातीतं परं ब्रह्म । तच्च संविद्रूपम् । "श्रीभट्टप्रद्युम्नपादैः संविच्छक्तिप्रसरमात्रतां षट्त्रिंशत्तत्त्व्यामुपपाद्य[1]" (भा० २, पृ० ३३७) इतीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामभिनवगुप्तपादोक्त्या भट्टप्रद्युम्नमते षट्त्रिंशत्तत्त्वानां संविच्छक्तिप्रसरमात्रत्वमङ्गीक्रियते । एवं च शाक्तेषु दर्शनेषु संविदभिधानं परं ब्रह्म । तत एव सर्वं प्रवर्तते । संविदियं शैवैरपि नापलपितुं शक्या । अत एवोक्तमभिनवगुप्तेन प्रत्यभिज्ञाविवृतिविमर्शिन्याम्—'इह भावानां सत्त्वमसत्त्वं वा व्यवतिष्ठमानं संविद्विश्रान्तिमन्तरेण नोपपद्यते । संविद्विश्रान्ता हि भावाः प्रकाशमाना भवन्ति । प्रकाशमानता चैषां संविदभेद एव । प्रकाश एव संविद्यतः ।....तदमी प्रकाश एव तावद्विश्रान्ता भावाः । प्रकाशश्च विमर्शशून्यो न भवति ।....संविदो विमर्शपर्यन्तत्वात्" ( भा० १, पृ० ४-६ ) । अत्र स्वदर्शनानुसारं संविदः प्रकाशविमर्शात्मकत्वं साध्यते । शाक्ते तु दर्शने संविदः षट्त्रिंशत्तत्त्वातीतत्वात् प्रकाशविमर्शात्मकस्य शिवशक्तिरूपस्याद्यस्य तत्त्वद्वयस्यापि तत्प्रसरमात्रत्वमेव सिद्ध्यति । अत एव योगिनीहृदयऋजुविमर्शिन्यादिषु तत्र तत्र मन्त्र मातृका-मुद्रा-चक्रप्रभृतीनां संविदात्मकत्वमेव प्रदर्श्यते । देशकालाकारैरनियन्त्रितस्वभावत्वान्महत्त्वोपेता त्रित्वावस्थितसमस्तधर्मपूरणी चिदानन्दघनस्वात्मपरमार्था स्पृहणीयतया हृदयहारिणी संविदेव महात्रिपुर-

---

"इच्छामि, 'जानामि' इत्यादावुत्तमपुरुषान्तर्भासमानं स्फुरणान्वयि ज्ञानमेव प्रकाशाभिधानं ब्रह्म । तच्च सर्वज्ञत्वसर्वेश्वरत्वसर्वकर्तृत्वपूर्णत्वव्यापकत्वादिशक्तिसंवलितम् । तस्य चानन्दरूपांश एव स्फुरणम्, पराहन्ता, विमर्शः, पराललिताभट्टारिका, त्रिपुरसुन्दरीत्यादिपदैर्व्यवह्रियते । उक्तं च विरूपाक्षपञ्चाशिकायां विश्वशरीरस्कन्धे—"ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति । एतेऽहन्तायाः किल पर्यायाः सद्भिरुच्यन्ते ।।" ( श्लो० ८ ) इति । पराहन्तामन्तरेणेदन्ताया अस्फुरणादहमिदमोः ससंबन्धित्वादिदंपदगम्यस्य दृश्यस्याहन्तारूपशक्त्या तद्विशिष्टब्रह्मणा वा जन्यत्वम् । तच्च दृश्यं तत्परिणाम एव, "तस्यां परिणतायां तु न कश्चित् पर इष्यते" ( ४।५ ) इति वामकेश्वरतन्त्रात्" ( पृ० ४-५ ) इति वरिवस्यारहस्यप्रकाशे । शक्तिपारम्यपक्षो यथा नाभिमतो भास्कररायस्य तथाऽनुपदमेव प्रतिपादयिष्यते ।

---

१. एतदुपपादनं तेन तत्त्वगर्भस्तोत्रे कृतं भवेत् ।

सुन्दरीपदाभिलप्या। संविदेव[1] भगवती स्वान्तःस्थितं जगद् बहिः प्रकाशयतीति हि शाक्तदर्शनरहस्यम्। अतस्तत्त्वविकासक्रमान्तर्निविष्टं शिवशक्तिक्रममाधृत्य शक्तिपारम्यखण्डनं नैव युक्तिसहम्। सोऽयं शक्तिपारम्यपक्षो नित्याषोडशिकार्णवे चतुर्थे पटले "त्रिपुरा परमा शक्तिराद्या जातादितः प्रिये" (४।४) इत्यादि "एवं देवी त्र्यक्षरा तु महात्रिपुरसुन्दरी" (४।१८) इत्यन्तं सम्यग् व्याख्यातः। यदाधृत्य—"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि" (सौ० ल० १) इत्यादीनि वचांसि लब्धप्रसराणि।

इह वामकेश्वरदर्शने त्रिपुराभिधाना परा संविदेव परं ब्रह्मेत्युक्तम्।

> त्रिमूर्तिसर्गाच्च पुराभवत्वात् त्रयीमयत्वाच्च पुरैव देव्याः।
> लये त्रिलोक्या अपि पूरकत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम॥
> शिवशक्त्यात्मसंज्ञेयं तत्त्वत्रितयपूरणात्।
> त्रिलोकजननी चाथ तेन सा त्रिपुरा स्मृता॥

इतीमौ त्रिपुरानिर्वचनप्रतिपादकौ[2] श्लोकौ प्रसिद्धौ। तच्च त्रिपुराभिधानं परं ब्रह्म

---

१. "संविदेव भगवती वस्तूपगमे नः शरणम्" इत्युक्तवद्भिः प्राभाकरैः, भासर्वज्ञप्रभृतिभिर्नैयायिकैः, वाचस्पतिमिश्रप्रभृतिभिश्च यद्यपि ज्ञानपर्यायत्वेन संविच्छब्दः प्रयुज्यते, तथापि "नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा" (१।७) इति पञ्चदश्युक्तदिशा तस्याः सच्चिदानन्दात्मकपरब्रह्माभिन्नज्ञानार्थकत्वमङ्गीकर्तव्यम्। लौकिके ज्ञाने संविच्छब्दप्रयोगस्तन्मूलक एव। "प्राक्तनकुशलविपाकप्रवर्तितसंवित्सारपरामर्शाभ्यासतपःप्रभावप्रतिलब्धोन्मेषेण भट्टशङ्करनन्दनेन" (भा० २, पृ० १९९) इति, "संवित्सारमीमांसकेन भट्टश्रीनारायणेन" (भा० २, पृ० १९७) इतीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामभिनवगुप्तोक्तिदिशा प्रज्ञालङ्काराख्यभाट्टदर्शनग्रन्थकर्तुर्भट्टशङ्करनन्दनस्य, स्तवचिन्तामणिकर्तुर्भट्टनारायणस्य च मीमांसकत्वं संवित्सारमात्राङ्गीकर्तृत्वं च ज्ञायते। तदेवं मीमांसकानां प्राभाकराणां कौमारिलानां वेदान्तिनां नैयायिकानां च संविदभ्युपगमवादः शाक्तदर्शनमूलकः स्वतन्त्रो वेत्ययं स्वतन्त्रस्य निबन्धान्तरस्य विषयः।

२. त्रिपुरापदस्य नानाविधा निरुक्तयस्तत्र तत्र दृश्यन्ते। तद्यथा—"त्रिभ्यः पुरा त्रिपुरा। त्रिबिन्दुत्रितत्त्वेभ्यः पुरा पूर्वं स्थितेति भावः" (पृ० १९३), "त्रिपुरा वर्णानामादिभूता कारणरूपा सेयमकारहकारकामकलापर्यायप्रकाशविमर्शरूपाऽपीति यावत्" (पृ० १९३), "परमा शक्तिरेकविधैव सती बीजोच्छूनदशायां ज्ञानक्रियेच्छारूपत्रयबिन्दुरूपे वाह्यमाना त्रैविध्यं गता त्रिपुरा" (पृ० २०६), "एवं त्रिशक्तित्रिचक्रत्रिधामत्रिबीजत्रितत्त्वात्रिगुणत्रिकोणादिभेदत्रयाविर्भावेण त्रिवृत्करणरचनावैचित्रीचतुरा त्रैविध्येन समस्ताध्वव्यापिनी त्रिपुरा" (पृ० २०७) इत्यर्थरत्नावल्याम्। "धामतत्त्वपीठलिङ्गमातृकादिभ्यस्त्रिभ्योऽपि पुरा

प्रकाशविमर्शसामरस्यात्मकं[1] बीजावस्थारूपम् । ततो बीजादुच्छूनादिव कलातत्त्वभुवनाभिधेयरूपार्थत्रिकस्य स्थूलस्य वर्णपदमन्त्राभिधानरूपशब्दत्रिकस्य सूक्ष्मस्य कर्तृकरणकर्मलोकलोकनलोक्यात्मनः षट्त्रिंशत्तत्त्वसमुदायरूपस्य त्रैलोक्यस्योत्पत्तौ कारणभूता [2]स्पन्दशक्तिरुज्जृम्भते । बीजावस्थायामङ्कुरकाण्डपत्रपुष्पफलादिवदस्यां स्पन्दावस्थाया-

---

या विद्यते सा त्रिपुरा देवी प्रकाशविमर्शसामरस्यरूपिणी" (पृ० १२), "मातृमानमेयरूपाणां त्रिपुराणाम्" ( पृ० ३०३ ), "वामादीनां पुराणां तु जननी त्रिपुराम्बिका" (पृ० ३०५), "वामाज्येष्ठारौद्रचाख्यानां····त्रिपुराणां जननी" (पृ० ३०७) इति योगिनीहृदये तद्दीपिकायां च । "त्रिभ्यस्तेजोऽबन्नादिभ्यः पुरा भूता त्रिपुरेति" ( पृ० ९ ), "त्रिवृत्कृतप्रपञ्चपूरणात् त्रिपुरैव परं ब्रह्मेत्यभिधीयते" ( पृ० १० ), "सच्चिदानन्दस्वरूपिणी त्रिपुरेति निश्चीयते" ( पृ० ११ ), "त्रिधाऽवस्थितसमस्तवस्तुपूरणात् सर्वयोगिभिरुपास्यत्वेन स्पृहणीयत्वाच्च त्रिपुरा" ( पृ० ३७ ) इति चिद्वल्यां कामकलाविलासटीकायाम् । "पुरशब्दः शरीरार्थः । त्रीणि पुराणि यस्याः सा" (पृ० १४०) इति नि० सेतुबन्धे ।"तिसृभ्यो मूर्तिभ्यः पुरातनत्वात् त्रिपुरा । तदुक्तम्—"मूर्तित्रयस्यापि पुरातनत्वात्तदम्बिकायास्त्रिपुरेति नाम" इति । गौडपादीयसूत्रमपि—"तत्त्वत्रयेण भिदा" इति । एकमेव ब्रह्म तत्त्वत्रयेण भिद्यत इत्यर्थः । तद्भाष्ये तु तत्त्वपदं गुणमूर्तिबीजजगत्पीठखण्डादिपरत्वेन बहुधा व्याख्यातमिति गुणादिभ्यः पुरेत्यर्थः । त्रिपुरार्णवे तु—"नाडीत्रयं तु त्रिपुरा सुषुम्णा पिङ्गला इडा । मनो बुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम् ॥ तत्र तत्र वसत्येषा तस्मात्तु त्रिपुरा मता" इत्युक्तम् । कालिकापुराणेऽपि—"त्रिकोणं मण्डलं चास्याः" इत्यादि प्रस्तुत्य "सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मता" इति । "देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरास्त्रैलोक्यं त्रिपुरी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः । यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥" ( श्लो० १६ ) इति लघुस्तवे । पूर्वचतुःशत्यां चतुर्थपटले "त्रिपुरा परमा शक्तिः" ( ४।४ ) इत्यारभ्य "त्रिपुरा ख्यातिमागता" (४।१६) इत्यन्तेन ग्रन्थेनान्यान्यप्येतन्नामनिर्वचनान्युक्तानि, तानि तु तट्टीकायामेवास्माभिर्व्याख्यास्यन्त इति तत्रैव द्रष्टव्यानि" ( पृ० १३२ ) इति च ललितासहस्रनामभाष्ये सौभाग्यभास्करे ।

१. "अत्र सामरस्यं समरसता परमं साम्यमत्यन्ताभेदः" ( पृ० १९५ ) इति सौभाग्यभास्करे भास्करराय: ।

२. "स्पन्दशब्दश्चायं स्वस्वभावपरामर्शमात्रस्य नित्यस्य शून्यताव्यतिरेचनकारणभूतस्य तावन्मात्रसंरम्भात्मनः शक्त्यपराभिधानस्य पारमेश्वरस्य धर्मस्य किञ्चिच्चलनात् स्पन्द इत्यर्थानुगमाद् वाचकत्वेन व्यपदिष्टः" ( पृ० १३-१४ ) इति स्पन्दकारिकाविवृतौ भट्टरामकण्ठः । "हृदये स्वविमर्शोऽसौ द्रावितशेषविश्वकः ॥ भावग्रहादिपर्यन्तभावी सामान्यसंज्ञकः । स्पन्दः स कथ्यते शास्त्रे स्वात्मन्युच्छलनात्मकः ॥" ( ४।१८२-१८३ ) इति तन्त्रालोके । "वस्तुतस्तु न कश्चिदुदेति व्ययते वा, केवलं स्पन्दशक्तिरेव भगवत्यक्रमापि

मन्तः सदात्मना वर्तते षट्त्रिंशत्तत्त्वग्रामभूतः कार्यरूपः प्रपञ्चः। अस्यां षडध्वस्फारमय-षट्त्रिंशत्तत्त्वगर्भमहाहन्तापरामर्शमहाविभूतिरूपप्रपञ्चात्मना महाविकासभावमापन्नाया-मेतत्स्थितिव्यक्तिरिक्तो नापरः कश्चनावतिष्ठते। प्रकाशरूपस्य शिवस्य हि विमर्श एव स्वभावः। तदुक्तं प्रत्यभिज्ञायाम्—

स्वभावमवभासस्य विमर्शं विदुरन्यथा।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः॥ ( १।५।११ )

अतः शक्त्या युक्त एव शिवो जगत्सृष्टौ प्रभवति, अन्यथा स स्पन्दितुमपि नालम्।

शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः।
शक्तिहीनो हि यः कश्चिदसमर्थः स्मृतो बुधैः॥

इति हि देवीभागवतम्। किञ्च, शक्तिरहिते शिवे नाम शिवमहेश्वरशङ्करपरमेश्वरमहा-देवमृडमहेशानेशाद्यभिधानव्यवहारः, धाम स्थानप्रकाशानुभवोन्मेषोद्यन्तृतादिसिद्धिश्च नैव भवतः। तदभावे च कथं हि नाम परिज्ञायेत शिवः। अथ यथाकथञ्चित् शिवे परिज्ञा-तेऽपि तत्र शिवशक्तिसामरस्यात्मपरिपूर्णाहंपरामर्शस्थितिलक्षणं मोक्षाख्यमकृत्रिमं शर्म, सृष्टिस्थितिसंहारतिरोधानानुग्रहात्मकं[1] प्रत्यभिज्ञाहृदयैकादशसूत्रोक्तमाभासनरक्तिविम-र्शनबीजावस्थापनतद्विलापनात्मकं वा कर्म न प्रभवेताम्। अपि च, अशक्तः शिव इत्य-ङ्गीकृतौ ध्यानसमाधानवेलायां महानन्दोदधिनिमग्नानां महायोगिनां विश्वैकात्म्यात्म-शिवशक्तिसामरस्यमहाह्रदरमणं तत्र मनसः स्थिरीकरणं च न भवति। शक्तेस्तु धर्म-धर्म्युभयात्मकत्वान्नाम धाम कर्म रतिः स्थितिश्चेति सर्वमप्युपपद्यत इति भावः।

---

तथा तथाऽऽभासरूपतया स्फुरन्त्युदेतीव व्ययत इव च" ( पृ० ५ ) इति स्पन्दनिर्णये क्षेमराजः। "स्पन्दो नाम परायास्तत्त्वरूपेण प्रसारः" ( पृ० २८२ ) इति योगिनीहृदय-दीपिकायाम्। "स्पन्दः षट्त्रिंशत्तत्त्वात्मना परिणामः। तेनाव्याकृतनामरूपजगत एव स्पन्द इति प्रायेण तन्त्रेषु व्यवहारः" ( पृ० ४४ ) इति वरिवस्यारहस्यप्रकाशे। एतेन परायाः संविदः षट्त्रिंशत्तत्त्वातीतः किञ्चिच्चलत्तारूपः षट्त्रिंशत्तत्त्वात्मना परिणममानो धर्मः स्पन्द इत्यभिधीयते।

१. क्रमदर्शने तु सृष्टिस्थितिसंहारानाख्याभासात्मकं कृत्यपञ्चकमभिमतम्। एतच्च महार्थ-मञ्जर्यां ३९-४० कारिकयोस्तत्परिमले च विस्तरेणोपपादितम्। तत्रानाख्यमित्याख्या-शून्यत्वमुच्यते। आख्या च पश्यन्त्यादिस्थूलवाक्त्रितयस्वभावा। भासा च सृष्ट्यादिकृत्या-क्रान्तविश्ववैचित्र्यव्यवहारगर्भिणी सर्वोत्तीर्णा सर्वानुग्राहिणी च पारमेश्वरी चिच्छक्तिः। तत्रानाख्यातत्त्वं वामकेश्वरदर्शनेऽप्यङ्गीक्रियते। "अनाख्या तिरोधानानुग्रहयोः समष्टिः, कृत्यपञ्चकेष्वप्यौदासीन्यावलम्बनरूपावस्थानविशेषो वा" ( पृ० २३ ) इति वरिवस्या-रहस्यप्रकाशे भास्करराय:। एवं चास्मिन् मते भासातत्त्वमनाख्यायामेवान्तर्भूतम्। सृष्टि-स्थितिसंहारानाख्याचक्रप्रपञ्चश्चक्रसृष्टिप्रकरणे व्याख्यातव्यः।

तदेवं परिस्फुरत्तात्म शक्तिभावापन्नं तेजः सूक्ष्माकारस्वरूपमादधत् कवलीकृत-निश्शेषतत्त्वग्रामस्य जगतो बीजाङ्कुरभावेनावतिष्ठते। जगदुद्वमनग्रसनरूपिणी महा-शक्तिर्विश्ववैचित्र्यमवबिभासयिषुर्वामाज्येष्ठारौद्रयात्मना सृष्टिस्थितिसंहृतिकरी शृङ्गा-टाकारतां धत्ते। एवमेषा परमेश्वरी परमा शक्तिरेकैव ब्रह्मविष्णवीशरूपिणी ज्ञानक्रिये-च्छाशक्त्यात्मिका त्रैलोक्यं संसृजन्ती त्रिपुरा परिकीर्त्यते। इदन्ताप्रसरोन्मुखीयं सृष्टिमार्गं स्वाभाविकं विहाय गुरूक्तयुक्त्या संहारमार्गं प्रति मध्यचारमार्गेण मूलाधारगतचतुर्दल-पद्ममध्यत्रिकोणकुलस्थानाद् यदोल्लसति, तदामूलाधारादितत्तदाधारगतकमलोदरनिर्भेदन-क्रमेण ब्रह्मस्थानगतहंसात्मशिवाधिष्ठानार्कोपलक्षितप्रकाशभुवं प्राप्य महाप्रकाशशिवसंमे-लनसमुज्जृम्भितं महानन्दलक्षणं चन्द्रमण्डलं द्रावयन्ती महासामरस्यमहानन्दानुभवरूपामृ-तस्यन्दात्मपरमानन्देन नन्दिता कुलेश्वरी देहाभिमानिनी संवित् षट्त्रिंशतत्त्वसमुदाय-रूपकुलशरीराभिमानं विसृज्यार्थदेहप्रमातृतां त्यक्त्वाऽकुलस्थानवर्तिनं निर्गुणं निर्लक्षणं कुलरूपविवर्जितं च परं पुरुषमुपैति। एवं संहारक्रमेणोपभोगसन्तुष्टा ततः स्वेच्छावशात् सृष्टिमार्गं प्रविश्य कुलपुरुषं प्रलोभयन्तीवावतिष्ठते। पुनरेकाकिनी महास्फुरत्तारूपाऽद्वया-नन्दमयी महाहन्तात्मिकां स्वसंविदमनुभवति। तदेवं गमागमेन स्वेच्छया जगच्चित्रविर-चनविलापनकारिणी स्वस्वातन्त्र्यव्यतिरेकेण नान्यदुपादानसहकारिकारणादिकमपेक्षते। तदुक्तं प्रत्यभिज्ञाहृदये—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः", "स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" ( सू० १-२ ) इति।

विश्वोत्तीर्णा भानैकशरीरिणीयं त्रिपुरा विश्वात्मना प्रकाशमानाऽऽत्मविद्याशिवा-ख्येन तत्त्वत्रयेण व्यक्तिभावमयते, वर्णत्रयात्मकं शक्तित्रयात्मकं च रूपमाधत्ते। वाग्भवा-धिष्ठात्री ज्ञानशक्तिर्वाग्भवे बीजे विद्यारूपतयाऽमृतत्वप्रकाशिका, कामकलात्मिका क्रियाशक्तिः कामराजबीजे महाचमत्कारसम्पादयित्री, शिवरूपिणी चेच्छाशक्तिः शक्ति-बीजे परमशिवसामरस्यापादिकेत्येवं त्र्यक्षरेयं देवी महात्रिपुरसुन्दरी श्रीविद्यारूपेण प्रथते। नित्याषोडशिकार्णवव्याख्यातृभिः शिवानन्दादिभिः स्थलद्वये ( १।१८७,५।१ ) पाठभेदमुखेन कामतत्त्वं विषतत्त्वं मोक्षतत्त्वं च व्याख्यायते। तत्र शिवानन्देन कामराज-शक्ति-वाग्भवबीजार्थकत्वेनेमानि पदानि व्याख्यातानि। कामराजबीजस्य कामकला-रूपत्वम्, शक्तिबीजस्य विषनिर्हरणार्थत्वम्, वाग्भवस्य च मोक्षप्रदत्वं प्रतिपाद्यतेऽत्रैव। अतः शिवानन्दव्याख्यानं न कमप्यसामञ्जस्यं धत्ते। तन्त्रालोके तु कुलगुह्वरप्रामाण्ये-नैषामर्थान्तरं प्रतिपाद्यते। तद्यथा—

> अत एव विसर्गोऽयमव्यक्तहकलात्मकः।
> कामतत्त्वमिति श्रीमत्कुलगुह्वर उच्यते॥ ( ३।१४६ )

इत्यादिना कामतत्त्वम्,

> काकचञ्चुपुटाकारं ध्यानधारणवर्जितम्।
> विषतत्त्वमनच्काख्यं तव स्नेहात् प्रकाशितम्॥ ( ३।१६९ )

इत्यादिना विषतत्त्वम्,

निरञ्जनं परं धाम तत्त्वं तस्य तु साञ्जनम् ॥
क्रियाशक्त्यात्मकं विश्वमयं तस्मात् स्फुरेद्यतः ।
इच्छा कामो विषं ज्ञानं क्रिया देवो निरञ्जनम् ॥
एतत्त्रयसमावेशः शिवो भैरव उच्यते । ( ३।१७१-१७३ )

इत्यादिना च निरञ्जनं तत्त्वं प्रतिपाद्य तत्त्वत्रयस्य इच्छा-ज्ञान-क्रियारूपत्वमाख्यायते । नित्याषोडशिकार्णवे तु वाग्भवं ज्ञानशक्तिमयम्, कामराजबीजं क्रियाशक्तिमयम्, शक्तिबीजं चेच्छाशक्तिमयमिति विशेषः । मन्त्रप्रकरणे नेत्रतन्त्रप्रामाण्येन मन्त्राणां शिवशक्त्यात्मस्वरूपत्वं प्रत्यपादि । तद्वदेवात्रापि त्रिपुराऽऽत्मविद्याशिवाख्येन तत्त्वत्रयेण व्यक्तिमागता त्रिबीजरूपतां धत्ते । श्रीविद्यार्थमनुचिन्तयत आराधकस्य च "स्पर्शनं चावलोकश्च" इत्युत्तरषट्कदिशा मन्त्रचैतन्याभिव्यक्त्या स्वयमाविष्टा भवति, समाराधको महात्रिपुरसुन्दरीसतत्त्वो भवतीति यावत् ।

अत्र "तस्यां परिणतायां तु न कश्चित्पर इष्यते" ( ४।५ ) इति, "रमते स्वयमव्यक्ता त्रिपुरा व्यक्तिमागता" ( ४।१६ ) इति च शक्तिपरिणामवादः प्रतिपादितो भवति । "बीजावस्थायामङ्कुरकाण्डपत्रपुष्पफलादिवच्छक्त्यवस्थायामन्तः सदात्मना वर्तते कार्यरूपः प्रपञ्चः" ( ऋजु०, पृ० १९५-१९६ ) इति च व्याख्यायते सत्कार्यवादः शिवानन्देन । प्रतिपाद्यते चौपनिषदानां तान्त्रिकाणां चात्र विशेषो भास्कररायेणैवम्— 'औपनिषदानां पक्षस्तु परस्य चिद्रूपस्य ब्रह्मणः शक्तिर्मायाख्या । सा च जडैव । सैव च जगतः परिणाम्युपादानम् । परं ब्रह्म तु विवर्तोपादानम् । अत एव जगतोऽपि मायिकत्वाज्जडत्वं मिथ्यात्वं च ।····तान्त्रिकाणां पक्षस्तु परचिन्निष्ठा या चिच्छक्तिरौपनिषदानामपि संमता सैवानन्तरूपत्वान्मायेत्युच्यते ।····तत्परिणाम एव प्रपञ्चः । अत एव च चिद्रूपः, "चिद्विलासः प्रपञ्चोऽयम्" इति ज्ञानवासिष्ठात् । अत एव च सत्योऽपि" ( पृ० १३५ ) इति । एतेन परिणामवाद[१] एव नित्याषोडशिकार्णवप्रतिपाद्य इत्यायाति; तथापि—"विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्" इत्यादिदक्षिणामूर्तिश्लोकप्रदर्शितदिशा स्वातन्त्र्यशक्त्युज्जृम्भित आभासवाद एव काश्मीराद्वयवादजीवातुभूत इति तत्र तत्र शैवेषु शाक्तेषु चागमेषु प्रतिपाद्यते । अत एव तद्वासनावासितचेतोवृत्तिभ्यां शिवानन्दविद्यानन्दाभ्यामाभासवादमुखेनैव व्याख्यायते ग्रन्थः ।

आभासो हि नाम नान्यथाभावः, प्रत्युतान्तःस्थितस्यैव बहिः प्रकाशनमुन्मेषपदाभिधेयम् । उन्मेषश्चायं सांख्यानां विकृतिलक्षणात् परिणामात्, वेदान्तिनामन्यथाप्रथनरूपाद्विवर्ताच्च सर्वथा भिद्यते । प्रकाशो ह्यत्र स्वतन्त्रायाः संविदः स्वीकृतो न पुनरचेतनायाः प्रकृतेः । अपि च, प्रकृतिपरिणामवादे गुणानां साम्यं वैषम्यमुपैति, अत्र तु स्वतन्त्रा

१. भास्करप्रभृतिभिराचार्यैरविकृतपरिणामवाद एवाङ्गीकृतः । स एवात्र प्रतिपादितो न त्वाभासवादः काश्मीरागमसंमतः । किमेतेनैतत्कल्पयितुं शक्यते यन्नित्याषोडशिकार्णवाविर्भावकाले नासीदाभासवाद इति ।

चितिः स्वस्वातन्त्र्येणाविकृता सती तत्तद्रूपेण स्वात्मानं प्रकाशयतीति न वैषम्यावकाशः। अन्तःस्थितस्यैव बाह्यत्वापादनं हि प्रकाशः। वेदान्तिनां ब्रह्म चेतनं सदपि न स्वेच्छया स्वात्मानं जगदात्मना प्रकाशयेत्, तस्मिन् स्वातन्त्र्याभावात्कर्तृत्वानुपलब्धेः। चितिस्तु स्वतन्त्रा विश्वसिद्धिहेतुः। सा हि—

जगच्चित्रं समालिख्य स्वात्मतूलिकयात्मनि।
स्वयमेव तदालोक्य प्रीणाति परमेश्वरी॥

तस्य प्रकाशश्च न खल्वन्यथाभावो भ्रमो वा, अपि तु चेतनस्य चेतनत्वेनैव स्वस्वातन्त्र्येण सर्वदा सर्वात्मना भानम्। एवं चास्मिन् मते प्रपञ्चस्य संविदेकात्मत्वं सिद्ध्यतीत्याभासवादोऽयं निर्दुष्टत्वाद् वरीयान् परिणामवादविवर्तवादाभ्याम्। अभासवादोऽयं प्रतिबिम्बवादनाम्नाऽभिनवगुप्तेन तन्त्रालोके तृतीयाह्निकारम्भे ( पृ० १-७३ ) महता संरम्भेण प्रतिपादितस्तत एवावलोकनीयो विशेषजिज्ञासुभिः।

भास्कररायेण यद्यपि शक्तिपरिणामवाद एवाङ्गीक्रियते। उच्यते च—"एवं च पक्षद्वयेऽपि प्रपञ्चकारणतया शक्तेरावश्यकत्वे परशिव एवान्तर्गडुत्वान्नौपनिषदैः कल्प्यः" ( पृ० १३५ ) इति, तथापि नैतेन स शक्तिपारम्यवादीति भ्रमितव्यम्, योगिनीहृदयव्याख्यानावसरे तेनैव—"पूर्वं कृतः परशिवनिरासस्तु शक्तिनिरासवादिनो जल्पकथया मुखमुद्रणमात्रार्थो न तु वादकथया" ( पृ० २३ ) इत्युक्तत्वात्। प्रत्युत "तेन जननमरणादिक्लेशमयसंसारजनकत्वाद् विषं शक्तिः। तद्विनिर्मोकादमृतं शिवः" (पृ० ४६) इति वरिवस्यारहस्यप्रकाशे वदन् स शिवपारम्यपक्षपातित्वमात्मनो व्यनक्ति। शिवानन्दविद्यानन्दाभ्यामपि शक्तिशब्दः सर्वत्र विमर्शवाचित्वेन प्रयुज्यते। परवर्तिनि काले शैवशाक्तदर्शनयोः संमेलनेन शाम्भवदर्शनं[1] प्रवृत्तम्, यत्र हि शिवशक्त्योः समसत्ताकत्वमङ्गीक्रियते। अत एव भास्कररायेण तत्रैवोक्तम्—"केवलशिवस्येव केवलशक्तेरपि सृष्ट्यादिजनकत्वायोगात्" ( पृ० २२-२३ ) इति। प्रकाशविमर्शयोर्मिलितयोरेव सृष्टिजनकत्वमिति तदनुवर्तिनीं व्याख्यां विदधन्तौ शिवानन्दविद्यानन्दौ शाम्भवदर्शनप्रतिपादकावेव।

यद्यपि प्रकाशविमर्शयोर्मिलितयोरेव शब्दार्थसृष्टिजनकत्वमविशिष्टम्, तथापि प्रकाशांशस्यैवार्थसृष्टौ विमर्शांशस्यैव शब्दसृष्टौ जनकत्वमङ्गीक्रियते। त्रैपुरे दर्शने तु प्रकाशविमर्शांशभूतात् पञ्चशक्तिचतुर्वह्निसंयोगरूपात् श्रीचक्रादेव सर्वं प्रवर्तते। एवं चार्थशब्दसृष्ट्योरपि [2]चक्रसृष्टावेवान्तर्भावः प्रसिद्ध्यति। अतश्चक्रसृष्टिरेवात्र विस्तरेण प्रपञ्च्यते।

---

१. द्रष्टव्यम्—गारलैण्ड आफ लेटर्स, पृ० २५०

२. भास्कररायेण तु वरिवस्यारहस्यप्रकाशे ( पृ० ४७ ) अर्थमयी शब्दमयी चेति सृष्टिद्वयमुद्दिश्य तदनन्तरम्—"चक्रमयी देहमयी चेति सृष्टिद्वयं तु बालक्रीडनकार्थे स्थूलगृहसमानाकारत्वेन सूक्ष्मगृहनिर्माणतुल्यमर्थसृष्टावेवान्तर्गतम्" इत्युक्तम्। तत्तु दर्शनान्तरसंस्कारमूलकम्।

## चक्रमयी सृष्टिः

**श्रीचक्रस्य संभवः**

अथ प्राधान्येन योगिनीहृदयमाधृत्य चक्रमयी सृष्टिः प्रतिपाद्यते। "देशकालानवच्छिन्नं तदूर्ध्वे परमं महत्। निसर्गसुन्दरं तत्तु परानन्दविघूर्णितम्॥" (१।३५) इत्यत्र योगिनीहृदये हकारादिमहाबिन्द्वन्तानां सकल-सकलनिष्कल-निष्कलानां त्रयाणामप्यूर्ध्वे स्थिता त्रित्रिरूपसमस्तवस्तुभ्यः पुरातनी देशकालानवच्छिन्ना परममहद्रूपा स्वभावसुन्दरी परप्रकाशात्मकपरशिवसामरस्यपरिपूर्णपरानन्दशालिनी विमर्शशक्तिः श्रीमहात्रिपुरसुन्दरी वर्णिता। वामकेश्वरदर्शने त्रिपुराभिधानं परं ब्रह्मेति प्रागेव प्रतिपादितम्। सा परा शक्तिः स्वेच्छया यदा विश्वसर्जनरूपां स्वात्मनः स्फुरत्तामाविर्भावयति, तदा षट्त्रिंशत्तत्त्वात्मकविश्वसृष्टिकाले सर्वप्रथमं विश्वमयस्य श्रीचक्रस्य संभवः। तद्यथा योगिनीहृदये—

यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी॥
स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः। (१।९-१०)
आत्मनः[1] स्फुरणं पश्येद्यदा सा परमा कला।
अम्बिकारूपमापन्ना परा वाक् समुदीरिता॥
बीजभावस्थितं विश्वं स्फुटीकर्तुं यदोन्मुखी।
वामा विश्वस्य वमनादङ्कुशाकारतां गता॥
इच्छाशक्तिस्तदा सेयं पश्यन्तीवपुषा स्थिता।
ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता॥
ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा।
तत्संहृतिदशायां तु बैन्दवं रूपमाश्रिता॥
प्रत्यावृत्तिक्रमेणैवं शृङ्गाटवपुरुज्ज्वला।

---

१. "वामा ज्येष्ठा रौद्री" (श्लो० २३) इति कामकलाविलासश्लोकव्याख्यानप्रसङ्गे चिद्वल्लीकारेण नटनानन्देन प्रकरणमेतदन्यथा व्याख्यातम्—"श्रीपराभट्टारिकामयमिदमेव बिन्दुतत्त्वमूर्ध्वाधोमुखनवयोन्यात्मकश्रीचक्रमभवदित्याह—वामेति। वामा ज्येष्ठा रौद्री अम्बिका; चकारात् परा शक्तिश्च। इमाः पञ्च शक्तयोऽनुत्तरांशभूताः। अनुत्तरांशाः श्रीचक्रान्तर्गताधोमुखानि पञ्च त्रिकोणानि।....इच्छाज्ञानक्रियाशान्ता इमाश्चतस्रः शक्तय उत्तरावयवा ऊर्ध्वमुखत्रिकोणचतुष्टयरूपाः। अयं भावः—पराविलसनरूपा एता वामा-ज्येष्ठा-रौद्री-अम्बिका-पराः, तथा इच्छाज्ञानक्रियाशान्ताश्च;........एतच्छक्तिनवकमयं नवत्रिकोणचक्रमिति। एतच्चतुःशक्त्याम्—"आत्मनः स्फुरणं पश्येद्यदा सा परमा कला" इत्यारभ्य "वैखरी विश्वविग्रहा" इत्यन्तेन सम्यङ् निरूपितम्" (पृ० ४५) इति। एतेन पञ्चशक्तिचतुर्वह्न्यात्मकं श्रीचक्रं पश्यन्तीमयमित्युपपाद्यते। एतच्च व्याख्यानं प्रकरणविरुद्धं व्याख्यानान्तरविरुद्धं च प्रतीयते। एकादशधा पश्यन्ती वाग् मातृकाप्रकरणे प्रदर्शिता। तदेवात्र प्रकृतम्।

क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ॥ ( १।३६-४० )

नित्याषोडशिकार्णवेऽपि—

वामा शिखा ततो ज्येष्ठा शृङ्गाटाकारतां गता ॥
रौद्री तु परमेशानि जगद्ग्रसनरूपिणी । ( ४।९-१० )
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥ ( ४।११ )

इति स एवार्थ उक्तः, स्फुटीकृतश्च श्रीमता दीपकाचार्येण त्रिपुरसुन्दरीदण्डके—''झटिति यदि सर्वशून्यतान्तर्भूमौ निजेच्छासमुन्मेषसमयं समासाद्य बालाग्रकोटयंशरूपा विगर्भीकृताशेषसंसारबीजाऽनुबध्नासि कन्दं तदा त्वमम्बिका गीयसे । तदनु परिजनितकुटिलाग्रतेजोङ्कुरा जननि वामेति संस्तूयसे । ततो बद्धसुस्पष्टरेखा शिखा ज्येष्ठेति संभाव्यसे । सैव शृङ्गाटकाकारतामागता तदा रौद्रीति विख्याप्यसे ॥'' ( २४ ) इति । अस्यार्थोऽर्थरत्नावल्यां ( पृ० २०४-२०५ ) द्रष्टव्यः । सौभाग्यसुधोदयेऽपि—

अस्याम्बिकांशभूता शक्तिः स्वांशेन शान्तया साकम् ।
समरसभावं याता जाता ज्योतिर्मयी महाबिन्दुः ॥
सैव स्वेच्छोद्रेकाद् वामा वमनादमुष्य विश्वस्य ।
वक्रीकृतनिजरूपा सृष्टिः शृङ्गाटवामरेखा स्यात् ॥
ज्येष्ठा ज्ञानावेशादृज्वी स्थितिरेतदग्ररेखा स्यात् ।
रौद्री क्रियोपरागात् संहृतिरेतस्य दक्षिणा रेखा ॥
इत्थमियं पश्यन्तो जाता माता त्रिकोणरूपेण । ( ३।१-३ ) इति ।

श्रीसिद्धनाथपादैः कुलरत्नशास्त्रे कुलशास्त्रदृष्ट्या सोऽयमर्थ एवं विवृतः—

अनच्कं यत्परं ज्योतिः सर्वप्राणिहृदि स्थितम् ।
इच्छा कुण्डलिनी तस्य तेजो नादसमुद्भवः ॥
इच्छानादसमायोगाद् रौद्री शक्तिरजायत ।
आसामाधाररूपेण चन्द्रबिम्बार्धमम्बिका ॥
क्रमात् कुलोदयो व्याप्तिः कुलौघश्चायमुच्यते । इति ।

इयता प्रबन्धेन चक्रनवकसमष्टिरूपे श्रीचक्रे नवमस्य बैन्दवचक्रस्याष्टमस्य मध्यत्र्यश्रस्य च निष्पत्तिः प्रतिपादिता । अत्र परावाग्रूपं बैन्दवं चक्रम्, पश्यन्तीमध्यमावैखरीरूपं च मध्यत्र्यश्रम् । अयमर्थो योगिनीहृदयेऽन्यत्राप्युक्तः—

शून्याकाराद्विसर्गान्ताद् बिन्दोः प्रस्पन्दसंविदः ॥
प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात् ।
प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम् ॥ ( १।१०-११ )

**बैन्दवमध्यत्र्यश्रयोः समष्टिः कामकला**

बैन्दवमध्यत्र्यश्रयोः समष्टिभूतं रूपमेव वामकेश्वरदर्शने कामकलेति नाम्नाऽभिधीयते । सर्वोऽप्यमर्थः कामकलाविलासे संक्षेपेणैवमुक्तः—

स्फुटशिवशक्तिसमागमबीजाङ्कुररूपिणी परा शक्तिः।
अणुतररूपानुत्तरविमर्शलिपिलक्ष्यविग्रहा भाति ॥
परशिवरविकरनिकरे प्रतिफलति विमर्शदर्पणे विशदे।
प्रतिरुचिरुचिरे कुड्ये चित्तमये निविशते महाबिन्दुः ॥
चित्तमयोऽहङ्कारः सुव्यक्ताहाणंसमरसाकारः।
शिवशक्तिमिथुनपिण्डः कवलीकृतभुवनमण्डलो जयति ॥
सितशोणबिन्दुयुगलं विविक्तशिवशक्तिसंकुचत्प्रसरम्।
वागर्थसृष्टिहेतुः[१] परस्परानुप्रविष्टविस्पष्टम् ॥
बिन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः।
कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू ॥
इति कामकला विद्या देवी चक्रक्रमात्मिका सेयम्।
विदिता येन स मुक्तो भवति महात्रिपुरसुन्दरीरूपः ॥

कामकला नाम त्रिपुरोपासकानां परमं रहस्यम्। मण्डनमिश्रपत्न्या भारत्या कामकलारहस्यं पृष्टेन भगवता शङ्कराचार्येण परकायं प्रविश्य तद्रहस्यं परिज्ञातमिति

---

१. वाङ्मयी सृष्टिर्मातृकाप्रकरणे व्याख्याता विशेषेण, अत्रापि सामान्येन प्रतिपाद्यते। भास्कररायेण वरिवस्यारहस्यप्रकाशे विवृतेऽर्थसृष्टिक्रमे कामकलाविलासस्था इमे श्लोका अपि व्याख्याता भवन्तीति तदत्रोद्ध्रियते—

"यथा सूर्याभिमुखदर्पणे तदन्तःप्रविष्टकिरणादुभयकिरणसंकलनरूपस्तेजोबिन्दुविशेषः कुड्यादौ प्रादुर्भवति, तथा प्राण्यदृष्टवशात् स्वान्तःसंहृतविश्वसिसृक्षया प्रकाशरूपं ब्रह्म स्वीयां शक्तिमवलोकयितुं तदभिमुखीभूय तदन्तस्तेजोरूपेण प्रविश्य शुक्लबिन्दुभावमयते। ततस्तं बिन्दुं रक्तरूपा शक्तिः प्रविशति। तेन संमिश्रबिन्दुरुच्छूनो भवति। तत्र च हार्दकलारूपोऽप्येकः पदार्थविशेषो भवति। स च बिन्दुः समष्टिरूपेणैकः स्फुटशिवशक्तिसामरस्यनामा कामो रविरग्नीषोमात्मक इत्यादिशब्दैर्व्यवह्रियते, व्यष्टिरूपेण द्वयम्। तत्र शुक्ल इन्दू रक्तोऽग्निरिति बिन्दुद्वयात्मकत्वाद्विसर्ग इति च व्यवह्रियते। अत एव च रवे रात्रावग्नावमावास्यायां चन्द्रे च प्रवेशस्य श्रुत्यादिसिद्धत्वात् समष्टिबिन्दो रवित्वम्। एवं च कामाख्यो बिन्दुर्विसर्गो हार्दकला चेति त्र्यवयवक एकः पदार्थोऽणादिप्रत्याहारवत् कामकलेत्युच्यते। इदमेव च समस्तसृष्टिबीजम्। अत एवाकारहकारयोर्मध्ये सर्ववर्णपाठः। ळकारस्य लकारादभिन्नत्वात् क्षकारस्य कषयोगरूपत्वान्न तद्बहिर्भावः शङ्क्यः। एतन्मूलभूतं ब्रह्म तु तुरीयबिन्दुरित्युच्यते। तद्रूपाभ्यां शून्यस्वरूपाभ्यामकारहकाराभ्यामुत्पन्ना कामकला व्यक्ताव्यक्तविलक्षणाऽहंपदवाच्या। अकारहकारोभयात्मकत्वं शिवशक्तिद्वयरूपत्वं चाहंपदस्य निष्कृष्टोऽर्थः। अत एव तज्जन्यानां सूक्ष्मादिस्थूलान्तानामखिलसृष्टीनामहंपदवाच्यत्वम्" ( पृ० ५०-५१ ) इति। सौभाग्यसुधोदयेऽपि प्रथमे प्रपञ्चे वाङ्मयी ( १।४-२७ ), अर्थमयी च ( १।२८-४९ ) सृष्टिः प्रतिपादिता।

श्रूयते। पामरजनपरिगृहीता कामकला नात्र प्रश्नस्य समाधानस्य वा विषयः, किन्तु "बिन्दुं संकल्प्य वक्त्रं तु" ( १।१८५ ) इत्यादिना नित्याषोडशिकार्णवादौ निगूढं प्रतिपादिता कामकलैवेति तु गुरवः। सेयं कामकला नित्याषोडशिकार्णवादौ द्वादशश्लोक्यां "तामीकाराक्षरोद्धारां...." ( १।८ ) इत्यादिना स्तुता। अस्याः कामकलायाः "त्रिकोणमेकादशमं वह्निगेहं च योनिकम्। शृङ्गाटं चैव एकारं नामभिः परिकीर्तितम्॥" ( त० वि० ३।९४; पृ० १०३ ) इत्यादिनामभिः परिचीयमानमेकाराक्षरमाधारभूतम्। तदेतदुक्तम्—"यदेकादशमाधारं...." ( १।६ ) इति। बौद्धैरपि—"एकाराकृति यद्दिव्यं मध्ये षट्कारभूषितम्। आलयं सर्वसौख्यानां बोधरत्नकरण्डकम्॥" ( त० वि० ३।९४; पृ० १०४ ) इत्यत्रैष विषयः स्मृत इव प्रतीयते। तदेवं परापश्यन्तीमध्यमावैखरीरूपस्य बैन्दवस्य मध्यत्र्यश्रस्य च समष्टिभूतं रूपं कामकला, सैव च वागर्थसृष्टिहेतुरिति स्पष्टीभवति।

**नवयोनिचक्रम्**

ततो नवयोनिचक्रं प्रवर्तते। अत्र च धर्माधर्मौ, आत्मा, अन्तरात्मा, परमात्मा, ज्ञानात्मा चेति चत्वार आत्मानः; मातृमेयौ, प्रमा चेति पदार्थनवकमाविर्भवति। तदुक्तं योगिनीहृदये—

धर्माधर्मौ तथात्मानो मातृमेयौ तथा प्रमा॥
नवयोन्यात्मकं चक्रं चिदानन्दघनं महत्।
चक्रं नवात्मकमिदं नवधा भिन्नमन्त्रकम्॥
बैन्दवासनसंरूढं संवर्तानलचित्कलम्।
अम्बिकारूपमेवेदमष्टारस्थं स्वरावृतम्॥ ( १।१२-१४ )

अनेन तृतीयं चक्रमिदमम्बिकामयम्, अष्टारचक्रमित्यस्यैवापरमभिधानम्, अत्र षोडशस्वराणामवस्थितिर्भवतीति च स्पष्टी भवति। अग्रिमग्रन्थानुगुण्यायात्र बिन्दुत्रिकोणवसुकोणात्मकं चक्रत्रयमम्बिकामयमिति व्याख्येयम्। सौभाग्यसुधोदये तु—"वामादीच्छाद्यष्टप्रतिबिम्बैरष्टकोणमुत्पन्नम्" ( ३।५ ) इत्यत्र वामाज्येष्ठारौद्र्यम्बिकेच्छाज्ञानाक्रियाशान्ताशक्तिप्रतिबिम्बभूतमष्टकोणमित्युक्तम्। सुभगोदयवासनायां चैतद्देव्याः सूक्ष्मं पुर्यष्टकमभ्यधायि (१७ श्लो०)। कामकलाविलासे (२९ श्लो०)शषसपवर्गमयमेतच्चक्रम्।

**दशारद्वयम्**

नवत्रिकोणानां बैन्दवस्य च परितः प्रतीयमानाः प्रभा दश, तद्रूपमेव प्रथमदशारम्। द्वितीयदशारमपि तद्रूपमेवेति पुण्यानन्दामृतानन्दौ। प्रथमदशारे बुद्धीन्द्रियाणां कर्मेन्द्रियाणां चाविर्भाव इति शिवानन्दः ( पृ० २९८ ), भूतानां तन्मात्राणां चेत्यमृतानन्दः। चतुर्दशारप्रस्तारेऽग्रेऽन्तःकरणचतुष्टयेन सह बुद्धिकर्मेन्द्रियाणामाविर्भावदर्शनादत्रामृतानन्दव्याख्यानमेवोचितम्। तत्खण्डनपरं सेतुबन्धव्याख्यानं नात्र समञ्जसम्, प्रथमदशारेण तत्र कस्यापि पदार्थस्य स्फुरणाऽप्रदर्शनात्। द्वितीयदशारे बुद्धिकर्माक्षगोचराणां शब्दादीनां वचनादीनां च स्फुरणम्। योगिनीहृदयदीपिकानुसारमत्र प्रथमदशारे यरलवशषसहळक्ष-

वर्णानामवस्थितिः। अस्मिन् व्याख्यानेऽष्टारादिचतुर्दशकोणान्तेषु चक्रेषु स्थापितेषु वर्णेषु मकारस्यावस्थितिः क्वापि न दृश्यते। अतोऽत्र सेतुबन्धव्याख्यानमेव युक्तिमत्। कामकलाविलासे त्वत्र तवर्गटवर्गयोरवस्थितिः प्रदर्शिता। द्वितीयदशारे च ककारादयो दश वर्णा अवतिष्ठन्ते।

**चतुर्दशारनिष्पत्तिप्रकारः**

बिन्दुत्रिकोणाष्टकोणप्रथमदशारात्मकस्य चक्रचतुष्टयस्य प्रभया समेतं द्वितीयदशारमेव चतुर्दशाररूपेण परिणमते। इतो बुद्धीन्द्रियाणि कर्मेन्द्रियाणि मनोबुद्ध्यहङ्कारचित्तात्मकं चान्तःकरणचतुष्टयं प्रवर्तते। अत्र टकारादिभकारान्ताश्चतुर्दशवर्णा अवतिष्ठन्ते। कामकलाविलासे तु (श्लो० ३१) अकारादिचतुर्दशवर्णात्मकमेतत्। दशारद्वयचतुर्दशारात्मकमेतच्चक्रत्रयं रौद्रीप्रभामयम्। दीपिकायां तु बिन्दुत्रिकोणात्मकं चक्रद्वयमम्बिकामयम्, अष्टकोणादिचतुर्दशकोणान्तं चक्रचतुष्टयं च रौद्रीरूपमिति व्याख्यातम्।

**श्रीचक्रे भूतलिपिविन्यासः**

अत्राष्टकोणादिचतुर्दशकोणान्तेषु चक्रेषु वर्णविन्यासे योगिनीहृदये कामकलाविलासे च प्रकारद्वयमवलोक्यते। योगिनीहृदयेऽष्टकोणे षोडश स्वराः, प्रथमदशारे मकारादिक्षकारान्ता दश वर्णाः, द्वितीयदशारे ककारादयो दश, चतुर्दशारे च टादिभान्ताश्चतुर्दश वर्णाः सन्निवेशिताः। एवं चात्र पञ्चाशदेव वर्णा योगिनीहृदयसंमताः। कामकलाविलासकारेण त्वष्टकोणं शषसपवर्गमयम्, प्रथमदशारं तवर्गटवर्गमयम्, द्वितीयदशारं चवर्गकवर्गमयम्, चतुर्दशारं च चतुर्दशवर्णमयमुपवर्णितम्। आहृत्यात्र द्वाचत्वारिंशद्वर्णानि भवन्ति। एष च क्रमः शारदातिलकप्रतिपादितं (७।१-५) द्वाचत्वारिंशदक्षरमयं नववर्गात्मकं च भूतलिपिक्रममनुसरति। सोऽयं क्रमः सौभाग्यसुधोदये—

> द्व्युत्तरचत्वारिंशद्योनिगणो मध्ययोनिपर्यन्तः।
> नादमयैर्नववर्गैर्मध्यमया तावदक्षरैर्व्याप्तः॥ (३।७)

इत्यत्र मध्यमावाग्रूपोऽभिमतः, वैखरीप्रपञ्चस्याग्रे वक्ष्यमाणत्वात्। स्थूला मध्यमा भूतलिप्याख्येति कामकलाविलासोक्तो विषयो मातृकाप्रकरणे पूर्वमेवोक्तः।

**पञ्चशक्तिचतुर्वह्न्यात्मकं श्रीचक्रम्**

पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भवः प्रतिपाद्यते। स्वाभिमुखाग्रत्रिकोणपरम्परायाः शक्तिसंज्ञात्वम्, विपरीताया वह्निसंज्ञात्वमिति समयः। एवं च नवत्रिकोणात्मकं त्रैपुरं चक्रं चतुर्दशकोणान्तं प्रसरति। एतद्बाह्यगतमष्टपत्रम्, षोडशारम्, चतुर्द्वारोपशोभितं वृत्तत्रयात्मकं भूपुरं च श्रीचक्रस्य बहिरङ्गत्वेनाभिमन्यते नित्याषोडशिकार्णवयोगिनीहृदयादिषु। अत एव नित्याषोडशिकार्णवस्य मातृकासु, वामकेश्वरीमतविवरणे, अर्थरत्नावल्यां च "एतद्बाह्यगतम्" इत्यादिकोऽध्यर्धः श्लोकः श्रीचक्रस्य बहिरङ्गप्रतिपादनपर इति कृत्वा पञ्चशक्तिचतुर्वह्न्यात्मकनवत्रिकोणरूपान्तरङ्गस्वरूपविवेचकतन्महिमप्रतिपादकश्लोकानामन्ते स्थापितः। एवमेव योगिनीहृदयेऽपि

चक्रप्रसरोऽत्रैव परिसमाप्यते। शिष्टस्य बहिरङ्गभूतस्य श्रीचक्रावयवस्य तत्र प्रकारान्तरेणैव व्याख्यानं दृश्यते। तच्चाग्रे वक्ष्यते।

**श्रीचक्रस्य वाक्चतुष्टयात्मकत्वम्**

योगिनीहृदये बैन्दवं चक्रं परावाग्रूपम्, मध्यत्र्यश्रं च पश्यन्तीमध्यमावैखरीरूपमुक्तम्। अष्टारादिचतुर्दशारान्तं च वैखरीवर्णानामवस्थितिर्दर्शिता। कामकलाविलासे तु—

परया पश्यन्त्यापि च मध्यमया स्थूलवर्णरूपिण्या।
एताभिरेकपञ्चाशदक्षरा वैखरी जाता॥ ( श्लो० ३२ )

इत्यनेन स्पष्टीभवति यदत्र बैन्दवं चक्रं परावाग्रूपम्, मध्यत्र्यश्रं पश्यन्तीरूपम्, अष्टारादिचतुर्दशारान्तं चक्रचतुष्टयं च मध्यमावाग्रूपमभिमतमिति। एताभिरेकपञ्चाशदक्षरा वैखरी जायते।

तत्राष्टदलाब्जं कादिभिरष्टभिर्वैखरीवर्गैरुपचितम्, षोडशदलाब्जं च स्वरगणसमुदितम्। रक्तशुक्लमिश्रात्मकं बिन्दुत्रयं सोमसूर्याग्निरूपम्। बिन्दुत्रयमयतेजस्त्रितयमेव भूपुरात्मकान्तिमचक्ररूपेण परिणमते। एवं पश्यन्तीमध्यमावैखरीशक्तय एतावत्पर्यन्तं विजृम्भमाणा त्रिकोणादिभूपुरपर्यन्तं श्रीचक्रात्मना विराजन्ते। सौभाग्यसुधोदयेऽपि श्लोकद्वयेनैष एवार्थ उक्तः (३।८-९)। सुभगोदयवासनायां चतुर्षु श्लोकेषु (१०-१३) स्थूलं शरीरमेव श्रीचक्रात्मना भावयित्वा वृत्तत्रितयं सोमसूर्यकृशान्वात्मकं नेत्रत्रयम्, षोडशदलं भूताक्षमानसात्मकम्, अष्टपत्रं चाव्यक्ताद्यष्टप्रकृतिरूपमुपवर्णितम्। "ज्येष्ठारूपचतुष्कोणं वामारूपभ्रमित्रयम्" (१।१९) इत्यत्र योगिनीहृदये भ्रमित्रयशब्देन तदन्तरालस्थितमष्टदलषोडशदलपद्मद्वयमप्यभिमतं टीकाकाराणाम्। एवं च चक्रत्रयमेतद्वामारूपम्, चतुरस्रं च ज्येष्ठारूपमित्यम्बिकारौद्रीवामाज्येष्ठारूपत्वं श्रीचक्रस्य सिद्ध्यति।

**श्रीचक्रस्य वासनान्तरम्**

योगिनीहृदयेऽत्रैव (१।१९-२१) श्रीचक्रस्य संक्षिप्तं वासनान्तरमुपदिष्टम्। तदनुसारं बैन्दवं चक्रं त्रिकोणं च चिद्रूपम्, अष्टकोणं शान्त्यतीतारूपम्, दशारद्वयं चतुर्दशारं च शान्तिरूपम्, अष्टदलं विद्यारूपम्, षोडशदलं प्रतिष्ठामयम्, चतुष्कोणं च निवृत्त्याकारम्। अत्र शान्त्यतीताशान्तिविद्याप्रतिष्ठानिवृत्तयो गगनादिभूतपञ्चकस्थाः कला अभिमताष्टीकाकाराणाम्। सिद्धान्तागमेषु तु षडध्वप्रकरणे षट्त्रिंशत्तत्त्वेषु पञ्चकलानां व्याप्तिः प्रदर्श्यते। तदनुसारि व्याख्यानमेवात्र प्रकरणानुगतं प्रतिभाति नः।

**श्रीचक्रस्य संहारक्रमः**

इयता प्रघट्टकेन सृष्टिक्रमेण नवचक्रात्मकश्रीचक्रनिष्पत्तिरुक्ता। पूजनं चास्य चक्रस्य संहारक्रमेणैव क्रियते। अतोऽधुना संहारक्रमः प्रपञ्चयते। यतो हि—नवयोन्यादिपृथिव्यन्तं सृष्टिक्रमः, पृथिव्यादिनवयोन्यन्तं संहृतिक्रमः, एतत्समष्टिरूपमेव त्रिपुराचक्रमुच्यते। अस्य च त्रिधा नवधा च भावनं क्रियते। तत्र त्रिधा भावनं सृष्टिक्रमेण,

नवधा भावनं च संहारक्रमेण। एकस्य वह्नेर्द्वयोः शक्त्योश्च संयोगे सति बैन्दवत्रिकोणाष्टकोणैर्नवयोनिचक्रं भवतीत्येकः प्रकारः, वह्नित्रये शक्तित्रये च कृते सति दशारचक्रद्वयं चतुर्दशारचक्रं च निष्पद्यत इति द्वितीयः प्रकारः, अष्टदलकमलेन षोडशदलकमलेन चोपेतं चतुरस्रत्रयात्मकं तृतीयं चक्रमिति तृतीयः प्रकारः। एवं सृष्टिक्रमेण चक्रस्य त्रिप्रकारत्वमुक्तं भवति। अथ संहारक्रमेण तस्य नवधा भावनम्। तत्र भूत्रयेण प्रथमम्, षोडशारकं द्वितीयम्, अष्टदलं तृतीयम्, मनुकोणं चतुर्थम्, दशकोणं पञ्चमम्, दशारकं षष्ठम्, वसुकोणं सप्तमम्, मध्यत्र्यश्रमष्टमम्, त्र्यश्रमध्यं नवममिति। त्रैलोक्यमोहनं सर्वाशापरिपूरकं सर्वसंक्षोभणं सर्वसौभाग्यदायकं सर्वार्थसाधकं सर्वरक्षाकरं सर्वरोगहरं सर्वसिद्धिकरं सर्वानन्दमयं चेति क्रमेण तेषां नामानि ज्ञेयानि। परिपूर्णेऽस्मिन् महाचक्रे महादेवी महात्रिपुरसुन्दरी परिपूज्यते।

**श्रीचक्रनिवासिन्यः शक्तयः**

त्रैलोक्यमोहनाद्येषु नवचक्रेषु क्रमेण नादो बिन्दुः कला ज्येष्ठा रौद्री वामा विषघ्नी दूतरी सर्वानन्दा चेति नवशक्तयोऽवतिष्ठन्ते। सृष्टिक्रमे त्रिकोणादिचतुरस्रान्तानां चक्राणां प्रकाशांशाम्बिकारौद्रीज्येष्ठावामारूपत्वमुक्तम्। अत्र संहारक्रमे चतुरस्रादिबैन्दवान्तानां तेषां विमर्शांशशान्ता-इच्छा-ज्ञाना-क्रियारूपत्वं प्रतिपाद्यते। तत्र नादबिन्दुरूपचतुरस्रषोडशदलात्मकं चक्रद्वयं शान्ताशक्तिमयम्, कलारूपमष्टदलपद्ममिच्छाशक्तिमयम्, ज्येष्ठारूपं चतुर्दशारं ज्ञानाशक्तिमयम्, रौद्रीवामाविषघ्नीदूतरीसर्वानन्दाख्यशक्तिपञ्चकमयं च द्विदशाराष्टकोणत्रिकोणबैन्दवाख्यचक्रपञ्चकं क्रियाशक्तिमयम्। एवं सृष्टिक्रमे संहारक्रमे च चतुष्कलामयस्य श्रीचक्रस्य कामकलारूपत्वमायाति। पूर्वं बिन्दुगर्भितस्य मध्यत्र्यश्रस्य कामकलारूपत्वमुपपादितम्। तेन प्रसृतस्य सृष्ट्यात्मकस्य संहारात्मकस्य च परिपूर्णस्य चक्रस्यापि चतुष्कलमयत्वात् कामकलारूपत्वमेवेति भावः।

## द्विविधः क्रमोदयः

"स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य संभवः" (यो० १।१०) इति प्रतिपादितम्। नैतावदेव। आवरणचक्रान्तर्गतशक्तिनिकरस्तन्निकटस्थितश्रीगुरुमण्डलमपि च श्रीदेव्यवयवस्फूर्जितमेवेत्याह कामकलाविलासकारः—

क्रमणं पदविक्षेपः क्रमोदयस्तेन कथ्यते द्वेधा।
आवरणं गुरुपङ्क्तिद्वयमिदमम्बापदाम्बुजप्रसरः॥ (श्लो० ३५) इति।

अत्र क्रमणं पदक्रमः। स च द्विविधः – पदविक्षेपरूपः, क्रमोदयरूपश्च। तत्र पदविक्षेपो नाम सुन्दर्या अनन्तकोटिकिरणात्मकानन्तशक्तिजननसामर्थ्यम्। क्रमोदयो नाम दिव्यसिद्धमानवौघरूपानन्तप्रकाशात्मकश्रीगुरुमण्डलात्मकतया प्रसरणम्। अत्र पदविक्षेपः पूर्वं प्रतिपाद्यते।

**१. श्रीचक्रस्था आवरणदेवताः**

कामकलाविलासे—

सेयं परा महेशी चक्राकारेण परिणमेत यथा।
तद्देहावयवानां परिणतिरावरणदेवताः सर्वाः॥ (श्लो० ३६)

इत्यादिना सन्दर्भेण सृष्टिक्रमेणावरणदेवताः प्रदर्शिताः, नित्याषोडशिकार्णवसुभगोदयवासनादिषु तु संहारक्रमेण। पूजोपयोगितया संहारक्रमेणैव ता अत्र प्रदर्श्यन्ते। तत्र त्रैलोक्यमोहनाभिधेये चतुरस्रेऽणिमादयो दश ब्रह्माण्याद्यष्टौ च प्रकटाह्वा योगिन्यः पूज्यन्ते। सर्वाशापरिपूरकाभिधेये षोडशारे गुप्ताह्वाः कामाकर्षिण्याद्याः षोडशदेव्यो भूतेन्द्रियमनोमयविकारषोडशकरूपा योगिन्यः पूज्यन्ते। सर्वसंक्षोभणाभिधमष्टारं गुप्ततरयोगिनीसंज्ञा अनङ्गकुसुमाद्या अव्यक्तमहदहङ्कृतितन्मात्राकारा अष्टौ देव्योऽध्यासते। सर्वसौभाग्याभिधेये चतुर्दशारे सम्प्रदाययोगिन्यः सर्वसंक्षोभिणीप्रभृतयश्चतुर्दशकरणरूपाश्चिन्तनीयाः। सर्वार्थसाधकाभिधेये द्वितीयदशारे कुलोत्तीर्णाह्वा देवीर्धीकर्मेन्द्रियविषयमयाः सर्वसिद्धिप्रदाद्या दश योगिन्यः पूज्याः। सर्वरक्षाकराभिधेयं प्रथमदशारं निगर्भाख्या भूततन्मात्रात्मकाः सर्वज्ञाद्या दश देव्योऽधितिष्ठन्ति। सर्वरोगहराभिधेयेऽष्टारे रहस्याख्याः पुर्यष्टकरूपा वशिन्याद्या अष्टौ योगिन्योऽवतिष्ठन्ते। सर्वसिद्धिप्रदाभिधेये त्रिकोणे परापररहस्यकाः कामेश्वरीवज्रेशीभगमालिन्यः पूज्याः। सर्वानन्दाभिधेये बैन्दवे चक्रेऽतिरहस्याख्या महात्रिपुरसुन्दरी पूज्यते। अत्र महायोनिसर्वानन्दमयस्थानगतमहादेवतायाः षडङ्गावरणाद्बाह्यदेशे पश्चिमोत्तरपौरस्त्यदक्षिणाशाचतुष्टये जम्भमोहवशास्तम्भपदचतुष्टयोपेतं बाणधनुःपाशाङ्कुशाख्यमायुधचतुष्टयं पूजनीयम्। एतदपि परापररहस्याख्ययोगिनीमयमिति सुभगोदयवासना (श्लो० ५४)। अणिमाद्यावरणदेवतानाम प्रपञ्चो नित्याषोडशिकार्णवसुभगोदयादिषु द्रष्टव्यः। प्रकटाह्वाप्रभृतय एता देव्यश्चक्रेश्वरीपदेनोक्ताः सुभगोदयवासनायाम् (श्लो० ४७)। सोऽयं विषयो योगिनीहृदयेऽपि पूजापटले (श्लो० ९३, ११६-१६८) विस्तरेण प्रदर्शितः। एतावान् विशेषः—श्रीचक्रद्वारशाखयोर्गणेशदूतरीक्षेत्रेशवटुकपूजनमादिष्टमत्रेति (३।११२)। एता देवताः संकेतपद्धत्यामेवं स्तुताः—

द्वैताद्वैतमहामोहशर्वरीक्षपणक्षमः।
भास्वानिव जयत्येको गणेशो दूतरीयुतः॥
प्रतिभायाः परोल्लासो निशाकर इवापरः।
दूतीयुक्तः स जयति वटुकस्ताण्डवान्वितः॥ (पृ० २६८)।

नित्याषोडशिकार्णवे षोडशनित्यानामोपदेशो विद्यते। तासु कामेश्वरीभगमालिन्योरेवावरणान्तःपातित्वम्। शिष्टानां पूजनादिकं तत्र नोपदिष्टम्। योगिनीहृदये तु (३।१६९) शिष्टा नित्यास्त्रिकोणे चतुरस्रान्तराले वा पूज्या इत्युक्तम्। नवचक्रेश्वर्यो योगिनीहृदये (२।९-१२) त्रिपुरा-त्रिपुरेश्वरी-त्रिपुरसुन्दरी-त्रिपुरवासिनी-त्रिपुराश्री-त्रिपुरमालिनी-त्रिपुरासिद्धा-त्रिपुराम्बिका-महात्रिपुरसुन्दरीनामभिरुपदिष्टाः। नित्याषोड-

शिकार्णवे करशुद्धिकरीप्रभृतयोऽष्टौ विद्या उद्धृताः। तासां नामानि चार्थरत्नावल्यां संकेतपद्धतिप्रमाणेनैवं प्रदर्शितानि—

त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी।
श्रीर्मालिनी च सिद्धाम्बा त्वष्टमी त्रिपुराम्बिका॥ ( पृ० १०७ )

सुभगोदये तु 'महात्रिपुरसुन्दरी' इति चतुर्थचरणपाठः ( पृ० २९० )। तथा चात्र योगिनीहृदयाभिहिता ( २।९-१२ ) नव चक्रेश्वर्यः स्वीक्रियन्ते। नित्याषोडशिकार्णवे योगिनीहृदयोद्धृता ( २।४ ) सप्तमी मूर्तिविद्या न दृश्यते, अतोऽर्थरत्नावल्यामष्टौ देव्यो व्याख्याताः। अत्रैवं प्रतीमः—नवचक्रेश्वरीणां त्रिपुराप्रभृतीनां करशुद्ध्यादिविद्याभिः साकं सम्बन्धः पराक्कालिक इति। करशुद्ध्यादिविद्या आवाहनादिषु कर्मसु विनियुक्ता इति न तेषां कश्चन चक्रेश्वरीभिः सम्बन्धः प्रतीयते।

## २. गुरुपङ्क्तिस्तत्समाराधनस्थानं च

अथ क्रमोदयो वर्ण्यते। दिव्यसिद्धमानवौघत्रयवती गुरुमण्डलाभिधा गुरुपङ्क्तिरावरणपूजायामन्तस्त्रिकोणे पूज्येति योगिनीहृदये ( ३।११३ ) दृश्यते। ऋजुविमर्शिन्यामपि ( पृ० २२५ )—"प्राङ्मध्ययोन्योः पुनरन्तराले संपूजयेत् प्राग् गुरुपादपङ्क्तिम् ( ९।१४ ) इति प्रपञ्चसारप्रामाण्येन तदेव गुरुपङ्क्तिसमाराधनस्थानं निर्णीतम्। चिदानन्दघनपरमार्थः प्रकाशविमर्शात्मा परमकारुणिकः परमेश्वरः स्वयमेव स्वात्मानं कामकलाबिन्दुरूपकामेश्वरकामेश्वरीरूपदिव्यमिथुनप्रमुखदिव्यसिद्धमानवौघादिक्रमावतीर्णो गुरुमण्डलात्मा सन् कतिचन भक्तिभाजः संरक्षति। गुरुमण्डलमेतन्नित्याषोडशिकार्णवे ( ४।१९ ) पारम्पर्यपदेन सूचितम्। व्याख्यातं च तद्विस्तरेण तत्रैव शिवानन्दविद्यानन्दाभ्याम्। पारम्पर्यं हि दिव्यसिद्धमानवभेदेन त्रिप्रकारम्। "इह विद्यायां सन्तानद्वयमस्ति—कामराजसन्तानो[1] लोपामुद्रासन्तान इति। विद्यायाः सकीलनिष्कीलभेदेन सन्तानद्वयायतिः। तयोः कामराजसन्तानः सकीलविद्यानुबन्धी विच्छिन्नश्च। विच्छेदो नाम पारम्पर्यवियोगः। इतरो [2]निष्कीलविद्यानुबन्धी लोपामुद्राऽगस्त्यादिपरिगृहीतत्वादविच्छिन्नश्च" (पृ० २१८) इति शिवानन्दः। "इह श्रीविद्यारत्नावगमे साधनद्वयमस्ति—कामराजसन्तानं लोपामुद्रासन्तानं चेति। कामराजसन्तानक्रमस्तु सकलविद्यानुसन्ध्यविच्छिन्न इति प्राचीनगुरवोऽप्याचक्षते। लोपामुद्रासन्तानक्रमस्तु विच्छिन्नतया प्रवर्तत इति वर्णयन्ति" ( पृ० ७१ ) इति चिद्वल्लीकारो नटनानन्दः। "इह पुण्यानन्दा हादिविद्यायामत्यन्ताभिमानिनः" ( पृ० ३६ ) इति चिद्वल्लीवचनेनैव ज्ञायते कामकलाविलासो हादिविद्याग्रन्थ इति।

---

१. कामराजसन्तानः कादिः, लोपामुद्रासन्तानो हादिः। तत्र—"हादेः कामेश्वरप्रधानत्वात् कादेश्च कामेश्वरीप्रधानत्वात्" इत्यरुणामोदिनीकारः सौन्दर्यलहरीव्याख्याता ( पृ० १६५ )।

२. "निष्कीलीकरणमन्त्रस्य हादिविद्याधिकारे पाठेऽपि गुणोपसंहरन्यायेन सर्वाङ्गतानपायात्" ( पृ० ६३-६४ ) इति सेतुबन्धोक्तिरत्रैव स्वरसतः प्रवर्तते।

चिद्वल्लीकारस्तु कादिविद्याभिमानी प्रतीयते, तेन हादिविद्याक्रमस्य विच्छिन्नत्वोपपादनात्। शिवानन्दादिभिस्तु कादिविद्याक्रम एव विच्छिन्नतयोपपाद्यते। प्रपञ्चसारे शारदातिलके च हादिविद्यैवोद्धृता। सौन्दर्यलहर्यामपि कादिविद्यातः पूर्वं हादिविद्योद्धारः। अतो हादिविद्यैव प्राचीनेति वयमवोचाम। अथापि नित्याषोडशिकार्णवे[1] कादिविद्योद्धृता। दृश्यते च शाङ्करमठपरम्परासु प्राधान्येन कादिविद्योपासना। अतो हादिकादिविद्ययोः प्राचीनार्वाचीनत्वविशयः साम्प्रतं निर्णेतुमशक्यः। दिव्यौघसिद्धौघमानवौघक्रमो हादिविद्यानुसारी प्रतिपादित ऋजुविमर्शिन्यामर्थरत्नावल्यां ज्ञानदीपविमर्शिन्यां सौभाग्यसुधोदये च। स च प्रदर्शितोऽस्माभिरन्यत्र[2]। कादिविद्यायां त्वेष क्रमोऽन्वेषणीयः। "यथा दीपकसन्ताने श्रीमती लोपामुद्राऽगस्त्यपत्नी प्रधानभूता, विनष्टसन्तानं पुनरुत्थाप्य प्रवर्तयतीति कृत्वा सा प्रधानभूता तत्र; तथात्रापि क्लीमानन्दसंज्ञः कामदेवो रतिभर्ता विनष्टसन्तानं पुनः पुनः प्रवर्तयतीति तन्नामाङ्कितमिदं सन्तानम्" ( पृ० २२४-२२५ ) [3]इत्यर्थरत्नावलीकारः। इतः पराग्भवा व्यवस्थिता सिद्धौघमानवौघपरम्पराऽन्वेषणीया कादिविद्यायाः।

---

१. नित्याषोडशिकार्णवे कादिविद्या योगिनीहृदये च हादिविद्योद्धृतेति मूलग्रन्थस्वारस्यात् प्रतीयते। टीकाकाराणामत्र वर्तते मतवैभिन्न्यम्। शिवानन्देन नित्याषोडशिकार्णवो हादिविद्यापरत्वेन व्याख्यायते, विद्यानन्देन पूर्वं कादिविद्यापरत्वेन व्याख्याय ग्रन्थं तदनु हादिविद्योद्धृता। भास्कररायेण कादिविद्यैव व्याख्यायते। स योगिनीहृदयमपि कादिविद्यापरत्वेनैव व्याख्याति। अमृतानन्दस्तु तत्र हादिविद्यामुद्धरति। नित्याषोडशिकार्णवे "मादनं तदधः शक्तिः" ( १।१११ ) इत्यत्र मादनशक्तिपदयोर्यथा ककारैकारयोरेव स्वारस्यम्, तथैव योगिनीहृदये सम्पूर्णस्य सम्प्रदायार्थप्रकरणस्य ( २।२६-४८ ) हादिविद्यायामेव स्वारस्यम्। विद्यास्थैश्चन्द्रबीजैस्तु" ( २।४१ ) इत्यत्र बहुवचनोपात्तस्य सकारत्रयस्य हादिविद्यायामेवोपलब्धेः। "बहुवचनाभ्यामपि द्वित्वसंख्यैव कथ्यते" ( पृ० १३८ ) इति भास्कररायवाचोयुक्तिः, मादनशक्तिपदाभ्यां हकारसकारावत्र ग्राह्याविति शिवानन्द(ऋजु०, पृ० १०९ )व्याख्यानं च सममेव तयोः स्वस्वसम्प्रदायानुगमनमात्रप्रख्यापकम्।

२. द्रष्टव्यम्—"त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च", सारस्वती सुषमा, व० २०, अ० २, पृ० २२।

३. "एतेन हादिविद्यायामेवास्मिंस्तन्त्रे विषयतां वर्णयन्तो निरस्ताः।....षष्ठश्लोके तैरेव विद्यान्तर्गतवर्णस्यैषा स्तुतिरित्युक्तेश्च" ( पृ० १७ ) इति भास्कररायोक्तिर्न क्षोदक्षमा। यतो हि शिवानन्देनैव तन्त्रस्यास्य हादिविद्याविषयता प्रतिपाद्यते, न विद्यानन्देन। विद्यान्तर्गतवर्णस्यैषा स्तुतिरित्युक्तिश्च विद्यानन्दस्य, न शिवानन्दस्येति।

**दिव्यौघावतारक्रमः**

अथात्र दिव्यौघावतारक्रमः[1] प्रदर्श्यते। मध्यत्र्यश्रमध्यस्थानगतोड्याणपीठस्थितसमस्तविद्याभिधेयमहात्रिपुरसुन्दरीदेवीविमृष्टरूपो महाप्रकाशरूपः परमानन्दलक्षणः परमशिव एव प्रथमो गुरुः। अस्य गुरोः श्रीचर्यानाथ इति संज्ञा। स च कामेश्वरः स्वाभिन्नायै विमर्शाख्यायै स्वशक्त्यै कामेश्वर्यै कृतादौ प्रथममुपदिदेश। मध्यत्र्यश्राग्रकोणगतकामरूपपीठस्थितवाग्भवबीजाभिधेयकामेश्वरीदेवीविमृष्टरूपश्रीमदोड्डुनाथदेवस्त्रेतागुरुः। मध्यत्र्यश्रदक्षिणकोणगतजालन्धरपीठस्थितकामराजबीजाभिधेयवज्रेश्वरीदेवीविमृष्टरूपश्रीषष्ठनाथदेवो द्वापरगुरुः। मध्यत्र्यश्रोत्तरकोणगतपूर्णगिरिपीठस्थितशक्तिबीजाभिधेयभगमालिनीदेवीविमृष्टरूपश्रीमित्रेशनाथदेवः कलिगुरुः। अर्थरत्नावल्यां त्रेताद्वापरकलिगुरव इमे ज्येष्ठमध्यमबालाख्या मन्त्रविद्यामुद्रागुरव उक्ताः (पृ० २२०)। दिव्यौघपरम्परायां पञ्चमो गुरुरर्थरत्नावल्यां क्रोधमुनिभट्टारकः। एवं पञ्चैवात्र दिव्यौघगुरवः प्रदर्शिताः। ते च समानाः कादिविद्यायां हादिविद्यायां च। ऋजुविमर्शिनीकारेण तु पञ्चमो दिव्यौघगुरुर्न व्याख्यातः। लोपामुद्रागस्त्ययोरत्र दिव्यौघे परिगणनम्। नामानि चात्र षडेव दृश्यन्ते। एवमेव चिद्वल्यामपि (७१-७२)। उपक्रमे च सप्त दिव्यौघगुरव इत्युक्तम्। कादिविद्यागुरुत्वेन सुप्रथितः क्रोधमुनिभट्टारकोऽत्र शिवानन्देन सावहितं परित्यक्त इव प्रतीयते।

**आन्तरं पीठचतुष्टयम्**

अत्र कामरूप-पूर्णगिरि-जालन्धर-ओड्याणाख्याश्चत्वारः पीठाः सन्ति प्रदर्शिताः। अम्बिकाद्याः शान्ताद्याश्च चतस्रः शक्तयः क्रमेण परस्परं सामरस्यमापन्नाः पीठचतुष्टयरूपेण परिणमन्त इत्याद्युक्तं योगिनीहृदये। तद्यथा—

भासनाद्विश्वरूपस्य स्वरूपे बाह्यतोऽपि च।
एताश्चतस्रः शक्त्यस्तु का पू जा ओ इति क्रमात्॥
पीठाः कन्दे[2] पदे रूपे रूपातीते क्रमात् स्थिताः।
चतुरस्रं तथा बिन्दुषट्कयुक्तं च वृत्तकम्॥
अर्धचन्द्रं त्रिकोणं च रूपाण्येषां क्रमेण तु।
पीतो धूम्रस्तथा श्वेतो रक्तो रूपं च कीर्तितम्॥ (१।४१-४३) इति।

**पीठचतुष्टयवर्तीनि स्वयम्भ्वादीनि लिङ्गानि**

एतेषु मनोबुद्ध्यहङ्कारचित्तात्मकेषु कामरूपादिपीठेषु तत्तद्वृत्तिचतुष्टयमयानि लिङ्गानि स्वयम्भ्वादीनि वसन्तीत्युक्तं सौभाग्यसुधोदये—

---

१. अयं क्रम ऋजुविमर्शिनीस्थः (पृ० २१८-२२१)। सुभगोदये (पृ० २९५), सौभाग्यसुधोदये (पृ० ३१८-३१९) चात्र विशेषः कश्चनावलोक्यते। तत्रैव द्रष्टव्यः सः।

२. कन्दशब्दोऽत्र पिण्डशब्दपर्यायः। पिण्ड-पद-रूप-रूपातीतपदार्थो जयप्रकरणे टिप्पण्यां द्रष्टव्यः। योगिनीहृदयेऽन्यत्र—"पिण्डरूपपदग्रन्थिभेदनाद् विघ्नभेदकम्" (३।९४) इत्येवमान्तरविघ्नरूपेणैते वर्णिताः। अस्यार्थस्तत्रैव दीपिकायां द्रष्टव्यः। अत एव "पिण्डादिपदविश्रान्ति-

पुनरेव कामपीठे तदग्रकोणे स्थिते मनोरूपे ।
प्रतिफलितं तज्ज्योतिः स्वयम्भुलिङ्गं समीहितं सद्भिः॥
दक्षिणकोणेऽहङ्कृतिरूपे जालन्धरे तु संक्रान्तम् ।
परधाम बाणलिङ्गं जातं संक्रान्त्युपाधिभेदवशात् ॥
मध्यत्रिकोणकोणे वामे श्रीपूर्णपीठमेतस्मिन् ।
बुद्धिमये परतेजः प्रतिफलितं त्वितरलिङ्गतां यातम् ॥
चित्तमये श्रीपीठे ज्योतिर्बिन्दौ यदस्य संक्रान्तम् ।
प्रतिफलितं परधाम्नः परलिङ्गं तत्प्रकीर्त्यते प्राज्ञैः ॥

योगिनीहृदयेऽपि—

स्वयम्भुर्बाणलिङ्गं च इतरं च परं पुनः ।
पीठेष्वेतानि लिङ्गानि संस्थितानि वरानने ॥
हेमबन्धूककुसुमशरच्चन्द्रनिभानि तु ।
स्वरावृतं त्रिकूटं च महालिङ्गं स्वयम्भुवम् ॥
कादितान्ताक्षरोपेतं बाणलिङ्गं त्रिकोणकम् ।
कदम्बगोलकाकारं थादिसान्ताक्षरावृतम् ॥
सूक्ष्मरूपं समस्तार्णवृतं परमलिङ्गकम् ।
बिन्दुरूपं परानन्दकन्दं नित्यपदोदितम् ॥ ( १।४४-४७ )

इत्युक्तम् । अत्र ऋजुविमर्शिनी( पृ० १७१ )-अर्थरत्नावली( पृ० १७१ )-सुभगोदय ( पृ० २८७ )-निर्दिष्टो वर्णानामकथक्रमोऽपि सूचितः ।

**श्रीचक्रस्य धामत्रयात्मकत्वं सृष्ट्याद्यात्मकत्वं च**

सुभगोदये ( पृ० २९५ ) कामरूपपीठमग्निचक्रात्मकम्, जालन्धरपीठं सूर्यचक्रात्मकम्, पूर्णगिरिः सोमचक्रात्मकम्, ओड्याणपीठं च ब्रह्मचक्रात्मकं वर्णितम् । नित्याषोडशिकार्णवे ऋजुविमर्शिन्यामर्थरत्नावल्यां च सम्पूर्णं चक्रमेव सोमसूर्याग्निरूपेण सृष्टिस्थितिसंहारादिरूपेण च प्रदर्शितम् । तद्यथा—

ततः सृष्टिर्महाचक्रं तृतीयं तु हुताशनम् ।
मध्यं स्थितिर्द्वितीयं तु संहारः प्रथमं च यत् ॥ ( १।४२ )

चतुरस्रं पद्मद्वयं च हुताशनाधिष्ठातृकं सृष्टिचक्रम्, चतुर्दशारं दशारद्वयं च सूर्याधिष्ठातृकं स्थितिचक्रम्, अष्टारं मध्यं त्र्यश्रं च सोमाधिष्ठातृकं संहारचक्रमित्यर्थः । ऋजुविमर्शिन्यां

---

सौन्दर्यगुणसंयुता" ( ३।१३७ ) इत्यत्रामृतानन्देन—"पिण्डे मुक्ताः पदे मुक्ता रूपे मुक्ता षडानन । रूपातीते च ये मुक्तास्ते मुक्ता नात्र संशयः ॥" ( पृ० २८५ ) इति प्रामाणिकवचनमुपस्थापितम्, विघ्नभूतेभ्यः पिण्डादिभ्यो मुक्तस्यैव वस्तुतो मुक्तत्वात् ।

त्रैपुरं चक्रमेतदेवमुपवर्णितम्—"त्रिभेदभिन्नं सृष्टिस्थितिसंहारात्मकं सोमसूर्यवह्न्यधिष्ठातृकं शक्तिकामवाग्भवबीजप्रधानं ब्रह्मविष्णुरुद्रमयं जाग्रत्स्वप्नसुषुप्तिरूपं पृथिव्यन्तरिक्षाद्युपलक्षितमकारोकारमकारविग्रहमृगादिशब्दराश्युज्ज्वलं क्रियाज्ञानेच्छापरपर्यायं सत्त्वरजस्तमःस्वभावं सर्वदेवतासारं विश्वात्मकमिदं त्रैपुरं महाचक्रमिति" (पृ० ६४) इति ।

**श्रीचक्रस्य चतूरूपत्वम्**

ऋजुविमर्शिन्युद्धृतेषु (पृ० ६५-६६) संकेतपद्धतिवचनेषु तु चक्रस्य चतूरूपत्वमुपवर्णितम् । तद्यथा—

ब्राह्म्याद्यष्टौ च यद्युक्तमनङ्गकुसुमात्मकम् ।
सृष्टिचक्रं तथा प्रोक्तं स्थितिचक्रं ततः परम् ॥
चतुर्दशारं प्रथमं दशारं पुनरेव तत् ।
स्थितिचक्रं तथा प्रोक्तं संहारमपि संशृणु ॥
वशिन्यष्टौ तदादिस्थं त्र्यश्रं मध्यं क्रमात् पुनः ।
संहारस्त्रिविधः प्रोक्तस्त्वनाख्या सर्वचक्रगा ॥ इति ।

अर्थरत्नावलीधृते संकेतपद्धतिवचने चक्रस्य चतुराम्नायरूपत्वं लक्ष्यते । तद्यथा—

पूर्वाम्नायः सृष्टिरूपः स्थितिरूपस्तु दक्षिणः ।
संहारः पश्चिमो ज्ञेयो ह्यनाख्यस्तूत्तरः स्मृतः ॥ (पृ० ६५) ।

सकलोऽयमर्थः सौभाग्यसुधोदये संक्षेपेण संगृहीतः । तद्यथा—

चतुरश्रषोडशाष्टच्छदात्मकचक्रत्रयं त्रिधा सृष्टिः ।
पूर्वाम्नायो वाग्भवबीजं तद्वत् त्रिमूर्तिदैवत्यम् ॥
मनुकोणं द्विदशारं त्रितयमिदं कामराजबीजं स्यात् ।
स्थितिरत्र देवतानां त्रयमपि तद्वच्च दक्षिणाम्नायः ॥
अष्टत्रिकोणमध्यत्रितयं तार्तीयमेष संहारः ।
अत्रापि देवतात्रयमासीदयमेव पश्चिमाम्नायः ।
सर्वमनाख्यारूपं तुर्यं शिवशक्तिदेवताधिकृतम् ।
स्यादुत्तरसमयात्मकमेवं स्रोतोमयं महाचक्रम् ॥ (३।१०-१३)

**श्रीचक्रस्य नवनित्यामयत्वं षोडशनित्यामयत्वं च**

अर्थरत्नावल्यां श्रीचक्रस्य नवनित्यामयत्वं षोडशनित्यामयत्वं चोपवर्णितम् । तद्यथा—"अन्यच्च सृष्ट्यादित्रितयं प्रत्येकं त्रैविध्यात्मकं नवनित्यामयमवगन्तव्यम् । पुनरेकैकस्य समष्टिव्यष्ट्यात्मना पञ्चरूपत्वमवगन्तव्यम् । यथा समष्टिसृष्टिः, सृष्टिसृष्टिः, स्थितिसृष्टिः, संहारसृष्टिः, अनाख्येति सृष्टिपञ्चकं पूर्वे, एवं स्थितिपञ्चकं दक्षिणे, तथा संहारपञ्चकं पश्चिमे । अनाख्यारूपमुत्तरमेकरूपमेव । एवं चक्रस्य त्रिपञ्चीकरणसमष्टिव्यष्ट्यात्मना षोडशात्मकत्वात् षोडशनित्यारूपत्वमवगन्तव्यम्" (पृ० ६५) इति । अयं चार्थः संकेतपद्धतिसंमत इति तत्रैवोद्धृतेन तद्वचनेन ज्ञायते—

तुर्यात्मकं पञ्चयुतं योगिनीचक्रमण्डलम् ।
यो जानाति स मुक्तात्मा सोऽन्वयी देशिकाग्रणीः ।। (पृ० ६६) इति ।

**श्रीचक्रस्य त्रिधा भावनम्**

एवंविधस्य श्रीचक्रस्य सकल-सकलनिष्कल-निष्कलरूपेण त्रिधा भावनं योगिनीहृदये समुपदिष्टम् । तद्यथा—

अकुले विषुसंज्ञे[1] च शाक्ते वह्नौ तथा पुनः ।
नाभावनाहते शुद्धे लम्बिकाग्रे भ्रुवोऽन्तरे ।।
बिन्दौ तदर्धे रोधिन्यां नादे नादान्त एव च ।
शक्तौ पुनर्व्यापिकायां समनोन्मनिगोचरे ।।
महाबिन्दौ पुनश्चैवं त्रिधा चक्रं तु भावयेत् ।
आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ।।
उन्मन्यन्तं परे स्थाने निष्कलं च त्रिधा स्थितम् । (१।२५-२८)

अत एव श्रीचक्रस्य नवाधाररूपत्वं नवनादमयत्वं च प्रतिपाद्यते तत्र तत्र । एतत् त्रिधा विभावनमेव श्रीचक्रस्यान्तरं पूजनमुच्यते ।

## सुन्दर्युपास्तिः

तत्र सुन्दर्युपास्तिस्तावद् द्विविधा—बहिर्यागान्तर्यागभेदात् । बहिर्यागः पात्रासादनादिशान्तिस्तवान्तः कर्मसमूहः । अन्तर्यागो नामाधाराद्ब्राजदन्तान्तं तेजस्तन्तोर्विभावनम्, मानसी देवपूजा वा; तस्य क्रम इतिकर्तव्यतेति सौभाग्यभास्करे ( पृ० ५ ) भास्करराय: । अन्तर्यागस्त्रिविधः—सकलः, सकलनिष्कलः, निष्कलश्चेति (पृ० ५) सेतुबन्धे । श्रीचक्रस्य त्रिधा विभावनमेतदनुपदमेव प्रतिपादितम् । अत्रायं भावः—उपास्यायाः परमेश्वर्यास्त्रीणि रूपाणि भवन्त्युपास्तियोग्यानि—स्थूलं सूक्ष्मं परं चेति । तत्राद्यं करचरणाद्यवयवशीलं मन्त्रसिद्धिमतां चक्षुरिन्द्रियपाणीन्द्रिययोर्योग्यम् "ततः पद्मनिभां देवीं" ( १।१३० ) इत्यादिना प्रतिपाद्यते । द्वितीयं मन्त्रात्मकं पुण्यवतां

---

१. 'विषसंज्ञे' इति तन्त्रान्तरसंमतः पाठः,

मेढ्रस्याधः कुलो ज्ञेयो मध्ये तु विषसंज्ञितः ।
मूले तु शाक्तः कथितो बोधनादप्रवर्तकः ।।
अग्निसंज्ञस्ततश्चोर्ध्वमङ्गुलानां चतुष्टये ।

इति नेत्रतन्त्रोद्योत( भा० १, पृ० १४७ )धृतवचने, तन्त्रालोकविवेकधृते "वह्निविषानुयोगात्" (आ० ३, पृ० ७९) इति वचने च विषशब्दस्यैव प्रयुक्तेः । योगिनीहृदयवदत्रापि शाक्तानन्तरमेवाग्निसंज्ञक आधारो व्याख्यातः । दीपिकाकारेण तु "वह्नौ शाक्ते इति व्यत्ययेन पठितव्यम्" (पृ० ३९) इत्युक्त्वा तत्क्रमेणैव स्वच्छन्दसंग्रहग्रन्थः प्रमाणितः ।

श्रवणेन्द्रियवागिन्द्रिययोर्योग्यम् । तृतीयं वासनात्मकं पुण्यवतां मनसो योग्यम् । सत्यपि रूपत्रैविध्ये देव्या भावना द्विविधैव भवति—सरूपा, अरूपा चेति । स्थूलरूपानुसन्धानात्मिका प्रथमा, पररूपानुसन्धानात्मिका चरमा । सूक्ष्मरूपानुसन्धानात्मिकाया विधाया उभयत्राप्युपयोगान्न पार्थक्येन परिगणनम् । अत्र प्रथमाया बहिर्यागत्वेन, चरमाया अन्तर्यागत्वेन व्यपदेशः शास्त्रेषु । तदिदमुभयविधमप्युपासनं मानसव्यापारविशेष एवेति भास्करराय: । तद्यथा—"सा चोपासना मानसक्रियाविशेषरूपा । "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" (१।१।३१) इति ब्रह्मसूत्रादौ तथा व्याख्यानदर्शनात् । देवताविषयकोऽनुराग एवोपासनेति केचित् । तन्न, भक्तिमानुपासीतेत्यादिविधौ भक्तेरुपासनातो भेदेन निर्देशानुपपत्तेरनुरागस्यैव भक्तिपदवाच्यत्वात्, "अथातो भक्तिजिज्ञासा, सा परानुरक्तिरीश्वरे" (१।१-२) इति शाण्डिल्यसूत्रात् । तस्मादनुरागव्यावृत्ता क्रियैवोपासना । सा च द्विविधा—तन्मन्त्रजपरूपा, तद्यन्त्रपूजारूपा चेति । जप मानसे चेति धातुपाठस्मृत्या जपस्य मानसक्रियारूपत्वावगमात् । पूजाया अपि ध्यानादिरूपायास्तथात्वात् । उपचारसमर्पणरूपाया अपि न ममेत्याकारकमानससंकल्पैकरूपत्वात्" (से०, पृ० ६८) इति । उपासाया मानसव्यापारमात्रत्वेऽपि बहिर्यागे बाह्यपदार्थोपादानकत्वं तस्याङ्गीकर्तव्यमेव । स च पञ्चोपचारषोडशोपचार-चतुष्षष्टयुपचारादिभेदेन, 'केवलो यामलो मिश्रश्चक्रयुग् वीरसंकरः" इत्यादिभेदेन च बहुधा भिद्यते ।

"श्रीसुन्दरीसाधनतत्पराणां भोगश्च मोक्षश्च करस्थ एव" इति श्रूयते । तत्रान्तर्यागप्रवणेन बहिर्यागेनापि मोक्षसिद्धिः । बहिर्यागेन च केवलेन भोगोऽपि सिध्यतीति विवेकः । अत्रेदं रहस्यम्—[1]सूर्यचन्द्रयोर्देवयानपितृयाणात्मकेडापिङ्गलामार्गेणाहोरात्रयोः संचरणम् । चन्द्रस्तु वामनाडीमार्गेण संचरन् द्विसप्ततिसहस्रनाडीमार्गममृतेन सिञ्चति । सूर्यश्च दक्षिणनाडीमार्गेण संचरन् तदुत्क्षिप्तानमृतबिन्दूनुपाहरति । यदा चन्द्रसूर्ययोरुभयोराधारचक्रे समावेशस्तदाऽमावास्या तिथिरुत्पद्यते । कृष्णपक्षतिथयस्तत उत्पद्यते । अत एव कुण्डलिनीशक्तिराधारकुण्डे[1] सूर्यकिरणसंपर्काद्विलीनचन्द्रमण्डलमध्यगलत्पीयूषपरिपूरिते स्वपिति । [2]स्वापावस्थैव कृष्णपक्ष इत्युच्यते । योगी यदा समाहितचित्तश्चन्द्रं चन्द्रस्थाने, सूर्यं सूर्यस्थाने वायुना निरोद्धुं क्षमते, तदा चन्द्रसूर्यौ निरुद्धावमृतसेचनतदाहरणयोरशक्तौ । तदानीं वायुना प्रेरितेन स्वाधिष्ठानवह्निना शुष्कीभूतेऽमृतकुण्डे

---

१. सौन्दर्यलहरीटीका लक्ष्मीधरा द्रष्टव्या, पृ० १४६–१४७ ।

२. एतेन शुक्लपक्ष एव कुण्डलिनीप्रबोधः कर्तुं शक्यते योगिभिर्न कृष्णपक्ष इत्यवधेयमत्र, स्वापावस्थायां प्रबोधस्यासम्भवात् ।

निराहारा कुण्डलिनी सुप्तोत्थिता सती सर्पवत् फूत्कारं कुर्वती ग्रन्थित्रयं[1] भित्त्वा सहस्रदलकमलमध्यवर्तिनं चन्द्रमण्डलं दशति। तस्माद् गलन्त्यः पीयूषधारा आज्ञाचक्रोपरिस्थितं चन्द्रमण्डलमाप्लावयन्ति। तस्माद् गलिताभिरमृतधाराभिः सर्वं देहमाप्लावयन्ति। ततश्चाज्ञाचक्रोपरिस्थितस्य चन्द्रमसः कलाः पञ्चदश नित्याः। ताः पञ्चदश तदधःस्थितविशुद्धिचक्रमाश्रित्य परिवर्तन्ते। सहस्रदलकमलान्तःस्थितं चन्द्रमण्डलं बैन्दवं स्थानम्। तत्कला चिन्मयी आनन्दरूप आत्मेति गीयते। सैव त्रिपुरसुन्दरी। चन्द्रस्य प्रथमायाः कलायाः प्रतिपदिति नामधेयम्। सैव कलात्मिका सूर्यमण्डलान्निर्गता। कृष्णपक्षे तु सूर्यमण्डलं प्रविष्टा। एवं शुक्लपक्षे सूर्यमण्डलान्निर्गता द्वितीया कला द्वितीया तिथिः। कृष्णपक्षे तु सूर्यमण्डलं प्रविष्टा द्वितीया कला द्वितीया तिथिरिति। एवं सर्वत्रोहनीयम्। अतश्च पञ्चदशकलाव्यवधानं सूर्यचन्द्रयोर्यत्र सा पौर्णमासी। पञ्चदश्यां कलायां सूर्यचन्द्रयोरत्यन्तसंयोगो यत्र साऽमावास्या। कौलमते चन्द्रकलात्मिकानां षोडशानां नित्यानां प्रतिदिनमेकस्या एवानुष्ठानम्। सर्वासां समयिमते। षोडश्याः कलायास्तु पञ्चदशस्वपि तिथिष्वनुष्ठानम्, पञ्चदशानां नित्यानां तत्रैवान्तर्भावात्। अत एव नित्याषोडशिकार्णवषोडशनित्याप्रतिपादनप्रकरणे (१।२५-२८) पञ्चदश तिथिनित्या अङ्गनित्याः, षोडशी तु व्यापिकाऽङ्गिनित्येति व्याख्यातं व्याख्यातृभिः। तत्र प्रतिपदि त्रिपुरसुन्दरीकला ध्येया। द्वितीयायां कामेश्वरी कला। तृतीयायां भगमालिनीकला। चतुर्थ्यां नित्यक्लिन्नाकला उपास्या। पञ्चम्यां भेरुण्डाख्या कला। षष्ठ्यां वह्निवासिनीकला। सप्तम्यां महाविद्येश्वरीकला। अष्टम्यां रौद्रीकला। नवम्यां त्वरिताकला। दशम्यां कुलसुन्दरीकला। एकादश्यां नीलपताकाख्या कला। द्वादश्यां विजयाख्या कला। त्रयोदश्यां सर्वमङ्गलाख्या कला। चतुर्दश्यां ज्वालाख्या कला। पञ्चदश्यां मालिन्याख्या कला। सर्वासु तिथिषु चिद्रूपाख्या कला षोडशी उपास्या। प्रतिपदि या त्रिपुरसुन्दरी कथिता, सा चिद्रूपात्मिका न भवति, चिद्रूपात्मिकाया मूलविद्याया भिन्नत्वेनानुष्ठानादिति लक्ष्मीधरः (पृ० १४६)। नित्याषोडशिकार्णवे पठिता एकादशी नित्या न स्मृता लक्ष्मीधरेण। दूतीनित्याऽष्टमी चात्र रौद्रीनाम्ना स्मर्यते। अत्र प्रथमाया महात्रिपुरसुन्दर्या अङ्गिनित्यात्वात् सैव चिद्रूपाख्या षोडशी कला, शिष्टानां पञ्चदशतिथिनित्यानामङ्गनित्यात्वात् प्रतिपदादितिथिषु समाराधनमित्येवोचितः पक्षः।

रतिरहस्ये चन्द्रकलाधिकारे प्रथमे श्लोके—

अङ्गुष्ठे पद-गुल्फ-जानु-जघने नाभौ च वक्षःस्तने
कक्षा-कण्ठ-कपोल-दन्तवसने नेत्रालिके मूर्धनि।

---

१ "आधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञाचक्रात्मकं श्रीचक्रं त्रिखण्डं सोमसूर्यानलात्मकम्। मूलाधारस्वाधिष्ठानचक्रद्वयमेकं खण्डम्। मणिपूरानाहतचक्रद्वयमेकं खण्डम्। विशुद्ध्याज्ञाचक्रद्वयमेकं खण्डम्। तत्र प्रथमखण्डोपरि अग्निस्थानम्। तदेव रुद्रग्रन्थिरित्युच्यते। द्वितीयखण्डोपरि सूर्यस्थानम्। तदेव विष्णुग्रन्थिरित्युच्यते। तृतीयखण्डोपरि चन्द्रस्थानम्। तदेव ब्रह्मग्रन्थिरित्युच्यते। एतदेव ग्रन्थित्रयम्" (पृ० ९८) इति लक्ष्मीधरः।

शुक्लाशुक्लविभागतो मृगदृशामङ्गेष्वनङ्गस्थिति-
रूर्ध्वाधोगमनेन वामपदतः पक्षद्वये लक्षयेत् ॥

इत्येवं तिथिक्रमेण नायिकावयवेष्वनङ्गस्थितिः प्रतिपाद्यते नन्दिकेश्वरमतानुसारम्, "एकारौकारयुक्ता हरिहरजहराः पञ्च बाणाः स्मरस्य" ( श्लो० ४ ) इति च पञ्च[1] बाणबीजानि प्रतिपाद्यन्ते ।

गोणीपुत्रकमतेन तु—

मूर्धोरःस्थलवामदक्षिणकरे वक्षोरुहोरुद्वये
नाभीगुह्यललाटजाठरकटीपृष्ठेषु तिष्ठत्यसौ ॥ ५ ॥
कक्षाश्रोणिभुजेषु च प्रतिपदं प्रारभ्य कृष्णामथ
श्वेतायाः प्रभृति क्रमेण मदनो मूर्धानमारोहति ।
अङ्गेष्वेषु मृगीदृशां मनसिजप्रस्तावनापण्डिता
मात्राः षोडश चिन्तयन्ति बहलज्योतिःस्फुलिङ्गाकृतीः ॥ ६ ॥

विशेषजिज्ञासुभिश्चन्द्रकलाधिकाराख्ये द्वितीये परिच्छेदे विषयोऽयं भावनीयः । एवं च तिथिनित्याक्रमेण कुण्डलिनीप्रबोधनपरस्य दूतीयागानुष्ठाननिरतस्य च त्रिपुरोपासकस्य भोगमोक्षयोरधिगतिः सुलभैवेति सुष्ठूक्तम्—"भोगश्च मोक्षश्च करस्थ एव" इति । विशेषार्घ्यनिष्पत्तये कुण्डगोलकाख्यद्रव्याधिगमाय—"यदेतत्स्त्रियां लोहितं भवत्यग्नेस्तद्रूपं तस्मात्तस्मान्न बीभत्सेत, अथ यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत" ( २।३।७ ) इत्यैतरेयारण्यकवचनं प्रमाणीक्रियते । किन्तु वैदिक्यां संस्कृतावष्टाङ्गमपि मैथुनं सर्वथा हेयतयैव सर्वत्रोपदिश्यत इति तस्य मोक्षशास्त्रत्वमेव । तान्त्रिक्यां तु संस्कृतौ कषायपरिपाकायाधिकारिभेदेन बहिर्यागमुखेनान्तरयजनविधिरुपदिश्यते । अतस्तस्या भोगापवर्गोभयसाधकत्वमिति भावः ।

## जपो ध्यानं च

मन्त्रजपरूपोपासनाऽनुपदमेव प्रतिपादिता । तत्प्रसङ्गेन जपो ध्यानं चाधुनाऽनुव्याख्यायते । जपमहिमा महत्त्वं च सर्वेष्वेव धर्मेषु निर्विवादमङ्गीक्रियते । अर्थानुसन्धानमन्तराऽपि मन्त्रजपविधिरव्याहतं सर्वत्र प्रवर्तते । किन्तु योगसूत्रकारेण भगवता पतञ्जलिना "तज्जपस्तदर्थभावनम्" ( १।२८ ) इति सूत्रयताऽर्थभावनस्य किमपि वैशिष्ट्यमाविर्भावितम् । अत एव योगिनीहृदये श्रीविद्यायाः षड्विधोऽर्थः, भास्कररायेण च वरिवस्यारहस्ये द्वितीयेंऽशे पञ्चदशविधोऽर्थः प्रकाशितः ।

---

१. नित्याषोडशिकार्णवटीकाकारैस्तु "कामस्थम्" ( ४।४५ ) इत्यादिसार्धैकश्लोकव्याख्यानावसरे ह्रीं क्लीं ऐं ब्लूं स्त्रीं इति पञ्च बाणबीजान्युद्धृतानि ।

नार्थज्ञानविहीनं शब्दस्योच्चारणं फलति ।
भस्मनि वह्निविहीने न प्रक्षिप्तं हविर्ज्वलति ॥
अर्थमजानानां नानाविधशब्दमात्रपाठवताम् ।
उपमेयश्चक्रीवान् मलयजभारस्य वोढैव ॥ ( व० र० ५४-५४ )

इति हि भास्करराय: । "स्थाणुरयं भारहार: किलाभूदधीत्य वेदं न विजानाति योऽर्थम्" ( १।५।२ ) इति निरुक्तं च । तदिदमर्थविभावनमेव ध्यानपदाभिधेयम् । "ध्यानं हि निश्चला बुद्धिर्निराकारा निराश्रया । न तु ध्यानं शरीराक्षिमुखहस्तादिकल्पना ॥" ( श्लो० १४६ ) इति हि ध्यानविषये विज्ञानभैरवीयं वच: ।

**त्रिविधो मन्त्रजप:**

आगमेषु त्रिविधो मन्त्रजप: प्रतिपाद्यते—भाष्य उपांशुर्मानसश्च । क्षुद्रसिद्धये[1] अन्यश्रवणात्मको भाष्यो जप: कार्य:, मध्यसिद्ध्यादौ स्वसंवेद्यलघुध्वनिरुपांशु:, श्रेष्ठतमे कार्यसिद्ध्यादौ मानसो जप: क्रियते । अपि च, अधमान्[2] मन्त्रान् भाष्येण, मध्यमानुपांशुना, उत्तमांश्च मन्त्रान् मनसा जपेत् । नित्याषोडशिकार्णवेऽपि—

निगदेनोपांशुना वा मानसेनापि सुव्रते ( ५।७ ) ।

इति वचनेन त्रिविधो जपो निर्दिष्ट: ।

निगदेन यदा जप्तं लक्षं चोपांशुना कृतम् ।
मानसेन महेशानि कोटिजापफलं लभेत् ॥ ( ५।१८ )

इत्यनेन जपफलं च प्रतिपादितम् । एतदनुगुणमेव—

विधियज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणै: ।
उपांशु: स्याच्छतगुण: साहस्रो मानस: स्मृत: ॥ ( २।८५ )

इति मानवं वचनमृजुविमर्शिन्यामुद्ध्रियते । एतेषां लक्षणानि च—

उच्चारो मनसा स्थानध्यानवर्णप्रकल्पनात् ।
मानसो जप इत्युक्तो योगमार्गप्रवर्तक: ॥
उपांशुर्निजकर्णैकगोचर: सिद्धिदायक: ।
सुस्पष्टवचनोच्चारो वाचिक: सिद्धिदायक: ॥

इत्येवमृजुविमर्शिन्यामर्थरत्नावल्यां चोद्धृताभ्यां [3]सिद्धनाथपादश्लोकाभ्यां प्रतिपाद्यन्ते । अत्यत्रो मानसो जप एव—

---

१. मृगेन्द्रागमवृत्तिचर्यापादधृतं ( पृ० ४२, २३२ ) पराख्यसंहितावचनं द्रष्टव्यम् ।

२. मृगेन्द्रागमवृत्तिचर्यापादधृतं ( पृ० ४२, २३३ ) पौष्करागमवचनं द्रष्टव्यम् ।

३. कुलरत्नशास्त्रप्रणेता सिद्धनाथपाद: कुलशास्त्रस्य विशिष्ट आचार्य इत्यर्थरत्नावलीधृततद्वचनेभ्यो ज्ञायते । अत्र ध्यानस्थानवर्णपदेषु तादृश एव कश्चन विशिष्टोऽर्थस्तस्याभिप्रेत: । स चार्थ:—

[1]संयम्येन्द्रियसंचारं प्रोच्चरेन्नादमान्तरम् ।
एष एव जपः प्रोक्तो न तु बाह्यजपो जपः ॥

इति योगिनीहृदयदीपिका(पृ० १९५, ३१३)धृतप्रामाणिकवचनोक्तो नादानुसन्धानलक्षण[2] आन्तरो जपोऽभिमन्तव्यः । स च—

भूयो भूयः परे भावे भावना भाव्यते हि या ।
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः ॥ ( श्लो० १४५ )

इत्येवं विज्ञानभैरवभट्टारके प्रतिपाद्यते । अत्र च जपोऽजपासीमानमामृशति । सोऽयमजपागायत्रीतिनाम्ना शास्त्रेषु प्रथते । विस्तरभयान्नात्र तद्व्याख्यायते ।

**त्रैपुरे दर्शने जपस्य लक्षणम्**

त्रैपुरे दर्शने तु जपस्य लक्षणमवस्थापञ्चकशून्यषट्कविषुवत्सप्तकचक्रनवकविभावनादिरूपं चिह्नम् । तदुक्तं वरिवस्यारहस्ये—

एवमवस्थाशून्यविषुवन्ति चक्राणि पञ्च षट् सप्त ।
नव च मनोरर्थांश्च स्मरतोऽर्णोच्चारणं तु जपः ॥ ( १।५२ )

अस्यार्थो वरिवस्यारहस्यप्रकाशे द्रष्टव्यः । अर्थानुसन्धानपूर्वकं मन्त्रार्णोच्चारणं जप इति संक्षेपः । वामकेश्वरदर्शने हि त्रिविधं चक्रभावनमवस्थापञ्चकादिभावनं च जपवेलायां विधीयते ।

---

पिण्डसं(ज्ञा?ज्ञं)भवेत स्थानं ध्यानं (तत्प ? तु प)दमुच्यते ।
व(र्ण?र्णं) रूपं विनिर्दिष्टं लक्षं वै रूपवर्जितम् ॥ ( ३।४ )

इति कौलज्ञाननिर्णयवचनतः प्रतीयते । रूपवर्जितं रूपातीतमित्यर्थः । पिण्डपदरूपरूपातीतानामर्थश्च—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितः ।
रूपं बिन्दुः समाख्यातो रूपातीतं तु निष्कलम् ॥

इत्यर्थरत्नावलीधृतमतोत्तरवचनतो ज्ञायते । योगिनीहृदयदीपिकायां ( पृ० ५९ ) तु स्वच्छन्दसंग्रहस्थमेतद्वचनमित्युक्तम्, सेतुबन्धेऽपि ( पृ० ६०, २४८ ) तथैव । पिण्ड-पद-रूप-रूपातीताः कौलज्ञाननिर्णये, मालिनीविजयोत्तरे, तन्त्रालोके च यथा व्याख्यायन्ते, तथैव सिद्धहैमयोगानुशासनाख्ये जैनयोगशास्त्रेऽपि व्याख्याता भवन्ति । वर्तते चाणवोपायव्याख्यानप्रसङ्गे तन्त्रलोकादिषु ध्यानस्थानवर्णादिपदानामन्यविध एवार्थः । सर्वोऽयं विषयो निबन्धान्तर एव प्रदर्शयितुं शक्येत ।

१. वचनमेतत् संकेतपद्धतिस्थं स्यादित्यन्यत्र प्रतिपादितमस्माभिः ।

२. शिवपुराणे हठयोगप्रदीपिकाप्रभृतिषु च ग्रन्थेषु नादानुसन्धानविषयको विचारो विस्तरेणावलोक्यते । स तत एवानुशीलनीयः ।

श्रीविद्यायां त्रीणि कूटानि बीजानि वा भवन्ति। प्रतिकूटमन्ते हृल्लेखाया अवस्थितिः।

हृल्लेखायाः स्वरूपं तु व्योमाग्निर्वामलोचना।
[1]बिन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः॥
व्यापिकासमनोन्मन्य इति द्वादशसंहतिः।
(व० र० १।१२-१३)

योगिनीहृदये (३।१७२-१७६) एता द्वादश कला उच्यन्ते कामकलायाः। बिन्द्वादीनां लक्षणमुच्चारणकालः स्थानं च "दीपाकारोऽर्धमात्रश्च" (१।२८) इत्यारभ्य "तथोन्मनी" (१।३४) इत्यन्तं योगिनीहृदये तट्टीकायां वरिवस्यारहस्ये तत्प्रकाशे च (१।१५-२७) द्रष्टव्यम्। योगिनीहृदयप्रदर्शितो बिन्द्वादीनामाकारश्च वरिवस्यारहस्यान्ते स्थापितायां सारण्यां साधु प्रदर्शितः। वाग्भवकामराजशक्तिबीजाख्ये कूटत्रये आधार-हृदयभ्रूमध्येषु स्थितानां वह्निसूर्यसोमकुण्डलीनां त्रये च प्रत्येकं चक्रत्रयस्य भावनम्। तत्र त्रैलोक्यमोहनादिचक्रत्रयस्याधारस्थवह्निमण्डलस्थितवाग्भवबीजशिखरवर्तिकाम-कलान्तर्गतहार्धकलारूपवह्निकुण्डलिन्युत्थानोदितहृद्गतकामराजबीजपर्यन्तव्यापिनाद-मयताभावनं वाग्भवबीजजपः। सर्वसौभाग्यदायकादिचक्रत्रयस्य हृदयस्थसूर्यमण्डलस्थित-कामराजशिखरवर्तिकामकलान्तर्गतहार्धकलारूपसूर्यकुण्डलिन्युत्थानोदितबिन्दुस्थानशक्ति-बीजपर्यन्तव्यापिनादमयताभावनं कामराजबीजजपः। सर्वरोगहरादिचक्रत्रयस्य बिन्दु-स्थानेन्दुमण्डलान्तर्गतशक्तिबीजशिखरवर्तिकामकलान्तर्गतहार्धकलारूपसोमकुण्डलिन्युत्था-नोदितब्रह्मरन्ध्रोपरिस्थितशिवतत्त्वातीतसमनासीमपर्यन्तव्यापिनादेन सहोन्मन्यां लय-भावनं शक्तिबीजजपः।

अयमभिप्रायः—अत्र प्रथमकूटे या हृल्लेखा, तदन्तर्गता या कामकला, तस्यां वर्तमाना या सपरार्धकला, सा वह्निकुण्डलिनोत्युच्यते। सैव द्वितीयकूटे सूर्यकुण्डलि-नीति, तृतीयकूटे सोमकुण्डलिनीति च कथ्यते। बिन्द्वादिसमष्टिरूपो नादस्तु तत एवोत्पन्नो दीपशिखाग्रवर्तिकज्जललेखावत्। एवं चानाहतमारभ्योत्थितो नादस्त्रैलोक्य-मोहनसर्वाशापरिपूरकसर्वसंक्षोभणचक्रत्रयस्य त्रिविधसृष्टिरूपस्यापरं रूपम्, भ्रूमध्य-मारभ्योत्थितो नादः सर्वसौभाग्यदायकसर्वार्थसाधकसर्वरक्षाकरचक्रत्रयस्य त्रिविधस्थिति-रूपस्यापरं रूपम्, बिन्दुस्थानमारभ्योत्थितो नादः सर्वरोगहरसर्वसिद्धिप्रदसर्वानन्दमय-चक्रत्रयस्य संहृतित्रयरूपस्यापरं रूपमिति विभावनीयम्। अत्र वाग्भवबीजशिखर-वर्तिनं नादं हृद्गतकामराजबीजपर्यन्तमुच्चरेत्। शक्तिबीजे च प्राणादयो द्वादश कला अपि तद्बीजशिखरे स्थिता उच्चार्याः। वाग्भवकामराजयोः सृष्टिस्थितिरूपत्वान्न विश्वातीतोन्मनीपर्यन्तमुच्चारः।

---

१. "बिन्द्वादीनां नवानां तु समष्टिर्नाद उच्यते" (१।१३) इति वरिवस्यारहस्ये। "यद्यपि बिन्दुविनिर्मुक्तानामष्टानामेव नादसंज्ञा मन्त्रशास्त्रे, तथापि व्यवहारसौकर्याय तत्सहितानामेव साऽत्र कृता" (पृ० ११-१२) इति वरिवस्यारहस्यप्रकाशे।

कर्मेन्द्रियाणि पञ्च वाक्पाणिपादपायूपस्थानि, ज्ञानेन्द्रियाणि पञ्च घ्राणरसनचक्षुस्त्वक्श्रोत्राणि, एतेषां दशानां स्वस्वविषयोत्पादकत्वं व्यवहारः । स एव जागरावस्था। तत्र हेतुरूपं ज्ञानमरूपत्वाद्भावनादशायां प्रकाशरूपत्वेन भावनीयम् । अतः प्रकाशवाचके वह्नौ तार्तीयबीजशिखरवर्तिनि रेफे महाजाग्रदवस्था सार्वकालिकनिद्राक्षयलक्षणा परप्रबोधदशा भावनीया । मनो बुद्धिरहङ्कारश्चित्तं चेत्यन्तःकरणानि चत्वारि । तैरेव व्यवहारः स्वप्नः । तज्जनकः प्रकाशस्तृतीयहृल्लेखास्थकामकलया बोध्यो गलदेशे चिन्तनीयः। स्वप्ने विद्यमानानामन्तःकरणवृत्तीनां लयतः सर्वेन्द्रियोपरतिः सुषुप्तिः । अत्र हि लीनपूर्वस्य देहाक्षादिषु क्रोडीकृतस्य लीनस्यैव स्वात्मनो वेदनं प्रकाशनं भवति । प्रकृते च विषयभूतस्य तार्तीयबीजस्य वर्णानां विलोमेन विलये भ्रूमध्यस्थानस्थितहृल्लेखोर्ध्वबिन्दौ सुषुप्त्यवस्था भाव्यते । चैतन्यव्यक्तिहेतोर्नादरूपस्य वेदनं तुर्यावस्था । तार्तीयबीजशिखरवर्त्यर्धचन्द्ररोधिनीनादेषु स्वात्मचैतन्याभिव्यक्तिकारणनादकलनात्मिका तुर्यावस्था भावनीया । तुरीयातीतं मनोवागतीतपरमानन्दस्वरूपं सुखस्थानम् । तच्च नादान्तशक्तिव्यापिकासमनोत्मनासु स्थितं भावयेत् । एवमत्र तार्तीये शक्तिबीज एव विद्याजपकरणावधाननिपुणेन योगिना जपकाले जागरिताद्याः पञ्चावस्थाः स्मरणीयाः ।

तृतीयस्य शक्तिबीजस्य रेफस्थाने बिन्दौ रोधिन्यां नादान्ते व्यापिकायां च विज्ञानभैरवोक्तं ( श्लो० ३२ ) शिखिपक्षचित्रमण्डलरूपं शून्यपञ्चकं भावनीयम्, उन्मन्यां च षष्ठं महाशून्यं नीरूपं चिन्त्यम् । एवं भावयतो योगिनो गगनपञ्चकभेदक्रमेणाकुलकुण्डलिनीसमावेशो जायते ।

प्राणस्य हकारात्मनो वाय्वात्मनो यष्टुर्मनसश्च संयोगः प्राणविषुवमित्युच्यते । मूलाधारस्थितवाग्भवशिखरवर्तिनं नादं हृदयपर्यन्तमुच्चार्य तत्र स्वयं लीनो भूत्वा स्वात्मनस्तन्मयतानुसन्धानं मन्त्रविषुवम् । मूलाधारादिचक्रषट्कस्याप्यध ऊर्ध्वं चैकैको ग्रन्थिरिति द्वादशग्रन्थयः । तद्भेदनमार्गेणैव सुषुम्णानाडी मूलाधाराद् ब्रह्मरन्ध्रं व्याप्नोति । तेनैव मार्गेण नादस्य वर्णपङ्क्तेश्च नाडीसंयुक्तत्वेन भावनयोच्चारणं नाडीविषुवम् । रेफमीकारं तन्मध्यवर्तिसपरार्धकलां बिन्दुमर्धचन्द्ररोधिनीनादनादान्तांश्च शक्तौ लीनान् विभावयेत् । प्रशान्तेन्द्रियगोचरमेतत्प्रशान्तविषुवमित्युच्यते । शक्तिस्थानादूर्ध्वं पुनरुज्जीवितस्य नादस्य सूक्ष्मतमस्य व्यापिकामुल्लङ्घ्य समनायां लयः शक्तिविषुवम् । समनाया अप्यूर्ध्वे पुनरुज्जीवितस्यात्यन्तं सूक्ष्मतमस्य नादस्योन्मन्यां कालातीतायां विचिन्तनं कालविषुवम् । निमेषस्य त्रिंशत्तमो भागस्तत्पर इत्यभिधीयते । तत्परस्य शतांशश्च त्रुटिरिति । अर्थान्निमेषस्य त्रिसहस्रतमो भागस्त्रुटिरित्यभिधीयते । तेन हकाराद्युन्मन्यन्तानां विद्यावयवानां मुनिचन्द्राष्टदशभिरर्थात् सप्तदशाधिकाष्टोत्तरदशसहस्र ( १०८१७ )-त्रुटिभिरुच्चारे "अकुले विषुसंज्ञे च" ( १।२५ ) इत्यादियोगिनीहृदयोक्तदिशा कृते सति नादस्यान्ते तत्त्वस्य वेदनं जायते । चैतन्याभिव्यक्तिनिदानमेतत्तत्त्ववेदनमेव स्वात्मानुसन्धानरूपं तत्त्वविषुवमित्याख्यायते ।

एवमनेन प्रकारेण जपकाले सकल-सकलनिष्कल-निष्कलचक्रभावनवेलायां विद्याऽवयवानामुच्चारणकालेषु शून्यषट्कादिकं चिन्तयतो योगिनः सकलाः सिद्धयोऽणिमाद्याः सिद्ध्यन्ति । [1]अनित्याशुचिक्लेशदुर्भंगभेदप्रपञ्चपरिपन्थिभूतं सर्वविषयानन्दसमष्टिभूतं परमानन्दलक्षणपरमप्रेमास्पदपरमसुन्दरपरमशिवरूपं निसर्गानन्दसुन्दरं शून्यषट्कावस्थापञ्चकसप्तविषुवकोलाहलातीतं विश्वविश्रान्तिभूमिभूतं परं स्थानमभिव्यज्यते ।

**योगः**

चक्रसृष्टिप्रकरणेऽकुलादिषु स्थानेषु नवचक्रविभावनमुपदिष्टम् । मातृकाप्रकरणे जपप्रकरणे च बिन्द्वर्धचन्द्रप्रभृतयो नव नादाः प्रदर्शिताः । जपस्य लक्षणमवस्थापञ्चकशून्यषट्कविषुवत्सप्तकचक्रनवकविभावनादिरूपं भवति । सर्वमेतद्विभावनं यौगिकप्रक्रियामात्रगम्यम् । नेत्रतन्त्रे ( ६।६ ) स्थूलं सूक्ष्मं परं चेति त्रिविधं [2]ध्यानमुपदिश्यते । तद्यथा—

स्थूलं तु यजनं होमो जपो ध्यानं समुद्रकम् ।
मन्त्राणि मोहनादीति मन्त्रराट् कुरुते भृशम् ॥
सूक्ष्मं चक्रादियोगेन कलानाडयुदयेन च ।
परं सर्वात्मकं चैव मोक्षदं मृत्युजिद्भवेत् ॥ ( ६।७-८ )

एवं स्थूल-सूक्ष्म-परध्यानानां लक्षणमभिधाय षष्ठसप्तमाष्टमाधिकारेषु तानि क्रमेण सविस्तरं व्याख्यातानि । अत्र सूक्ष्मपदेन कुण्डलिनीयोगः, परपदेन चाष्टाङ्गिको योग उक्तः । कुण्डलिनीयोगस्य कुलप्रक्रियान्तर्भूतत्वात् स कौलिकयोगनाम्नाऽभिधातुं शक्यते । अतस्तन्नाम्नैवात्र तत्प्रतिपादयिष्यते । ज्ञानयोगक्रियाचर्याख्यपादचतुष्टयात्मकेष्वागमेषु तन्त्रेषु च योगपादे षडङ्गो योगो मुख्यत्वेन प्रतिपादितो भवति । दृश्यते च सप्ताङ्गिकोऽष्टाङ्गिको वा योगस्तत्र तत्र । अष्टाङ्गिको योगोऽप्यत्रत्यो न सर्वथाऽनुकरोति पातञ्जलं योगम् । स्वच्छन्दतन्त्रे चतुर्थे पटले षडध्वविवेचनावसरेऽन्यत्र च बहुषु स्थलेषु बिन्द्वर्धचन्द्रादयो निदर्शिता विवृताश्च, योगिनीहृदये जपप्रकरणे निर्दिष्टाः शून्यविषुवत्प्रभृतयश्चात्र विस्तरेण व्याख्याता दृश्यन्ते । विज्ञानभैरवेऽपि काचन यौगिकी विशिष्टा परम्परोन्मील्यते । न केवलं वैष्णवेषु शैवेषु शाक्तेष्वेव, जैनेषु बौद्धेषु च शास्त्रेषु स्वकीया योगप्रक्रिया दृश्यते । वर्तते च कियतांऽशेनैतेषु साधर्म्यं वैधर्म्यं च । तत्प्रतिपादनस्य नायमवसर इति विस्तराद्विरम्य संक्षेपेणात्र कौलिकस्तान्त्रिकश्च योगः प्रतिपाद्यते ।

**कौलिको योगविधिः**

नेत्रतन्त्रे सप्तमाधिकारे योगविधिरयं प्रदर्शितः । तदत्र निरूप्यते । तथाहि—

ऋतुचक्रं स्वराधारं त्रिलक्ष्यं व्योमपञ्चकम् ॥ १ ॥
ग्रन्थिद्वादशसंयुक्तं शक्तित्रयसमन्वितम् ।

---

१. "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" ( यो० सू० २।५ ) ।

२. ध्यानशब्दोऽत्र योगार्थवाचकः ।

धामत्रयपथाक्रान्तं नाडित्रयसमन्वितम् ॥२॥
ज्ञात्वा शरीरं सुश्रोणि दशनाडिपथावृतम् ।
द्वासप्तत्या सहस्रैस्तु सार्धकोटित्रयेण च ॥३॥
नाडिवृन्दैः समाक्रान्तं मलिनं व्याधिभिर्वृतम् ।
सूक्ष्मध्यानामृतेनैव परेणैवोदितेन तु ॥४॥
आप्यायं कुरुते योगी आत्मनो वा परस्य च ।
दिव्यदेहः स भवति सर्वव्याधिविवर्जितः ॥५॥

इमे श्लोकाः क्षेमराजेनेत्थं व्याख्याताः—"ऋतवः षट्, [1]जन्म-नाभि-हृत्-तालु-बिन्दु-नाद-स्थानानि नाडि-माया-योगि-भेदन-दीप्ति-शान्ताख्यानि नाडिमायादिप्रसराश्रयत्वात् चक्राणि यत्र; स्वराः षोडश, अङ्गुष्ठ-गुल्फ-जानु-मेढ्र-पायु-कन्द-नाडि-जठर-हृत्-कूर्मनाडी-कण्ठ-तालु-भ्रूमध्य-ललाट-ब्रह्मरन्ध्र-द्वादशान्ताख्या जीवस्याधारकत्वादाधारा यत्र; यदि वा सर्वंसहत्वादस्य नयस्य कुलप्रक्रियया—

मेढ्रस्याधः कुलो ज्ञेयो मध्ये तु विषसंज्ञितः ।
मूले तु शाक्तः कथितो बोधनादप्रवर्तकः ॥
अग्निसंज्ञस्ततश्चोर्ध्वमङ्गुलानां चतुष्टये ।
नाभ्यधः पवनाधारे नाभावेव घटाभिधः ॥
नाभिहृन्मध्यमार्गे तु सर्वकामाभिधो मतः ।
संजीवन्यभिधानाख्यो हृत्पद्मोदरमध्यगः ॥
वक्षःस्थले स्थितः कूर्मो गले लोलाभिधः स्मृतः ।
लम्भकस्य स्थितश्चोर्ध्वे सुधाधारः सुधात्मकः ॥
तस्यैव मूलमाश्रित्य सौम्यः सोमकलावृतः ।
भ्रूमध्ये गगनाभोगे विद्याकमलसंज्ञितः ॥
रौद्रस्तालुतलाधारो रुद्रशक्त्या त्वधिष्ठितः ।
चिन्तामण्यभिधानाख्यश्चतुष्पथनिवासि यत् ॥
ब्रह्मरन्ध्रस्य मध्ये तु तुर्याधारस्तु मस्तके ।
नाड्याधारः परः सूक्ष्मो घनव्याप्तिप्रबोधकः ॥
इत्युक्ताः षोडशाधाराः·························। इति ।

---

१. जन्माख्ये नाडिचक्रं तु नाभौ मायाख्यमुत्तमम् ॥
हृदिस्थं योगिचक्रं तु तालुस्थं भेदनं स्मृतम् ।
बिन्दुस्थं दीप्तिचक्रं तु नादस्थं शान्तमुच्यते ॥ ( ने० त० ७।२८-२९ )

त्रीणि अन्तर्बहिरुभयरूपाणि लक्ष्याणि लक्षणीयानि यत्र, निरावरणरूपत्वात् "खमनन्तं[1] तु जन्माख्यं" (७।२७) इति वक्ष्यमाणानां जन्म-नाभि-हृद्-बिन्दु-नाद-रूपाणां व्योम्नां पञ्चकं विद्यते यत्र, "जन्ममूले[2] तु मायाख्यो" (७।२२) इत्यभिधास्यमानाश्चैतन्यावृतिहेतुत्वाद् ग्रन्थयो माया-पाशव-ब्रह्म-विष्णु-रुद्र-ईश्वर-सदाशिव-इन्धिका-दीपिका-बैन्दव-नाद-शक्त्याख्या ये पाशास्तैः संयुक्तम्; इच्छादिना शक्तित्रयेण सम्यगन्वित-मेषणीयादिविषये प्रवर्तमानम्; सोम-सूर्य-वह्निरूपधामत्रयपथैः सव्यापसव्यपवनैर्मध्यम-पवनेन चाधिष्ठितम्; इडा-पिङ्गला-सुषुम्नाख्येन पवनाश्रयेण नाडित्रयेण युक्तम्; गान्धारी-हस्तिजिह्वा-पूषा-यशा-अलम्बुसा-कुहू-शङ्खिनीभिश्च युक्तत्वाद् दश नाडयः पन्थानो येषां प्राणापानसमानोदानव्याननागकूर्मकृकरदेवदत्तधनञ्जयाख्यास्तैरासमन्ताद्धृतमोतप्रोतम्; दिग्दशकावस्थितनाडिदशकप्रपञ्चभूताभिर्द्वासप्तत्या सहस्रैर्मध्यव्याप्त्या सार्धकोटित्रयेण च महाव्याप्त्या नाडिवृन्दैः समाक्रान्तम्; आणवमायीयकार्ममलयोगान्मलिनं····शरीरं ज्ञात्वा योगी·······गतव्याधिर्दिव्यदेहो भवति" इति।

योगी चक्राधारग्रन्थ्यादीन्येतानि मन्त्रवीर्यभूतचित्स्फुरत्तात्मना ज्ञानशूलेन भित्त्वा कालवञ्चनमुखेन मृत्युजित् कालजिच्च भूत्वा निरञ्जनं पदमश्नुते। तत्रेयं प्रक्रिया— साधकश्चित्तप्राणैकाग्र्येण कन्दभूमिमवष्टभ्य संकोचविकासाऽभ्यासेन शक्त्युन्मेषमुपलक्ष्य मत्तगन्धस्थानं पीडयेद् यथा शक्तिरूर्ध्वमुखैव भवति। [3]कन्दभूमिविस्फुरितयाऽनया शक्त्या

---

१. खमनन्तं तु जन्माख्यं नाभौ व्योम द्वितीयकम्।
तृतीयं तु हृदिस्थाने चतुर्थं बिन्दुमध्यतः॥
नादाख्यं तु समुद्दिष्टं·······(७।२७–२८)

२. जन्ममूले तु मायाख्यो ग्रन्थिर्जन्मनि पाशवः॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
कारणस्थास्तु पञ्चैवं ग्रन्थयः समुदाहृताः॥
इन्धिकाख्यस्तु यो ग्रन्थिर्द्विमार्गाशमनः शिवः।
तदूर्ध्वे दीपिका नाम तदूर्ध्वे चैव बैन्दवः॥
नादाख्यस्तु महाग्रन्थिः शक्तिग्रन्थिरतः परः। (७।२२–२५)

"इन्धिकाख्यो ग्रन्थिर्द्विमार्गाशमन इति निरोधिकास्पृष्टवामदक्षिणवाहनिःशेषप्रशमनहेतुः, अत एव शिव ऊर्ध्वैकमार्गारोहकत्वात् श्रेयोरूपः" इति तत्रैव क्षेमराजः। अमृतानन्दस्तु— "षट्चक्राणां प्रत्येकमूर्ध्वाधो ग्रन्थिद्वयमिति द्वादश ग्रन्थयः" (दी० पृ० २८७) इत्याह। लक्ष्मीधरस्तु ग्रन्थित्रयमेव व्याख्याति। एतच्चात्रैव १०६ पृष्ठे टिप्पण्यां द्रष्टव्यम्।

३. जन्माधारस्य सुश्रोणि पर्यायान् शृण्वतः परम्।
जन्मस्थानं तु कन्दाख्यं कूर्माख्यं स्थानपञ्चकम्॥
मत्स्योदरं तथैवेह मूलाधारस्तथोच्यते। (ने० त० ७।३१-३२)

योगी खेचर्याख्यां मुद्रां लभेत। लब्धया तु तया यदा आत्माणुर्मुद्रितस्तद्वशः संपन्नस्तदा मन्त्रवीर्यस्फुरत्तात्मना विज्ञानेनोर्ध्वं द्वादशान्तं यावत् प्रसरेत्। तत्र परं शिवं विक्षोभ्य समनापदावरोहणेन सृष्ट्युन्मुखं कृत्वा तत्र परमानन्दमयममृतं प्राप्य महाप्रकाशात्म समनारूढं धाम लीलया विक्षोभ्यापानोल्लासाख्यं चन्द्रोदयं प्रतीक्षेत। चन्द्रोदये सति तस्माच्छुद्धममृतं प्राप्यान्तर्मुखीभूतया स्वशक्त्या मध्यमार्गेणाधोधः कर्षयेत्, तेन च चक्रधारादि सर्वं निषिञ्चेत्। ब्रह्मस्थानं हृद्धाम यावत्तदमृतं प्राप्तं भवति। ततोऽप्यधो नाभेरधःस्थाने निषिच्य कालाग्न्यन्तमापूर्यं समन्तात् परिपूर्णं देहं स्मरेत्। ततः सर्वरोमकूपैः प्रसृत्यान्तर्बहिरासादितव्याप्ति सर्वदिक्कममृतार्णवप्लावनसमरसीभूतपरमामृतरूपमिच्छाज्ञानक्रियाशक्तिकचितं परमशिवरूपं निरामयमात्मानं चिन्तयेदिति।

नित्याषोडशिकार्णवे रूपकमुखेनैष एवार्थः प्रदर्शितः। तद्यथा—

यदोल्लसति शृङ्गाटपीठात् कुटिलरूपिणी॥
शिवार्कमण्डलं भित्वा द्रावयन्तीन्दुमण्डलम्।
तदुद्भवामृतस्यन्दपरमानन्दनन्दिता ॥
कुलयोषित् कुलं त्यक्त्वा परं पुरुषमेति सा।
निर्लक्षणं निर्गुणं च कुलरूपविवर्जितम्॥ (४।१२-१४) इति।

मूलाधारगतचतुर्दलपद्ममध्यत्रिकोणकुलस्थानमत्र शृङ्गाटपदेनोच्यते। लक्ष्मीधरेण सौन्दर्यलहरीटीकायां श्रीचक्रस्यान्तरोपासनायामेषैव प्रक्रिया यथा समाश्रिता तथाऽस्माभिः "श्रीविद्यायाः समयिसम्प्रदायः" इत्याख्ये निबन्धे[1] प्रतिपादितं तत एवावलोकनीयम्। विद्यानन्देन—"मूलादिभ्रूमध्यान्तग्रन्थिद्वादशविगलयितृ व्योमपञ्चकभञ्जयितृ" (पृ० ६७) इति श्रीचक्रविशेषणमुखेनैष एवार्थः स्मृतः। शाक्तानुभवपूर्वकं मूले स्थितायाः कुण्डलिन्याः षट्चक्रपञ्चगगनद्वादशग्रन्थिभेदक्रमेणाकुलसमावेशो योगिनीहृदये दीपिकायामपि च (पृ० २८७-२९०) प्रकाशितः। एवं च नेत्रतन्त्रप्रतिपादिताद्योगात् त्रिपुरातन्त्रप्रतिपादितयोगस्य सत्यपि साम्ये कश्चन विशेषोऽपि दृश्यते। योगिनीहृदये (३।१४६) आधारार्थे रन्ध्रशब्दः प्रयुक्तः। तत्र दीपिकायामाधारस्वाधिष्ठानमणिपूरानाहततदूर्ध्ववज्रपद्मकण्ठलम्बिकाविशुद्ध्याज्ञाख्यानि नवाधाराणि परिगणय्य प्रमाणरूपेणैतत्स्वच्छन्दसंग्रहवचनमुदाहृतम्—

आधारं स्वाधिष्ठानं च मणिपूरमनाहतम्।
मध्यमं वज्रकण्ठं च लम्बिकां च विशुद्धिकाम्॥
आज्ञां च नवकं विद्धि षट्चक्राणि त्रिहीनकम्। (पृ० २९५)

---

"मरुदुद्भवहेतुत्वात्, मध्यनाडीकन्दरूपत्वात्, कूर्माकारत्वात्, पृथिव्यादिव्योमान्ततत्त्वपञ्चकस्थानत्वात्, मत्स्योदरवत् स्फुरणात्, मूलभूतत्वाच्च जन्मा( न्मस्थाना )द्याख्यायते" इति क्षेमराजः। मत्स्योदरापराभिधमूलाधारकेन्द्रितयोगमार्गप्रदर्शकत्वादेवैतच्छास्त्रं मत्स्योदरीमतनाम्नाऽपि परिचीयते।

१. चन्द्रशेखरशास्त्रि-अभिनन्दनग्रन्थः, पृ० १३–२०।

"मूलादिषट्चक्रलम्बिकाललाटब्रह्मरन्ध्राख्यनवाधारेषु" (पृ० ४०) इत्यर्थरत्नावलीकारः। "आधारनवकम् अकुल-सहस्रार-मूलाधार-स्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्धि-लम्बिका-आज्ञा-बिन्दुरूपम्" (पृ० ६६) इति चिद्वल्लीकारः। योगिनीहृदये—

अकुले विषुसंज्ञे च शाक्ते वह्नौ तथा पुनः।
नाभावनाहते शुद्धे लम्बिकाग्रे भ्रुवोऽन्तरे॥ (१।२५)

इत्यत्र नवाधाराण्येव सूचितानि। व्याख्यातानि च तथैव स्वच्छन्दसंग्रहप्रामाण्येन दीपिकायाम्। अत्रत्यान्याद्यानि चत्वारि नामानि प्रायस्तान्येव यानि नेत्रतन्त्रोद्धृतकुलप्रक्रियायां प्रदर्शितानि। तत्र कुल इति प्रथमं नाम, अत्र चाकुलमिति। अत्रैव "अकुलादिषु" (२।८) इति श्लोके स्थानेष्वेतेषु नवचक्राराधनमुपदिष्टम्। नवचक्रात्मकश्रीचक्रसमाराधनप्रवणेषु त्रिपुरातन्त्रेषु स्वप्रयोजनानुगुणमाधारनवकमेवाङ्गीकृतमित्येतेन प्रतीयते। वरिवस्यारहस्यप्रकाशे—"सुषुम्णाख्यनाडीमूलाग्रयोर्द्वे सहस्रदलकमले, मध्ये चाष्टदलषड्दलादीनि त्रिशतपद्मानि सविस्तरं स्वच्छन्दसंग्रहादौ प्रपञ्चितानि" (पृ० १६) इति कश्चन विशेष उक्तः। एष चार्थो योगिनीहृदयदीपिकाकारेणापि सूचितः (पृ० ३९)। स्वच्छन्दसंग्रहस्तु साम्प्रतं नोपलभ्यते, अतोऽत्र विषये नाधिकं किमपि वक्तुं पार्यते।

श्रीतत्त्वचिन्तामणिस्थे षट्चक्रविवरणे सौन्दर्यलहर्यां लक्ष्मीधरायामन्येषु परवर्तिषु ग्रन्थेषु मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञाख्यानि षट् चक्राणि प्रतिपाद्यन्ते। नेत्रतन्त्रे तु जन्म-नाभि-हृत्-तालु-बिन्दु-नाद-स्थानानि नाडि-माया-योगिभेदन-दीप्ति-शान्ताख्यानि षट् चक्राणि प्रतिपाद्यन्त इति पूर्वमेवोक्तम्। मूलाधारस्वाधिष्ठानादीनां नाडिमायादीनां च चक्राणां स्थानानि प्रायः समानान्येव। नाडिप्रसरहेतुत्वात्, "नाभिचक्रे कायव्यूहज्ञानम्" (यो० सू० ३।२५) इति नीत्या समस्तमायाप्रपञ्चख्यातिहेतुत्वात्, योगिनां चित्तैकाग्र्यप्रदत्वात्, प्रयत्नेन भेदनीयत्वात्, दीप्तिरूपत्वात्, शान्तिप्रदत्वाच्चैतानि चक्राणि नाडिमायादिभिरन्वर्थैः पदैरभिधीयन्ते स्म। परवर्तिनि तु काले तानि मूलाधारस्वाधिष्ठानादिसंज्ञाभिः समलङ्कृतान्यक्रियन्तेति तु वयं प्रतीमः।

उपर्युद्धृतेष्वन्येषु च योगशास्त्रग्रन्थेषु चक्राणामाधाराणां च संकर इव दृश्यते। सिद्धसिद्धान्तपद्धतिसदृशेषु [1]हठयोगग्रन्थेष्वपि—"नवचक्रं कलाधारं त्रिलक्ष्यं

---

१. हठयोगप्रतिष्ठापको गोरक्षनाथः कुलमतप्रतिष्ठापकस्य मत्स्येन्द्रनाथस्य शिष्य इति बहुप्रचारितोऽयमर्थो विद्वद्गोष्ठीषु। तन्नास्मभ्यं रोचते। मत्स्येन्द्रः कौलमार्गप्रवर्तकः प्रथमाचार्य इत्यघोरशिवाचार्येण मृगेन्द्रवृत्तिदीपिकायां (पृ० ७४) प्रत्यपादि। तन्त्रालोकेऽभिनवगुप्तेन सकलकुलशास्त्रावतारकतया प्रसिद्धो मच्छन्दविभुः स्तुतः। श्रीमता डॉ० कान्तिचन्द्रपाण्डेयमहोदयेन स्वकीये 'अभिनवगुप्त' इत्याख्ये ग्रन्थे (पृ० ५४८) मत्स्येन्द्रशिष्यपरम्परा न्यदर्शि, यत्राभिनवगुप्त ऊनविंशः पुरुषः। तत्र न दृश्यते गोरक्षनाथस्य

व्योमपञ्चकम् (२।३१) इत्यादिना कौलिको योगः, "यमनियमासनप्राणायामप्रत्याहार-धारणाध्यानसमाधयोऽष्टावङ्गानि" (२।३२) इत्यादिना च पातञ्जलो योगः प्रतिपाद्यते। हठयोगप्रदीपिकाप्रभृतिष्वपि तथैव कौलिकस्य पातञ्जलस्य च योगस्य प्रतिपादनं भवति। वर्तते किल तत्र स्वकीयमपि वैशिष्ट्यं पार्थक्येन। तच्च षट्कर्मप्रतिपादने बन्धनिरूपणे च प्राधान्येन दरीदृश्यते। सर्वमेतद् भूरिविचारसहमिति नाधुना प्रतन्यते।

**तान्त्रिकः षडङ्गो योगः**

पातञ्जले योगशास्त्रेऽष्टाङ्गो योगः प्रतिपाद्यते। यमनियमासनप्राणायामप्रत्याहार-ध्यानधारणासमाधिरूपाणि च तान्यष्टाङ्गानीत्युक्तप्रायम्। तन्त्रेषु तु—शैवेषु, वैष्णवेषु, बौद्धेषु च षडङ्गो योगो वर्णितः। तद्यथा—

प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते॥

---

नाम। शिष्यपरम्परामेनामाश्रित्य पाण्डेयमहोदयेन पञ्चमी शताब्दी खीष्टस्य मत्स्येन्द्र-नाथसमयो निर्धारितः। अत्र नैवासामञ्जस्यं किमपि वयं पश्यामः। प्रतिपादितश्चाय-मर्थोऽस्माभिः "त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च" (सारस्वती सुषमा, व० २०, अ० २, पृ० १३-१४) इत्याख्ये निबन्धे।

तन्त्रालोकादिषु बहवो ग्रन्थाः कुलमतप्रतिपादकाः प्रमाणीक्रियन्ते। डॉ० प्रबोध-चन्द्रबागचीसम्पादिते कौलज्ञाननिर्णयेऽपि (पृ० ७५) तन्त्रालोकस्मृताः कुलपञ्चा-शिका-ऊर्मिकौल-सिद्धामृतप्रभृतयो ग्रन्थाः स्मर्यन्ते। अभिनवगुप्तो मच्छन्दं विभुविशेषणेन संयोजयति। प्रमाणैरेतैर्बहुकालव्यापिनीयं शिष्यपरम्परा शास्त्रपरम्परा चेति सिद्धयति। एवं सत्यपि डॉ० बागचीमहोदयैर्मत्स्येन्द्रनाथसमयो नवमी दशमी वा शताब्दी खीष्टस्य निर्धारितः (कौलज्ञाननिर्णयस्य भूमिका, पृ० २५-२८)। एष एव समयस्तस्य श्रीमत्या डॉ० कल्याणीमल्लिकमहोदययाऽप्यङ्गीक्रियते सिद्धसिद्धान्तपद्धतिभूमिकायाम् (पृ० ११)। मत्स्येन्द्रनाथस्याभिनवगुप्तेन स्मृतत्वात्तत्पूर्ववर्तित्वमनिवार्यतयाऽऽपतितम्। इतिहासक्रमे कालगणनायां प्रतिसंतति पञ्चविंशतिवर्षाणामन्तरमङ्गीक्रियते तदभिज्ञैः। शिष्यपरम्परायामप्येष एव क्रमोऽङ्गीकर्तव्यः। डॉ० कल्याणीमल्लिकमहोदयया तु गोरक्षस्य मत्स्येन्द्रशिष्यतासम्पादनाय शिष्यपरम्परायां वर्षशतस्यान्तरमङ्गीक्रियते। अत्र युक्तायुक्तत्वमैतिहासिका एव विचारयन्तु। मत्स्येन्द्रगोरक्षमतयोः सिद्धान्तगतं यौगिकप्रक्रियागतं चापि वैषम्यमनयोर्भिन्नसन्तानत्वमेव पोषयति।

किञ्च, अद्वयवज्रसंग्रहे चतुर्मुद्राप्रकरणे (पृ० ३२) हठयोग इति, सेकहठयोग इति च दर्शनाद् गोरक्षनाथस्य हठयोगप्रतिष्ठापयितृत्वमपि संदिग्धमेव। अत्र मनीषिभिः पूर्वाग्रहग्राह-विनिर्मुक्तैः सविशेषं दत्तावधानैः पुनरपि परिशीलनीयोऽयं विषयः।

इति तन्त्रालोकविवेक( आ० ४, पृ० १५ )धृतागमवचने योगस्य षडङ्गानि भाषितानि। अत्र पातञ्जलयोगप्रतिपादितानि यमनियमासनरूपाणि त्रीण्यङ्गानि न दृश्यन्ते। शिष्टमङ्गपञ्चकमुभयत्र समानम्, यद्यपि प्रतिपादनपद्धतौ वर्तते भेदः। तर्काख्यो योगाङ्गोऽत्राभिनवो दृश्यते पातञ्जलयोगापेक्षया। "योगाङ्गत्वे समानेऽपि तर्को योगाङ्गमुत्तमम्" ( १७।१८ ) इति च भाष्यते तद्विषये मालिनीविजयोत्तरे तन्त्रालोके ( ४।१५ ) च। यमनियमौ सर्वेष्वेव भारतीयेषु दर्शनेषु धर्माङ्गत्वेन चित्तशुद्धिसाधनत्वेन चाविशेषं प्रतिपाद्येते। आसनाख्यो योगाङ्गस्तन्त्रेषु किमर्थं परित्यक्त इति विचारणीयोऽयं विषयः। यावदुपलब्धानामपि शैवागमानां देवनागरसंस्करणाभावादत्र सप्ताङ्गयोगप्रतिपादकं मृगेन्द्रागमयोगपादमाश्रित्य किमप्युच्यते। तत्र हि—

प्राणायामः प्रत्याहारो धारणा ध्यानवीक्षणे।
जपः समाधिरित्यङ्गान्यङ्गी योगोऽष्टमः स्वयम्॥

इति जपोऽपि योगाङ्गेषु समावेशितः, एवं चैषां लक्षणानि तत्र प्रदर्शितानि—

प्राणः प्रागुदितो वायुरायामोऽस्य प्रखेदनम्।
प्रेरणाकृष्टिसंरोधलक्षणं क्रतुदोषनुत्॥
ततः सुखलवास्वादे तेषां वृत्तस्य चेतसः।
प्रत्याहारो विधातव्यः सर्वतो विनिवर्तनम्॥
तेनेन्द्रियार्थसंसर्गविनिवृत्तेश्रितो मतिः।
धारणायोग्यतामेति पदे स्वेच्छाप्रकल्पिते॥
चिन्ता तद्विषया ध्यानं तच्चादिष्टं मुहुर्मुहुः।
तदेकताननतामेति स समाधिर्विधीयते॥
जपस्तद्भाषणं ध्येयसंमुखीकरणं मुने।
ऊहोऽभिवीक्षणं वस्तुविकल्पानन्तरोदितः॥ ( १।४-८ )

ज्ञानयोगक्रियाचर्याख्यपादचतुष्टयात्मकेष्वन्येष्वपि शैवागमेष्वेतदनुकारमेव योगाङ्गानां षट्कं सप्तकमष्टकं वा निरूपितं स्यात्। पाञ्चरात्रागमीयविष्णुसंहितायाम्—

प्राणायामोऽत्र पूर्वं तु प्रत्याहारोऽथ धारणा।
ततस्तर्कः समाधिश्च ध्यानं चाङ्गानि षट् क्रमात्॥ ( २०।५७-५८ )

इत्येवं तान्येव योगाङ्गानि क्रमव्यत्यासेन वर्णितानि, लक्षितानि चैवम्—

प्राणानां यस्त्विहायामः क्रमादेवं प्रकीर्तितः॥
सर्वशास्त्रेषु शास्त्रज्ञैः प्राणायामः स उच्यते।
नाभ्यादिषु यथोद्दिष्टं बीजं भूतगुणात्मकम्॥
क्रियाभिर्धार्यते याभिस्तत्क्रिया धारणा मता।
अन्वयव्यतिरेकाभ्यां यस्माद् यदुपलभ्यते॥
धारणादिषु कालेषु स तर्कः संप्रकीर्तितः।

अविपर्यासरूपेण यथाकर्मं गुणात्मकम् ॥
समाधिश्चेह विज्ञेयो धारणाभिस्त्रिभिस्त्रिभिः ।
ध्यातृध्येयस्वरूपं यत् तत्र रुन्ध्यात् प्रदर्शनम् ॥
समाधित्रिगुणं यावदेवं ध्यानस्य लक्षणम् ।
( २०।६१-६२, ६८-७२ )

अत्र द्वितीययोगाङ्गस्य प्रत्याहारस्य लक्षणं न दृश्यते ।

गुह्यसमाजाख्ये बौद्धतन्त्रे—

[1]प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
अनुस्मृतिः समाधिश्च षडङ्गो योग उच्यते ॥ (१८।१४०)

इत्येवं षडङ्गो योग उक्तः । अत्र शैववैष्णवागमपरिगृहीतस्य तर्कस्य स्थानेऽनुस्मृतेः समावेशः । गुह्यसमाजोक्त एष षडङ्गो योगोऽन्येषामपि बौद्धतन्त्रग्रन्थानां साहाय्येन सम्यग् व्याख्यातो गुरुभिः स्वकीयस्य "भारतीय संस्कृति और साधना" इत्याख्यस्य ग्रन्थस्य प्रथमे भागे ( पृ० ५३७-५४० ) इति तत एवावलोकनीयः । एवं योगाङ्ग-प्रतिपादने मतभेदे जाग्रत्यपि षडङ्गो योगः सर्वेष्वपि शैववैष्णवबौद्धतन्त्रेषु वर्ण्यत इति स तान्त्रिकयोगनाम्नाऽत्र संबोधितः ।

## सप्रश्रयनिवेदनम्

एवमितो वर्षपञ्चकात् प्राक् कृतारम्भस्यास्य ग्रन्थस्य सम्पादनकर्मण इतिकर्तव्य-ताऽत्र परिसमाप्यते । अस्मन् शुभे कर्मणि कृतसहायानां सहृदयानां सुहृदामादरणीयानां विदुषां परमश्रद्धास्पदानां गुरूणां च स्मरणमवसरप्राप्तमत्र चर्च्यते । सर्वप्रथममत्र तत्र-भवानभिनवगुप्तपादाचार्यः, श्रीमान् लक्ष्मीधरः, सर्वतन्त्रस्वतन्त्रः श्रीभास्कररायश्च सश्रद्धं स्मर्यन्ते । विद्वद्भिरेतैः क्षुण्णेन पथा प्रवृत्तानां लक्ष्मीधरभास्कररायमन्तव्यानि यत्र क्वचन समालोचयतामप्यस्माकं चेतसि तौ प्रति श्रद्धाभरो नाणुमात्रमपि क्षणमपि तिरोबभूव । वयमेतानन्यांश्च पूर्वाचार्यान् सर्वप्रथमं प्रणमामः । तदनु येषां कृपाभरेणा-गमिकदर्शनानुशीलनरुचिरस्मासु समुद्भूता, तेषां वन्दनीयचरणानां गुरुवर्याणां कविराज-महोदयानां चरणयोरयं शब्दसुमनोऽञ्जलिः समर्प्यते । विगतेषु मासेषु महानुभावाना-मेतेषां सान्निध्येनैवायमुपोद्घातभागः पूर्णतामगात् । तदिदं सान्निध्यं योगतन्त्रविभागे व्याख्यातृरूपेणाऽस्मान् नियोजयतां माननीयानामुपकुलपतीनां श्रीगौरीनाथशास्त्रि-महोदयानां कृपयाऽलम्भि । एतदर्थं कैः शब्दैस्तानभिनन्दामो वयम् । ग्रन्थसंस्करणे

१. प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥
इत्येवं दृश्यते पाठो भगवद्गीताभास्करभाष्ये ( पृ० १२७ ) । अत्र पूर्वार्धो गुह्यसमाजक्रममनुकरोति, किन्तूत्तरार्धे नास्त्यनुस्मृतेः परिगणनम् । तस्य स्थाने तर्कस्यैव तन्त्रालोकादिशैववैष्णवागमप्रतिपादितस्य योगाङ्गत्वेन ग्रहणम् । अत्र प्राणायामस्थाने प्रत्याहारस्य प्रथमोपादाने हेतुश्चिन्तनीयः ।

टिप्पणीषूपोद्घाते च प्रयुक्तानां मातृकाणां विभिन्नाभ्यः संस्थाभ्यो मूलमातृकाप्रतिलिप्यधिगमे संग्रहेऽवलोकने च कृतसहायानां संस्कृतविश्वविद्यालयोपकुलपतिचराणां पण्डितश्रीसुरतिनारायणमणित्रिपाठिमहोदयानामनुसन्धानसंचालकचराणां श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायानां वर्तमानानुसन्धानसंचालकश्रीबलदेव-उपाध्यायमहोदयानां सरस्वतीभवनग्रन्थाध्यक्षचराणां डा० सुभद्रझामहोदयानां वर्तमानग्रन्थाध्यक्षश्रीविभूतिभूषणभट्टाचार्याणां च भृशमुपकारं स्मरामः। तासां तासां संस्थानामधिकारिणो वयं साधुवादैः सभाजयामः, याभ्यो मूलमातृकास्तत्प्रतिलिपयो वाऽधिगता अस्माभिः। मातृकापरिचयप्रसङ्गे च तासां सर्वासां नामानि सूचितान्येवास्माभिः। यात्राप्रसङ्गेषु याभ्यः संस्थाभ्यो व्यक्तिभ्यश्च साहाय्यमुपगतम्, सर्वास्ताः सादरं स्मृता अस्माभिर्यात्राविवरणप्रकाशके निबन्धे सूर्योदयपत्रे प्रकाशिते। ग्रन्थसम्पादनकर्मणि कृतसहायेषु सर्वप्रथमं काशीहिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालयाध्यक्षचरौ श्रीरामचन्द्रदीक्षित-श्रीरामचन्द्रशास्त्रिणौ सविनयं स्मर्येते, एतयोर्मनीषिणोः साहाय्येनैवास्माभिः संदिग्धस्थलपाठसंशोधने सामर्थ्यमधिगतम्। अत एव भणितमस्माभिष्टिप्पणीसमाप्तौ—"रामचन्द्रसहायेन" (पृ० ३२८) इत्यादि। उद्धरणानां स्थलनिर्देशे, उपोद्घातभाषायां भावव्यञ्जनासमर्थानां विशिष्टानां पदानां समुपस्थापने च संस्कृतविश्वविद्यालये आगमाध्यापकैः सुहृद्वरैः श्रीरघुनाथपाण्डेयमहोदयैः, व्याकरणगतसंशीतिनिवारणे च व्याकरणव्याख्यातृभिः सुहृद्वरैः श्रीकालिकाप्रसादशुक्लमहोदयैर्भृशमुपकृतम्। पाठसंकलने यदा तदा साहाय्यमाचरन्तौ वाराणसेयसंस्कृतविश्वविद्यालयप्रकाशनविभागपण्डितौ श्रीपरमेश्वरपाण्डेय-हरिहरदत्तदीक्षितौ सस्नेहं स्मर्येते। अन्तिमे 'प्रूफ' संशोधने सविशेषं दत्तावधानान् संस्कृतविश्वविद्यालयमुद्रणालयस्थान् पण्डितान् श्रीविभूतिनारायणपाण्डेय-हरिवंशत्रिपाठि - अम्बिकेश्वरमिश्र - दुक्खोपाध्यायान् साधुवादैः सभाजयामः। मुद्रणाक्षरसंयोजनादिकर्मसु सविशेषं दत्तावधानान् वाराणसेयसंस्कृतविश्वविद्यालयमुद्रणालयस्थान् कर्मचारिणः श्रीसत्यचरणभट्टाचार्य-मुन्नरराम-रामजीरणजीतसिंह-आत्मारामपाण्डेयानपि धन्यवादशतैः संयोजयामः। सर्वान्ते चानुक्रमणीभागस्य निर्माणे कृतसहायां ज्येष्ठपुत्रीं सौ० सुषमामाशीर्वादशतैः सभाजयामः। अत्र संस्करणे यत्किमपि वैशिष्टयं परिलक्ष्येत तत्सर्वं सर्वेषामत्र स्मृतानामेतेषां महानुभावानां साहाय्येनैवाहितं भवति। याश्च त्रुटयोऽत्रावशिष्टास्ता मदीयेनैव मतिमान्द्येन वा दृष्टिदोषेण वेति सोढव्यास्ता मनीषिभिः, "गच्छतः स्खलनं क्वापि" इति न्यायादित्येतावदेवोक्त्वा विरम्यते साम्प्रतम्॥

गुरुपूर्णिमा, संवत् २०२५
१०-७-१९६८ ई०
वाराणसी।

विदुषामाश्रवः—
**व्रजवल्लभद्विवेदः**
वा०स०वि०वि० योगतन्त्रविभागे व्याख्याता।

# संकेतपरिचयः

| संकेत | ग्रन्थ |
|---|---|
| अभि. | अभियुक्ताः । |
| अर्थ. | अर्थरत्नावली । |
| आ. | आथर्वणः । |
| ई. उ. | ईशावास्योपनिषद् । |
| · प्र. | ईश्वरप्रत्यभिज्ञा । |
| ई. प्र. वि. | ईश्वरप्रत्यभिज्ञाविमर्शिनी । |
| उ भै. | उन्मत्तभैरवः । |
| उ. ष. | उत्तरषट्कम् । |
| ऋ. | ऋग्वेदः । |
| ऋजु. | ऋजुविमर्शिनी । |
| ऐ. आ. | ऐतरेयारण्यकम् । |
| क क्र. | कर्मकाण्डक्रमावलिः । |
| कु. सं. | कुमारसंभवम् । |
| ग. स्तो. | गङ्गाधरस्तोत्रम् । |
| गो. नि. | गीतानिष्यन्दः । |
| चि. | चिद्वल्ली कामकलाविलासटीका (मद्रासमुद्रितं तृतीयं संस्करणम्) । |
| चि. | चिद्विलासः । |
| छा. उ. | छान्दोग्योपनिषद् । |
| ज्ञा. सा. | ज्ञानसारः । |
| त. | तन्त्रराजतन्त्रं कादिमताख्यम् । |
| त. वि. | तन्त्रालोकविवेकः । |
| त. स. | तन्त्रसद्भावः । |
| तन्त्रा. | तन्त्रालोकः । |
| तिमि. | तिमिरोद्घाटः । |
| तै. आ. | तैत्तिरीयारण्यकम् । |
| तै. उ. | तैत्तिरीयोपनिषद् । |
| तै. ब्रा. | तैत्तिरीयब्राह्मणम् । |
| तै. सं. | तैत्तिरीयसंहिता । |
| त्रि. क. | त्रिपुरसुन्दरीकल्पलता । |
| त्रि. द. | त्रिपुरसुन्दरीदण्डकम् । |
| त्रिपु. | त्रिपुरार्णवः । |
| त्रि. सा. | त्रिपुरासारसमुच्चयः । |
| द. स्मृ. | दक्षस्मृतिः । |
| दी. | दीपिका ( योगिनीहृदयव्याख्या ) । |
| ने. त. | नेत्रतन्त्रम् । |
| प. त्रि. | परात्रिंशिका । |
| प. सा. | परमार्थसारः । |
| प्र. सा. | प्रपञ्चसारः । |
| प्र.सा.वि. | पञ्चसारविवरणम् । |
| प्र. सं. | प्रपञ्चसारसंबन्धदीपिका । |
| प्र. हृ. | प्रत्यभिज्ञाहृदयम् । |
| बृ. उ. | बृहदारण्यकोपनिषद् । |
| बो. प. | बोधपञ्चदशिका । |
| भ. ग. | भट्टगङ्गाधरः । |
| भ. गी. | भगवद्गीता । |
| भा. | भास्करी ( ईश्वरप्रत्यभिज्ञाविमर्शिनीव्याख्या ) । |
| म. | महार्थमञ्जरी । |
| म. प. | महार्थमञ्जरीपरिमलः ( त्रिवेन्द्रम्संस्करणम् ) । |
| म. भा. | महाभारतम् ( गीताप्रेस-संस्करणम् ) । |
| म. शा. | मतशास्त्रम् । |
| मतो. | मतोत्तरम् । |
| मन्त्र. | मन्त्रराजः । |
| म. स्मृ. | मनुस्मृतिः । |
| मा. वि. | मालिनीविजयोत्तरम् । |
| यो. वा. | योगवाशिष्ठम् । |

योः हृ. योगिनीहृदयम् ।

यो.हृ.दी. योगिनीहृदयदीपिका ( द्वितीयं संस्करणम् ) ।

यो.हृ.से. योगिनीहृदयसेतुबन्धः ( सरस्वतीभवनग्रन्थमालासंस्करणम् ) ।

र. सं. रससारसंग्रहः ।

ल. लक्ष्मीधरा ( सौन्दर्यलहरीव्याख्या, मद्रासस्संस्करणम् ) ।

ल. सा. लक्षणसारः ।

व. र. वरिवस्यारहस्यम् ।

वा. वामकेश्वरीमतम् ।

वा. त. वामकेश्वरतन्त्रम् ।

वा. प. वाक्यपदीयम् ।

वा. पु. वायुपुराणम् ( मोरसंस्करणम् ) ।

वा. स्मृ. वाधूलस्मृतिः ।

वि. भै. विज्ञानभैरवः ।

श. दी. शम्भुनिर्णयदीपिका ।

शा.ति.व्या. शारदातिलकव्याख्या ( आगमानुसन्धानसमितिसंस्करणम् ) ।

शि. वि. शिवसूत्रविमर्शिनी ।

शि. सू. शिवसूत्रम् ।

शि. स्तो. शिवस्तोत्रावली ।

शिवा. शिवानन्दः ।

श्री. सं. श्रीकण्ठसंहिता ।

श्लो. वा. श्लोकवार्त्तिकम् ।

श्वे. उ. श्वेताश्वतरोपनिषद् ।

सं. प. संकेतपद्धतिः ।

स. म. सर्वमङ्गलाशास्त्रम् ।

सं. ब्रा. संहिताब्राह्मणम् ।

सा. प. साम्बपञ्चाशिका ।

सा. सु. सारस्वती सुषमा ( वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका ) ।

सि. पा. सिद्धनाथपादः ।

सि. म. सिद्धामतम् ।

सु. सुभगोदयः ।

सु. वा. सुभगोदयवासना ।

से. सेतुबन्धः ( नित्याषोडशिकार्णवव्याख्यानम्, आनन्दाश्रमद्वितीयसंस्करणम् ) ।

सौ. सौभाग्यवर्धनी ( सौन्दर्यलहरीटीका, मद्रासस्संस्करणम् ) ।

सौ. भा. सौभाग्यभास्कराख्यं ललितासहस्रनामभाष्यम् ।

सौ. ल. सौन्दर्यलहरी ( मद्रासस्संस्करणम् ) ।

सौ. सु. सौभाग्यसुधोदयः ।

सौ. हृ. सौभाग्यहृदयम् ।

स्प.का. स्पन्दकारिका ।

स्व. त. स्वच्छन्दतन्त्रम् ।

हं. नि. हंसनिर्णयः ।

हं. पा. हंसपारमेश्वरम् ।



# विषयसूची

## ग्रन्थभागः

**प्रथमः पटलः**

**द्वितीयः पटलः**

**तृतीयः पटलः**

**चतुर्थः पटलः**

# ग्रन्थभागः

तत्र

## नित्याषोडशिकार्णवः

शिवानन्दकृतया ऋजुविमर्शिन्या

विद्यानन्दकृतया अर्थरत्नावल्या

च संवलितः ।

# नित्याषोडशिकार्णवः

## शिवानन्दकृतया ऋजुविमर्शिन्या

### विद्यानन्दकृतया अर्थरत्नावल्या

च संवलितः

---

**गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।**

**देवीं मन्त्रमयीं नौमि मातृकां[1] पीठरूपिणीम्[2] ।। १ ।।**

---

ऋजुविमर्शिनी

स्थितं[3] यत्रेदमखिलं यन्मयं चास्य[4] भासनम् ।

यतः समुदयश्चास्य[5] तत्संवित्तिपदं नुमः ।।

शिवादिक्षितिपर्यन्तः[6] षट्त्रिंशत्तत्त्वसंचयः[7] ।

यस्योर्मिबुद्बुदाभासस्तं[8] सेवे[9] चिन्महोदधिम् ।।

---

अर्थरत्नावली

श्रीमन्महावनेशानपादपङ्केरुहद्वयम्[10] ।

योगीन्द्रमधुपव्रातसेवितं[11] सर्वदा भजे ।।

---

१. मातृका-वाक. । २. विग्रहाम्-वाख. । ३. "गजाननाय महसे प्रत्यूहतिमिरच्छिदे । अपारकरुणापूरतरङ्गितदृशे नमः ।।" इत्येष प्रथमः श्लोकः-ख. । ४. वास्य-ख. ग., वाच्य-घ. । ५. यो वास्य-ख. ग., यो वान्य-घ. । ६. पर्यन्तं-ख. चि. । ७. यम्-ख., याः-चि. । ८. भावा-चि. । ९. वन्दे-चि. । १०. "निहत्य विघ्नसन्तानमिष्टमाशु तनोति यः । तमजं शाम्भवीसूनुं वन्देऽहं गणनायकम् ।।" इत्येष प्रथमः श्लोकः-ख. ङ. च. ज. । ११. मधुद-क. ।

**स्वात्मानन्द**महेशानचरणा[१]न्तेनिवासिना ।
**शिवानन्देन** मुनिना रस्य[२]ते त्रैपुरो रसः ॥
असमञ्जसतां दृष्ट्वा वृत्तीनामिह तत्त्वतः ।
व्याक[३]रोमि मनाक् श्रीम**न्नित्याषोडशि[४]कार्णवम्** ॥
सर्वानुग्राहकं तन्त्रं[५] सर्वोपायावभासकम् ।
सर्वाधिका[६]रसंसिद्धयै बह्व[७]वातारयच्छिवः ॥
[1]**श्रीवामकेश्वरं** नाम शा[८]स्त्रं तत्र प्रकाशितम् ।
शिवेन संविदं देवीं लक्ष्यीकृत्य निजात्मिकाम् ॥

---

प्रियानन्दमहं वन्दे सदानन्दप्रकाशि[९]तम् ।
प्रपन्नजनतादुःखध्वान्तवि[१०]च्छेदभास्करम् ॥
आद्यं मिथुनमारभ्य स्वगुर्वन्तं क्रमेण तु ।
वन्दे गुर्वौघमीशान्याः करुणातरुणीप्रियम् ॥
[११]यत्पादाम्बुजसंभूतं रजो विमलयन्मनः ।
प्रसादं तनुते मह्यं तं रत्नेशं[१२] गुरुं भजे ॥

---

१. णाम्बुज–क. । २. रसते–घ. । ३. व्याकरोति–ख. । ४. शका–क. ग. । ५. तत्र–घ. । ६. कारि–क. । ७. भूमा–क., बह्वा–ख. । ८. तन्त्रं–क. । ९. शकम्–ख. घ. ङ. । १०. संभेद–ग. । ११. 'यत्पादाम्बुज····गुरुं भजे' इति श्लोकद्वयं नास्ति–ख. ङ. । १२. शगुरुं–क. ग. ।

रघुनाथौ नमस्कृत्य गोपीनाथौ च मे गुरू ।
नर्मदां मातरं चैव व्रजवल्लभशर्मणा ॥
तन्त्रग्रन्थान् समाश्रित्य नित्याषोडशिकार्णवे ।
प्राच्यव्याख्याद्वयोपेते क्रियते टिप्पणं मनाक् ॥

1. "अत एवास्वरसादृजुविमर्शिन्यामुक्तम्—'श्रीवामकेश्वरं नाम शास्त्रं तन्त्रं प्रकाशते । मध्ये शास्त्रस्य तस्यास्ति नित्याषोडशिकार्णवः ॥ तत्र च द्वे चतुःशत्यौ' इति" ( से० पृ० ६ )। अत्र भास्कररायेण 'सूत्रैश्चतुश्शतैर्युक्तः' इत्यस्य स्थाने 'तत्र च द्वे चतुःशत्यौ' इति पाठः कल्पित इति प्रतीयते, कस्यामपि मातृकायां तस्यानुपलम्भात् ।

मध्ये शास्त्रस्य तस्यास्ति **नित्याषोडशिकार्णवः**[1] ।
सूत्रैश्चतुश्शतैर्युक्तः कश्चिद् भागो रसावहः[2] ॥
स च पञ्चपटल्यात्मा कर्मपञ्चकभासकः ।
पूजा प्रयोगो मुद्रा[3] च विद्याव्याप्ति[4]र्जपस्तुतिः[5] ॥
अवान्तरभिदः[6] सन्ति कतिचित्तत्र तत्र च ।
प्रधानकर्मशेषत्वान्न ता गण्याः पृथक्तया[7] ॥
अधीत्य चाचार्यमुखाच्छास्त्रं विद्यापुरस्सरम् ।
गुरूणां न्यवसत्[8] पार्श्वे **शिवानन्दमहामुनिः** ॥
कालेन महता सोऽयं गुरुभिः करुणोत्कटैः[9] ।
स्थापितोऽनुग्रहविधौ साभिषेकं सहाभिधम् ॥

---

यन्मुखाम्नायमासाद्य विद्यासिद्धिरभून्मम ।
महात्रिपुरसुन्दर्यास्तं रत्नेशं[10] गुरुं भजे ॥
शिवं कामेश्वरीं सिद्धान् त्रिविधानपि दम्पतीन् ।
कङ्कालप्रभृतीन् वन्दे गुरून् कल्याणरोचिषः ॥
गणनाथमहं वन्दे विश्ववन्द्यैः प्रपूजितम् ।
सर्वविघ्नौघनाशार्थं सर्वाभीष्टफलाप्तये ॥
वटुकं योगिनीवृन्दं भैरवानमितौजसः ।
प्रणमामीष्टसंपत्ति[11]संपादनसमुत्सुकान् ॥
[1]मन्त्र[12]मण्डलवर्णात्मरूपिणीं करुणापराम्[13] ।
धामसंवित्स्वरूपां तां वन्दे त्रिपुरसुन्दरीम् ॥

---

१. शका–क. ग. । २. पगः–घ. । ३. मुद्राश्च–ख. । ४. वाप्ति–ग. । ५. स्थितिः–क., स्त्वति–ग. घ. । ६. भिदाः–ख. ग. घ. । ७. पृथक् पृथक्–ख. । ८. निवसन्–ग. घ. । ९. त्तमैः–ख., त्तरैः–ग. घ. । १०. शगुरुं–क. ग. । ११. संप्राप्ति–ख. ङ. ज. । १२. यन्त्र–ख. । १३. करुणां–घ. ।

1. मन्त्रेति । निष्कीलसम्प्रदायानुसारेण गणेशेत्यादिसूत्रव्याख्यानावसरे—"तत्राद्यसूत्रेण वर्णचक्र-मन्त्रधामसंवित्स्वरूपं प्रमेयपञ्चकं दर्शयति" इत्यादिनोपक्षिप्तं व्याख्यानमत्रानुसन्धेयम् ।

ततः सम्पादयामास शिष्यानाचारभूषितान् ।
देशकालविशेषज्ञान् भक्तिरत्नमहोदधीन् ॥
ततः[1] **शिवानन्दमुनिः** शिष्यैरभ्यर्थितो भृशम् ।
सम्यग् वृत्तिविधानाय गम्भीरागमभाषया ॥
**लोपामुद्राक्रमा**यातसम्प्रदायादयं[2] पुनः ।
अकरोदागमस्यास्य व्याख्या**मृजुविमर्शिनीम्** ॥
ग्रन्थाः सहस्रं त्रिशतं पञ्चाशच्चैव[3] पञ्च च ।
मधुरो[4]दारसन्दर्भा सेय[5]**मृजुविमर्शिनी** ॥
सौभाग्यविषया वाणी सौमत्योदयदायिनी ।
सौगत्याप्ति[6]महापद्या सौस्थित्यं लभतामसौ[7] ॥

तत्र[8] पञ्चदशतिथ्यात्मकनित्याकला[9]नामधेयोपन्यासमुखेन परां व्यापिकां [1]सर्वतिथिमयी[10]मक्षयां षोडशीं[11] नित्याकलां परमामृतस्यन्दिनीं महात्रिपुरसुन्दरीसंज्ञां व्याचष्टे परमदेशिको महादेवः । **यच्छ्रुतिः**—"ईशानः[12] सर्वविद्यानाम्" (तै० आ० १०।४७।१) इति । आदितो द्वादशभिः श्लोकैः समस्त-

सम्प्रदाय[13]द्वयज्ञेन विमलस्वात्मशम्भुना ।
क्रियते टिप्पणं सम्यग् वामकेश्वरशास्त्रगम् ॥
अर्थरत्नावलीत्येषा ख्याता[14]ऽस्तु भुवनत्रये ।
भुवनेश्वरि ते भक्त्या क्रियते टिप्पणं[15] यतः ॥

प्रारीप्सितस्यास्य[16] शास्त्रस्या[17]विघ्नेन परिसमाप्त्यर्थं विशिष्टेष्ट[18]लाभाय च परमकारुणिको भगवान् लोकानुग्रहं चिकीर्षुर्बहुरूपाष्टकं शास्त्रं संक्षिप्य चतुश्शत-संख्यापरिमितैर्ग्रन्थैस्तत्सारमुद्धर्तुंकामस्तच्छास्त्रप्रतिपाद्यां वर्णावयवां महात्रिपुरसुन्दरीं

१. पुनः–ख. ग. घ. । २. दिमां–क. । ३. विंशतिश्चैव–ख. । ४. राकार–क. । ५. श्रीमत्यृ–ग. । ६. प्तिर्म–ग. । ७. लभ्यता–क. । ८. ततः–ख. । ९. 'नित्या' नास्ति–ख. । १०. मयीं महतीं–क. । ११. षोडश–क. । १२. ईश्वरः सार्व–क. । १३. दायान्वयज्ञेन–क. ग. । १४. ख्याता तु–ख ङ ज. । १५. कृतिरादरात्–ख. ङ. ज. । १६. 'अस्य' नास्ति–क. ग. । १७. ग्रन्थस्या–ग. । १८. 'इष्ट' नास्ति–क. ग. ।

1. सर्वतिथिमयीमित्यादि । षोडशनित्याप्रतिपादकानि सूत्राणि (१।२५–२८) अत्र परामर्शनीयानि ।

वाच्याभेदमयसमस्तवाचकपदाक्षराभिन्नपरशक्तिरूपपरशिवात्मक[1]**मातृकामयीं** "स्वरव्यञ्जनयोः कृत्स्नलोकवेदाश्रयैव[2] वाक्" इति स्थित्या लौकिकवैदिक**तान्त्रिकेतिहासपुराणदर्शन**सारभूताम् [1]**आणवशाक्तशाम्भवात्मक**मन्त्रकोटिजननीमकृत्रिमाहंपरामर्श[3]मयीममृतां भगवतीं[4] वाचं[5] व्याचष्टे ।

[6]अथ ग्रन्थो व्याख्यायते—**गणेशेत्यादि । रू[7]पिणीमिति** पदं गणेशादिभिः पञ्चभिः पदैः संबद्धचते, तत्तद्रू[8]पिणीमिति । पूर्वार्धेन मातृकायाः[9] प्रपञ्चात्मकता कथ्यते, उत्तरार्धेन निजमस्याः[10] स्वरूपम्[11] । **गणेशाः** श्रीकण्ठादयो रुद्राः, ते विश्वानुजिघृक्षापरा गणेशाः[12] स्थिताः केचन[13] रुद्रावतारा

---

[14]महत्या भक्त्या महादेवः प्रणमति—गणेशग्रहनक्षत्रेत्यादिना[15] । **गणेशाश्च ग्रहाश्च** नक्षत्राणि च योगिन्यश्च राशयश्च गणेशग्रहनक्षत्रयोगिनीराशयः, ( [16]ता?ते ) एव रूपं यस्याः सा तथाभूता । [2]गणेशाः श्रीकण्ठादयो रुद्राः पञ्चाशत्संख्याकाः[17] । गणा[18] आदि-

---

१. परा–क. । २. श्रया–क., श्रयेव–घ. । ३. परमार्थ–ग. । ४. वाचं भगवतीं–ग. घ. । ५. 'वाचं' नास्ति–ख. । ६. अथ ग्रन्थो व्याख्यायते' नास्ति–क. । ७. रूपिणीपदं–क., रूपिणीति पदं–घ. । ८. तद्रू-क. ख. घ. । ९. 'मातृकायाः' नास्ति–ख. । १०. 'निजकृत्रिमाहंपरामर्शमयीमृतां वाचं भगवतीं व्याचष्टे' इत्यधिकोऽशुद्धश्च पाठः–घ. । स चात्रानावश्यकः, श्लोकावतरणिकायां यथास्थानं तस्य पूर्वमेव दृष्टत्वात् । ११. निजमात्मस्वरूपम्–क. । १२. गणेशस्थिताः–ख.घ. । १३. केचिद्–क., 'केचन रुद्रावताराः' नास्ति–ख. । १४. महाभक्त्या–ख. ङ., श्रीकण्ठनाथापरपर्यायो–घ. । १५. 'सूत्रेण' अधिकः पाठः–ख.ङ.ज. । १६. तान्येव–ख. घ. ङ. । १७. ख्यकाः–ख. ङ. । १८. गणेशा अकारादिक्षकारान्ता वर्णात्मानः–ख. ङ. ।

1. आणवेत्यादि । आणवशाक्तशाम्भवसमावेशजनका मन्त्रा अप्यत्र आणवाद्यात्मका एवोक्ताः, कार्यकारणयोरभेदाध्यासात् । अत्राणवाद्युपायपरिचय **उपोद्घाते द्रष्टव्यः** ।
2. "गणेशा विघ्नेश्वरादिगणेश्वरान्ता एकपञ्चाशद्विनायकमूर्तयः" ( से०, पृ० ८ ) इति, "यत्तु प्राञ्चः सहस्राणि सहस्रशो ये रुद्रा इति श्रुत्योक्ताः श्रीकण्ठादयो रुद्रगणाः पञ्चाशदिह गणेशपदेनाभिधीयन्त इति व्याचख्युः । परे तु इन्द्रज्येष्ठा मरुद्गणा इति श्रुत्युक्ता एकोनपञ्चाशन्मरुद्गणा गणेशपदेन गृह्यन्त इति व्याचक्षते । तदुभयमपि चिन्त्यम्" (से०, पृ० ९-१०) इति च भास्करराय आह । अत्र सेतुबन्धकारो योगिनीहृदयं (३।१३-१९) प्रमाणीकृत्य 'प्राञ्चः', 'परे तु' इति पदाभ्यामृजुविमर्शिनीमर्थरत्नावलीं च क्रमशः खण्डयति

मरुद्गणा इव, "श्रीकण्ठोऽनन्त"[1] (प्र०सा० ३।३९) इत्यादि । **यच्छ्रुतिः**[1]—"सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्" (तै० सं० ४।५।११।१) इत्यादि । **ग्रहाः** सूर्यादयः, "स्वरेशः सूर्योऽयम्"[2] (प्र० सा० ४।२५) इत्यादि । **नक्षत्राणि**

---

क्षान्ता वर्णाः, ते [3]पञ्चाशद्वर्णात्मका इति यावत् । अथवा गणा[4] इन्द्रप्रमुखाः "इन्द्रज्येष्ठा मरुद्गणाः" ( ऋ० १।२३।८ ) इति[5] श्रुत्युक्ता मरुद्गणाः पञ्चाशत्[6] । तेऽपि वर्णात्मका इत्यर्थः । ग्रहाः सूर्यादयः । तेऽपि[7] वर्णसंभूताः । तत्र स्वरेभ्यः सूर्यः[4] । कवर्गाल्लोहितः ।

---

१. 'यच्छ्रुतिः....अधिभूम्यामित्यादि' नास्ति–क. ग. घ. । २. 'स्वरेशः सूर्योऽयमित्यादि' नास्ति–क. । ३. 'ते....यावत्' नास्ति–ख. घ. ङ. । ४. गणेशा इन्द्रमुखाः–ख. ङ. । ५. इत्यादि–घ. । ६. तेऽपि पञ्चाशद् वर्णात्मका इत्यर्थः–ख. ङ. । ७. तेऽप्यर्ण–क. घ., ते वर्ण–ग. ।

महता आटोपेन । गणेशपदस्य श्रीकण्ठादिरुद्रपरत्वं मरुद्गणपरत्वं च शिवानन्दविद्यानन्दाभ्यामुभाभ्यां व्याख्यातम्, अथापि सहस्राणीति श्रुतिः शिवानन्देन, इन्द्रज्येष्ठा इति श्रुतिश्च विद्यानन्देनोद्धृता । इन्द्रेण सहिता मरुद्गणाः पञ्चाशद्भवन्ति । अर्थरत्नावली तामेव संख्यां निर्दिशति । अतः 'एकोनपञ्चाशत्' इति संख्यानुवादः सेतुबन्धकारस्यायथार्थः । गणेशेत्यादिसूत्रस्थानि गणेशग्रहनक्षत्रराशिपदानि प्रपञ्चसारमनुसृत्य व्याख्यातानि शिवानन्दविद्यानन्दाभ्याम्, न तु योगिनीहृदयम् । योगिनीहृदयतन्त्रं वामकेश्वरतन्त्रान्नित्याषोडशिकार्णवापरपर्यायात् पृथगिति साधितमस्माभिर्योगिनीहृदयस्यानुप्रास्ताविके । अत्रत्यमेतद्व्याख्यानद्वयमपि तस्यैव मतस्य पोषकम् ।

1. "श्रीकण्ठोऽनन्तसूक्ष्मौ च" इत्यादि "शिवः संवर्तकस्ततः" ( ३।३९–४४ ) इत्यन्ताः प्रपञ्चसारश्लोका अत्राभिप्रेताः ।
2. "तदा स्वरेशः सूर्योऽयं" इत्यादि "यवर्गजोऽयं शीतांशुः" ( ४।२५–२६ ) इत्यन्तौ प्रपञ्चसारश्लोकावत्र स्मरणीयौ ।
3. पञ्चाशद्वर्णात्मका इति । ग्रन्थकारः प्रस्तुतं स्थलं पञ्चमसूत्रस्थसिद्धमातृकापदव्याख्यानस्थलं च विहायान्यत्र सप्तषष्टिवर्णान् प्रतिपादयति ।
4. "ग्रहेषु तु सूर्यः षोडशस्वररूपः । मङ्गलबुधगुरुशुक्रशनैश्चराः कादिवर्गपञ्चकरूपाः । चन्द्रराहू अन्तस्थोष्मरूपौ । क्षकार एकः केतुरूपः । ळकारस्तु लकारेणैव गतार्थ इति सम्प्रदायः" ( से०, पृ० ८ ) इति सेतुबन्धे दृश्यते । अत्र योगिनीहृदयेऽपि ( ३।२२-२४ ) मङ्गलशुक्रबुधगुरुशनैश्चरा इत्यर्थरत्नावलीधृतः प्रपञ्चसारानुमोदितश्च क्रमो द्रष्टव्यः ।

अश्विन्यादीनि "आभ्यामश्वयुग्"[1] (प्र० सा० ४।५६) इत्यादि। **योगिन्यो** ब्राह्म्याद्याः। वक्ष्यति च "वर्गानुक्रमयोगेन" (१।११) इति। **राशयो** मेषा-

---

चवर्गात् काव्यः। टवर्गाद् बुधः। तवर्गात् सुरगुरुः। पवर्गात् शनैश्चरः। यवर्गात् शीतांशुरिति सप्तग्रहात्मिका[2] मातृका। अथवा नवग्रहात्मिका मातृका। तत्र शवर्ग-ळक्षप्रभवौ राहुकेतू। [3]नक्षत्ररूपिणीत्यत्रायमाशयः—अआभ्याम् अश्विनी। इकाराद् भरणी। परतो लिपित्रयात् कृत्तिका। पुनस्तत्पराच्चतुष्टयाद् रोहिणी। एदैतोर्मृग-शीर्षार्द्रे। ओऔभ्यां पुनर्वसू। [4]अमसोः रेवती। कतस्तिष्यः। खगयोरश्लेषा। घङयोर्मघा। चार्णात् पूर्वा। छजयोरुत्तरा। झञयोर्हस्तः। टठयोश्चित्रा। डार्णात् स्वाती। ढणयोर्विशाखा। तथदैरनुराधा। धार्णाद् ज्येष्ठा। नपफैर्मूलम्। बार्णात् पूर्वाषाढा। भार्णादुत्तराषाढा। मार्णात् श्रवणः। यरयोर्धनिष्ठा। लार्णात् शतभिषक्। वशयोः (पूर्वा) प्रौष्ठपदा। षसहेभ्यः परा स्मृता। अंअःळक्षेभ्यो रेवती। एवं नक्षत्ररूपिणी मातृका। [5]योगिनीरूपेत्यत्रायं भावः—अवर्गप्रभवा ब्राह्मी। कवर्गाद् माहेश्वरी।

---

१. तारा अश्व–क.। २. 'सप्तग्रहात्मिका मातृका' नास्ति–क. ग.। ३. त्मिका तदा शादिळक्ष–ख. ङ. ज.। ४. शवर्ण–ग.। ५. स्वाती डाक्षरसंभूता विशाखा ढणयोस्तथा–घ. ज.। ६. संभवा–घ.।

1. "आभ्यामश्वयुग्" इत्यादि "षसहेभ्यः परा स्मृता" (४।५२–५७) इत्यन्तान् प्रपञ्चसारश्लोकान् स्मारयत्यत्र ग्रन्थकारः।
2. सप्तग्रहात्मिकेति। "सप्तग्रहात्मिका प्रोक्ता यदेयं सप्तभेदिनी" (४।२४) इति प्रपञ्च-सारवचनमत्रानुसन्धेयम्।
3. "नक्षत्रेषु यथा—'युग्ममेकं त्रयं वेदा एकमेकं द्वयं ततः। एकं युग्मं युग्ममेकं युग्मं युग्मं युगं क्रमात्॥ एकं युग्मं त्रयं चैकं त्रयमेकैकमेककम्। युग्ममेकं युगं त्रीणि युग्मं बिन्दु-विसर्गयुक्॥' (यो० हृ०, पृ० २०४) इति। अत्र अश्विन्यादिक्रमेणाकारादिवर्णेषु क्रमा-द्युग्ममेकमित्यादि योज्यम्। अं आं इत्यक्षरद्वयात्मिकाऽश्विनी। इंकाररूपा भरणी। ईं उं ऊं इत्यक्षरत्रयरूपा कृत्तिकेत्यादिरर्थः, परन्तु बिन्दुविसर्गस्वरौ क्षकारान्ते योजनीयौ। तेन ळं क्षं अं अः इत्यक्षरचतुष्टयरूपा रेवती सिद्ध्यति" (से० पृ० ९) इति सेतुबन्धे।
4. "अमसोः रेवती" इति पाठोऽनावश्यकः, अन्ते रेवतीनक्षत्रस्य परिगणितत्वात्।
5. "योगिन्यो डाकिन्याद्याः सप्त देवताः" (से०, पृ० ८) इति, "योगिन्यस्तु डरलकसहयाद्याख्याः सप्त। तासां स्वरूपं तु स्वराः षोडश, ककाराद्या द्वादश, डकाराद्या दश, बकाराद्याः षट्,

दयः[1], "आद्यैर्मेषाह्वयो[2] राशिः"[1] (प्र० सा० ४।३४) इत्यादि। देवीं

---

चवर्गात्[3] कौमारी। टवर्गाद्[4] वैष्णवी। तवर्गाद्[5] वाराही। पवर्गाद्[6] ऐन्द्राणी। यवर्गात्[7] चामुण्डा। शवर्गाद् महालक्ष्मीः। एवं[2]योगिनीमयी मातृका। राशिरूपिणी[8]

---

१. द्याः–ग.। २. अन्यैर्मेषाह्वयैरित्यादि–क.। ३. 'चवर्गात्....एवं' इत्यस्य स्थाने–'कौमारी तु चवर्गस्था टवर्गस्था तु वैष्णवी। तवर्गजन्या वाराही तथैन्द्राणी पवर्गगा॥ चामुण्डा तु यवर्गस्था महालक्ष्मीः शवर्गगा। इत्यनेन' इति पाठः–ख. ङ. ज.। ४. टवर्गसंभवा–घ.। ५. तवर्गजन्या–घ.। ६. पवर्गक्षेत्रा–घ.। ७. यवर्गप्रभवा–घ.। ८. राशिमयी–ग., राशिरूपिणीमिति–ख. ङ.।

वकाराद्याश्चत्वारः, हकारसकारौ, समष्टिश्चेत्येवंरूपं क्रमाद्भवति। ळकारः पूर्ववत् [ ळकारस्तु लकारेणैव गतार्थ इति सम्प्रदायः, तत्रैव पृ० ८ ]" ( से०, पृ० ९ ) इति च सेतुबन्धे। अत्रेदं बोध्यम्—"त्वगादिधातुनाथाभिर्डाकिन्यादिभिरप्यसौ। वर्गाष्टकनिविष्टाभिर्योगिनीभिश्च संयुता॥" (२।६०-६१) इत्येवं योगिनीहृदये योगिनीपदविवरणं दृश्यते। अग्रे च तत्रैव–"विशुद्धौ हृदये नाभौ स्वाधिष्ठाने च मूलके। आज्ञायां धातुनाथाश्च न्यस्तव्या डादिदेवताः॥" (३।३३) इत्यत्र षट्सु स्थानेषु त्वगसृङ्मांसमेदोमज्जाशुक्राख्यानां षण्णां धातूनां स्वामिन्यो डाकिनीराकिणीलाकिनीकाकिनीसाकिनीहाकिन्यो देवता न्यस्तव्या इति प्रदर्शितम्। "योगिन्यश्च डाकिन्याद्याः षट्" (पृ०१७३) इति चामृतानन्द आह। अत्रापि मुद्रापटले (३।१९-२०) षडेव योगिन्यः पठिताः। व्याख्यातं च शिवानन्देन—"षट्चक्रषड्र्मिषट्कोशाधिष्ठात्रीभिः डरलकसहदेवीभिर्द्वादशार्ध...." इति। सेतुबन्धकारेण तु—"मूलं च कं च तयोः समाहारो मूलकम्। प्राण्यङ्गत्वादेकवद्भावः। मूलाधारे ब्रह्मरन्ध्रे चेत्यर्थः" ( यो० हृ० से०, पृ० २०८ ) इति व्याख्यातम्। अत्र मूलं मृग्यम्।

1. "आद्यैर्मेषाह्वयो राशिः" इत्यादि "स्यात् क्षकारस्तु मीनगः" ( ४।३४–३७ ) इत्यन्ताः प्रपञ्चसारश्लोकाः स्मरणीया अत्र।

2. "काश्मीरास्तु—गणेशः कालरूपी विनायको योगिन्यो वशिन्याद्या इत्याहुरिति विशेषः" ( से०, पृ० १३ ) इति सेतुबन्धे। अत्रेदमवधेयम्—"गणेशग्रह" इत्यादिका द्वादशश्लोकी कादिमतेऽपि ( ४।८८–९९ ) दृश्यते। तद्व्याख्यानावसरे मनोरमाकारेण सुभगानन्दनाथेनेदमुक्तम्—"देवीस्तोत्रश्लोकद्वादशकस्य पूर्वमेव नित्याषोडशिकार्णवे महात्मभिः काश्मीरिभिर्व्याख्यातत्वात्तेषां द्वादशानां श्लोकानामत्र व्याख्या सैव लिख्यते" ( पृ० ३६ ) इति। द्वादशश्लोकीतोऽन्यत्र तन्मतस्यानुपन्यासाद् भास्कररायेण सा व्याख्या न दृष्टा भवेत्। जयरथकृतेर्वामकेश्वरीविवरणतो भिन्नैवैषा व्याख्या, अत्र व्याख्यातपदानां तत्रानुपलब्धेः।

[१]सर्गादिक्रीडापरं सर्वोत्कृष्टत्वाद् [२]विजिगीषुमखिल[३]व्यवहारप्रव[४]र्तिकां द्योतमानां स्तोतव्यां गन्तव्यां च, दीव्यतेः [1]क्री[५]डाद्यर्थत्वात् । **मन्त्रमयीम्** अकृत्रिमाहंपरामर्शमयीम् । [2]**मातृकां** परावागात्मना [६]अनाहतभट्टारकपरमशिवस्वरूपां षट्त्रिंशत्तत्त्वप्रसरण[७]हेतुभूतां परां संविदमित्यर्थः । तदु[८]क्तमीश्वर-

---

यथा—[3]आद्यैरीकारा[९]न्तैर्मेषः । उकाराद्यैॠकारान्तै[१०]र्वृषः । ततस्त्रिभिर्यु[११]ग्मम् । एऐभ्यां कर्कटः । ओऔभ्यां सिंहः । अमः [१२]शवर्गळेभ्यश्च कन्या संजाता । वणिगाद्या मीनान्ता[4] राशयः कचटतपयेभ्यो यथाक्रमेण संजाताः । एवं राशिस्वरूपिणी [१३]मातृका । देवीं मन्त्रमयीमित्यादि । [१४]यत एवमुक्तप्रकारेण [१५]मातृकामयी, तत एव तत्प्रसूतसकलमन्त्रमयीत्यर्थः । देवी द्योतनात्मिका, प्रकाशशक्तिरिति यावत् । [१६]माति त्रातीति मातृका । स्वतेजोविजृम्भितानुग्राह्यजीवराशिं माति त्रातीति मातृके[१७]त्यर्थः ।

---

१. विश्वसर्गादि–क. । २. विजगिषु–क., विजगीषुर–घ. । ३. व्यापार–क. । ४. र्तिनीं–क. । ५. डार्थ–क. घ. । ६. पराभट्टारिकात्मकपरमशिवस्वरूपाम्–क. ङ. । ७. ‘हेतु’ नास्ति–घ. । ८. क्तं श्रीमदी–घ., ‘तदुक्तम्’ इत्यादि ‘विग्रह इति’ इत्यन्तः पाठो नास्ति–ख. । ९. न्तैरक्षरैर्मेषाह्वयो राशिः संभवति–ख. घ. ङ. ज. । १०. ॠषभः–ख. ङ. ज. । ११. मिथुनम्–ख. ङ. ज. । १२. शवर्गेभ्यः–ख. ङ. । १३. णीं मातृकाम्–क. ग. । १४. ‘यत’ नास्ति–ख. ङ. ज. । १५. मातृका मन्त्रमयो–ख. ङ. ज. । १६. मातृकेति । माति त्रातीति मातृका । कोऽर्थः–ख. ङ. ज. । १७. ‘इत्यर्थः’ नास्ति–ख. ङ. ज. ।

1. इमे चार्था महार्थमञ्जरीपरिमले १८० तमे पृष्ठे व्याख्याता द्रष्टव्याः ।

2. मातृकास्वरूपविचार उपोद्घातेऽवलोकनीयः ।

3. “राशिषु यथा—‘चतुष्कं त्रितयं त्रीणि द्वितयं द्वितयं द्वयम् । पञ्चकं पञ्चकं पञ्च पञ्चकं पञ्चकं ततः ॥ चत्वारि मेरुर्मीने स्युः कन्यायां पञ्च शादयः ।” ( यो० हृ०, पृ० २०६ ) इति । “मेरुः क्षकारो यकारादिचतुष्कं चेति मीनराशिः । शकारादिपञ्चकं बिन्दुविसर्गौ च कन्याराशिरित्यर्थः । स्पष्टमन्यत्” ( से०, पृ० ५ ) इति सेतुबन्धे ।

4. “चतुर्भिर्यादिभिः सार्धं स्यात् क्षकारस्तु मीनगः” ( ४।३७ ) इति प्रपञ्चसारवचनप्रामाण्येन मीनराशौ क्षकारोऽपि योजनोयः । योगिनीहृदयदीपिकास्थिताः “आद्यैश्चतुर्भिः” (पृ० २०८) इत्याद्याः श्लोका अप्येनमर्थं पोषयन्ति ।

**प्रत्यभिज्ञायाम्—**

सर्वथा[1] त्वन्तरालीनानन्ततत्त्वौघनिर्भरः ।
शिवश्चिदानन्दघनः परमाक्षरविग्रहः ।। (४।१।१४) इति ।

[1]**पीठरूपिणीं** विश्वचित्रभित्तिभूमिम् । उक्तं च—"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" ( प्र० हृ० ४ ) इति । **अभियुक्तवचोऽपि—**

---

पीठरूपिणीमिति[२] । अष्ट[३]पीठान्यपि कामरूपादिदेवीकोट्टान्तान्यष्टौ अष्टवर्गप्रभवाणि । तन्मयी मातृकेत्यर्थः । [४]तानि चोक्तान्युत्तरषट्के—

[2]कामरूपं भवेत् पूर्वे कोल्लगिर्यं तु दक्षिणे ।
चोम्भारं[५] पश्चिमे भागे उत्तरे चोणकं[६] भवेत् ।।
मलयं चाग्निदिग्भागे नैर्ऋत्यां तु कुलान्तकम् ।
जालन्धरं तु वायव्ये ऐशान्ये[७] देविकोट्टकम् ।। इति ।

---

१. धात्व–क., तत्त्वा–ग. । २. वीररूपिणीमिति । आगमे चतुःषष्टि-षट्पञ्चाशत्-अष्ट-षट्-पञ्च-चतुर्थी····रूपिणीत्युच्यते । तेषु बाह्यानष्टषट्कपीठप्राधान्यात् तद्व्याप्तिः प्रदर्श्यते । तानि चोक्तान्युत्तरषट्के–घ. । ३. 'अष्ट' नास्ति–ख. ङ. ज. । ४. 'तानि····इति' नास्ति–क. ग. । ५. चोहारं–घ. । ६. जणकं–घ., रणकं–ङ. । ७. ईशान्ये–ख. ङ. ज. ।

1. "पीठानि कामरूपादिच्छायाछत्रान्तान्येकपञ्चाशत्" ( से०, पृ० ८ ) इति, "पीठरूपिणीमित्यस्य ओजापूकाख्यपीठेषु स्वरूपमस्या इति देवीपक्षे, मन्त्रपक्षे तु लक्षणया कूटरूपिणीमित्यर्थो वर्णनीयः । पीठे श्रीचक्रे रूपमस्या इति वार्थः । एवं त्रय एवार्थाः प्रामाणिकाः" ( से०, पृ० १२ ) इति च सेतुबन्धे । कामरूपादिच्छायाछत्रान्तानां पीठानां नामानि योगिनीहृदये ( ३।३७–४३ ) द्रष्टव्यानि । अत्र विषये "कामपूर्ण" ( १।१२ ) इति सूत्रव्याख्यानान्यपि द्रष्टव्यानि । पीठसंबन्धिविचार उपोद्घाते प्रपञ्चितस्तत एवावलोकनीयः ।

2. प्राच्यां श्रीकामरूपो यमदिशि च तथा कोल्लपूर्वो गिरिः स्यात्
सोपाराख्यं प्रतीच्यां धनददिशि तथा चोड्डियाणं तु पीठम् ।
आग्नेय्यां चापि तद्वन्मलयगिरिरथ श्रीकुलान्तं निर्ऋत्यां
जालन्ध्रं वायुभागे त्रिणयनहरिति स्यात् तथा देविकोट्टम् ।। ( १५।४१ ) इति,

[1]स्वेच्छाविभा[1]वितानन्त[2]जगद्रश्मिवितानवत्[3] ।
नौमि संविन्महापीठं शिवशक्तिपदाश्रयम् ।। इति ।

"वाचीमा विश्वा भुवनान्यर्पिता" (तै० ब्रा० २।८।८।४) इति **रहस्य**[४]**-मपि** । **नौमि**[५] विश्वोत्कृष्ट[६]त्वेन परामृशामि, नुत्या[७] विमर्शमय्या तत्कल्पित-प्रमातृपदनिमज्जनेन[८] तत्समावेशमयो भवामीति[९] यावत् । अत्र मातृका-स्तुतिः[१०] समावेशात्मा प्राप्यत्वेनाभिधेया[2] । **मन्त्रमयीमिति** चिद्विकासा-मर्शात्मकं[११] मन्त्रवीर्यं तत्प्राप्तावुपाय उक्तः । **देवीमिति** द्योतनादिसतत्त्वं[१२] विश्वाभेदसारं षडध्वस्फारमयाऽकृत्रिम[१३]पूर्णाहन्ताप्रकाशघन[१४]संवित्तिरूपं फलमुक्तम् । अभिधेयोपाययोरुपायोपेयभावः[१५] सम्बन्ध इत्यभिधेयोपाय-सम्बन्धप्रयोजनानि चानेन सूत्रेण सूचितानि[१६] । किञ्च, **देवीमिति**[१७] दिव्य[१८]-

---

अथवा ओजापूकास्पर्शाख्यपीठपञ्चकात्मिका शरीरान्तः समुल्लसन्ती मातृकेति पृथिव्यप्तेजोवाय्वाकाशानां ब्रह्मविष्णुरुद्रेश्वरसदाशिवानां निवृत्त्यादिशान्त्यतीतकलानाम् ईशानादिसद्योजातान्तपञ्च[१९]ब्रह्मणां प्राणादिसमानान्तप्राणानाम् आत्ममनोमन्त्रशिव-

---

१. भिर्विहिता-क., च्छया भासिता-ख., विलासिता-चि. । २. न्तं-ग., न्द-चि. । ३. विलास-क. ख. ग. घ. । ४. 'रहस्यमपि' 'वाचीमा' इत्यतः पूर्वं स्थापितः-ख. ग. घ. । ५. नौमीति-क. । ६. त्कर्षि-ख. घ. । ७. नत्या-घ. । ८. परामृत-ख. । ९. ऽभवमिति-घ. । १०. मातृकासमावेशात्मस्तुति-क. । ११. कासविमर्शकं-ग. । १२. सर्वतत्त्वं-क. ख. । १३. सारमयमकृ-क. । १४. मय-ख. । १५. अभिधेयोपायोपेयभावः-क. । १६. दर्शितान्यनेन सूत्रेण-क. । १७. मिति च-ख. ग. घ. । १८. दिव्यभावा दीक्षा-ख. घ. । १९. 'पञ्च' नास्ति-क. ग. घ. ।

कामरूपी कोल्लगिरिः सोपारोऽड्याणके तथा ।
मलयाद्रिः कुलान्तं च जालन्ध्रं देविकोट्टकम् ।। ( १७।६ )

इति चेशानशिवगुरुदेवपद्धत्यां मन्त्रपादे ।

1. कामकलाविलासटीकायां चिद्वल्ल्यामपि १२, २९ तमयोः पृष्ठयोरुद्धृतोऽयं श्लोकः । तत्र द्वादशे पृष्ठे 'वितानवत्' इत्यस्य स्थाने 'विलासवत्' इति, ऊनत्रिंशे पृष्ठे च 'विभाविता' इत्यस्य स्थाने 'विलासिता' इति पाठः ।
2. "शङ्करस्तुतिः समावेशरूपा प्राप्यत्वेनाभिधेया" ( पृ० ८ ) इति स्पन्दनिर्णयवचनेन तुलनीयमेतत् ।

**प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।**
**कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥ २ ॥**

---

भावदायिका दीक्षा सूचिता । **मन्त्रमयीमिति** चानुष्ठानक्रमः । **नौमीति** समावेशात्मा विद्यासिद्धिः । **मातृकामिति**[१] च सर्वाधिकारिता । **पीठरूपिणी-मिति**[२] च पारम्पर्यक्रमः । महाविभूतिसमुदयस्थाने नित्याषोडशिकार्णवे[३] [1]यत्पूर्वैर्व्याकर्तृभिर्व्याकारि, यच्चास्माभिः किञ्चिद् व्याक्रियते, तत्रान्तरं त्यक्तावलेपमात्सर्याः स्वयमेव विपश्चितो विचिन्वन्तु ॥ १ ॥

**प्रणमामीति** । महादेवीम्[४] । देवीमिति प्राग्वत्[2] । सा च महीयसी, विरिञ्च्यादिसर्गादेरपि हेतुभूतत्वात्[५] । **मातृकाम्**[६]

सर्वेषामेव मन्त्राणां[७] विद्यानां च यशस्विनी ।
इयं योनिः समाख्याता सर्वतन्त्रेषु सर्वदा ॥
न विद्या मातृकातुल्या[८]················। (प०त्रि०८-९)

---

शक्तीनां[९] स्वरूपेत्यर्थः[१०] । एवं समस्तविश्वजननहेतुमातृकापरिकल्पितदिव्यावयवां[११] महात्रिपुरसुन्दरीं नमामीति[१२] यावत् ॥ १ ॥

प्रणमामि महादेवीमित्यस्य व्याख्या[१३]—प्रणमामि महादेवीं महाप्रकाशविमर्शरूपां[१४] परां शक्तिं कदाचिदप्यप्रच्युतशिवस्वभावां[१५] समाविशामीति यावत् । मातृकापदं व्याख्यातम् । परमेश्वरीं सकलजगन्नियमनहेतुशक्तिमित्यर्थः[१६] । कालहल्लोहलेत्यादि ।

---

१. 'च' नास्ति–क. । २. 'च' नास्ति–क. । ३. शका–क. । ४. प्रणमामि महादेवीमिति प्राग्वत्–ग. । ५. हेतुत्वात्–क. ग. घ. । ६. मातृकामिति प्राग्वत्–ख. । 'मातृकाम्' इत्यतः 'सूचितप्रभावाम्' इत्यन्तः पाठो नास्ति–ख. । ७. वर्णानां–ग. । ८. परा–घ. । ९. 'शक्तीनां' इत्यतः परम्–'प्रञ्चकानां पीठवाच्यानाम्' इत्यधिकः–घ. । १०. 'स्वरूपेत्यर्थः' नास्ति–घ., 'स्वरूपेत्यर्थः' इत्यतः परम्–'एवमखिलकालचक्रनयनहेतुभूतं ज्योतिश्चक्रं मातृकायामन्तर्भाव्य कालग्रासं करोतीयं भगवतीति यावत् । तदेवं समस्त' इत्यधिकः–ख. ङ. च. ज. । ११. मातृका-जातान्त–घ. । १२. नमामीति प्रथमसूत्रार्थः–ख. ङ. च. ज. । १३. व्याख्या लिख्यते–घ. । १४. विमल–क. ख. ग. । १५. प्रभावां–क. ख. ग. छ. । १६. 'शक्ति' नास्ति–ग. ।

1. ''यदन्यैः सर्वैर्विवृति····विचिन्वन्तु सचेतसः'' (पृ० १३) इति स्पन्दनिर्णयवचनेन तुलनीयम् ।
2. प्राग्वदिति । अत्र ''देवीं सर्गादि'' ( पृ० ८-९ ) इत्यादिग्रन्थपरामर्शः ।

इत्याद्याम्नायसूचितप्रभावाम् । **परमेश्वरीम्** । परमा प्रकृष्टा[१] परमशिव-स्वरूपा ईश्वरी महाविभूतिमयी या[२] ताम्[३] । **कालेत्यादि** । **काल**ोऽवच्छेदकः सङ्कलनात्मा परामर्शो बन्धनरूपः[४] । तदुक्तं **प्रत्यभिज्ञायाम्**—

> कालः सूर्यादिसंचारस्तत्तत्पुष्पादिजन्म वा[५] ।
> शीतोष्णे वाथ तल्लक्ष्यः[६] क्रम एव स तत्त्वतः ॥ (२।१।३) इति ।

**तन्त्रालोके**ऽपि—

> [७]एष कालो हि देवस्य विश्वाभासनकारिणी ।
> क्रियाशक्तिः समस्तानां तत्त्वानां च परं वपुः ॥ (६।३८) इति ।

तस्य **हल्लोहलो**[८] [1]लवादिप्रलयान्तो वेग इति सम्प्रदायः, तस्योल्लोलो[2] महोन्मेषः, तेन **कलना** बन्धनम्, ग्राह्यग्राहकग्रहण[९]संक्षोभात्मा संसृति[१०]रित्य-

---

कालस्य हल्लोहलः कालहल्लोहलः, तस्य उल्लोलः कालहल्लोहलोल्लोलः, उल्लोलो यथाभूतस्तेन कलना बन्धः, तस्याः[११] शमं करोतीति । प्रकारान्तरेण—कालस्य हल्लो-हलो वेगः, तस्य उल्लोल आवर्तविवर्तनम्, चञ्चलीभाव इति ( यावत् ), तेन कलना

---

१. उत्कृष्टा—क. । २. 'या' नास्ति—क. ख. । ३. कालोऽवच्छेदकः संकलपात्मना बन्धरूपः—क., अवच्छेदकमकलनाम्ना बन्धः—ख., कलनात्मा बन्धनरूपः—घ. । ४. 'तदुक्तं···वपुरिति' नास्ति—ख. । ५. ता—क., च—ग. । ६. क्ष्ये—ग. । ७. एकः—क. घ. । ८. हल्लोहलो विश्वावभासनता, स एवोल्लोलः समस्ततत्त्ववपुष्ट्वं तेन—ग. घ. । ९. 'ग्रहण' नास्ति—क. । १०. संस्मृति—क. । ११. तस्य—घ. छ. ।

1. लवादीति । "लवादिप्रलयान्तोऽयं कालः प्रस्तूयते ह्यज ॥ नलिनीपत्रसंहत्यां सूक्ष्मसूच्यभि-भेदने । दले दले तु यः कालः स कालो लववाचकः ॥" (१।२९-३०) इति प्रपञ्चसार-वचनमर्थमेनमुपोद्बलयति ।

2. "यद्वा उल्लोलकलना पदपूर्वोत्तरसंबन्धस्तस्य शमं नाशं करोतीति तथेति साम्प्रदायिकाः" ( से०, पृ० १३ ) इति सेतुबन्धे । "उल्लोलकलना पूर्वोत्तरसंबन्धः" (त० २।८९) इति तु काश्मीराणां व्याख्याने दृश्यते ।

**यदक्षरैकमात्रेऽपि[1] संसिद्धे स्पर्धते नरः।**
**रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥ ३ ॥**

---

भिप्रायः। तस्याः **शमकारिणीम्**[2], क्षोभशान्तिकरीमित्यर्थः[3]। क्षोभोपशान्तिः[4] परमं[5] पदम्। तदुक्तं **रहस्यगुरुप्रवरेण**[6]—

''यदा क्षोभः प्रलीयेत तदा स्यात् परमं पदम्'' (स्प० का० ९) इति।

**प्रणमामीति**[7] देहादिप्रमातृतोपशान्त्या[8] प्रकर्षेण निर्व्युत्थानं समाविशामीति यावत्। परावाग्विलासपरामर्शेन कैवल्यसिद्धिरिति द्योतितमनेन पद्येन ॥ २ ॥

**यदक्षरेति। यदक्षरैकमात्रे** यस्याः पूर्णाहन्ताया मातृकाया एकस्मिन्नप्यक्षरे न क्षरत्यश्नुते[9] वेति निष्पन्ने सम्यगभेदेनाहंपरामर्शमयेन **सिद्धे** आत्मबन्धनम्, तस्याः शमो नाश इत्यर्थः। शमकारिणीमिति। तस्य शान्तिसम्पादनस्वभावाम्। अयमर्थः—मृत्युवक्त्रात्[10] स्वभक्त[11]मुत्तारयतीति ॥ २ ॥

प्रणमामीत्यादि[12] शमकारिणीमित्यन्तम्। (अत्र) द्वितीय(सूत्र)पूर्वार्धेन प्रथमसूत्रप्रतिपादितं वर्णक्रममनूद्योत्तरार्धेन तदुपासकस्य मृत्यूत्तारणाख्यं फलं दर्शयति। पूर्वभागः स्पष्टार्थः। कालहल्लोहलः। कालस्य हल्लोहलः कालहल्लोहलः। हल्लोहलो वेगः। उल्लोलः[13] तस्य कालस्यातिरेकः। कलना तेन बन्धनम्। तस्य शमकारिणीमिति तस्य शान्तिसंपादनस्वभावामित्यर्थः। नाशयतीत्यार्थिकोऽर्थः। मृत्युवक्त्रात्[14] स्वभक्तं तारयतीति तात्पर्यम् ॥ २ ॥

यदक्षरेत्यादि विष्णुभिरित्यन्तेन तृतीयसूत्रेण व्यतिरेकमुखेन वर्णक्रमोपासकस्या-(वा)न्तरफलं दर्शयति। अत्रेयमक्षरयोजना—

यदक्षरैकमात्रेऽपीति[15]। यस्या मातृकाया अक्षराणां मध्य एकाक्षरमात्रेऽपि[16] संसिद्धे[17] सम्यक् सिद्धिं प्राप्ते सति नरः स्पर्धां करोति। रविश्च तार्क्ष्यश्च इन्दुश्च कन्दर्पश्च शङ्करश्च

---

१. मात्रेण–वाख.। २. संक्षोभ–ख.। ३. कारिणी–क.। ४. 'क्षोभोपशान्तिः परमं पदम्' नास्ति–ख.। ५. परं–क., परमपदम्–घ.। ६. गुरुणा–क.। ७. तां प्रणौ–ख., तां प्रण–ग. घ.। ८. प्राकृतो–क.। ९. त एवेति–घ.। १०. वक्त्रान्तर्गत–क. ग. छ.। ११. स्वभाव–ग. छ.। १२. इतः परं द्वादशसूत्रपर्यन्तं मद्रासमातृकासु भिन्नं व्याख्यानं दृश्यते। तदत्र सूक्ष्माक्षरेषु स्थापितम्। १३. उल्लासः–ङ.। १४. चक्रात्–ङ.। १५. यदक्षरेति–ख. ङ. च.। १६. एकाक्षरेऽपि–क. ग. छ.। १७. सिद्धे–क. ग.।

सात्कृते । **नरः** असौ साधको मनुष्यतयाऽवभासमानः[1] समुत्तेजितसहजौजः-प्रकर्षादिना गुणेन **रविणा** सह[2] **स्पर्धते**, विषमोचनवेगादिना **तार्क्ष्येण**, अमृतीकरणादिन्दुना[3], सौभाग्यादिना **कन्दर्पेण**, श्रेयस्करत्वादिना **शङ्करेण**, औज्ज्वल्यादिना[4]ऽ**नलेन**, महाविभूतिरूप[5]योगैश्वर्यादिना **विष्णुना** । एवमेकाक्षरसिद्धौ तत्तद्वै[6]भवेन सर्वदेवताविभूत्युत्कर्षो[7] भवति । मातृकासिद्धौ पुनः सर्वदेवतानां स्वयमुदयस्थानं भवतीति तात्पर्यम् ।। ३ ।।

---

अनलश्च विष्णुश्चेति रविताक्ष्र्येन्दुकन्दर्पशङ्करानलविष्णवः । तैः सह स्पर्धते[8] । तेषां तां तां श्रियं युगपदेवापहरतीत्यर्थः[9] । कोऽभिप्रायः ? सूर्यस्य प्रभाववत् प्रथितयशःप्रभावो भवति । तार्क्ष्यवद् दृष्टिपातमात्रेण [1]स्थिरकृत्रिमशङ्काख्यविषोपविषनाशको भवति । इन्दुवत् सर्वेषां प्राणिनामाह्लादजनको भवति । कन्दर्पवत् सर्वासां सुन्दरीणां विक्षोभको भवति । भूतप्रेतपिशाचानां दुष्टचेतसां शङ्करवदप्रधृष्यो भवति । अनलवदत्युज्ज्वलो भवति । विष्णुवत् सर्वेषां[10] प्राणिनां पालको भवति । एवं तत्तद्गुणग्राहित्वात् तैः सूर्यादिभिः सह स्पर्धां करोति नरोऽपीत्युक्तं भवति । यदा[11] [2]अक्षरैकमात्रस्याप्येवं माहात्म्यं प्रसिद्धम्, तदा मातृकायां[12] संसिद्धायां किं वक्तव्यमिति मात्रशब्दार्थः ।। ३ ।।

कोऽभिप्रायः ? सूर्यवत्तेजस्वी भवति । तार्क्ष्यवन्निर्विषीकुरुते । इन्दुवदाह्लादको[13] भवति । कन्दर्पवत् सुभगो भवति । शङ्करवदप्रधृष्यो भवति । अनलवदुज्ज्वलो भवति । विष्णुवत् पालको भवति । एवं तत्तद्गुणाकर्ष(क)त्वात्....

एवं तेजस्वितानिर्विषीकरणाह्लादसौभाग्याप्रधृष्यत्वौज्ज्वल्यपालकत्वाख्यावान्तरफलं वर्णक्रमोपासकस्य संभवतीति तात्पर्यम् ।। ३ ।।

---

१. या भास–क. । २. 'सह' नास्ति–घ. । ३. दिना इन्दुना–ख. ग. ४. जा–क. । ५. 'रूप' नास्ति–क., रूपैश्च–ग. घ. । ६. तद्वैभवेन–ग. घ. । ७. त्याकर्षो–ख. । ८. स्पर्धां करोति–ख. ङ. च. ज. । ९. देव हरती–ग., दपहरती–ङ, देवायं हर–छ. । १०. सर्वप्राणिपालको–ग. । ११. यदक्षरैकमात्रोपासकस्याप्येवं–ख. ङ. च. । १२. मातृकायाः समस्तोपासकस्य संसिद्धौ किं वक्तव्यमिति मातृकाशब्दार्थः–ख. ङ. च. । १३. दकारी–ख. च. ।

1. स्थिरेति । "स्थिरकृत्रिम" ( ४।४९ ) इति सूत्रमत्र स्मरणीयम् ।
2. "मनोरमायां त्वेकाक्षरमात्र इत्यस्यार्थो गुरुमुखादवगन्तव्य इत्युक्तम् । नाथचरणास्तु त्रिमूर्तीशाक्षरं तथात्वेनोपदिशन्ति" ( से०, पृ० १४ ) । त्रिमूर्तीशाक्षरम् ईकाराक्षरम्, कामकलाक्षरमिति यावत् ।

**यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।**
**वन्दे सर्वेश्वरीं[1] देवीं महाश्रीसिद्धमातृकाम् ।। ४ ।।**

**यदक्षरशशीति** । **यस्याः** संविन्मय्याः पराहन्ताया मध्यस्थितान्य-[2] **क्षराण्येव** विमर्शदशायां संसारतापहरत्वात्[3] [1]**शशिरूपाणि**, तेषां **ज्योत्स्ना** स्फुरत्ता, तया **मण्डितं** तन्मयीभूतम्[4] । ग्राहकादित्रिकं **भुवनत्रयम्**[5] । **सर्वेश्व-रीम्** । विश्वपोषकरत्वात्[6] । **महाश्रीसिद्धमातृकाम्** । देशकालाकारैरनियन्त्रित-स्वभावत्वाद् **महत्त्वम्**, विश्वाभेदमयत्वात्[7][8] **श्रीत्वम्**, शिवादिकीटान्तस्याहं-[9]

यदक्षरेत्यादि मातृकामित्यन्तेन चतुर्थसूत्रेण फलोपफलप्रतिपादकस्य वर्णक्रमस्य शब्दात्म-कतया प्रमाणभूतस्य पदमन्त्रात्मकस्य स्वविकारमात्मन्यन्तर्भाव्य[10] त्रिधा व्यवस्थितस्य कलातत्त्व-भुवनात्मकस्या[द्य ?ध्व]त्रयस्य[11] प्रमेयभूतस्य प्रकाशकत्वेन वाच्याभेदं दर्शयति । अत्रैषा-क्षरयोजना—

यदक्षरशशिज्योत्स्नेत्यादि[12] । यस्या मातृकायाः, अक्षराण्येव[13] शशिरूपाणि, आह्लादहेतुतया । अतोऽक्षरशशिज्योत्स्नया दीप्त्या मण्डितम्[14] अलङ्कृतं भुवनत्रयं ययेति । तां[15] सिद्धमातृकां श्रीकण्ठादिरुद्रजननीम् । नमस्करोमीत्यर्थः । अन्यच्च[16] मूलविद्यायां यानि[17] यानि शश्यक्षराणि संभवन्ति, तानि तानि प्राधान्येनोद्धृत्य स्तौमीत्यर्थः[18] । अत्र च[19] शश्यक्षरं सकारः, स तु द्वितीयतृतीयबीजयोरनुगतः[20], तस्य महिमानं मातृकाक्षर-

१. विश्वे–ब. । २. स्थाक्ष–क., स्थान्यक्ष–ख. । ३. हरण–ख. । ४. 'तन्मयीभूतम्' नास्ति–ख. । ५. 'त्रिकं भुवन' नास्ति-ख. । ६. कत्वात्–ग. । ७. वेद–क. । ८. कर–घ. । ९. स्यात्म–ख. । १०. 'स्व' नास्ति–ख. । ११. स्य द्वितीयस्य–ङ. । १२. 'यदक्षरशशि-ज्योत्स्नेत्यादि' नास्ति–ख. ङ. च. । १३. 'एव' नास्ति–ख. । १४. मण्डनीकृतं–ख. च. ज. । १५. 'तां' नास्ति–ख. । १६. अन्यत्र–ग. । १७. द्याया यान्यक्षराणि–ख. ङ. ज. । १८. स्तौतीत्यर्थः–ख. ङ. च. ज. । १९. तु.–ख. ङ. ज. । २०. रनुजः–ख. ग., रन्तर्गतः–ङ. च. ज. ।

1. "यस्या मातृकाया अक्षरेषु यः शशी अनुस्वारः ।........बिन्दुरिति यावत् । बिन्दोः सकाशा-देव सकलजगदुत्पत्तेः" ( से०, पृ० १४ ) इति, "अक्षराण्येव शशिन इति तु प्राञ्चः । विद्यान्तर्गतसकारस्य चन्द्रबीजत्वात् तस्यैवैषा स्तुतिरित्यन्ये" ( से०, पृ० १४-१५ ) इति च सेतुबन्धे । अत्राद्यं मतमुभयोष्टीकयोर्दृश्यते, अन्तिमं चार्थरत्नावल्याम् । मातृकाकोशेषु शशिशब्देनानुस्वारसकारावुभावपि गृह्येते ।

**यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।**
**ब्रह्माण्डादिकटाहान्तं[1] तां वन्दे[2] सिद्धमातृकाम् ।। ५ ।।**

रूपत्वात् **सिद्धत्वम्**, षट्त्रिंशत्तत्त्वोल्लासहेतुत्वाद्[3] **मातृकात्वम्** । **वन्दे** कृत्रिमदेहाद्यहन्ताभूमिन्यक्कारेणाकृत्रिमपूर्णाहं(ता)परामर्शात्मना समाविशामीति यावत्[4] ।। ४ ।।

**यदक्षरमहासूत्रेति** । **यस्याः** पूर्णाहन्तायाः पराशक्तेः कलाभूतानि[5] **यान्यक्षराणि** तान्येव विश्वसूचकतया[6] **महासूत्राणि**, तेषु प्रकर्षेण तादात्म्येन **ओतं**[7] समुल्लसितम्, (**एतत्**) [1]प्राग् व्याख्यातं **जगत्त्रयम्** । किंविशिष्टं जगत्त्रय-

---

स्तुतिव्याजेन दर्शितवानित्यर्थः । यद्वा[8] अक्षरशशीति शश्यक्षरं [2]चन्द्राक्षरम्, तस्य ज्योत्स्नेत्यादि पूर्ववद्योजना ।। ४ ।।

यदक्षरेत्यादि । सिद्धमातृकामित्यन्तेन पञ्चमसूत्रेण वाच्यस्य कलाद्यध्वत्रयस्य वाचकेन वर्णाद्यध्वत्रयेणाभेदं दर्शयति—

यदक्षरेत्यादि[9] । यस्या मातृकाया अक्षरात्मकमहासूत्रप्रोतमेतज्जगत्त्रयं[10] भाति[11], तां सिद्धमातृकां वन्दे[12] । ब्रह्माण्डादिकटाहान्तं[13] जगत्त्रयम्[14] । मूलाधारादिब्रह्मरन्ध्रान्तमित्यर्थः । इदमपि सूत्रं मातृकाक्षरमहिमानं सूचयति । सिद्धमातृकामिति । सिद्धाः पञ्चाशद् रुद्राः श्रीकण्ठादयः । तेषां जननीमित्यर्थः ।। ५ ।।

---

१. 'ब्रह्माण्डादि', 'यदेकादश' इति पङ्क्तिद्वयं नास्ति–ब., तत्स्थाने–''शक्तेर्नादस्ततो बिन्दुरक्षरं मातृका ततः । मूर्तिराद्या महेशानीत्येवं सा कीर्तिता बुधैः ।।'' इत्येष श्लोको दृश्यते । २. वन्दे तां– वाक. ख. ग. । ३. हेतुभूत–ख. । ४. अतः परम्–'चतुर्थश्लोको वर्णितः' इत्यधिकः पाठः–ग. । ५. तान्य–क. । ६. सूचन–ख. ग. घ. । ७. प्रोतं–ख. ग. घ. । ८. 'यद्वा····द्योजना' इत्यस्य स्थाने—'अत्र च वाच्यरूपं भुवनत्रयं कलातत्त्वभुवनात्मकमध्वत्रयमभिमतम्' इति पाठः–ख. च. ज. । ९. यदक्षरेति–ख. ङ. च. ज. । १०. अकारा–क. ग. छ. । ११. कलाद्यध्वत्रयं भातीत्यर्थः–ख. ङ. च. ज. । १२. 'वन्दे' इत्यतः परम्—'नमस्करोमीति तां सिद्धिमातृकां सिद्धिप्राप्तौ मातृकां जननीमिति यावत्' अधिकः पाठः–ख. ङ. च. ज. । १३. 'ब्रह्माण्डादि·········· जननीमित्यर्थः' नास्ति–च. ज. । १४. इतः परम्—'त्रयं कलातत्त्वभुवनात्मकमध्वत्रयमभिमतम्' अधिकः पाठः–ङ. ।

1. प्राग् व्याख्यातमिति । ''ग्राहकादित्रिकं भुवनत्रयम्'' (पृ० १६, प० ५) इत्येवमित्यर्थः ।
2. चन्द्राक्षरमिति । ईकार इति यावत् ।

**यदेकादशमाधारं[1] बीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ।। ६ ।।**

---

मिति ? तदाह—**ब्रह्माण्डादिकटाहान्तमिति** । [1]अनाश्रितादिकालाग्नि-रुद्रान्तम् । तां निस्सामान्यप्रसिद्धवैभवाम् । शिष्टं[2] प्राग्वत् ।। ५ ।।

**यदेकेति । यदेकादशं** यस्याः पूर्णाहन्ताया अनुत्तरादिप्रसरेषु (येषां[3] संसरो[4] नामेति ?) यदेकादशं[5] तदित्यर्थः । [2]**आधारम्** अधिकरणम् । विश्वस्य क्षित्यादेः[6] शिवावसानस्य[7] । **बीजं** विश्वकारणम्, स्फुरत्तात्मा[8] पराशक्तिः । यदुक्तं[9] [3]**मृत्युजिद्भट्टारकेण**[10]—

---

ब्रह्माण्डादिकटाहान्तमिति कालाग्न्यादिशिवान्तं महासूत्रप्रोतमेतज्जगत्त्रयं कलाद्यध्वत्रयं भातीत्यर्थः । तां सिद्धमातृकां वन्दे नमस्करोमीति । सिद्धिमातृकां सिद्धिप्राप्तौ मातृकां जननीमिति यावत् । तदध्वत्रयविशेषणम् । अस्मिन्नपि सूत्रे मूलविद्याया हकारस्य महिमाऽपि सूचितो द्रष्टव्यः । अत्राक्षरमहासूत्रपदेन विश्वसूचको हकारोऽभिप्रेतः । त[दा ? था] च नामसर्गे—"लकुली सर्वसूः" इति हकारस्य विश्वसूचनहेतुतया सूत्रत्वमुक्तम् । स च हकारो बीजत्रयेऽप्यनुगत एवेति सर्वं समञ्जसम् ।। ५ ।।

[1]यदेकादशमित्यादि दृश्यत इत्यन्तेन षष्ठेन सूत्रेण मातृकास्तुतिमभिवाञ्छता परमेश्वरेण मातृकासंख्याने एकादशस्थानगतमेकाराक्षरं त्रिकोणात्मकमस्याः परदेवताया बाह्याभ्यन्तरभेदद्वयेऽप्याधारबीजमासनमिति प्रतिपादयति—

---

१. आधारबीजं–ब. अ., आवारबीज-वाक. ख. ग. । २. 'शिष्टं प्राग्वत्' नास्ति–ख. । ३. येषां स–ग., एषां–ख. । ४. सगरो–क. ग. घ. । ५. तदेकादशमयादित्यर्थः–ख., वदेकादशं यत्तदित्यर्थः–ग. घ. । ६. क्षित्यादि–ख. । ७. 'शिवावसानस्य' नास्ति–क. । ८. त्मना–क. । ९. तदु–ग. घ., 'यदुक्तं........इति' नास्ति–ख. । १०. ञ्जय–क. ।

1. अनाश्रितादीति । अनाश्रितादिकालाग्निरुद्रान्तानां चतुर्विंशत्युत्तरद्विशतभुवनानां परिचयो मदीये "वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः" इत्याख्ये निबन्धे (सा. सु., व. १७, अ. १–४, पृ. १७९–२००; तन्त्रयात्रायां च, पृ० १४-३४) द्रष्टव्यः ।
2. "आधारमिति नपुंसकमार्षम् । आधारबीजमित्येकपदत्वेन केषाञ्चित्पाठस्तु टीकान्तरासंमतत्वात्तन्त्रराजविसंवादाच्च नादेयः" (से० पृ० १५) । अत्र केषाञ्चिदितिपदेनार्थरत्नावलीकारः परामृश्यते । समस्तः पाठो जयरथस्यापि संमतः ।
3. मृत्युजिद्भट्टारक इति नेत्रतन्त्रस्यापरमभिधानम् ।

सा योनिः सर्वदेवानां शक्तीनां चाप्यनेकधा ।

अग्नीषोमात्मिका योनिस्तस्यां[१] सर्वं प्रवर्तते ।। (ने०त०७।४०) इति ।

**कोणत्रयोद्भवं** शक्तित्रयात्मना[२] वा, वामाज्येष्ठारौद्रयात्मना[३] वा, अनुत्तरानन्देच्छासंघट्टनेन[४] वा[५] त्रिकोणान्तर्विभक्तम् । तदुक्तं **श्रीत्रिकशास्त्रे**—

अनुत्तरानन्दचितौ[६] इच्छाशक्तौ[७] नियोजिते[८] ।

त्रिकोणमिति तत्प्राहुर्विसर्गा[९]मोदसुन्दरम् ।। (तन्त्रा० ३।९४-९५) इति ।

[१०]एतदुक्तं भवति—अनाश्रितादिकालाग्निरुद्रान्तषट्त्रिंशत्तत्त्वात्मना कार्यप्रसरेण महाशक्तिरूपेण बीजात्मना चेत्थमुभयात्मना महायोगिभिरनुभवापराङ्मुखैः सर्वदा दृश्यत इति । सर्वदेत्युक्तेरद्यापीत्यर्थश्च कथितः । उक्तं च

---

[११]यदेकादशमित्यादि । यस्या[१२] मातृकाया[१३] एकादशमक्षरम्[१४] आधारबीजम् । मूलाधारबीजमित्यर्थः । कोणत्रयोद्भवम् । त्रिकोणविन्यासे कृते पूर्वोक्तैकादश[१५]मेकार[१६]माधारबीजं[१७] भवतीत्यर्थः । ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते । ब्रह्माण्डादिकटाहान्तं कालाग्न्यादिशिवान्तं जगद्[१८] अद्यापि इदानीन्तनस्थितिकालेऽपि[1] तस्मिन्नेव परायोनिमण्डले परिदृश्यत इत्यर्थः । उक्तं च श्रीमतोत्तरे[१९]—

"एतत्तन्मण्डलं दिव्यं यत्र विश्वं प्रतिष्ठितम्" इति ।

---

१. स्ततः-वि., स्तस्यां-वि. । २. 'शक्ति....रौद्रयात्मना वा' नास्ति-ख. । ३. ज्येष्ठाद्यात्मना वा-ग. । ४. 'वा' नास्ति-ख., सा-ग. । ५. 'त्रिकोणा....शास्त्रे' नास्ति-क. ख. । ६. अनुत्तरेत्यादिकः श्लोको नास्ति-ख. । ७. तिरि-क. ग. घ. से. चि. । ८. ता-क. ग. घ. से. चि. । ९. नि-क. घ. । १०. 'एतदुक्तं भवति' नास्ति-क. । इतः परं १।८१ पर्यन्तानां श्लोकानां व्याख्यानं न दृश्यते घपुस्तके । ११. 'यदेकादशमित्यादि' नास्ति-ख. ङ. । १२. यस्यां-घ. । १३. कायां-घ. । १४. 'एका....त्रयोद्भवम्' इत्यस्य स्थाने 'एकादशस्थानगतमेकारमक्षरं यत्तत्त्रिकोणात्मकं त्रिकोणत्रयोद्भवमिति' इति पाठः-ख. ङ. च. ज. । १५. कैकार-क. ग. घ. । १६. माधारं-ख. ङ. । १७. 'बीजं' नास्ति-ख. ङ. ज. । १८. 'जगद् अद्यापि' नास्ति-क. ग. । १९. त्तरेऽपि-ख. ङ. ।

1. "केचित्तु यदेकादशमक्षरं योन्याकारं तस्मिन् सर्वं जगदद्यापि सिद्धैर्दृश्यत इति योजयन्ति । योनिजन्यत्वांशे प्रत्यक्षसिद्धत्वोक्तिरिति तु काश्मीराः" ( से०, पृ० १५-१६ ) । उभयोरपि टीकयोरेतद्व्याख्यानं नोपलभ्यते । "तदुद्भूतत्वं जगत्प्रत्यक्षसिद्धं दृश्यते" ( त० २।९३ ) इति च मनोरमापाठो वर्तते ।

**अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।**
**[1]ज्येष्ठाङ्गबाहुपादाग्रमध्यस्वान्तनिवासिनीम् ।। ७ ।।**

---

**श्रीपरात्रिंशिकायाम्—**

यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं जगदेतच्चराचरम् ।। (२४) इति ।। ६ ।।

**अकचेति । [2]प्रणमामी**त्युत्तरत्र सम्बन्धः । **ज्येष्ठाङ्गम्** उत्तमाङ्गम् । **अग्र**शब्दो बाहुपादयोः सम्बद्धयते, [3]**बाह्वग्रं पादाग्रं** चेति । **मध्य**शब्देन पार्श्व-

---

अपिशब्देन सृष्टिसंहारयोरुपलक्षणम् । कोऽभिप्रायः ? अपरपरापरपरभावेन स्थितत्रिकोणोपलक्षितपरायोनिमण्डले ब्रह्माण्डादिकटाहान्तं जगद् उत्पत्तिस्थिति-नाशान् प्रतिपद्यत इत्यर्थः । अनेनापि सूत्रेण मूलविद्याद्यबीजान्तर्गतस्य एकाराक्षरस्य महिमानं विशेषतो वर्णितवानित्यर्थः ।। ६ ।।

अकचादीत्यादि । अकचटतपयशाद्यैरक्षरैर्भेदितमातृकाष्टवर्गैर्विरचितमुखबाहु-पादमध्यहृदयपृष्ठकटिसर्वाङ्गसुन्दरीं महात्रिपुरसुन्दरीं प्रणमामीत्यर्थः । अनेनाक्षराणां न्यासस्थानं सूचितमिति तात्पर्यार्थः ।। ७ ।।

---

१. गर्भिणीम्—सघ. । २. हृत्पृष्ठकटिपादनि—वाक. ख. ग. त., हृत्कण्ठकटिपादनि—ब. सक. ख. घ. । ३. 'श्री' नास्ति—क. । ४. स्थ—क. चि. । ५. सर्वमेत—ख. ग. । ६. 'च' नास्ति—ग. । ७. त्रिकोणपरिलक्षितपरापर—क. ग. घ. च. । ८. अनेनापि''''वर्णितवानित्यर्थः' नास्ति—ख. ङ. च. ज. । ९. सूचितमित्यर्थः—घ. छ. ।

1. "तन्त्रराजे हि ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीमिति पाठः ।''''मनोरमायां त्वेतत्स्तोत्र-व्याख्यारम्भे नित्याषोडशिकार्णवे महात्मभिः काश्मीरिभिर्व्याख्यातत्वात् सैव व्याख्या स्वेन लिख्यत इति वदता सुभगानन्दनाथेन पाठभेदो नास्तीति ध्वनितम्" ( से०, पृ० १६-१७ ) । जयरथेनापि तन्त्रराजधृत एव पाठो व्याख्यातः । अतः प्रतीयते कश्मीरेषु स एव पाठः प्रचलित आसीदिति । पाठभेदो नास्तीति तु न, काश्मीरभिन्नमातृ-कासु पाठभेदस्य सत्त्वात् ।
2. उत्तरत्र अष्टमसूत्रे स्थितेन प्रणमामीति क्रियापदेनास्यापि सूत्रस्य संबन्ध इति तात्पर्यम् ।
3. "तेन बाह्वग्रे पादाग्रे चेत्यग्रपदस्य प्रत्येकमन्वयेन प्राचां व्याख्यानमपव्याख्यानम्" ( से०, पृ० १६ ) । अत्र प्राचामितिपदेन ऋजुविमर्शिनीकारः परामृश्यते ।

**तामीकाराक्षरोद्धारां[1] सारात्सारां[2] परापराम्[3] ।**
**प्रणमामि महादेवीं परमानन्दरूपिणीम्[4] ॥ ८ ॥**

---

द्वयपृष्ठनाभिजठराणि[5] लक्ष्यन्ते[6] । **स्वान्तं** हृदयम् । अयमर्थः—अहंविमर्श-प्रथमकलानुत्तरप्रसराष्टवर्गसामान्याष्टावयवतत्तद्वर्गाक्षररूपपरामृष्टतत्तद्विशेषावय[7]-वामित्थमक्षरात्मिकां देवीं मातृकां प्रणमामीति[8] । सम्प्रदायक्रमेण तत्तद्वर्गस्य[9] परामर्शक्रमः । तदुक्तमभियुक्तैः–"अकच" (प्र०सा० १।१) इति, "कानन" (प्र० सा० ७।४) इति च ॥ ७ ॥

**तामिति । ईकाराक्षरोद्धाराम्** इच्छाशक्तिक्षुभितरूपायाः स्फुटवेद्यो[10]-ल्लासेनेशनादिभूमिकायाः प्रकटीभावो यत्र ताम् । **सारात्साराम्** । महाफल-

---

अकचादिटतोन्नद्धेत्यादि केशपादादिवासिनीमित्यन्तेन सप्तमसूत्रेण वर्णक्रमस्य अकचट-तपयशाक्षरभेदिताष्टवर्गात्मकवशिन्याद्यष्टशक्त्यधिष्ठानभूतेन शिरोबाहुहृदयपृष्ठयोनिपादद्वया-ख्येन पुर्यष्टकात्मना देव्याः स्वशरीरेऽवस्थानमिति सूचयति । अथवाऽक्षराणां न्यासस्थानं सूच-यतीति तात्पर्यम् । अक्षरार्थः स्पष्टः ॥ ७ ॥

तामित्यादि परमानन्दरूपिणीमित्यन्तेनाष्टमसूत्रेण दर्शनसर्वस्वभूतकामकलां दर्शयति—तामीकारेत्यादि[11] । तां देवीं प्रणमामीत्यन्वयः[12] । कथम्भूतामित्यपेक्षायां[13] तद्गुणान् विशिनष्टि—ईकाराक्षरोद्धाराम् इति । [1]ईकाराक्षरे उद्धारो यस्याः सा[14] ईकाराक्षरोद्धारा ।

---

१. तामि–वाक. ख. ग. । २. द्धार–वाक. ख. ग. । ३. साराधारां–वाक. ख. ग. । ४. परात्पराम्–त. से. सक. ख., सारात्सारतरां पराम्–सघ. । ५. जठरं–ख. ग. । ६. लक्ष्यते–ख. ग. । ७. यवां–ख. ग. । ८. प्रणौमीति–ख. । ९. द्वर्गवर्ग्य–ख. ग. । १०. वेद्योल्लसनेशनादि–क., ल्लासनेशनाभूमिकायां–ख., ल्लासेशनाभूमिकायाः–ग. । ११. तामीकारेति–ख. ङ. ज., 'तामी····त्यन्वयः' नास्ति–छ. । १२. मीत्यर्थः–क. ग. घ. । १३. 'कथ····द्धार इति' नास्ति–ख. ङ. च. ज. । १४. 'सा' नास्ति–क. ग. छ., स इति–घ. ।

1. "षष्ठश्लोके तैरेव विद्यान्तर्गतवर्णस्यैषा स्तुतिरित्युक्तेश्च । त्रिकोणाक्षरस्य हादिविद्याया-मभावेनैतदविषयीभूतविद्यान्तर्गतवर्णस्तुतेरनुपयोगात् । ईकाराक्षर उद्धारो यस्या हृल्लेखाया-स्तामिति भुवनेश्वरीपरत्वेन व्याख्यानमपि नातीव स्वरसम्" ( से०, पृ० १७ ) । अत्रेद-मवधेयम्—विद्यानन्देन द्वादशश्लोकीं व्याख्यायोक्तम्—"एवं सकीलसम्प्रदायानुसारेण व्याख्यातानि सूत्राणि । निष्कीलसम्प्रदायानुसारेणान्यथा तानीदानीं व्याख्यायन्ते" इति । एवमेव सर्वत्र स प्रथमं सकीलसम्प्रदायानुसारेणैव व्याख्याति सूत्राणि, तदनन्तरं निष्कीलेन ।

प्रसरभूमिं[1] मन्त्रविद्याक्षर[2]वेदशैव[3]वामकौल[4]त्रिकादेः साक्षात् कारणतया[5] साररूपाम्[6]। **पराऽपराम्**। कारणात्मना पराम्[7], कार्यात्मना अपराम्[8]। तादृशीं स्व[9]रसोदितपराशक्तिरूपां शिवात्मिकां परां वाचमित्यर्थः[1]। तदुक्तं[10] **श्रीप्रत्यभिज्ञायाम्**—

> अत्रापरत्वं भावानामनात्मत्वेन भा[11]सनात्।
> परताहन्तयाच्छादात् परापरदशा हि सा ॥ ( ३।१।५ ) इति।

**परमानन्दरूपिणीम्**। इन्द्रियजन्यव्यष्टिभूतानन्दविप्रुषां महासमुद्रस्थानीयत्वात्। यच्छ्रुतिः—"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" ( बृ० उ० ४।३।३२ ) इति ॥ ८ ॥

---

व्यधिकरणे बहुव्रीहिः। तेन ईकार उक्तः। तेन[12] हि किमुक्तं भवति ? ईकाराक्षरविन्यासे कृते तदुपरि मायायां रचितायां स एव ईकाराक्षर ईंकारो भवतीत्यसावीकाराक्षरोद्धारा। सारात्सारतरामिति। योऽयमुद्धृतो महाकामकलाख्यो बीजानामपि बीजात्मक[13] ईकारः, स साराणां सारभूतः सकलपुरुषार्थसाधकमन्त्रमहसां जन्मभूमिः। परापरामिति। स्थितिरूपामित्यर्थः। अथवा पराणामपराणां कुलानामकुलानां[14] विश्रामभूमिः। परमानन्दलक्षण[15]शिवस्वभावामित्यर्थः। अन्यच्च, अनेन मूलविद्याबीजत्रयशिरोगतस्य मायाक्षरस्य महिमानमुपवर्णितवानित्यर्थः ॥ ८ ॥

---

१. प्रसव–ख. ग.। २. कर–ख.ग.। ३. वागम–क.। ४. कौलिकादेः–क.। ५. रूपतया–ख. ग.। ६. भूताम्–ख. ग.। ७. परत्वम्–ख. ग.। ८. अपरत्वम्–ख. ग.। ९. सु–क.। १०. 'तदुक्तं····इति' नास्ति–ख.। ११. भाव–क.। १२. 'तेन हि' नास्ति–ख. घ. ङ. ज.। १३. त्मकोऽक्षरः–क. घ. छ.। १४. कुलाकुलानां–क. ग. घ., कुलाकुलार्णानां–छ.। १५. 'लक्षण' नास्ति–क. ग. घ. छ.।

अत्र सकीलः कादिविद्यासम्प्रदायः, निष्कीलश्च हादिविद्यासम्प्रदायः। एवं चार्थरत्नावलीखण्डनेऽत्र सेतुबन्धकारप्रवृत्तिर्वृथैव, सम्प्रदायभेदेन व्याख्यानद्वयस्य सुस्थत्वात्।

1. अत्र सेतुबन्धे—"अत एवाहुः काश्मीराः—ईकारस्य बिन्दुविसर्गात्मनः शिवशक्त्योः सामरस्यरूपस्य स्वात्मत्वेन भावनायां परमानन्दानुभव इति" ( पृ० १७-१८ )। तन्त्रराजमनोरमायां किञ्चिद्भिन्न इव पाठो दृश्यते।

**अद्यापि यस्या जानन्ति न मनागपि देवताः ।**
**केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ॥ ९ ॥**

**अद्यापीति । यस्याः** पूर्णाहन्तायाः संविदात्मनः सम्बन्धि सत्तोपादानाधिकरणसहकार्यादि, **मनाग्** ईषत्, द्योतनात्मकत्वाद् [1]**देवताः** करणान्युच्यन्ते । अनादौ संसारे चित्प्रकाशात्मनो महास्वामिनः सर्वदा परिकरतया वर्तमाना अपीत्य**द्यापी**त्यर्थः । यच्छ्रुतिः—"सहैव सन्तं न विजानन्ति देवाः" (तै० आ० ३।११।५) इति । कथं न विजानन्तीत्यमुमर्थं प्रकाशयति—**केयम्** अस्याः का सत्ता । **कस्मात्** किमुपादाना । **क्व** किमधिकरणा । **केन** सहकारिकारणेन उदेतीयम् । **सरूपारूपभावनाम्** । सरूपभावना-

अद्यापीत्यादि भावनामित्यन्तेन नवमसूत्रेण कामकलाविनियोगं दर्शयति—

अद्यापीत्यादि । देवता यस्याः स्वरूपारूपभावनां न जानन्तीत्यर्थः । [2]अद्यापि स्थितिकालेऽपि दर्शनयोग्यदशायामपि न जानन्ति । यदा तु नामरूपात्मकप्रपञ्चसंकोचवशान्मनोवागतीततुर्यातीतशम्भुना समरसदशामाढौकते, तदैनां न जानन्तीति किमु वक्तव्यमित्यर्थः । मनागपि स्वल्पमपि । नामापीति मथितार्थः । देवता ब्रह्मोपेन्द्रप्रभृतयः । [3]केयमिति नाम, कस्मादिति कारणात्, क्व इति देशे, केन हेतुना इत्युक्त-

१. स्वरूपा—वाक. ख. अ. । २. विनीम्—ब., वनीम्—सघ., वना—सख. । ३. नादिकारण—ख. । ४. अस्या नाम—ख. । ५. दानात्—क. । ६. 'क्व' नास्ति—क. ख. । ७. णम्—क. । ८. 'अद्यापीत्यादि' नास्ति—ख. ङ. च. ज. । ९. दशायामा—ख. ङ. ज. । १०. समुदितोऽर्थः—ख. ङ., समर्थितोऽर्थः—छ. । ११. नाम्नि—ख. घ. ङ. च. ज. । १२. कारणे—ख. घ. ङ. ज., करणे—च. । १३. 'क्व इति देशे' नास्ति—ख. घ. ङ. ज. । १४. केनेति करणे—ख. घ. ङ. च. ज. । १५. अत्र प्रकरणत्रयेऽप्यन—ख. घ. ङ. च. ज. ।

1. "देवतापदमिन्द्रियपरमिति तु प्राञ्चः" ( से०, पृ० १८ ) ।
2. "अन्ये तु—अद्यापि दर्शनयोग्यकालेऽपि न जानन्ति । परशिवसामरस्यकाले तु कथं तां जानीयुरित्यर्थं वर्णयन्ति । तदरूपभावनया पुनरुक्तम्" ( से०, पृ० १८ ) ।
3. "केयमिति नाम, कस्मात् कारणात्, ( क्व देशे ), केन हेतुनेति चत्वार एव प्रश्ना इति केचित् । तत्र हेतुकारणयोर्भेदश्चिन्त्यः" ( पृ० १८ ) इति सेतुबन्धे, एषा चिन्ता—"के वयमिति । किं नित्या उतानित्या इत्यर्थः । यदि नित्यास्तर्हि के वयं किंस्वरूपा इत्यावृत्त्या

मरूपभावनां च इन्द्रियगोचरामनिन्द्रियगोचरामुभयीमपि[1] स्थितिं न जानन्तीत्यर्थः, यादृक्[2] "उत त्वः पश्यन्" (ऋ० १०।७१।४) इत्यादि[3]।

अत्र श्लोकेऽस्या भूयसी व्याख्या समुचिता। ग्रन्थविस्तरभीत्या प्रस्तुत[4]पदार्थव्युत्पत्त्यनुपयोगान्महारहस्यप्रकटनभीत्या चोपरम्यते। महामाहेश्वराणामन्तर्मुखानां महायोगिनामियं द्वादशश्लोकी महानिधा[5]नमित्य[6]वबोद्धव्यम्। अत्र व्याख्याने बहुश्रुतिसंवादः प्रदर्श्यते[7] कर्तुः संमतम् (तः)। तद्वक्ष्यति च "सर्ववेदमयम्" (१।४९) इति। आगमश्च द्विविधः—त्रैवर्णिकविषयः, सर्व[8]वर्णविषयश्चेति। अत्र कर्त्रैक्ये[9] श्रुतिसंवादः। वेदागमरहस्यागमयोः कर्त्रैक्यं[10] **श्रीरहस्यगुरुभिः प्रकाशितम्[11]—**

---

प्रकारचतुष्टयेऽप्यनभिज्ञा देवा इत्यर्थः। प्रकृष्टज्ञानसम्पन्नैर्देवैरपि यदेयं दुर्विज्ञेया, तत्किमुताल्पज्ञैर्नरैः। स्वरूपारूपभावनामिति[12]। स्वरूपभावना सकलोपास्तिः[13], अरूपभावना शक्तिविशेषानुसन्धानम्। उक्तं च [1]श्रीमतोत्तरे—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितः।
रूपं बिन्दुः[14] समाख्यातो रूपातीतं तु निष्कलम्॥

---

१. मुभयमयी–ख.। २. 'यादृक्' नास्ति–ख., यदियमृक्–ग.। ३. इत्याद्याः–ख. ग.। ४. प्रतिपादन–ख.। ५. दान–क.। ६. त्येव–क.। ७. प्रदृश्यते–क., प्रतिदृश्यते–ख.। ८. 'वर्ण' नास्ति–क.। ९. क्यात्–ख. ग.। १० अत्रैक्यं–ख.। ११. प्रदर्शितम्–क.। १२. 'स्वरूपारूपभावनामिति' नास्ति–क. ग.। १३. लापत्तिः–क. ग. छ., 'सकलोपास्ति''''इत्यर्थः' इत्यस्य स्थाने—"सकलभावना अरूपभावना निष्कलभावना। तदुभयमपि देवीरूपम्। तस्य रूपस्यात्मनः कामकलया संपादनीयमिति परमरहस्यम्। वक्ष्यति च बिन्दुं संकल्प्येति" इति पाठः–ख. ङ. च. ज.। १४. विभुः–घ., बिन्दुरिति–छ.।

योज्यम्। यद्यनित्यास्तर्हि केन निमित्तकारणेन भाविताः किंभूताः किमुपादानाः" (प्र० सा० वि० १।१६) इति पद्मपादाचार्यव्याख्यानानवलोकनमूला। "अत्र प्रश्नचतुष्टयमाराध्यमुखादवगन्तव्यम्, अतिरहस्यत्वादिह नोद्घाटितम्" (त० २।९६) इति तु मनोरमायां दृश्यते।

1. योगिनीहृदयदीपिकायाम् (पृ० ५९), सेतुबन्धे (पृ० ६०) च स्वच्छन्दसंग्रहवचनत्वेनोद्धृतोऽयं श्लोकः।

**वन्दे तामहमक्षय्यामकाराक्षररूपिणीम्[१][२] ।**
**देवीं कुलकलोल्लोलप्रोल्लसन्तीं[३] परां शिवाम् ॥१०॥**

---

वेदागमविरुद्धाय वेदागमविधायिने ।
वेदागमसतत्त्वाय गुह्याय स्वामिने नमः ॥ (शि० स्तो० २।७) इति,
[४]"श्रीमद्वाजसनीये श्रीवीरे श्रीब्रह्मयामले" (तन्त्रा० ४।५४) इति,
"ऐतरेयाख्यवेदान्ते परमेशेन विस्तरात्" (तन्त्रा० ३।२२६) इति च ॥९॥

**वन्दे तामिति । अहं** [1]"न्यक्कृतदेहाहन्तारूपः सर्वप्राणि[५]स्व[६]संवेदनस्वभावः पूर्णाहंपरामर्श[७]विच्छेदशून्योऽन्तरभ्युपगमकल्पोऽनन्यमुखप्रेक्षितत्व[८]लक्षणस्वातन्त्र्यविश्रान्तिरूपः[९] प्रत्यवमर्शोऽहम्" इत्या**चार्याभिनवगुप्तपादाः ।**

---

अन्यच्च, समनन्तरसूत्रोदितचतुर्थस्वरेण कामकलाख्येन परिकल्पितसकलनिष्कलशरीरामेनां न जानन्ति देवा इत्यर्थः ॥ ९ ॥

वन्दे तामित्यादि परां शिवामित्यन्तदशमसूत्रेण प्रथमार्धेन दीक्षाक्रमं दर्शयति । अक्षय्येत्यत्र अकारादिक्षकारान्ता वर्णाः संगृह्यन्ते । ते च समष्टिव्यष्टिरूपेण कल्याणगुरुणा शिष्यदेहाभिध्याता पाशमोचका भवन्तीत्यतः क्षकारीभूताः । क्षकारोऽपि संवर्तरूपत्वात् पाशच्छेदकतुरीयरूपत्वाद्दीक्षाङ्गरूपत्वादेकः परिगृहीत इति विलोमात्मना मूलाद्याद्वादशान्तमभिधाय (ताः?ते) सर्वे वर्णाः संहारात्मकतया क्षकारात्मतामुपगच्छन्तीति सर्ववर्णानां क्षकारात्मता दर्शिता । अत्रैषाक्षरयोजना—आदिक्षान्तात्मना गणेशग्रहनक्षत्रेत्यादिसूत्रसूचिता या मातृका तां व्यष्टिसमष्टयात्मना स्थितां क्षकाराक्षररूपिणीं वन्दे नमस्करोमीत्यर्थः । देवीमित्युत्तरार्धेन कुलचक्ररूपत्वं मूलदेव्याः प्रतिपादयति ।

---

१. य्यक्ष—वाक. ख. ब. अ. सक. ख. घ., य्यमातृकाक्ष—त. । २. विग्रहाम्—ब. । ३. परौलिजाम्—वाक. ख. अ. । ४. 'श्रीमद्वाज⋯इति च' नास्ति—ख., गपुस्तके तु—"श्रीतन्त्रालोकेऽपि—विसर्गशक्तिर्विश्वस्य कारणं च निरूपित । ऐतरेयाख्यवेदान्ते परमेशेन विस्तरात् ॥ ( ३।२२६ ) इति" इत्येवं पाठः । ५. 'सर्वप्राणि⋯पादाः' नास्ति—ख. । ६. 'स्व' नास्ति—ग. । ७. र्शः—ग. । ८. क्षितस्वा—ग. । ९. भूमिरूपः—ग. ।

1. "आत्मा जीवितभूतः सारस्वभावो विच्छेदशून्योऽन्तरभ्युपगमकल्पोऽनन्यमुखप्रेक्षितत्वस्वातन्त्र्यविश्रान्तिरूपोऽहमिति प्रत्यवमर्शः" (भा० १, पृ० ३०२-३०३) इतीश्वरप्रत्यभिज्ञाविमर्शिनीस्थितः पाठः ।

**अक्षय्याम्** । प्रतिप्राणि प्रत्युच्चारणं[१] वर्षेषूत्पन्नध्वंसिषु समस्तवाचकाभेदमय-स्वरसोदितपरनादात्मना[२] सदा भासमानाम् । तदुक्तं[३] **तन्त्रालोके**—

योऽसौ नादात्मकः शब्दः सर्व[४]प्राणिष्ववस्थितः ।
अधऊर्ध्वविभागेन निष्क्रियेणावतिष्ठते ।। (३।११३-११४),
एको नादात्मको वर्णः सर्व[५]वर्णाविभागवान् ।
सोऽनस्तमितरूपत्वादनाहत इहोदितः[६] ।। (६।२१७) इति ।

**अकाराक्षररूपिणीम्** । क्रोडीकृतानन्दाद्यकृत्रिमाहंपरामर्शप्रथमकलानुत्तरा-कुलाक्षररूपिणीम्[७] । **श्रुतिश्च**[८]–"अकारो वै सर्वा वाक्" (ऐ० आ० २।३।६) इति । **गीता**[९] च—"अक्षराणामकारोऽस्मि" (भ० गी० १०।३३) इति । "अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः" (सं० प०) **इत्यभियुक्तवचश्च**[१०] ।

---

वन्दे[११] तामित्यादि । वन्दे प्रह्वीभावं करोमि । तां प्रकृताम् । [1]अक्षय्येति । क्षयरहित-क्षकाराक्षररूपिणीमित्यर्थः । अन्यच्च, मूलविद्याद्यबीजगर्भाक्षरस्य महिमानं वर्णयति—देवीमित्यादि[१२] । [2]कुलं[१३] ब्रह्माण्यादिमहालक्ष्म्यन्तं मातृकाष्टवर्गक्रमेणाष्टधा व्यवस्थितम्, तस्य

---

१. रणेषूत्पन्न–क. । २. च्चारितपरतादात्म्येन–क. । ३. उक्तं–क., 'तदुक्तं''''दितः ।। इति' नास्ति–ख. । ४. स च–क. । ५. नाद–चि. । ६. इतीरितः–चि. । ७. कारा–ग. । ८. यच्छ्रुतिः–ख. ग. । ९. गीतास्वपि–ख. ग. । १०. 'अभियुक्तवचोऽपि' इति पाठः 'अकारः' इत्यतः पूर्वं दृश्यते–ख. ग. । ११. 'वन्दे''''वर्णयति' नास्ति–ख. ङ. । १२. देवीं कुल-कलोल्लोलप्रोल्लसन्तीमिति–ख. ङ. ज. । १३. "कुलं''''सहजानन्द" इत्यस्य स्थाने–"कुल-कलानामुल्लोलः कुलकलोल्लोलः, तत्रोल्लसन्तीमिति । कुलकला एकादशीपदस्थाश्चतुष्षष्टचा-दयः । कुलं ब्रह्माण्यादिमहालक्ष्म्यन्तम्, तस्य कला(न्ता ? नाम्) इत्यर्थः । उल्लोलस्तरङ्गः । सोऽप्यूर्ध्वाधःशक्तिसंयोगे । तासां कलानामितस्ततश्चङ्क्रममाणानां परस्पराभिघातवशादुल्लोलकल्पा भवन्ति कलाः । तदुल्लोले परा शक्तिः स्वविमर्शपरानन्द" इति पाठः–क. ग. घ. छ. ।

1. "अक्षय्यक्षकाराक्षररूपिणीम्' इति क्वचित्पाठः" ( से०, पृ० १८ ) । अर्थरत्नावल्यां वामकेश्वरीमतविवरणे चायमेव पाठः ।
2. "कुलं शरीरम्, कला एकदेशः, उल्लोलम् ऊर्ध्वोर्ध्वम् । प्रोल्लसन्ती वैखर्यात्मना इति तु काश्मीराः" ( से०, पृ० १८ ) । अत्र मनोरमायां किञ्चित्परिवर्तित एष पाठ उपलभ्यते ।

**कुलकल्लोललोलप्रोल्लसन्तीम्** । **कुलं** षट्त्रिंशत्तत्त्वमयं जगत्, कलयति बहिः क्षिपति पारमित्येन परिच्छिनत्तीति **कला** मायाशक्तिः, तयो[१]**रुल्लोलः** प्राग्वत्[1], [२]तद्रूपेण महाशक्तिपुञ्जात्मना जगद्वपुषा **प्रोल्लसन्ती**मित्यर्थः । [३]संविदेव भगवती स्वान्तःस्थितं जगद् बहिः प्रकाशयतीति दर्शनरहस्यम् । यथाहू **रहस्यगुरवः**—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः ।

योगीव निरुपादानमर्थजातं प्रकाशयेत् ।। (ई०प्र०१।५।७) इति ।

**परां** पूर्णाम् । **शिवां** चिद्भैरवरूपिणीं ताम् ।। १० ।।

---

कलाः कुलकलाः, ताश्च प्रत्येकमष्टकव्याप्त्या चतुष्षष्टिसंख्याकाः, ताश्च मूलमन्त्रवाच्यमूलदेवतायाः स्वरूपरूपाः । तासां कलानामुल्लोलस्तरङ्गातिरेकः । स च मेढ्राद्याद्द्वादशान्तनवाधारनवलक्ष्येषु समष्टिव्यष्ट्यात्मकेषु सुनिपुणमतिभिश्चिरं लक्ष्यते । तत्र प्रोल्लसन्ती सा भगवती स्वविमर्शमयीभिः कलाभिः सहजानन्दशम्भुना समरसी[४]भूता सती तत्संयोगजानन्दपानक्षीबा । ताभिः साकमानन्दितेत्यर्थः । [2]परां शिवामि[५]ति । सांसारिकान् सर्वान् भावानुपसंहृत्य [६]सच्चिदानन्दलक्षणे स्वे महिम्नि महीयते । अतः परा शिवेत्युच्यते । परा सर्वोत्कृष्टत्वात् । शिवा आनन्दलक्षणत्वात् ।। १० ।।

---

१. रुल्लासः—क. । २. 'तद्रूपेण' नास्ति—क. । ३. 'संविदेव....येत् ।। इति' नास्ति—ख. । ४. जामृतासवपानमत्ता सती—ख. घ. ङ. ज. । ५. मित्यादि—ख. ङ. ज. । ६. स्वच्छन्दा—ख. घ. ङ. ज. ।

1. प्राग्वदिति । ''कालहल्लोहलोल्लोल'' ( १।२ ) इत्यत्र व्याख्यातवत् । उल्लोलो महोन्मेष इति यावत् ।

2. अत्र 'परौलिजाम्' इति पाठेन भाव्यम्, अग्रे निष्कीलसम्प्रदायानुसारेण श्लोकानां व्याख्यानप्रसङ्गे 'परौलिजाम्' इति पाठस्यैव सकीलसम्प्रदायसम्मतत्वप्रदर्शनात्, 'परां शिवाम्' इति पाठान्तरम्, 'तदन्यसम्प्रदायेन लोपामुद्रासम्प्रदायेन' इत्युक्तेश्च ।

**वर्गानुक्रमयोगेन यस्यां[1] मात्रष्टकं[2] स्थितम् ।**
**वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ।। ११ ।।**

---

वर्गेति । **यस्यां**[3] पूर्णाहन्तायाम्[4] । अनुत्तराद्यष्ट**वर्गानुक्रमयोगेन** । स च वर्गक्रमः अ क च ट त प य शात्मकः । **मात्रष्टकं** सर्वमन्त्र[5]सारभूतसामान्योक्तं[6] ब्राह्म्याद्यष्टकं **स्थितम्** । अधिष्ठातृतया वर्गाधिष्ठात्र्यो ब्राह्म्याद्याः प्राणिनः संसारयन्ति । तदुक्तं **श्रीतिमिरोद्घाटे**[7]—

[8]करन्ध्रचितिमध्यस्था ब्रह्मपाशावलम्बिकाः[9] ।
पीठेश्वर्यो महाघोरा मोहयन्ति मुहुर्मुहुः ।। इति ।

**अष्टवर्गेति ।** अष्टवर्गमहाधिष्ठातृत्वेन स्थितां महाविभूत्यणिमादिसिद्ध्यष्टकस्वामिनीमित्यर्थः । अत्र[10]—"विद्याशरीरसत्ता मन्त्ररहस्यम्" (२।३)

---

वर्गानुक्रमयोगेनेत्यादि ईश्वरीमित्यन्तेन एकादशसूत्रेण मूलदेवीक्रमरूपे नवचक्रमध्येऽन्तश्चक्रस्यैव प्राधान्यं दर्शयति । यथा—

वर्गानुक्रमयोगेनेत्यादि । वर्गा आदिशान्ता अष्टौ । अनुक्रमयोगेन[11] यथाक्रमेण । यस्यां[12] मातृकायां मात्रष्टकं स्थितम्, तद्वशिन्याद्यष्टकमित्यर्थः । तां मातृकाविग्रहां महा[13]त्रिपुरसुन्दरीं नमामीत्यर्थः । अष्टवर्गोत्था या मातृकाः,[14] तदुत्था अणिमाद्या[15] अष्टौ सिद्धयः । तासां सिद्धीनामी[16]श्वरीं स्वामिनीमित्यर्थः । यो[17] वर्गाष्टकाधिदेव[18]तावशिन्यादिसमेतां

---

१. यस्या–नाक. ख. ब. त. । २. नामाष्टकं–सघ., मात्राष्टकं–त. । ३. यस्याः–ख. ग. । ४. न्तायाः ख. ग. । ५. सर्ववर्णमन्त्र–ग. । ६. क्त–क. ग. । ७. श्रीमदिरोत्कटे–ख. । ८. करण्ड–क. । ९. ताः–ग. । १०. तत्र–क. । ११. क्रमयोगेन–ख. ङ. ज. । १२. यथास्यां–क. ग. छ. । १३. 'महा' नास्ति–ख. घ. ङ. च. ज. । १४. 'या मातृकाः, तदुत्था' नास्ति–क. ग. घ. छ. ज. । १५. अष्टौ अणिमाद्याः–ख. घ. च. । १६. 'सिद्धीनां' नास्ति–क. ग. घ. छ. । १७. 'कोऽभिप्रायः' अधिकः पाठः–ख. घ. ङ. च. ज. । १८. दैवत–ख. घ. ङ. च. ज. ।

1. "महासिद्ध्यष्टकशब्देन वाग्देवताष्टकं केचिदाहुः ।.........काश्मीरास्तु मातृकाया अष्टौ वर्गास्तदधिष्ठात्र्योऽष्टमातरस्तासां प्रत्येकोत्थाणिमाद्यष्टसिद्धयश्च संभूय चतुष्षष्टिस्तासां व्यष्टिशक्तीनां कारणभूता समष्टिशक्तिः स्वात्मत्वेन सिद्धेति व्याचक्षते । अन्योऽप्यस्य प्रपञ्चः प्राचां टीकासु द्रष्टव्यः ।" ( पृ० १९ ) इति सेतुबन्धे । ऋजुविमर्शिन्यामत्रैष प्रपञ्चोऽवलोकनीयः । "अत्रापि रहस्यमस्ति, तदवगन्तव्यमाराध्यचरणमुखात्" ( त. २।९८ ) इति मनोरमा ।

इति **श्रीशिवसूत्रोक्त**दृशा सर्वमन्त्रहृदयभूतं महारहस्यात्म विश्वाभेदमयाहं-विमर्शरूपं वीर्यं सूचितम् । तदत्र स्पष्टं न [१]भवतीति सूत्रार्थस्तदुक्तवृत्त्या[1] लिख्यते—

"विद्या परा[२]द्वयप्रथा शरीरं स्व[३]रूपं यस्य स विद्याशरीरो भगवान् शब्दराशिस्तस्य या सत्ता अशेषविश्वाभेदमयपूर्णाहंविमर्शा[४]त्मा स्फुरत्ता, सा मन्त्राणां रहस्यम् उपनिषत् । तदुक्तं **श्रीतन्त्रसद्भावे**—

सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ।। इति ।

तत्रैव चायमर्थो[५]ऽतिरहस्योऽपि वितत्य स्फुटीकृतः । तथा च—

न जानन्ति गुरुं देवं शास्त्रोक्तान् समयांस्तथा ।
दम्भकौटिल्यनिरता लौल्या[६]न्धाः[७] क्रिययोज्झिताः ।।
अस्मात्तु कारणाद् देवि [८]मया वीर्यं प्रगोपितम् ।
[९]तेन गुप्तेन ते गुप्ताः [१०]शेषा वर्णास्तु केवलाः ।।

इति पीठिकाबन्धं कृत्वा,

या सा तु मातृका [११]देवी परतेजस्समन्विता ।
तया व्याप्तमिदं [१२]विश्वं सब्रह्मभुवना[१३]न्तकम् ।।

---

परमेश्वरीमाराधयति, [१४]सोऽणिमादिसिद्धीनामीशो भवतीति [१५]यावत् । अन्यच्च, नवयोनि-चक्रपरिवारमध्ये वशिन्याद्यष्टकमेव देवीपुर्यष्टकरूपत्वात् प्रधानमिति सूचयत्येत-त्सूत्रम् । कोऽभिप्रायः ? वशिन्यादिसहितमन्तश्चक्रमेवात्र प्रधानत्वेन विवक्षितमिति यावत् ।। ११ ।।

---

१. भातीति–ख. ग. । २. प्रधा–क. । ३. रूपं–क. ग. । ४. र्शनात्मा–ग. । ५. र्थो रहस्यमपि–क. ख. । ६. लौल्यार्थाः–ख. ग. वि. । ७. कृपणो–क., कृपयो–ख. ग. । ८. महा–क. । ९. ततो–क. ख. ग. । १०. शेष–क. ग. । ११. देवि–ख. वि., लोके–चि. । १२. सर्वमा–क. ख. ग. । १३. त्मकम्–क. ग., न्तरम्–चि । १४. असौ–ख. घ. ङ. च. ज. । १५. 'इति यावत्' नास्ति–क. ग. छ. ।

1. अत्र वृत्तिशब्देन क्षेमराजविरचिता शिवसूत्रविमर्शिनी परामृष्टा ।

तत्रस्थश्च[1] यथा[2] नादो[3] व्यापृतश्च[4] सुरार्चिते ।
अवर्णस्थो यथा वर्णः[5] स्थितः सर्वगतः प्रिये ॥
तथाऽहं कथयिष्यामि निर्णयार्थं स्फुटं तव ।

इत्युपक्रम्य,

या सा शक्तिः परा सूक्ष्मा निराचारेति[6] कीर्तिता ।
हृद्बिन्दुं वेष्टयित्वाऽन्तः[7] सुषुप्त[8]भुजगाकृतिः ॥
तत्र सुप्ता[9] महाभागे[10] न किञ्चिन्मन्यते उमे[11] ।
चन्द्रार्कानल[12]नक्षत्रैर्भुवनानि चतुर्दश ॥
क्षिप्त्वोदरे[13] तु सा[14] देवी विषमूढेव[15] सङ्गता[16] ।
प्रबुद्धा सा निनादेन परेण ज्ञानरूपिणा[17] ॥
मथिता[18] चोदरस्थेन बिन्दुना[19] वरवर्णिनि[20] ।
तावद्वै भ्रमवेगेन[21] मथनं[22] शक्तिविग्रहे ॥
भेदात्तु[23] प्रथमोत्पन्ना[24] बिन्दवस्तेऽतिवर्चसः ।
समुत्थिता[25] यदा[26] तेन कला[27] सूक्ष्मा तु कुण्डली ॥
चतुष्कलात्मको[28] बिन्दुः शक्तेरुदरगः[29] प्रभुः ।
मध्यमन्थनयोगेन[30] ऋजुत्वं जायते प्रिये ॥

---

१. स्थं च–क. वि. । २. महा–ख., यदा–ग. वि., तया–क. । ३. देवि–ख. ग. वि., देवी–क. । ४. व्यापितं च–वि., व्यापितश्च–ख. चि. । ५. वर्ण–चि. । ६. धा–क. । ७. तु–क. ख. ग. । ८. गुप्ता–क. । ९. सुप्तो–वि. । १०. योगी–वि. । ११. यमी–वि. । १२. चन्द्राग्निरवि–क. वि., इन्द्राग्निरवि–ख. । १३. क्षिप्तो–क. ख. ग., व्याप्तोदरा–चि. । १४. या–वि. । १५. विषवन्मूढतां गता–चि. । १६. तां गता–ख. ग., सा गता–वि. । १७. णी–चि. । १८. वन्दिता–ख. । १९. बन्धनादपि बिन्दुना–चि. । २०. नी–क. । २१. योगेन–क. ख. ग. चि. । २२. मदनं–ख., मन्थनं–चि. । २३. भेदात्म–क. । २४. न्न–ख., न्नाद्बिन्दुर्नादत्वमीयते–चि. । २५. उत्थिता तु–वि. । २६. यथा–चि. । २७. परा–क. । २८. लमयो–ख ग. वि. चि. । २९. श्चोत्तरगः–चि. । ३०. मध्यमास्थान–क., मध्यम–ख. ग. ।

ज्येष्ठाशक्तिः स्मृता सा तु बिन्दुद्वयसुमध्यगा[1] ।
बिन्दुना[2] क्षोभमायाता रेखैवा[3]मृतकुण्डली ॥
रेखिणी[4] नाम सा ज्ञेया[5] उभौ बिन्दू यदन्तगौ[6] ।
त्रिपथा[7] सा समाख्याता रौद्रीनाम्ना तु गीयते ॥
रोधिनी सा समुद्दिष्टा मोक्षमार्गनिरोधनात् ।
शशाङ्कशकलाकारा अम्बिका[8] चार्धचन्द्रिका ॥
एकैवेत्थं[9] परा शक्तिस्त्रिधा सा[10] तु प्रजायते ।
आभ्यो युक्त[11]वियुक्ताभ्यः सन्तानो[12] नववर्गकः[13] ॥
नवधा च स्मृता सा तु नववर्गोपलक्षिता ।
पञ्चमन्त्रगता देवि सद्यआदिरनुक्रमात्[14] ॥
तेन पञ्चविधा प्रोक्ता ज्ञातव्या सुरनायिके ।
स्वरद्वादशगा[15] देवि द्वादशस्था उदाहृता ॥
अकारादिक्षकारान्ता[16] स्थिता पञ्चाशता भिदा[17] ।
हृत्स्थैककोणता[18] प्रोक्ता कण्ठे प्रोक्ता[19] द्विक.णता[20] ॥
त्रिकोणता[21] तु ज्ञातव्या जिह्वामूले[22] समाश्रिता[23] ।
जिह्वाग्रे वर्णनिष्पत्तिर्भवतीति[24] न संशयः ॥
एवं शब्दस्य निष्पत्तिः शब्दव्याप्तं चराचरम् ।

---

१. मा–चि. । २. र्नादत्व–चि. । ३. रेखया–चि. । ४. रेखिनी–क. ख., लाकिनी–चि.। ५. बोध्या–क. । ६. यथान्तगौ–क. ग., यथा गतौ–चि., यदान्तगौ–ख. घ. । ७. त्रिपदा–चि. । ८. राम्बिका–क., रामम्बिका–ख. । ९. एकैवैषा–क. । १०. चैव–ख. । ११. युक्ता–चि. । १२. संजातो–ख. ग. वि. चि. । १३. तः–क. । १४. आदीननु–ख., आभि–ग. । १५ का–क. ग. । १६. न्त–क. । १७. भिधा–ख. ग. । १८. हृत्स्था एकार्णवा–ख. ग., हृत्स्था एकाणवा–वि. । १९. ज्ञेया–ख. ग. । २०. कार्णवा–ख. ग., द्वितीयका–वि. । २१. कार्णवा–ख. ग., त्रिराणवा–वि. । २२. मूलं–क. ख. । २३. सदा स्थिता–वि. । २४. भवत्येव–ख., भवत्यत्र–वि. ।

[1]कामपूर्णजकाराख्य[1]श्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशभूतां[2] नौमि श्रीत्रिपुराम[3]हम् ॥१२॥

इत्यादिना ग्रन्थेन परभैरवीयपरावा[4]गात्मि[5]का मातृका,[6] अत एव ज्येष्ठारौद्र्य[7]म्बिकाख्यशक्तिप्रसरसं[8]भेदवैचित्र्येण सर्ववर्णोदयस्योक्त[9]त्वात् वर्णसंघ[10]ट्टशरीराणां मन्त्राणां सैव भगवती[11] व्याख्यातरूपा विद्याशरीरसत्ता मन्त्ररहस्यम्'' (शि० वि०, पृ० ५०-५५) इति ॥११॥

इत्थम्—''पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन । ज्ञानमूलमिदं सर्वमन्यथा न प्रसिद्ध्यति ॥ आदिमा[12]न्तिमहीनास्तु मन्त्राः स्युः शरदभ्रवत् । गुरोर्लक्षणमेतावदादिमान्त्यं[13] च वेदयेत् ॥'' इति **श्रीकण्ठसंहि[14]**तोक्तस्थित्या महाहन्तां परामृश्य तत्कार्यभूतां महाविभूतिमयीं सर्वविद्याकन्दभूमिं महायोगिहृदयेषु सर्वदा[15] स्फुरन्तीं सदानन्दचिद्रूपिणीं वाक्कामशक्तिबीजत्रयभेदिनीं श्रवणमात्रेण समस्तमङ्गलप्रदां सर्वप्राणिसम्मतां वक्ष्यमाणनित्याषोडशकप्राणभूतां त्रिपुरेतिनामधेयां विशेष[16]विद्यां प्रस्तोतुमारभते—

**कामेति । कामपूर्णजकाराख्यश्रीपीठ**[17]शब्देन कामरूपपीठं पूर्ण[18]गिरिपीठं जालन्धरपीठमोड्याणपीठं[19] चेति महासमय[20]महारहस्यभूतं गुरुवक्त्रैक्यगम्यं पीठ[21]चतु-

कामपूर्णेत्यादिना केवलं समस्तविश्वात्मकवर्ण[22]विग्रहेत्येतावन्न, किन्तु चतुस्समयनि[23]धानभूतचतुष्पीठान्तरवासिनीमिति यावत्[24] । चतुराज्ञाकोशभूता[25]मित्यस्याय[26]मभि-

१. राद्य-वाग. से., राद्य-त. । २. महा-ब. । ३. रां पराम्-सघ. । ४. वीप-क. । ५. वाक्शक्त्यात्मक-ख. ग. वि. । ६. मातृकैव-ग. । ७. कादि-क, म्बाख्य-वि. । ८. भेद-क. । ९. मुक्त्वा-क. ख. ग. । १०. संघट्टना-ख. ग. वि. । ११. भवतीति-क. ख. । १२. मान्तवि-ग. । १३. मान्तं नि-क. । १४. श्रीकण्ठीय-ख. ग. । १५. सदा-ख. ग. । १६. विशेषेण-क. ख. । १७. पूर्ण-क. । १८. गिरि-क. ख. । १९. णं चे-क. । २०. समयं-ग. । २१. 'पीठ' नास्ति-क. । २२. वर्ग-घ. । २३. विधान-क. ग. । २४. मित्येतद् द्वादश सूत्रेण प्रतिपाद्यत इति यावत्-ख. ङ. च ज. । २५. 'चतुराज्ञा····सारभूताम्' इत्यस्य स्थाने 'चतुराज्ञाकोशभूता' इत्येव पाठः-ख. ङ. ज. । २६. स्यायं भावः-क. ग. छ. ।

1. ''जकाराख्येति पाठे आख्याशब्दो नामधेयप्रथमाक्षरपरः । जकार आख्या यस्येति समानाधिकरण एव बहुव्रीहिः । जकार आख्यायां यस्येति व्यधिकरणस्तु नादर्तव्यः, आख्यापदस्य

ष्टयं लक्ष्यते। तच्च पीठचतुष्टयमनिलानलसलिलपृथ्वीमयं[1] समस्तजगदाधारभूतम्[2]। तत्र वियद् विश्वव्याप्तम्[3], अत एव न पृथक् पीठसंज्ञितम्[4]। **पीठानि** महासंविदुपलब्धिस्थानानि। तेषा**मन्तर्निवासिनीं** तत्तत्पीठनायिकां[5] महासंविदं त्रिपुरानामधेयां ताम्। **चतुराज्ञाकोशभूताम्**। चतुष्पीठाधिष्ठातृमहासंविदवलम्बनेन प्रवृत्तचतुस्स्रोतोरूपा[6] महापदवी **चतुराज्ञा,** तस्याः **कोशभूता** महाधिष्ठात्री शेवधिस्ताम्। **श्रिया** मोक्षलक्ष्म्या युतां[7] **त्रिपुराम्**। त्रिपुरानिर्वचनेऽभियुक्तोक्तिः—

त्रिमूर्तिसर्गाच्च पुराभवत्वात्[8] त्रयीमयत्वाच्च पुरैव देव्याः।
लये त्रिलोक्या अपि पूरकत्वात्[9] प्रायोऽम्बिकायास्त्रिपुरेति नाम॥ इति,
(प्र० सा० ९।२)

[1]शिवशक्त्यात्मसंज्ञेयं तत्त्वत्रितयपूरणात्।
त्रिलोकजननी[10] वाथ तेन सा[11] त्रिपुरा स्मृता॥ इति च।

**अह**मिति द्वादशश्लोकीविमर्शन[12]प्रयोजनमकृत्रिमाहन्तारूपत्वं[13] द्योतयति। इदमेव[14] पारमेश्वरं[15] स्वरूपमि[16]**तीश्वरप्रत्यभिज्ञाया**मुपपादितम्—

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता।
स्वातन्त्र्यमेतदौन्मुख्यं[17] तदैश्वर्यं[18] परात्मनः॥

---

प्रायः—पूर्वपश्चिमदक्षिणोत्तराख्याश्चतुराज्ञाशब्दसूचिताश्चत्वारः समयाः, तेषां कोशभूतां सारभूताम्। चतुस्समयोपलक्षितषडन्वयमहार्णवनिर्मथनवेलायां सकलसारतया दृ(ष्टे?ष्टामि)त्यर्थः॥ १२॥

---

१. रूपं–क.। २. भूतमयं–क.। ३. विश्वत्रय–ख. ग.। ४. श्रोपीठ–क. ५. यिकीं–ग.। ६. चतुरश्रकोणरूपां–ख.। ७. युक्तां–ख. ग.। ८. पुरो–चि.। ९. पूरणाच्च–चि., पूरणत्वात्–प्र सा.। १०. त्रिलोकी जननी चाथ–क., त्रिलोक्या अपि हेतुत्वात्–ख.। ११. वा–क.। १२. विमर्श–ख. ग.। १३. त्वमिति–ख. ग.। १४ इत्थ–क.। १५. पारमेशं–ग.। १६. रूप–क.। १७. तन्मुख्यं–ग.। १८. परमात्मनः–ख. मु.।

पूर्वनिपातापत्तेः" (पृ०. १९) इति सेतुबन्धे। जकाराख्येति पाठ ऋजुविमर्शिन्यादिषु दृश्यते, ईदृशं व्याख्यानं तु तत्र नावलोक्यते। "जकाराद्येति तु तन्त्रराजे पाठः" (से. पृ. १९)।

1. प्रपञ्चसारविवरणटीकायां प्रयोगक्रमदीपिकायां ५७१ पृ० उद्धृतोऽयं श्लोकः।

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया चोक्ता[१] हृदयं परमेष्ठिनः ।। इति ।
(ई० प्र० १।५।१३–१४)

[२]श्रीषडध्वसारशास्त्रेऽपि—

अनुत्तरविमर्शात्मशिवशक्त्यद्वयात्मनि ।
परामर्शो निर्भरत्वादहमित्युच्यते[३] सदा ।।
(तन्त्रा० ३।२०३–२०४)

[1]हृद्यकारो[४] द्वादशान्ते[५] हकारस्तदिदं[६] विदुः ।
अहमात्मकमद्वैतं[७] यत्प्रकाशात्मविश्रमम्[८] ।। इति ।। १२ ।।

---

एवं [2]सकीलसम्प्रदायानुसारेण[९] व्याख्यातानि सूत्राणि[१०] । निष्कीलसम्प्रदाया-[११][१२]नुसारेणान्यथा[१३] तानीदानीं व्याख्यायन्ते ।

प्रारीप्सितस्यास्य शास्त्रस्याविघ्नेन[१४] परिसमाप्त्यर्थं विशिष्टेष्टलाभाय[१५] च परम-कारुणिको भगवान् लोकानुग्रहं चिकीर्षुर्बहुरूपाष्टकं शास्त्रं संक्षिप्य चतुश्शतसंख्या-परिमितैर्ग्रन्थैस्तत्सारमुद्धर्तुकामस्तच्छास्त्रप्रतिपाद्यप्रमेयप्रयोजनसर्वस्वं[१६][१७][१८] शास्त्रादौ श्रोतृ-प्रवृत्त्यर्थंतया[१९] कतिपयैः सूत्रैः संक्षिप्य दर्शयति । तत्राद्यसूत्रेण वर्णचक्रमन्त्रधामसंवि-त्स्वरूपं[२०] प्रमेयपञ्चकं दर्शयति[२१] । तद्यथा[२२]—गणेशग्रहनक्षत्रेत्यादि । समासः[२३] पूर्ववत् । वर्ण-

---

१. प्रोक्ता–मु. । २. श्रीषडध्व········मम् ।। इति' नास्ति–ख. । ३. विभोः–ग. । ४. मकारो–क., हृद्यकारं–चि. । ५. शान्तो–क. । ६. रं स्थविरा–चि. । ७. त्मै–चि. । ८. मः–ग. चि. । ९. सकल–ख. घ. ङ. च. ज । १०. द्वादश सूत्राणि–ख. ङ. च. ज. । ११. निष्कल–ख. घ. ङ. च. ज. । १२. दाये त्वन्यथा तदिदानीं व्याख्यायते–क. ग. छ. । १३. व्याख्यातानीदानीं–च. । १४. घ्नप–ख.ङ.ज. । १५. 'इष्ट' नास्ति–क. ग.ङ.छ. । १६. तैः श्लोकैः–ग. । १७. मः सन् त–ख. ङ. च. ज. । १८. 'प्रमेय' नास्ति–ग. । १९. त्यङ्ग–घ. ङ. च. ज. । २०. स्वरूपं दर्शयति–क. ग. छ. । २१. 'द्वितीयसूत्रमारभ्य प्रयोजनं दर्शयति' अधिकः पाठः–घ. । २२. यथा–छ., 'तद्यथा' नास्ति–ख. ङ. च. ज. । २३. समासस्तु–ख. घ. च. ज. ।

1. हृद्यकार इति तन्त्रालोकस्थः ( ६।२३८ ) श्लोकश्चिद्वल्ल्यां ( पृ० १५ ) संकेतपद्धतिस्थ इति न्यदर्शि ।

2. अत्र—"यत्तु प्राञ्चः पीठशब्दं जगदाधारपरत्वेन, योगिनीशब्दं ब्राह्म्यादिपरत्वेन, गणेशशब्दं श्रीकण्ठादिपरत्वेनेतरद्यथाप्रसिद्धमेव व्याख्यायैषा सकीलकसम्प्रदायरीत्यैका व्याख्येत्युक्त्वा निष्कीलकसम्प्रदायरीत्या त्वन्या अपि पञ्चविधा व्याख्या उच्यन्त इति प्रतिज्ञाय वर्णमन्त्रसंवि-

क्रमदर्शनपक्षे गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीं मातृकां देवीं नौमीति[1] सम्बन्धः । गणेश[2]-शब्देन अकारादिक्षकारान्तान्यक्षराण्युच्यन्ते[3] । तेषामक्षराणामीशवर्णौ शिवशक्ति[4]-स्वरूपावकारहकारावीशशब्देनोच्येते । तावपि रुद्रसंख्यां द्वादशसंख्यां[5] वा नातिवर्तेते । रुद्रसंख्यापक्षे अकारस्य शिवरूपस्य[6] वामाज्येष्ठारौद्रयम्बिकाख्यकलाचतुष्टयं तत्समष्टि-रूपमकार इति पञ्चकम्, शक्तिरूपस्यान्तस्य हकारस्य[7] इच्छाज्ञानक्रियाशान्ताख्यकला-चतुष्टयं तत्समष्टिरूपेण हकारेण सह पञ्चकमभिमतम् । एवं द्वाभ्यां[8] शिवशक्तिवर्णाभ्या-माद्यन्ताभ्यां दशकं जातम् । तयोः परस्परं बीजाङ्कुरन्यायेन समरसभावादेकमित्ये-कादशात्मा गणेशः । अथवा[9] आद्यन्तवर्णौ प्रत्येकं व्यष्टयात्मना च भूतरूपौ[10], प्रत्येकं (च) शिवशक्तिरूपाविति द्वादशात्मा[11] गणेशः । तदुक्तं संकेतपद्धत्याम्—

अकारः सर्ववर्णाग्र्यः[12] प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥

तयोराद्यन्तवर्णयोरकारहकारयोः शिवशक्तिरूपयोः कलावयवित्वं च तत्रैवोक्तम्—

आदावस्य शिरो रौद्री वक्त्रं[13] वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैव नखाग्रगा[14] ॥
इच्छा शिरःप्रदेशस्था क्रिया[15] च तदधोगता ।
ज्ञाना पादगता ह्यस्य शान्ता हृन्मध्यगा[16] भवेत् ॥ इति ।

---

१. नमामीति–क. ग. घ. छ. । २. गणशब्देन–घ. ज., नास्ति–क. छ. । ३. सान्ता–ख. घ. ङ. च. ज. । ४. शक्ती अकार–क. छ. । ५. 'द्वादशसंख्या' नास्ति–क. ग. छ. । ६. 'स्य····शक्तिरूप' नास्ति–ग. छ. । ७. 'हकारस्य' नास्ति–घ. । ८. ताभ्यां–घ. । ९. 'अथवा····गणेशः' नास्ति–ग. । १०. त्रिरूपौ–क. घ., भूतरूपेण–ग., ऐरूपौ–छ. । ११. शाक्षरो–क. छ. । १२. द्यः–ख. । १३. चक्रं–क. । १४. जा–दी. । १५. ज्ञानं च तदधोगतम् क्रिया पादगता ह्यस्य–दी. । १६. हार्धार्धमातृगा–क. ख. ङ. च. ज., मध्यगा–दी. छ. ।

च्चक्रधामपरत्वेनेमं श्लोकं पञ्चधा व्याचक्षते, तत्सर्वं मूर्खप्रतारणमात्रम्'' ( से. पृ. १२ ) इति वदन् सेतुबन्धकारः प्राज्ञप्रतारणे प्रवृत्तः प्रतीयते, संकेतपद्धतिं प्रमाणीकुर्वतोऽर्थरत्ना-वलीकारस्यातथात्वात्, संकेतपद्धतेश्च प्रामाण्यस्य तत्र तत्र स्वयमेव सेतुबन्धकारेणाप्यङ्गी-कृतत्वात् ।

1. 'अकारस्य' इति तन्त्रालोकविवेकस्थः ( आ. ३, पृ. ८० ) पाठः ।

एवं गणेशशब्देन चतुष्पदात्मिकाया वर्णाम्बिकायाः[1] पश्यन्तीरूपमव्यक्तध्वनि-रूपं परामृतमयमेकादशात्मकमभिधीयते । तदुक्तं संकेतपद्धत्याम्–

पश्यन्त्यादिक्रमो योऽसौ सूचितः श्रीशिवेन तु ।
सोऽन्तर्ध्वनिमहानादः संकेतैराद्यसूत्रके ॥ इति ।

ग्रह इति नवसंख्या गृह्यते । तद्यथा—शून्यस्पर्शनादध्वनिबिन्दुशक्तिबीजाक्षर-क्रमात्मना विकृतनादाष्टकं[2] तत्समष्टिरूपं[3] नवममित्येवं ग्रहसंख्यारूपं मध्यमावाग्रूपं परामृतमयं व्यक्ताव्यक्तरूपमभिप्रेतम्[4] । तदुक्तं[5] संकेतपद्धत्याम्–

शून्यः स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च ।
शक्तिबीजाक्षरं चैवेत्यष्टधाऽनाहतः स्मृतः ॥ इति ।

तथा हंसनिर्णयेऽपि[6]—

घोषः कांस्यं तथा घण्टा वीणा वेणुश्च वांशकम् ।
दुन्दुभिः शङ्खघोषश्च नवमं निर्विशेषकम् ॥ इति ।

एवं[7] गणेशग्रहसंख्यया विंशत्यक्षरं लब्धम् । नक्षत्रयोगिनीराशिरूपिणीमिति नक्षत्र-पदेन सप्तविंशतिसंख्या गृह्यते, योगिनीपदेनाष्टसंख्या, राशिपदेन द्वादशसंख्या । एवं[8] क्रमेण सप्तचत्वारिंशत्संख्याकान्यकारादिसकारान्तान्यक्षराणि वैखरीवाग्रूपाणि कण्ठादि-स्थानाहति[9]व्यक्तानि । अत्र क्षकारः ककारषकारसंयोगजत्वान्न पृथग् गण्यते । ळकारस्यापि लकारान्तःपातित्वान्न पृथग् गणनम्[10] । अत एवमुक्तप्रकारेण व्यवस्थितताना-मक्षराणां सप्तषष्ट्यात्मकत्वं[11] गण्यते । तदुक्तं संकेतपद्धत्याम्—

[1]चत्वारिंशत्सप्तसंख्यासहितः[12] परिकीर्तितः[13] ।
क्षकारः कथितो योऽसौ संयोगो[14] द्विविधः स्मृतः ॥

---

१. त्मिकायाः–क. ग. छ. । २. नादात्मकं–क. ख. ग. घ. ङ. । ३. समष्टिव्यष्टि–ग. । ४. हितम्–क. ग. छ. । ५. मेव–ख. ङ. च. । ६. निर्भेदे–क. ग., भेदे–छ., 'अपि' नास्ति–क. ग. घ. छ. । ७. 'एवं' नास्ति क. ग. छ. । ८. इत्येवं–ख. घ. ङ. च. ज. । ९. दति–क. छ. । १०. ग्रहणम्–घ., गणना–ग. छ. । ११. कत्वमवगण्यते–ख., कत्वमत्र गण्यते–छ., गम्यते–च., मवगम्यते–ज. । १२. सप्तविंशत्–क. ग. छ. । १३. गतः स–घ. ङ. च. । १४. स योगो–ख. घ. ङ. ।

1. चत्वारिंशदित्यादिकं श्लोकद्वयं योगिनीहृदयदीपिकायामपि (पृ. १७०-१७१) द्रष्टव्यम् ।

सप्तषष्ट्याख्यमेवं हि मातृकापीठमुत्तमम् ।
अनाहतहतोत्तीर्णैस्त्रिभिर्भेदैः समन्ततः ॥ इति ।

एवं [१]परिकल्पितवर्णक्रममयीं मूलदेवीं [२]नमामीति [३]यावत् । अत्र पश्यन्तीमध्यमा-वैखरीस्वरूपनिरूपणमपि तत्रैव कृतम् । यथा—

[1]शिखण्ड्यण्डरसन्यायः [४]शिबिकाख्यो द्वितीयकः ।
अयःशलाकासंज्ञोऽन्यस्त्रिविधो न्यायवैभवः ॥
त्रिविधं न्यायमुत्सृज्य वर्णानामुदयक्रमम् ।
ये वदन्ति न ते योग्या [५]वामकेश्वरदर्शने ॥ [६]इति ।

[७]चक्रदर्शनपक्षे गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीं पीठरूपिणीं देवीं नौमीति संबन्धः । पीठरूपिणीमिति पूजाचक्ररूपिणीमित्यर्थः । अत्रा[८]पि गणेशा[९]दिपदेन केवलं संख्यैव गृह्यते । गणेशा रुद्रा एकादशसंख्योपात्ताः । ग्रहपदेन नवसंख्या, नक्षत्रपदेन सप्तविंशति-संख्या, योगिनीपदे[१०]नाष्टौ, राशिपदेन द्वादश । एतत्सर्वं समुच्चित्य सप्तषष्ट्यात्मकानि पदानि देव्याश्चक्रे पूजाचक्रे निवसन्ति । न न्यूनानि नाधिकानि कार्याणीति बोधयितुम् । [११]एवंविधपूजाचक्रमयीं [१२]नमामीति [१३]तात्पर्यार्थः ।

मन्त्रप्रदर्शनपक्षेऽपि गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीं मन्त्रमयीं देवीं नौमीति संबन्धः । गणेशेति हंसाक्षरम् । गृह्णातीति ग्रहः । ग्रहो मनसोऽक्षरम् । नक्षत्रेत्यत्र

---

१. 'परि' नास्ति–क. ग. छ. । २. निरूपितम्–क. ग. छ. । ३. 'यथा' नास्ति–ख. घ. ङ. च. ज. । ४. शिकं–ग. । ५. स्तन्त्रे वै वामकेश्वरे–ख. घ. छ. । ६. 'इति' नास्ति–क. ग. छ. । ७. प्रदर्शन–ख. घ. ङ. च. ज. । ८. 'अपि' नास्ति–क. ख. ग. च. छ. । ९. 'आदि' नास्ति–क. ख. ग. छ. । १०. नाष्टसंख्या–ख. ङ. ज. । ११. विविध–घ. । १२. नौमीति–ख. घ. ङ. च. ज. । १३. यावत्–घ., सम्बन्धः–छ, 'तात्पर्यार्थः····देवीं नौमीति' नास्ति–ग. ।

1. शिखण्डचण्डेति । अयं भावः—मयूराण्डरसे यथा मयूरस्य तत्पिच्छादीनां च चित्रविचित्रा वर्णा अनभिव्यक्ता अवतिष्ठन्ते, तथैव सर्वे वर्णाः पश्यन्त्यां वाचि समवतिष्ठन्ते । प्रावरणा-वृतायां शिबिकायां स्थिता काचन व्यक्तिर्नैवातितरामनभिव्यक्ता न च स्फुटतया व्यक्ता प्रतिभाति, तथैव मध्यमायां वाचि वर्णाः । अयश्शलाकावृते कक्षे स्थिता व्यक्तिः स्थाने स्थानेऽभिव्यक्ताऽवतिष्ठते, तथैव वैखर्यां वाचि वर्णाः कण्ठादिस्थानेष्वभिव्यज्यन्त इति ।

नकारषकारत्रकारा उच्चारणार्थाः। अत[1] एव केवलं तुण्डाक्षरं[2] गृह्यते। योगिनीति पिण्डः। राशिरिति हकारः। रूपीत्यत्र ऊकार उच्चारणार्थः। केवलं रेफो गृह्यते। णीमित्यत्र णकार उच्चारणार्थः। केवल ईकारो गृह्यते। एतत्सर्वमेकीकृत्य आद्यं बीजं भवति मूलमन्त्रस्य। गणेशग्रहौ पूर्ववत्। अत्र नक्षत्रेति[3] नकारषकारावुच्चारणार्थौ ककारः परं[4] गृह्यते। त्रेत्यत्र[5] लोपन्यायेन त्राता परमेश्वरो हकारः[6]। योगिनीराशिरूपिणीमिति पूर्ववत्। इति मध्यमबीजोद्धारक्रमः[7]। गणेशग्रहो मनसोऽक्षरम्[8]। अन्यत्सर्वमाद्यबीजवद् द्रष्टव्यम्। इति तृतीयबीजोद्धारप्रकारः। अत्र श्लोके ईकारचतुष्टयमस्ति। तत्राद्यत्रितयं गणेशादिपदेनैव[9] त्रिरावृत्त्या[10] मन्त्रपरिपूर्तिर्भवतीति[11] द्योतयितुम्[12]। चतुर्थोऽपीकारस्तुरीयबीजोद्धारं दर्शयितुम्। तदुद्धारोऽपि गणेशादिपदेनैव गुरुमुखाज्ज्ञातव्यः। एवमुद्धृतमन्त्राक्षरमयी मूलदेवतेत्यर्थः।

धामसंवित्क्रमावप्यनेन सूत्रेण सूचितौ[13] द्रष्टव्यौ। तत्र धामक्रमपक्षे गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीं देवीं नौमीति संबन्धः। देवीतिपदेन द्योतनात्मकत्वात्तेजस्त्रितयमुपलक्षितम्। तत्किंरूपमिति विवक्षायां गणेशग्रहनक्षत्रयोगिनीराशीनां गणानां राशिरूपं समुदायरूपं[14] ज्योतिस्त्रितयमिति[15] सोमसूर्याग्निरूपाणि शिवशक्तिसामरस्यात्मकानि द्राव्यद्रावकभेदेन[16] कुलाकुलासनगतानि गुरुमुखाद् ज्ञात्वोपासनीयानीत्यभिप्रायः।

संवित्क्रमपक्षे देवीं नौमीत्येव[17] संबन्धः। सूत्रस्थमन्यत्पदकदम्बकमुच्चारणार्थम्। देवीति द्योतनात्मिका प्रकाशरूपिणीति[18] यावत्। कोऽर्थः? केवलसुषुम्नाकाशकुशेशये

---

१. 'अत एव····उच्चारणार्थः' नास्ति–ग.। २. ब्रह्माक्षरं–च. ज., 'तुण्डाक्षरं' नास्ति–ख. ज.। ३. त्यत्र–ख. घ. ङ. च. ज.। ४. परि–ख. ङ. च. ज.। ५. त्रेत्यत्रातीत्यत्र लोपन्यायेनात्र–क. ग., तत्र त्वर्थलोपन्यायेन त्राता–ख. ङ., नक्षत्रेत्यालोपन्यायेनात्र परमेश्वरो हकारो गृह्यते–छ.। ६. 'हकारः····अत्र श्लोके' नास्ति–ख. ङ. ज.। ७. प्रकारः–घ.च.। ८. हकार–ख. घ.। ९. 'एव' नास्ति–क. ग. छ.। १०. त्रिरभ्यासेनैव–क. घ. छ.। ११. 'परि' नास्ति–क. ग. च. छ.। १२. 'द्योतयितुम्' नास्ति–ख. ङ. च. ज.। १३. सूत्रितौ–ख. ङ. च. ज.। १४. 'समुदायरूपं' नास्ति–क. ग. घ. छ.। १५. मपि–क. ग. घ. छ.। १६. भावेन–ख. घ. ङ. च. ज.। १७. 'एव' नास्ति–ग. घ. ङ. छ.। १८. णीत्येकोऽर्थः–क. ग. घ. छ.।

सर्वावरणविधुरे[1] आदिमध्यान्तरहिता सकलकल्पनातीता चिद्दण्डरूपिणी[2] ध्येयेति यावत्[3]। वर्णा(त्मि ? म्बि)कायास्तुरीयं परावाग्रूपं धाम संवित्क्रमान्तर्गतं ज्ञेयमिति सर्वं[4] समञ्जसम् ॥ १ ॥

वर्णक्रमदर्शनपक्षे त्वपरथापि योजनीयम्। यथा—स्वरा द्वाविंशतिः, पञ्चविंशतिः स्पर्शाख्याः, दशधा व्यापकाः, यमाश्चत्वारः, जिह्वामूलीयोपध्मानीयौ द्वौ, अनुस्वारविसर्गौ च। इत्थमेभिः कलानादाभ्यां च सप्तषष्टिवर्णाः प्रोक्ताः। अनेनापि नयेन सप्तषष्टिवर्णरूपा मातृका।

प्रणमामीति द्वितीयसूत्रमारभ्य महासिद्धयष्टकेश्वरीमित्यन्तं सूत्रकदम्बकं यथापूर्वमेव व्याख्यातं द्रष्टव्यम्। सकलनिष्कलसम्प्रदाययोरेकरूपतया व्याख्येयम्, नार्थान्तरपरता सूत्राणामिति। पुनरपि सिंहावलोकनन्यायेन केषुचित् पदविशेषेषु विवक्षितार्थद्योतकत्वं दर्शयति।

प्रणमामि[5] महादेवीमित्येतेन सिद्धं वर्णक्रममनूद्य तदुपासकस्य मृत्यूत्तरणाख्यं फलं दर्शयति। अक्षरयोजना पूर्ववत् ॥ २ ॥

यदक्षरैकमात्रेऽपीत्यनेन वर्णक्रममाहात्म्यं सूचयति ॥ ३ ॥

यदक्षरशशिज्योत्स्नेत्येतेन तदभिप्रेतं रसाधारत्रिबीजसंबन्धवशाद्[6] गुणात्मकं भुवनत्रयं तदक्षरशशिभिर्गुरुमुखाज्ज्ञात्वा मण्डितमलङ्कृतं यथा भवति, तथा कुर्यादित्यर्थः ॥ ४ ॥

यदक्षरमहासूत्रेत्यत्राप्येतत् सूचितम्। त्रिबीजकुण्डलिनीसूत्रे सगुणवर्णकदम्बकं[7] भातीत्येतत्प्रदर्शितमनेनेत्यभिप्रायः ॥ ५ ॥

यदेकादशमाधारमित्यत्र वर्णक्रमस्य एकादशमक्षरं त्रिकोणात्मकं मूलदेव्या आधारबीजम् आसनबीजम्। कोऽर्थः? सेयं देवता बाह्याभ्यन्तरप्रकारेऽपि त्रिकोणपीठोपविष्टेत्येतत्। अथवा वर्णमण्डलमन्त्रधामसंवित्क्रमाणामाधारं त्रिकोणमित्यनेन दर्शितमित्यभिप्रायः ॥ ६ ॥

अकचादीत्यनेन वर्णक्रमस्य साधकाङ्गन्यासस्थानं सूचितमित्यभिप्रायः ॥ ७ ॥

---

१. सर्वावयव—क.ख.ग.छ.। २. चिदण्ड—क. घ. ङ. ज.। ३. वाक्यार्थः—क. ग, घ. छ.। ४. 'सर्वं समञ्जसम्' नास्ति—क. ग. घ. छ.। ५. 'प्रणमामि····पाशमोचको भवतीत्यभिप्रायः' नास्ति—ख. ङ. च. ज.। ६. जं सं—ग.। ७. गुणवर्णकदम्बकप्रोतं—घ.।

ताम् अद्यापीति द्वाभ्यां सूत्राभ्यां[1] दर्शनसर्वस्वरहस्यभूतकामकलोद्धारस्तन्महिमा तद्विनियोगश्च सूचितः ॥ ८-९ ॥

वन्दे तामित्यनेन शिष्यदीक्षायां पाशच्छेदाय शिष्यशरीरे वर्णक्रममेव विलोमेनानुसन्दध्याद् यदा तदा पाशमोचकस्य क्षकारस्य यादृशो महिमा[2] तादृशो विमर्शरूपत्वादक्षराणां सर्वेषां वर्णांशामस्तीति प्रत्येकमक्षराणां क्षकाररूपत्वं सूचितम् । समष्टिरूपेण व्यष्टिरूपेण वा कल्याणगुरुणा शिष्यदेहेऽभिध्यातो वर्णक्रम एव पाशमोचको भवतीत्यभिप्रायः । देवीं कुलकल्लोलेत्यादिनैतदभिप्रेतम्—मूलादिषट्चक्रलम्बिकाललाटब्रह्मरन्ध्राख्यनवाधारेषु कुलस्वामिनीचक्रनवकं सृष्टिसंहारयोगेन गमागमक्रमेणाभ्यसनीयमिति सूचयति । परौलिजामिति ज्येष्ठमध्यमबालाख्यमोषमित्रत्रयं[3][1] ज्ञानयोगक्रियाज्ञापकमस्ति । तत्रेयं विद्या ज्येष्ठौलिजा निखिलज्ञानाधिकारसम्पन्नपरमगुरुणा श्रीक्रोधमुनिभट्टारकेणावतारितेत्यर्थः । तदुक्तं संकेतपद्धत्याम्—

कामेशीं सर्वगां नित्यां गुरुरूपां नमामि ताम् ।
ज्येष्ठमध्यमबालाख्य(न्) चित्प्राणविषयात्मिकाम्[4](?त्मकान्)॥
ओषमित्रीशसंज्ञेयान्[5] नौम्यहं सिद्धपुङ्गवान् । इति ।

परां शिवामिति पाठान्तरम् । तदन्यसम्प्रदायेन लोपामुद्रासम्प्रदायेन ॥ १० ॥

वर्गानुक्रमयोगेनेत्यादिना[6] देवीपुर्यष्टकरूपस्य वशिन्याद्यष्टकस्य नवचक्रस्थदेवीषु प्राधान्यमस्तीति सूचयति ॥ ११ ॥

का पूर्णेत्यादि । कामः[7] कामरूपम् । पूर्णेति पूर्णगिरिः । जकाराख्यं[8] जालन्धरम् । श्रीपीठम् ओड्याणपीठम्[9] । अत्र पूर्वाम्नायाभिप्रायेण कापूजोड्काराख्यानि पीठान्यवतारितानि । पीठावतारनिरूपणेनैव खत्ममेत्याख्याः[10] कृतादिकल्यन्ता युगानुसारेण

---

१. 'सूत्राभ्यां' नास्ति–क. ख. ग. । २. अकाराक्षर–घ. । ३. मित्रेशऋषिमित्रेशत्रयं–ख. ङ. च. ज., मृषमित्रत्रयं–घ. । ४. पृ० २२२ धृतवचनानुसारमत्र पाठः शोधितः । ५. ऋषिमित्रेशसंज्ञेयान्–ख. घ. ङ. च. ज. । ६. 'वर्गा····सूचयति' नास्ति–ख. ङ. च. ज. । ७. कामेति–घ. । ८. जालाख्यं–क. ग. छ. । ९. ओड्डियाणम्–क. ग. छ., ओडयाणम्–घ. च. । १०. सिकुद्योख्याः–ख., सकुडयाख्याः–ङ, खरुक्रमेम्याख्याः–च. 'खत्ममेत्याख्याः····पीठावतारक्रमेण' नास्ति–क. ग. छ. ।

1. ओषमित्रत्रयमित्यनेन ओड्डीश-षष्ठीश-मित्रीशाख्यं दिव्यौघगुरुत्रयमभिप्रेतम् । एतच्च "पारम्पर्येण विज्ञाता" (४।२०) इत्यादिसूत्रव्याख्याने विस्तरेणावगन्तव्यम् ।

मङ्गलादिशक्तिभिः सहावतारिता द्रष्टव्याः । यद्यपि पीठावतारक्रमेण पूर्वाम्नाये कनिष्ठताऽवसीयते, तथापि चतुराज्ञाकोशभूतेत्युक्त्या[1]ऽपराद्यन्वयनिष्ठता च निश्चितैव। अतस्तदनुसारेण पीठानि नाथाश्च निरूपणीयाः। तत्र ओजापूकेषु[2] प्रातिलोम्येन स्थितेषु तेष्वेव पीठेषु[3] पश्चिमे मिवषचाख्यया[4] रक्ताम्बादिभिः सह कृतादिक्रमेणावतारो द्रष्टव्यः । तथा जाओकापू[5]क्रमेण स्थितेषु तेष्वेव[6] मिषजपाख्यया[7] दक्षिणे ताभिरेव शक्तिभिः सह युगानुसारेणावतारो द्रष्टव्यः । काजापूओ[8] इत्याख्येषु तेष्वेवोत्तरे कुमिमेषसंज्ञया ताभिरेव शक्तिभिः सह युगानुसारेणावतारो[9] द्रष्टव्यः। इयं च[10] विद्या चतुराम्नायसाधारण्य[11]पि दक्षिणपक्षपातिनीति तदनुसारेण पीठनाथभेदो[12] द्रष्टव्य इति भावः । पीठानुलोम्ये पूर्वे नाथप्रा[13]तिलोम्यम्। पीठप्रातिलोम्ये पश्चिमे नाथानुलोम्य[14]-मिति परमरहस्यम् । एवं च चतुर्ष्व[15]प्यन्वयेषु प्रत्येकं चतुष्पीठनिवासिनीत्वमस्त्येवे-त्यतश्चतुराज्ञाकोशभूतत्वमवगम्यते । चतुराज्ञेति पूर्वदक्षिणपश्चिमोत्तराख्यानि[16] चतुः-सिंहासनदर्शनानि लक्षितानि। तत्र तत्र तत्तन्नामरूपान्वितेयमेवाधिवसति महा[17]त्रिपुर-सुन्दरीत्यर्थः । कोशभूतेति यथा राजभिरुत्तमवस्तुवाहनरत्नादिकमनर्घ्यं बहुप्रयत्नेन[18] गुप्तं कृत्वा रक्ष्यते, तथा चतुरन्वयनिष्ठैरियमपि विद्या[19] रत्नभूता सुगोप्या कार्येति तात्पर्यम्। तदेतत्पीठनाथ[20]निरूपणं श्रीसिद्धनाथपादैरुक्तम्—

कापूजोङ्कारपीठेषु खकुमेषाख्यया शिवः[21]।
तेष्वेव प्रातिलोम्येन स[22] एव म्योषचाख्यया ॥

---

१. क्त्यैव–ख. ङ. च. ज., त्युक्तत्वात्–छ. । २. पूजापूर्वकेषु–ख. घ. ङ. । ३. 'पीठेषु' नास्ति–ख. घ. ङ. च. ज. । ४. मेति षण्डमाख्याय–क. छ., मेति स्थलमाख्याय–ग., मिओषाख्यया–घ., मिओषचाख्यया–च. ज. । ५. काजपूओ–घ. ङ. च. ज. ६. 'तेष्वेव' नास्ति–क. ग. छ. । ७. मतिओषाख्यया–क. ग., मिषओपाख्यया–च. । ८. जकापूज–ख. ङ., जकापूओ–च। ९. 'सारेणा····तदनु' नास्ति–ग. । १०. 'च' नास्ति–ख. घ. ङ. च. ज. । ११. रणापि–क. ग. । १२-१३. नाद–ख. । १४. नादा–ख. । १५. त्रिष्वप्य–क. ख. ग. छ. । १६. मोत्तराणि–क. ग. छ. । १७. 'महा' नास्ति–क. ग. छ. । १८. बहुयत्नगुप्तं–क. ग. छ. । १९. विद्यात्मान्तर्भूता–ख. ङ. । २०. नाद–ख. । २१. शिवा–क, ख. ग. । २२. स एवं व्योमचाख्यया–क. ख. च. ।

**श्रीदेव्युवाच**

**भगवन् सर्वमन्त्राश्च भवता मे प्रकाशिताः ।**

**चतुष्षष्टिश्च[१] तन्त्राणि[२] मातॄणामुत्तमानि तु[३] ।। १३ ।।**

---

इत्थं महानन्दसारां पूर्णाहन्तामयीं वाचं विमृश्यानन्दोदधिनिमग्नं विमर्शैकसारं प्रकाशैकमयं[४] महादेवं स्वाभिन्ना[५] भगवती संविदाख्या विमर्शशक्तिर्मोक्षलक्ष्म्युपश्लिष्टा[६] द्योतनादिसतत्त्वा[७] **श्रीदेव्युवाच** आममर्श । **भगवन्नित्यादि**साधैकादशश्लोकेन [1]पूर्वोपदिष्ट[८]मन्त्रसामान्यमुपदिष्टचतुष्षष्टितन्त्रानुवादश्च[९] क्रियते । हे **भगवन्** ! चिन्मयस्वात्मन् ! **सर्वमन्त्राः** सर्वे[१०] मन्त्रा मननत्राण[११]धर्माणश्चिन्माहात्म्यावमर्शकाः, अथवा[१२] [2]गुप्तार्थभाजः पिण्डबीजात्मानः पुंरूप-

---

स्वशक्तिसहितो देवश्चतुर्युगविभागशः ।

पूर्वपश्चिमभेदेन युगपत्[१३] स्वाधिकारकृत् ।। इति ।

अस्याश्चतुराम्नायस्वरूपविवरणं[१४] चक्रोद्धारे[3] तद्विभागप्रकरणे प्रपञ्चयिष्यामः[१५] ।। १२ ।।

श्रीदेव्युवाचेत्यारभ्य जगत्क्षोभः प्रजायत इत्यन्ताः श्लोकाः स्पष्टार्थाः । पुनरपि[१६] सिंहावलोकनन्यायेन विषमपदव्याख्या[१७] लिख्यते । सर्वे मन्त्रा आणवशाक्तशाम्भवोपायसंबन्धिनः । चतुष्षष्टिश्च तन्त्राणीति । ब्रह्माण्याद्यंशभूतानां मातॄणां चतुष्षष्टिपूजा-

---

१. स्तु–वाक. ख. । २. मातृकामण्डलानि–सघ. । ३. च–वाग. से. ल. सघ. । ४. शमयं–ख. ग. । ५. स्वाभिन्न च–क., स्वाभिन्नाभिन्ना–ख. । ६. लक्ष्म्या प्रश्लिष्टा–ख. । ७. मानादितत्त्वा–क. । ८. दिष्टं–क., दिष्टं तदनु–ख. । ९. 'च' नास्ति–क. ख. । १०. 'सर्वे मन्त्राः' नास्ति–क. ख. । ११. 'मननत्राण' नास्ति–क. । १२. 'अथवा ........ताश्च विद्याः' नास्ति–ख. । १३. सोऽधि–ख. घ. ङ. च. ज. । १४. विचारणां–छ. । १५. 'प्रपञ्च' इत्यादि ३१ सूत्रस्थः 'मध्यचक्र' इत्यन्तः पाठस्त्रुटितः–ज. । १६. तत्र–ख. ङ. । १७. व्याख्यानं–घ. ।

1. पूर्वोपदिष्टेत्यादि । पूर्वोपदिष्टमन्त्रसामान्यस्य उपदिष्टचतुष्षष्टितन्त्राणां चानुवादः क्रियत इति यावत् ।
2. गुप्तार्थभाज इति । प्रपञ्चसारविवरणव्याख्यायां प्रयोगक्रमदीपिकायाम् ( पृ० ५६६ ) 'उप्तार्थभाजः' इत्येवमुद्धृतः पाठोऽशुद्धः ।
3. चक्रोद्धारावसरे "ततः सृष्टिः" ( १।४२ ) इत्यादिसूत्रव्याख्यानावसरे द्रष्टव्यमिदम् ।

**महामाया शम्बरं[1] च योगिनी जालशम्बरम् ।**
**तत्त्वशम्बरकं नाथ[2] भैरवाष्टकमेव च ॥ १४ ॥**
**बहुरूपाष्टकं ज्ञानं[3] यामलाष्टकमेव च ।**
**चन्द्रज्ञानं वासुकिं[4] च महासंमोहनं तथा ॥ १५ ॥**
**महोच्छुष्मं[5] महादेव[6] वातुलं वातुलोत्तरम्[7] ।**
**हृद्भेदं[8] मातृभेदं च गुह्यतन्त्रं च कामिकम् ॥ १६ ॥**

---

वाच्याध्यासिताश्च मन्त्राः, चकारेण विद्याः समुच्चीयन्ते । संवेद्यमानस्फुटार्थ-रूपा मालमन्त्राः स्त्रीरूपवाच्याध्यासिताश्च विद्याः । **भवता** प्रकाशवपुषा । मे संविदो विमर्शमय्याः । **प्रकाशिता** उल्लासिताः[10] । **मातृणां** विश्वाधिष्ठातृणां[9] ब्राह्म्यादिसंविदाम् । **उत्तमानि** क्रोडीकृताशेषपरमार्थानि[11] ॥ १३ ॥

अथ[12] [1]चतुष्षष्टितन्त्रोद्देशः—**महामायेति** । एवं[13] चतुष्षष्टितन्त्राणीति । **महामायाशम्बरं**[14] महामायातन्त्रं शम्बरतन्त्रम् । **योगिनीजालशम्बरं**[15] योगिनी-शम्बरतन्त्रं जालशम्बरतन्त्रम् । हे **नाथ** ! नाथ्यमान ! समभिलषणीय ! **भैरवाष्टकं बहुरूपाष्टकं यामलाष्टकमिति** चतुर्विंशतितन्त्राणि । **बहुरूपाष्टकं**[16]

---

मण्डलानि त्वया प्रदर्शितानीत्यर्थः । भैरवाष्टकमिति । असिताङ्गाद्यष्टभैरवाणां पूजा-शास्त्राणि । यामलाष्टकमिति । ब्रह्मयामल-विष्णुयामल[17]-रुद्रयामल-जयद्रथयामल[18]-स्कन्दयामल-उमायामल[19]-लक्ष्मीयामल-गणेशयामलादीन्यष्टावुन्नेयानि । प्रश्नावसरे

---

१. पञ्चरत्नं–सघ. । २. देव–वाक. ख. ब. सक. घ., चैव–ऋ. वाग. ल. से. । ३. चैव–वाग. से. ल. । ४. मालिनी–ल. । ५. वामजुष्टं–ऋ. ल., महासूक्ष्मं–सघ. । ६. महादेवं–ल. । ७. वाथुलं च नयोत्तरम्–वाक. ख., वाधुलं वाधुलोत्तरम्–सख., वातुलं च लयोत्तरम्–सघ. । ८. तन्त्रभेदं–वाग. से. ल., मातृकाभेदं–सक. । ९. माना–क. ख. । १०. 'उल्लासिताः' नास्ति–ख., उल्लिखिताः–क. । ११. तान्यशे–क., ताशेषपरमपुरुषार्थानि–ख. ग. । १२. तथा च–क. । १३. 'एवं····णीति' नास्ति–ख. । १४. 'महा····जालशम्बरतन्त्रम्' नास्ति–क. । १५. 'योगिनीजालशम्बरतन्त्रम्' इत्येव पाठः–ख. । १६. 'बहु·······तन्त्राष्टकम्' नास्ति–क. ख. । १७. 'विष्णुयामल' नास्ति–क. ग. । १८. यामलेत्यादि अष्टा–ख. ङ. च. । १९. 'उमायामल' नास्ति–ग. ।

1. चतुष्षष्टितन्त्रनामविमर्शादिकं भास्कररायादिमतभेदप्रदर्शनपुरस्सरमुपोद्घातेऽवलोकनीयम् ।

**कलावादं[1] कलासारं तथान्यत् कुब्जिकामतम्[2] ।**
**मतोत्तरं[3] च वीणाख्यं[4] त्रोतलं त्रोतलोत्तरम्[5] ॥ १७ ॥**
**पञ्चामृतं रूपभेदं भूतोड्डामरमेव[6] च ।**
**कुलसारं कुलोड्डीशं कुलचूडामणिं प्रभो[7] ॥ १८ ॥**
**सर्वज्ञानोत्तरं चैव[8] महाकालीमतं[9] तथा ।**
**महालक्ष्मीमतं[10] देव[11] सिद्धयोगीश्वरीमतम्[12] ॥ १९ ॥**
**कुरूपिकामतं[13] देव रूपिकामतमेव[14] च ।**
**सर्ववीरमतं देव[15] विमलामतमेव च ॥ २० ॥**
**अरुणेशं मोहिनीशं[16] विशुद्धेश्वरमेव[17] च ।**

---

शक्तितन्त्राष्टकम् । **भूतडामरमिति**[18] भूततन्त्रं डामरतन्त्रम् । **प्रभो ! सर्व-**[19]
(भु?भ)वनशील ! आच्छादनस्वरूपस्य[20] प्रकटने[21] च प्रभवनशील[22] । **देव !** अशेष-
प्रमात्रादिरूपेण क्रीडादिशील[23] । **विशुद्धेश्वरतन्त्रान्तश्च**[24] चतुष्षष्टितन्त्रोद्देशः
॥ १३-२० ॥

---

१. कालपादं कालसारं-वाक. ख., कालाभेदं-सघ., कलापादं-ब. सक. ख. । २. कुण्डिका-ल. । ३. नयोत्तरं-वाक. ख., तन्त्रोत्तरं-वाग. से., लयोद्भवं-सख., तन्त्रोद्भवं-सख., मायोत्तरं-सघ. । ४. वीराख्यं-सघ. । ५. त्रोतुलं त्रोतुलोत्तरम्-वाक्. ख., तोत्तलं तोत्तलोत्तरम्-ब. सक., तोतलं तोतलोद्भवम्-सघ. । ६. रकं तथा-ब. । ७. तथा-वाक. ख. ग. से., णिस्तथा-ऋ. ल. सघ. । ८. देव-वाक. ख. ग. से. ब. । ९. पिचु-वाक ख. ब. सख. घ., रूपि-सक. । १०. 'महालक्ष्मीमतम्' इत्यादिकं पङ्क्तित्रयं नास्ति-ल. ऋ. । ११. चैव-वाग. से. । १२. योगे-सक. ख. । १३. अरू-ब. । १४. कपिला-सख. । १५. चैव विमलामतमुत्तमम्-वाग. से. ब. सक. । १६. मोदनेशं-वाक. ख., मोदिनीशं-ल. ऋ. सक. । १७. कुण्ठे-ल. ऋ. । इतः परम्—"पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् । विमलं विमलोत्थं(लार्थं) च देवीमतमतः परम् ॥" इत्यधिकः श्लोकः-ल. ऋ., वाग. से. सक. ख. घ. पुस्तकेषु चैष श्लोकः 'अरुणेशं' इत्यतः पूर्वं विद्यते, उत्तरार्धश्च "तन्त्रं वैशेषिकं ज्ञानं वीरावलि तथापरम्" इत्येवं दृश्यते । १८. भूतोड्डामरमिति भूतोड्डामरतन्त्रम्-ख. । १९. 'सर्व-भुवनशील' नास्ति-क. ग. । २०. 'आच्छा···प्रभवनशील' नास्ति-ख. । २१. प्रकथने-क. । २२. प्रकथन-क. । २३. क्रीडाशील-ख. ग. । २४. विश्वेश्वर-ख. ग. ।

**एवमेतानि शास्त्राणि[१] तथान्यान्यपि[1] कोटिशः ।। २१ ।।**

**भवतोक्तानि मे[२] देव सर्वज्ञानमयानि[३] च ।**

**नित्याः[४] षोडश देवेश सूचिता न प्रकाशिताः ।। २२ ।।**

---

**एवमेतानीति** । चिन्मयेन[५] भवता । प्राधान्येन[६] ज्ञानयोगक्रियाचर्या-प्रतिपादनपराणि चतुष्षष्टिशास्त्राण्युपदिष्टानि[७][८] । **तथान्यान्यपीति** । एकस्मिन् शास्त्रे[९] प्राधान्येनोपदिश्यमाने प्रसङ्गागतानि बहूनि शास्त्राण्यस्मदर्थे[१०] प्रकाशिता-नीत्यर्थः । **कोटिश** इति[११] । अयमभिप्रायः—एकमपि ज्ञानं भवतानुग्राह्यविषये न गोपितमिति । **सर्वज्ञानमयानि** समस्तज्ञानभाजनानि ।। २१ ।।

**नित्याः षोडशेति** । हे **देवेश** ! चिन्मरीचिचक्रेश्वर । **सूचिताः** तत्त-च्छास्त्रोपदेशसमये प्रसङ्गादनुग्रहैकपरतयाऽप्रकृतत्वादप्राधान्येन[१२] प्रकाशिताः ।

---

सूच्यमानस्य[१३] ग्रन्थस्यायं भावः—अस्मिन् श्रीवामकेश्वरे शास्त्रे श्रुतसकलशास्त्रार्थाव-[१४][१५]धारणनिपुणतया[१६] स्वस्याधिकारसम्पत्तिं[१७] द्योतयितुं शास्त्रानुवादः कृतो देव्याः । अथवा सर्वज्ञानमयान्येतानि[१८] शास्त्राणि मयाधिकृतान्यपि तानि मे[१९] मनसि सौमनस्यापादनाय नालमित्यतस्तामेव विद्यां महात्रिपुरसुन्दरीं[२०] सकलसौमनस्यसम्पादिनीं[२१] सर्वकामप्रदां संवेदितुमिच्छामि[२२] । अधिगतसकलविद्याकारणत्वादित्यर्थः । अथवा श्रीमहात्रिपुर-सुन्दरीमाहात्म्यप्रकटनायाधिगतशास्त्रानुवादः[२३] कृतः[२४] ।। १३-२१ ।।

नित्याः षोडशेत्यारभ्य परिपूर्णा समन्तत इत्यन्तस्य लोपामुद्रामते त्वयं भावः—तत्रैका नित्या प्रधाना षोडशी महात्रिपुरसुन्दरी परिपूर्णा, अन्यास्तु कलारूपाः प्रति-

---

१. तन्त्राणि–ऋक. । २. देवेश–सक. घ. । ३. नोत्तमानि–सख. । ४. विद्याः–वाक. ख. । ५. मन्नाथेन–ख., चिन्नाथेन–ग. । ६. 'प्राधान्येन' नास्ति–क. । ७. तन्त्रा–क. । ८. नोति–ख. । ९. तन्त्रे–क. । १०. तन्त्रा–क. । ११. इत्यस्याय–ख. ग. । १२. न्तरप्र–ग. । १३. अनूद्यमानस्य–च., सर्वग्रन्थार्थवादस्यायं–क. ग छ. । १४. 'श्रुत' नास्ति–क. ग. छ. । १५ वतार–घ. । १६. निरूपणतया–ग. । १७. स्वाधि–ख. घ. ङ. च. । १८. अत्रैव च. मातृकाऽवसिता । १९. मम मनसि–क. ग. छ., मन्मनसि–ख. ङ. । २०. 'महा''''अथवा श्री' नास्ति–ग. । २१. दनीं–क. छ. । २२. संवेत्तु–ख. घ., संसेवितु–ङ, सर्वं वेदितुम्–छ. । २३. घटनाया–ख. ङ. । २४. 'कृतः' नास्ति–ग. ।

1. "अन्यान्यपि कुलार्णव-दक्षिणामूर्तिसंहिता-सनत्कुमारसंहिता-परानन्दतन्त्रादीनि" (से.पृ.२५) ।

**इदानीं श्रोतुमिच्छामि तासां नामानि शङ्कर ।**
**एकैकं[1] चक्रपूजां[2] च परिपूर्णां समन्ततः ।। २३ ।।**
**अनेकदेवतानाममन्त्रमुद्रागणैः सह[3] ।**

**ईश्वर उवाच**

**शृणु देवि[4] प्रवक्ष्यामि[5] नित्याषोडशिकार्णवम्[6] ।। २४ ।।**
**न कदाचिन्मयाख्यातं सर्वतन्त्रेषु गोपितम् ।**

---

**इदानीमिति** । **तासां** नित्यानाम् । हे **शङ्कर** ! शम् उपशान्ताशेषोपतापपरमानन्दाद्वयस्वचैतन्यस्फारप्रत्यभिज्ञानस्वरूपमनुग्रहं[7] करोति यस्तादृशः । **एकैकम्** । नामानीति सम्बन्धः । **चक्रपूजां च परिपूर्णां समन्तत** इति । **चक्रपूजा** चक्राणां पूजा । **समन्तत** इत्यङ्गाद्यशेषावरणवाचकः । किमुक्तं भवति ? अङ्गाद्यशेषावरणोपेतां परिपूर्णां चक्रपूजां चा[8]वधारयितुमिच्छामीति । **अनेकेति**[9] । **मन्त्रमुद्रा**शब्देन ज्ञानक्रिये लिलक्षयिषिते[10] । **गण**शब्देन तद्गतः प्रसरः । अयमर्थः[11]—प्रतिनित्याकलां प्रतिचक्रपूजां मन्त्रगणैर्मुद्रागणैश्च[12] सहानेकासां देवतानां नाम श्रोतुमिच्छामीति ।। २२–२३ ।।

एवं विमर्शेनाविष्टः संविच्चक्रमहास्वामी **ईश्वर उवाच** ।[13] [1]कालभेदकल्पनया भूतत्वेन व्यवहारः[14], वेद्यत्वेन च प्रत्यक्षत्वाभावात् पारोक्ष्येण । अशेषविभूत्याश्रयत्वादी[15]श्वरः । पञ्चभिः[16] श्लोकैर्नित्यानां नामधेयानि कथयति-**शृणु देवीत्यादि** । **शृणु** स्फुट[17]मवधारय । **प्रवक्ष्यामि** प्रकर्षेण वाक्यप्रबन्ध-

---

१. एकैक–वाक. ख. । २. क्रम–सक. । ३. इतः परम्–"कथयस्व प्रसादेन यदि तुष्टोऽसि मे प्रभो" इत्येषा पङ्क्तिरधिका–वाग. से. सख. घ. । ४. महाज्ञानं–वाक ख. ग. । ५. विद्या–वाक. ख. । ६. कोद्भवम्–सख. । ७. 'परिपूर्णां''''णोपेतां' नास्ति–क. । ८. 'अव' नास्ति–ख. ग. । ९. 'मन्त्रमुद्रा''''प्रसरः' नास्ति–ख. । १०. विवक्ष्येते–क. । ११. 'अयमर्थः''''उवाच' इत्येषोंऽशः 'अशेषविभूत्याश्रय' इत्यतः पूर्वं दृश्यते–ग. । १२. 'च' नास्ति–क. । १३. 'कालभेद''''पारोक्ष्येण' नास्ति–ख. । १४. सर्वव्यव–ग. । १५. स्पदत्वा–ख. ग. । १६. चतुर्भिः–ग. । १७. स्पष्ट–ख. ।

1. तुलनीयम्—"पराभूमिं सदा स्वाभासामप्यन्तर्बाह्याक्षागोचरत्वात् परोक्षामिव, पश्यन्त्यादिकालापेक्षया तु भूतामिव, तत्तद्रुद्रक्षेत्रज्ञतत्तत्प्राणांशांशिकापेक्ष्यकल्पावधिकदिनमासान्वयाभावा-

**तत्रादौ प्रथमा नित्या महात्रिपुरसुन्दरी ॥ २५ ॥**

**ततः कामेश्वरी नित्या नित्या च भगमालिनी ।**

**नित्यक्लिन्ना[1]भिधा नित्या भेरुण्डा[2] वह्निवासिनी[3] ॥ २६ ॥**

---

पर्यन्तां विमर्शपदवीं नेष्यामि । **नित्याषोडशिकार्णवमिति** । अर्णवशब्दो दुरवगाहमिदं शास्त्रमिति दर्शयति । **न कदाचिन्मयाख्यातमिति** । न प्रकृष्टविमर्शपदवीमानीतमित्यर्थः । **सर्वतन्त्रेषु गोपितमिति**[4] । तत्र तत्र[5] प्रसङ्गागतमपि प्रसक्तविमर्शैकपरतया गोपितं न प्रकटीकृतम् ॥

**तत्रेत्यादि । महात्रिपुरसुन्दरी प्रथमा**[6] **नित्या** । इयं सर्वतिथिमयी नित्या[7]ऽमृतस्यन्दिनी महाकामकला सर्वपोषणकरी[8] विश्वसुभगाऽक्षया नित्याकला, इतराः सर्वाः पञ्चदश नि(त्याः?त्या)कलाः प्रतिपदादिकाः कालावच्छेदकर्यो[9]ऽङ्गनित्याः । **महात्रिपुरसुन्दरीत्यस्य** शब्दस्यायं साम्प्रदायिको रहस्यार्थः—देशकालाकारैरनियन्त्रितस्वभावत्वान्महत्त्वोपेता त्रित्वावस्थितसमस्तधर्मपूरणी[10] चिदानन्दघनस्वात्मपरमार्था[11] स्पृहणीयतया[12] हृदयहारिणी संविदिति । **कामेश्वरीनित्या** द्वितीया । **भगमालिनीनित्या** तृतीया । **नित्यक्लिन्नानित्या**[13] चतुर्थी[14] । **भेरुण्डानित्या**[15] पञ्चमी[16] । **वह्निवासिनी**नित्या

---

१. क्लिन्ना पि हि तथा—वाक. ख. ब. सक. घ., पि च तथा—सख. । २. भुसुण्डा—वाग. । ३. विन्ध्य—ब. सख. । ४. 'इति' नास्ति—क. ग. । ५. तत्र च—ख., 'तत्र' नास्ति—ग. । ६. 'प्रथमा' नास्ति—क. । ७. 'नित्या' नास्ति—क. । ८. 'पोष' इत्येव—ख. ग. । ९. कोऽत्र—ग. । १०. रूपिणी—क. । ११. मार्थ—क., मार्थोप—ख. । १२. णीया—क. ग. । १३. 'नित्या' नास्ति—ख. । १४. 'स्यात्' अधिकः—ख. । १५. 'नित्या' नास्ति—ख. । १६. 'स्मृता' अधिकः—ख. ।

दद्यतनीमिव यावदावेष्टुमामृशति" ( पृ. २ ) इति विज्ञानभैरवोद्योतवचनेन, "उवाचेति लिडुत्तमपुरुषैकवचनम् । भूतत्वं च वक्तव्यस्य सदातनत्वात्, अनद्यतनत्वमकालकलितत्वात्, परोक्षत्वमतीन्द्रियगोचरत्वात्" ( पृ० २ ) इति योगिनीहृदयदीपिकावचनेन च । एवमेव सेतुबन्धेऽपि ( पृ० २१ ) दृश्यते ।

महाविद्येश्वरी[1] दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ।। २७ ।।
ज्वालामालिनी[2] चित्रा चेत्येवं नित्यास्तु षोडश ।

---

षष्ठी[3] । महाविद्येश्वरी[4]नित्या सप्तमी । दूतीनित्याऽष्टमी । त्वरितानित्या नवमी । कुलसुन्दरीनित्या दशमी । नित्यानित्या एकादशी । नीलपताकानित्या द्वादशी । विजयानित्या त्रयोदशी । सर्वमङ्गलानित्या चतुर्दशी । ज्वालामालिनीनित्या पञ्चदशी । चित्रानित्या षोडशी । एवं नित्यास्तु षोडशेत्यस्यायमर्थः—एवं नित्याषोडशकनामोपन्यासः[5] कृतः । कामेश्वरीनित्याद्याः प्रतिपदादिका[6]ः पञ्चदश तिथिनित्याः, महात्रिपुरसुन्दरीनित्या[7] व्यापिका षोडशी पूर्णाऽङ्गी[8] नित्येति । उक्ता नित्यास्तुति[9]रभियुक्तैः—
नित्याभिः सदृशतरा न सन्ति लोके लक्ष्मीदा जगदनुरञ्जनाश्च[10] मन्त्राः ।
तस्मात्ताः शुभमतयो[11] भजन्तु नित्यं[12] जापार्चाहुतिसमुपासनाविशेषैः ।। इति ।
( प्र० सा० १३।८५ )

अन्यत्रापि[13]—
एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
तस्य[14] शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ।।
विमर्शाख्या च सा नित्या[15] पाञ्चविध्यं समागता ।

---

पदादिपञ्चदश्यन्तं तिथिक्रमेण स्थिताः । तत्र तत्तत्तिथि[16]नायिकामङ्ग[17]नित्यामभ्यर्च्य तदनु महानित्या पूर्णाख्या समर्चनीयेत्यर्थः । तदुक्तं संकेतपद्धत्याम्—

---

१. विश्वे–ब. । २. निका चित्रे–से. । ३. षष्ठी स्यात्–ख. । ४. महाविद्येश्वरी तथा । सप्तमी त्वष्टमी दूती नवमी त्वरिता तथा ।। कुलसुन्दरी तु दशमी नित्यैकादशिकात्मता । द्वादशी नीलपताका विजया तु त्रयोदशी ।। चतुर्दशी सर्वमङ्गला ज्वालामालिनी पञ्चदशी चित्रा नित्या षोडशीति–ख. । ५. कोपन्यासमुखेन कामे–क., शविन्यासनामधेयः कृतः–क. । ६. 'काः' नास्ति–क. । ७. 'देवी' अधिकः–क. । ८. 'पूर्णाऽङ्गी' नास्ति–क. । ९. नित्यास्तुतिभिरभियुक्तोक्तिः–क. । १०. दाश्चिरम–ख. ग. । ११. सुभगतया–क. । १२. नित्या जप्या–मा. । १३. अन्यच्च–ख. ग । १४. यस्य–चि. । १५. देवी–चि. । १६. 'तत्तत्' नास्ति–क. ग. छ. । १७. काङ्ग–क. ग. ।

**शृणु देवि महानित्यामादौ त्रिपुरसुन्दरीम् ॥ २८ ॥**

**यया विज्ञातया देवि[1] जगत्क्षोभः प्रजायते ।**

आकाशानिलसप्तार्चिस्सलिलावनिभेदतः ॥

एकैकगुणवृद्ध्या तु तिथिसंख्यात्वमागता ।

विमर्शरूपिणी नित्या षोडशी या[2] प्रकीर्तिता ॥

गता सा षोडशैर्भेदैस्त्रिपुरा परमेश्वरी ।

सुन्दर्यादिमहापूर्वं[3] चित्रान्तं[4] च समन्ततः[5] ॥

आगमादवबोद्धव्यमिह[6][7][8] संकेतमात्रतः ।

¹प्रतिपत्प्रभृता[9] देव्यः[10] ²पौर्णमास्यन्तिकाः[11] क्रमात् ॥

एकैकां[12] पूजयेद्यो[13] हि स सौभाग्यमवाप्नुयात् । इति ।

**शृणु देवीति । महानित्यां** षोडशीं व्यापिकामङ्गिनित्याम् । **यया विज्ञातया** चमत्कारपदवीं प्रापितया । **जगत्क्षोभः** । जगतः षट्त्रिंशत्तत्त्व-[14]

आकाशानिलसप्तार्चिस्सलिलावनिभेदतः ।

एकैकगुणवृद्ध्या तु तिथिसंख्यात्वमागता ॥

विमर्शरूपिणी नित्या षोडशी परिकीर्तिता[15] ।

गता[16] सा षोडशैर्भेदैस्त्रिपुरा परमेश्वरी ॥

सुन्दर्यादिमहापूर्वं विचित्रान्तं समन्ततः ।

प्रतिपत्प्रभृता[17] देव्यः[18] पौर्णमास्यन्तिकाः क्रमात् ॥

एकैकां पूजयेद्यो हि स सौभाग्यं[19] परं लभेत् । इति[20] ॥ २२-२८ ॥

१. गौरि-वाग. से. ब. । २. संप्र-क. । ३. महत्पूर्वं-क. ख. ग. । ४. विचित्रान्तं-क. ख. । ५. समासतः-ख. । ६. स्वाग-क. ख. ग. । ७. देव-चि. । ८. इति-ख. चि. । ९. तौ-क. । १०. व्याः-चि. । ११. के-ग., कं प्रिये-चि. । १२. एकैकं-चि० । १३. द्यस्तु-चि. । १४. क्षित्यादेः शिवावसानस्य व्याकुलता-ख. ग. । १५. या प्र-ख. ङ. । १६. सा षोडशैर्विभेदैस्तु त्रिपुरा-ख. ङ. । १७. तौ-क. ख. छ., तीर्दे-ङ. । १८. पूर्ण-ख. ङ. । १९. ग्यफलं-ख. । २०. इतः परम्-'कुलागमान्यशास्त्रेत्यर्थः' इत्यधिकः पाठः-क. ग., 'कुलागमानि शास्त्राणीत्यर्थः' इति तु-छ. ।

1. प्रतिपदिति । प्रतिपदं प्रक्रम्य भृताः पुष्टाः प्रतिपत्प्रभृताः ।

2. पौर्णेति । पौर्णमासी अन्तिका समीपवर्तिनी यासां ताः पौर्णमास्यन्तिकाः ।

**[1]शक्त्या शक्तिं विनिर्भिद्य भूयो वह्निपुरेण[1] ते[2] ।। २९ ।।**

**संपुटीकृत्य**

---

समुदायरूपस्य क्षोभः। अयं भावः—महादेवतायामस्यां [3]हृद्यवस्थिताया-महन्तासंरूढायां देव्यात्मा साधको भवति। देवतादर्शने यथा द्रष्टुर्विकारो भवति, तद्वत् साधकदर्शनेन जगत इति। [4]अथवा विज्ञातुः फलमाह—जगतः षट्त्रिंशत्तत्त्वमयस्य स्थूलसूक्ष्मादेर्देहस्य तद्द्वारेण विश्वस्य च क्षोभो विगल-त्स्वरूपतया वैवश्यम् ।। २४–२८ ।।

**शक्त्या** [2]शक्ति[5]मित्याद्येकादशसूत्रैस्त्रैपुरस्य चक्रराजस्य कर्णिका-प्रस्तारक्रमो लिख्यते। **शक्त्या शक्तिं विनिर्भिद्य**। स्वाभिमुखाग्रत्रिकोणपरम्प-रायाः शक्तिसंज्ञात्वम्, विपरीताया वह्निसंज्ञात्वमिति समयः[3]। **शक्त्याऽन्यया शक्ति[6]मन्यां विनिर्भिद्य** भेदितां कृत्वा। अयमर्थः—प्रथममात्माभिमुखां [7]समत्रिरेखां सृष्टिप्रधानामेकां शक्तिं विधाय पुनर्भूतभागीकृताया विमर्शाख्याया-

---

शक्त्या शक्तिमित्यादि। स्वाभिमुखाग्रत्रिकोणपरम्परायाः[8] शक्तय इति बहुरूपाष्टक-प्रस्तारन्यायेन संकेतः कृतः। तद्विपरीताग्र[9]त्रिकोणपरम्प[10]राया वह्निरिति संकेतः कृतः[11]। [12]शक्त्या शक्तिं विनिर्भिद्येति प्रथमां शक्तिं द्वितीयया शक्त्या भेदयेदित्यर्थः। भूयः पुनरपि

---

१. पुरोगते–सक.। २. तु–वाक. ख.। ३. हृद्यहन्तापरिरूढायां–ख. ग.। ४. 'अथवा····वैवश्यम्' नास्ति–ख.। ५. मित्येका–क. ख.। ६. मायां–ख.। ७. 'समत्रिरेखां' नास्ति–ख.। ८. यां–क. ग. छ.। ९. कोणत्रिकोण–ख. घ.। १०. यां–क. ग.। ११. सर्व-तन्त्रेष्विति–क. ख. ग. छ.। १२. 'भूयः····भेदयेदित्यर्थः' नास्ति–ख. ङ.।

1. "अथ बिन्दुत्रिकोणवसुकोणानि त्रीणि चक्राण्याह सार्धपादद्वयेन" ( से. पृ. २८ )।
2. "सार्धद्वादशभिः श्लोकैः श्रीचक्रलेखनप्रकारमुपदिशति" ( से. पृ. २७ )। अत्र सेतुबन्धे "एतद्वाह्यगतम्" ( १।४०-४१ ) इत्यादिकः सार्धकः श्लोकोऽपि गृहीतः। ऋजुविमर्शिन्यां तु तस्य पृथग् गणनम्। अतः श्लोकसंख्यानिर्देशे उभयोष्टीकयोर्न कश्चन विरोधः।
3. अत्र सेतुबन्धे कश्चन विशेषः। प्रकृतोपयोगितया सोऽत्र संगृह्यते। "शक्तिवह्निपुरयोश्च घटिके पार्श्वरेखे प्रत्येकं वामदक्षिणसंज्ञे। ऊर्ध्वाधोरेखे पूर्वपश्चिमसंज्ञे। प्राञ्चस्तु–शक्तेरूर्ध्वरेखा पश्चिमरेखा, वह्नेरधोरेखा पूर्वरेखेति व्यवहरन्ति। तत्पूज्यपूजकयोर्मध्यं प्राचीति मानस्य

स्तस्याः शक्तेः पूर्वतः पाण्यंशं परित्यज्य समनन्तरप्राप्तवामांशपश्चिमदेशे दक्षिणोत्तररेखां विधाय तच्छक्तिस्वीकृतमानं द्विधा कृत्वा [1] एकैकेन मानेन रेखाद्वयं बाह्यतो विकृष्य वह्नयंशाग्रस्थितप्रथमशक्त्यग्रप्रदेशाद् [2] बहिः पूर्वपरित्यक्तमानदेशेऽग्रं यथा भवति तथा द्वितीयया शक्त्या प्रथमप्रसूतां [3] शक्तिं विनिर्भिद्येति । **भूयो वह्निपुरेण ते संपुटीकृत्य** । **भूयः** पुनः । **वह्निपुरेण** ऊर्ध्वमुखेन शिवपरमार्थेन संहृतिप्रधानेन प्रकाशाख्येन त्रिकोणेन ते पूर्वप्रसूते शक्ती । **संपुटीकृत्य** नवयोनिचक्रं यथा संपद्यते [4] तथा कृत्वेत्यर्थः । [5] अयमत्र क्रमः—प्रथमप्रसूतशक्त्यग्रसंश्लेषक्रमेण द्वितीयशक्त्युदरे दक्षिणोत्तरतो रेखां तच्छक्तिसव्यापसव्याश्रिद्वयाग्रावधि [6] विकृष्य [7] प्रसृतशक्तिद्वयसव्यापसव्यपार्श्व-मर्मभेदनक्रमेण प्रथमशक्तिपाश्चात्त्यरेखापार्श्वदेशे [8] पादोनद्वितीयशक्तिप्राग्योनिमाने कोणाग्रं यथा भवति तथा वह्निपुरेण शक्तिद्वयं संपुटीकृत्येति । एवं नवयोनिचक्रं सम्प्रदायविहीनानां सुदुर्लभं गुरुवक्त्रात् संपन्नम् [9] । [10] नवयोनिचक्र-निर्माणक्रमेऽभियुक्तोक्तिः—

---

वह्निपुरेण त्रिकोणेन ते पूर्वप्रसूते [11] शक्ती संपुटीकृत्य [12] संपुटीकरणानुरोधेन भेदयेदित्यर्थः । एवं कृते सति मध्यचक्रविन्यासो भवति । मध्यमचक्रमिदं [13] नवयोनिचक्रं [14] नाम ॥ २९ ॥

---

१. एकैकवामरेखा–क. । २. शात् सार्धपादपूर्व–क. । ३. 'शक्ति····प्रथमप्रसूत' नास्ति–ग. । ४. भवति–ख. । ५. 'अयमत्र क्रमः' नास्ति–ख. । ६. सव्यां तद्वया–क. । ७. विस्तृत–ग. । ८. बाह्य–ग. । ९. संपन्नव–क., समुत्पन्नम्–ख. । १०. 'नव····चक्रम् ॥ इति' नास्ति–ख. । ११. पूर्वकृते–क. ग. । १२. 'सम्पुटीकृत्य' नास्ति–क. ग. । १३. मिति–ख. ङ. ज. । १४. क्रनाम–ख. ङ. ।

श्रीचक्रेऽपवादस्य ज्ञानार्णवादावुक्तस्याज्ञानादित्युपेक्ष्यम् । अत एव शक्तेः कोणत्रयमीशाग्नि-पश्चिमकोणसंज्ञम्, वह्नेस्तु वायुराक्षसपूर्वकोणसंज्ञम् । एकस्या रेखाया उपरि रेखान्तरस्या-रोहणं भेदनसंज्ञम् । ईदृशभेदनात्मको रेखाद्वयसंयोगः सन्धिः । तादृश एव रेखात्रयसंयोगो मर्म । सन्धिमर्मणोर्द्वयोरपि ग्रन्थिरिति संज्ञा । शक्तिपश्चिमकोणवह्निपूर्वकोणयोः संपर्केण लेखो डमरुः । पूर्णचन्द्राकारा रेखा वृत्तम्" ( से॰ पृ. २७ ) इति ।

[1]सर्वोर्ध्वां शक्तिं विस्तारयेदधः ।
तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेत् ।। ३० ।।

---

[2]वह्नेः पुरद्वितयवासवयोनिमध्यसम्बद्धवह्निवरुणेशसमाश्रिताश्रि ।
देव्यर्चनाय मुनिभिर्विहितं[2] पुरैव लोके[3] सुदुर्लभमिदं नवयोनिचक्रम् ।।इति।।२९।।
( प्र० सा० ९।१२ )

सर्वोर्ध्वां शक्तिं विस्तारयेदधः । अयमर्थः—नवयोनिचक्र[4]क्रमेण शक्तिद्वयं वह्निपुरं त्रिकोणत्रयं भवति । तत्र सर्वत्र मध्ये ऊर्ध्वशक्तेः[5] "शक्त्या शक्तिम्" ( १।२९ ) इत्यत्र द्वितीयानिर्दिष्टशक्तेः[6] पश्चिमरेखया[7] तां दक्षिणो-

---

सर्वोर्ध्वामिति । उद्धृतनवयोनिचक्रविन्यासे ऊर्ध्वस्थिता या शक्तिस्तामधो[8] विस्तार-येत् । चक्रसंपुटीकरणेनैव भेदनं[9] विनैवेत्यर्थः । तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेदित्य-स्यायमर्थः—नवयोनिचक्रविन्यासे[10] स्थितो यो वह्निस्तं दक्षिणोत्तराशाक्रमेण मनाग्

---

१. र्ध्वं–वाक. ख. ग. । २. विहितं मुनिभिः–ग. । ३. लोकेऽति–मु. । ४. 'चक्रे' इत्येव–क. ग. । ५. क्तिः–क. । ६. क्ति–क. । ७. खा या–क. ख. । ८. शक्तिस्तां दक्षिणो-त्तराशाक्रमेण मनाग् विस्तार्य तामधो विस्तारयेत्–ख. ङ. । ९. भेदसन्धिनैवेत्यर्थः–ख. । १०. चक्रे–ग. ।

1. "अथान्तर्दशारलेखनोपायमुपदिशति सर्वोर्ध्वामित्यारभ्य शक्तिमाद्यां विभेदयेदित्यन्तेनावशिष्ट-सार्धद्वयश्लोकेन" ( से. पृ. २८ ) ।

2. वह्नेरिति । प्रपञ्चसारविवरणव्याख्यायां प्रयोगक्रमदीपिकायामेष श्लोक एवं व्याख्यातः— "अष्टदलपद्मकर्णिकायां पूर्वापरं सूत्रमास्फाल्य तत्षोडशधा समं भङ्क्त्वा प्रागारम्य चतुस्सप्तद्वादशभागान्तसीमासु दक्षिणोत्तराणि सूत्राण्यास्फालयेत् । तत्र द्वितीयसूत्राग्रद्वयात् पूर्वापरसूत्रपश्चिमाग्रावधि सूत्रद्वयं तृतीयसूत्राग्रद्वयात् तत्पूर्वाग्रावधि च सूत्रद्वयमास्फालयेत् । तदा पुटितं वह्निपुरद्वितयं संपद्यते । यत्तु प्रथमं सूत्रं तत्पूर्वदिग्गतत्रिकोणमध्यगतमेवं भवति । तद्वासवयोनिसंबद्धेत्युक्तम् । पुनस्तदग्रद्वयात् पूर्वापरसूत्रे यत्र तृतीयसूत्रं संलग्नं तदवधि सूत्रद्वयमास्फालयेत् । पूर्वनिष्पन्नदक्षिणोत्तरगतत्रिकोणपुरोभागे परं त्रिकोणद्वयं मध्यभागे पश्चिमाग्रं योन्याकारं नवमं त्रिकोणं च संपद्यते । तद्वह्निवरुणेशसमाश्रिता-श्रीत्युक्तम् । मुनिभिः पुरैवं विहितमिति वैदिकपरिग्राह्यत्वमुक्तम् । लोकेऽतिदुर्लभमिदमिति गोप्यतरत्वमुक्तम्" ( पृ. ५८७ ) इति ।

**तत ऊर्ध्व[1]स्थितां शक्तिमूर्ध्वं विस्तारयेत् क्रमात् ।**
**पुनराद्यं वह्निचक्रमधो विस्तार्य सुन्दरि ॥ ३१ ॥**

---

त्तरतो मनागवकृष्य द्वितीयशक्त्यग्रप्रदेशाद् बहिः स[2]त्रिपादतन्मानदेशे तृतीयशक्त्यग्रं यथा भवति तथाऽधो विस्तारयेच्चक्रसंपुटीकरणक्रमेणेति । अस्मिंश्चक्रराजक्रमे मत्प्रयुक्तानामी[3]षन्मनाक्किञ्चिच्छब्दानां यथासम्प्रदायं मानमिति बोद्धव्यम् । न वयं सर्वत्र मानं विलिखामो ग्रन्थविस्तरभीत्या । **तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेत् ।** [4]अस्यायमर्थः—नवयोनिचक्रविन्यासे स्थितं यद्वह्निचक्रं तद् [5]दक्षिणोत्तरतः [6]किञ्चिद[7]वकृष्यानन्तरप्रसूतशक्तिसव्यापसव्याश्रि[8]भेदनक्रमेण तत्पूर्वप्रसूतशक्तिद्वयसव्यापसव्याश्रिद्वयाग्रसंश्लेष[9]क्रमेण पूर्वस्थितवह्न्यग्रकोणसंपुटक्रमेण तद्वह्न्यग्रप्रदेशाद् [10]बहिः [11]पादोनगुणिततन्मानदेशे द्वितीयं वह्न्यग्रं यथा भवति तथा तां शक्तिं तेन वह्निचक्रेण भेदयेदिति । **तत ऊर्ध्वस्थितां शक्तिमूर्ध्वं विस्तारयेत् क्रमात् ।** अयमर्थः—ऊर्ध्व[12]शक्त्यपरभागा[13]श्रयं सव्यापसव्यरेखाद्वयं मनागूर्ध्वं प्रथमवह्न्यग्रभागावधि समाकृष्य द्वितीयवह्निं विस्तारयेद् [14]विकासयेद् भेदयेदिति यावत् । [1]क्रमा-

---

विस्तार्य पूर्व[15]प्रसूतशक्तिभेदक्रमेण चक्रसंपुटक्रमेण [16]च [17]ग्रन्थिसंस्पर्शानुरोधेन स्वाग्रवह्निसंपुटन्यायेन विस्तारयेदित्यर्थः । तत इत्यारभ्य ऊर्ध्वं विस्तारयेदित्यन्तस्यायमर्थः—एवं विन्यासे कृते शक्तित्रयं वह्निद्वयं च [18]संपद्यते । ततश्चाधः[19]शक्तिमध्यशक्तिपरिहारेणोर्ध्व[20]शक्त्यपरभागा[21]श्रिस्थं तत्सव्यापसव्यरेखाद्वयं मनागूर्ध्वं सर्वोर्ध्ववह्निमध्यप्रदेशावधि विस्तारयेदित्यर्थः । [1]क्रमादित्यनेन [22]पदेनैतत्सिद्धम् । प्रथमशक्तिद्वयभेदकत्वेन विन्यस्तो यो

---

१. ऊर्ध्वं-सक. । २. स्पर्धमानदेश-क., सार्धं तन्मानदेशे-ग. । ३. 'ईषन्मनाक्' नास्ति-क. । ४. अय-क. । ५. दक्षिणतः-ग. । ६. 'किञ्चित्' नास्ति-क. । ७. दप-क. । ८. व्याश्र-ख. । ९. षेण-क. । १०. द्विगुणे क., रध्यर्ध-ख. । ११. 'तत्तन्मानदेशे' इत्येव-क. ख. । १२. शक्तिपर-ख. । १३. श्रय-क. । १४. 'विकासयेत्' नास्ति-ख. ग. । १५. शक्तिसव्यापसव्याश्रभेद-ख. ङ. ज. । १६. 'च' नास्ति-क. ग. घ. छ. । १७. स्पर्शना-घ. । १८. संपाद्यते-ख. ङ. । १९. शक्ति-क. ग. छ. । २०. शक्त्युपरि-क. ग. छ. । २१. श्रस्थं-ख. ङ. । २२. पदेन तत्-क. ग. घ. छ. ज. ।

1. "अर्थरत्नावलीकारस्तु प्रथमवह्नेः पूर्वदिशि स्थितस्य वह्न्यन्तरस्य भेदनं क्रमपदेनोच्यत इति

**[1]ग्रन्थिभेदक्रमेणैव शक्तिमाद्यां विभेदयेत् ।**
**[2]तथा सर्वोर्ध्ववह्न्यन्तः शक्तिं विस्तारयेदधः ॥ ३२ ॥**

दिति पदं रेखाद्वयोर्ध्वाकर्षणं तदेकीकरणं च सूचयति । विस्तारयेदित्याख्यातपदमपि तथा । **पुनराद्यं वह्निचक्रमधो विस्तार्य सुन्दरि । ग्रन्थिभेदक्रमेणैव शक्तिमाद्यां विभेदयेत् ॥** अस्यायमर्थः—आद्यवह्निचक्रपश्चिमरेखाद्वयं सव्यापसव्यरेखाद्वयं ग्रन्थिभेदक्रमेण मध्यशक्त्यग्रप्रदेशावधि अधस्ताद्विकृष्य प्रसृतानां तिसृणां शक्तीनां मध्ये आद्यां शक्तिं बाह्यां शक्तिं भेदयेदिति । एवमन्तर्दशारनिष्पत्तिर्भवति ॥ ३०–३१ ॥

**तथा सर्वोर्ध्ववह्न्यन्तः शक्तिं विस्तारयेदधः ।** अयमर्थः—प्रथमवह्निरसौ प्रस्तारवशात् सर्वोर्ध्ववह्निरभवत् । तस्य मध्यप्रदेशावधि विस्तृते ये रेखे ताभ्यां तमूर्ध्ववह्निं भेदयेदित्यर्थः । पुनराद्यमित्यारभ्य शक्तिमाद्यां विभेदयेदित्यन्तस्यायं भावः—एवं विन्यासे कृते वह्निद्वयमस्तीत्युक्तम् । प्रागुद्धृतोर्ध्ववह्निपरिहारेणाधोवह्न्यपरभागाश्रिस्थसव्यापसव्यरेखाद्वयं मध्यशक्त्यग्रप्रदेशावधि बाह्याद्यशक्तिरेखाविदलनक्रमेण मनाग् विस्तार्याभ्यां शक्तिं भेदयेदित्यर्थः । एवं कृते सति नवयोनिचक्राद् बहिः परिवेषक्रमेण दशयोन्यात्मकं चक्रान्तरं भवतीत्यर्थः ॥ ३०–३१ ॥

तथेत्यारभ्य विस्तारयेदित्यन्तस्यायमर्थः—नवयोनिगर्भदशयोनिचक्रस्योर्ध्वे स्थितो

१. न्त–वाक. ख. । २. क्रमो–क. । ३. 'पद' नास्ति–क. ग. । ४. विकासयेत्–क. । ५. श्रय–ख. । ६. 'शक्तीनां' नास्ति–ख. । ७. 'अयमर्थः' नास्ति–ख. । ८. 'प्रथम' नास्ति–क. ग. । ९. देवोर्ध्व–क. ग. छ. । १०. 'कृते' नास्ति–ख. ज. । ११. त्युक्तं प्राक् । ततोर्ध्व–ख. ङ. ज. । १२. वह्नेः परि–क. ग. घ. । १३. श्रस्थ–ख. ङ. । १४. प्रस्तार्याद्यां–ख. ङ ज. । १५. चक्रं–ख. ङ. छ., नास्ति–ज. । १६. न्यूर्ध्वस्ति–ख. ङ. ज. ।

व्याचख्यौ । ऋजुविमर्शिनीकारस्तु रेखाद्वयाभिवृद्धेरुक्तरूपोऽवधिः क्रमपदेन कथ्यत इत्याह" ( से. पृ. ३० ) ।

1. "....ग्रन्थिभेदक्रमेणेत्युत्तरार्धं व्यर्थमिवाभाति । प्राञ्चस्तु—अस्मिन्नन्तर्दशारप्रस्तारे तिस्रः शक्तयो द्वौ वह्नी च सन्ति । तत्र सर्वाधःस्थिता शक्तिराद्यशक्तिरुच्यते । प्रथमवह्न्यधोविस्तारदशायां लिख्यमानेन पश्चिमरेखान्तरेण तस्या आद्यशक्तेर्भेदनमुत्तरार्धेनोच्यत इति तत्सार्थक्यमाहुः" ( से. पृ. ३० ) ।

2. "अथ बहिर्दशारलेखनोपायमुपदिशति तथा सर्वोर्ध्वेत्यारभ्याद्यवह्निनेत्यन्तेन सार्धश्लोकद्वयेन" ( से. पृ. ३१ ) ।

**तामादिचक्राधःशक्तिं[१] वह्निनोर्ध्वं विभेदयेत् ।**
**[1]पुनः[२] पूर्ववदेवाद्यां शक्तिं विस्तार्य भेदयेत् ॥३३॥**

प्रसृतप्रथमदशारोर्ध्ववह्न्यन्तःस्थितशक्त्यपरभागरेखां[३] दक्षिणोत्तरतो मनाग् विकृष्य सर्वचक्रसंपुटक्रमेण पूर्वप्रसृतवह्निद्वयसव्यापसव्यपार्श्वद्वयाश्रि[४]चतुष्टयाग्रसंश्लेषक्रमेण तृतीयशक्त्यग्रप्रदेशाद्[५] बहिः सकलैकांश[६]तन्मानदेशे चतुर्थशक्त्यग्रं यथा भवति तथाऽधस्ताद् विस्तारयेद् विकासयेदिति । **तामादिचक्राधःशक्तिं वह्निनोर्ध्वं विभेदयेदिति ।** ताम् अनन्तरप्रसृतां शक्तिम् । अयमर्थः—आदिचक्रं नवयोनिचक्रम् । तस्माच्चक्रादधः स्थिता या शक्तिः प्रथमदशारचक्र[७]गता, तत्र स्थितो यो वह्निस्तस्यापरभाग[८]रेखां दक्षिणोत्तराशाक्रमेणेषदवकृष्य तां सव्यापसव्याश्रिभेदनक्रमेण प्रथमदशारापरभागशक्तिद्वय[९]सव्यापसव्यपार्श्वद्वयाश्रि[१०]चतुष्टयाग्रसंश्लेषक्रमेण द्वितीयवह्न्यग्रप्रदेशाद् बहिः स[११]तृतीयांशतन्मानदेशे तृतीयवह्न्यग्रं यथा भवति तथोर्ध्वं

यो वह्निस्तस्या[१२]श्रिस्थितशक्त्यपरभागाश्रि[१३]स्थरेखां दक्षिणोत्तरतो मनाक्[१४] प्रस्तार्य सर्वचक्रसंपुटन्यायेन ग्रन्थिसंश्लेषक्रमेण [१५]पूर्वंप्रस्तारितायाः शक्तेरेव परभागाश्रिद्वयविदलनक्रमेण चाधो विस्तारयेदित्यर्थः । तामित्यारभ्य विभेदयेदित्य[१६]न्तस्यायमर्थः[१७]—आदिचक्रं नवयोनिचक्रम् । तस्य चक्रस्याधः स्थिता या शक्तिर्दशयोनिचक्रगता तस्या मध्यस्थितो यो वह्निस्तस्य पश्चिमरेखां दक्षिणोत्तराशा[१८]नुक्रमेणेषद्विकृष्यतामिति । चक्रसंपुटन्यायेन पूर्वं[१९] प्रस्तारितायाः शक्तेरपरभागाश्रि[२०]द्वयविदलनक्रमेण ग्रन्थिसंश्लेषक्रमेण[२१] चोर्ध्वं विस्तारये-

---

१. शक्त्या–वाक. ख. ब., शक्ति–से. सघ. । २. ततः–वाग. से. । ३. रेखा–ख. । ४. द्वयाश्र–ख. । ५. 'प्रदेशात्' नास्ति–क. । ६. सार्धपाद–ख. । ७. गा–क. । ८. भागं दक्षिणो–ख., रेखा तद्दक्षि–क. । ९. द्वयं–ख. । १०. याश्रय–ख. । ११. सकलांशतन्मान–क., सवस्वैकांशतन्मान–ग. । १२. स्यान्तः–ख. घ. ङ. ज. । १३. श्र–ख. ङ. ज. । १४. ग् विस्तार्य–ख. ङ. ज. । १५ 'पूर्व····क्रमेण च' नास्ति–ख. ङ. ज. । १६. त्यन्तस्य ग्रन्थस्या–क. ग. घ. छ. । १७. मभिप्रायः–ग. । १८. शारेखाक्र–ख. ङ. । १९. पूर्वं वि–क. ग. । २०. श्र–ख. ङ. । २१. 'ग्रन्थिसंश्लेषक्रमेण' नास्ति–क. ग. छ. ।

1. "पुनः पूर्ववदेवेति केषाञ्चित् पाठः" (से. पृ. ३२) । वामकेश्वरीमतविवरणे ऋजुविमर्शिन्यामर्थरत्नावल्यामन्यासु च मातृकासु सर्वत्र एष एव पाठो दृश्यते ।

**ऊर्ध्ववह्निमधोवह्निमध्यवह्निविवर्जितम्[१] ।**
**विस्तार्य भेदयेच्छक्तिमधस्तादाद्यवह्निना[२] ।।३४।।**

---

विभेदयेदिति[३] । पुनः **पूर्ववदेवाद्यां शक्तिं विस्तार्य भेदयेत्** । **ऊर्ध्ववह्निमधोवह्निमध्यवह्निविवर्जितम्** ।। **पूर्ववत्** प्रथमदशारषडश्रनिष्पत्त्यनन्तरं यथैतत्सन्निवेशक्रमस्तद्वदित्यर्थः । [1]**अधोवह्निमध्यवह्निविवर्जितं** यथा भवति तथा कृत्वा **ऊर्ध्ववह्निं** भेदयेद् विदलयेदित्यर्थः । एतदुक्तं भवति—आद्यतया स्थितोर्ध्वशक्त्यपरभागाश्रयं सव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण मध्यवह्न्यग्रप्रदेशादूर्ध्वं विकृष्य पुनस्तिर्यक्तयोर्ध्ववह्निं भेदयेद् विदलयेदिति[४] । अधोवह्निमध्यवह्निविवर्जितमित्युक्त्या वह्नित्रयास्तित्वकथनं कृतम् । न त्वधोवह्नि-

---

दित्यर्थः[५] । एवं कृते नवयोनिगर्भदशयोनिचक्राद्[६] बहिः परिवेशक्रमेण षट्कोणं भवति । पुनः पूर्ववदित्यारभ्य ऊर्ध्ववह्निमित्यन्तस्यायमर्थः—पूर्ववदिति प्रथमदशारप्रस्तारे षट्कोणविस्तारानन्तरमधः[७]शक्तिमध्यशक्ति[८]परिहारेणा[९]द्यतयावस्थितोर्ध्व[१०]शक्तिसव्यापसव्यरेखाद्वयोर्ध्वतिर्यक्प्रस्तारेणोर्ध्ववह्निर्भेदितो यथा[११] तथा द्वितीयदशारप्रस्तारावसरेऽपि षट्कोणरचनानन्तरमधःशक्तिमध्यशक्तिद्वयपरिहारेणाद्यतया[१२] [१३] स्थितोर्ध्वशक्तिसव्यापसव्यरेखाद्वयमूर्ध्ववह्निपुरान्तरस्थवह्न्यग्रप्रदेशावधि[१४] ऊर्ध्वं विस्तार्य पुनस्तिर्यक्प्रस्तार[१५]क्रमेणोर्ध्वं[१६] वह्निं विभेदयेदित्यर्थः । [1]अधोवह्नीत्यारभ्य आद्यवह्निनेत्यन्तस्यायमर्थः—एवं विन्यासे

---

१. मध्ये—वाक. ख. । २. दूर्ध्व—वाक. ख., दादि—ब. । ३. विस्वारयेदिति—ख. । ४. 'विदलयेत्' नास्ति—क. । ५. 'इत्यर्थः' नास्ति—क. ग. छ. । ६. 'नव''''क्रमेण' नास्ति—क. ग. छ. । ७. विन्यासा—क. ख. घ. छ. ज. । ८. 'मध्यशक्ति' नास्ति—क. ग. छ. । ९. री—ग. छ. । १०. या स्थि—क. ख. ङ. छ. ज. । ११. यदा तदा—ख. । १२. री—क. ग. । १३. न्तया—ख. घ. ङ. । १४. न्तः स्थ—ख. घ. ङ. ज. । १५. 'पुनस्तिर्यक्' नास्ति—क. ग. घ. छ. । १६. रेण—ख. ङ. छ. ज. ।

1. "अधोवह्निमध्यवह्निविवर्जितमिति पदं त्ववशिष्टम् । तदिदं वाक्यद्वयमध्यभागे पठितत्वात् केचित् पूर्ववाक्यशेषत्वेन, अन्ये उत्तरवाक्यशेषत्वेन व्याचक्षाणा विवदन्ते । तत्र शिवानन्दनाथादयस्तावदाहुः—पूर्ववाक्य ऊर्ध्ववह्नेर्भेदनमुक्तम् । तद्दार्ढ्याय मध्यवह्न्यधोवह्न्योर्भेदनं निषिध्यते । प्रथमशक्तिवामदक्षिणरेखाभ्यां मध्यवह्निपूर्वकोणावधिविस्तारिताभ्यां तयोर्भेदनस्यासंभवेऽपि "नान्तरिक्षे न दिव्यग्निश्चेतव्यः" (तै. सं. ५।२।७।१) इतिवदप्रसक्तप्रतिषेध एवायं वह्नित्रयास्तित्वबोधनमात्रफलक इति । विद्यानन्दनाथादयस्तु उत्तरवाक्ये

**[1]ततो[1] मध्यादिशक्त्यूर्ध्व[2]शक्तिं विस्तारयेदधः ।**

---

मध्यवह्निभेदप्रसङ्गो भवति । प्रसक्त्य[3]भावे [2]प्रतिषेधमात्रं कृतम्, दिव्य[4]-(नि?ग्नि)[5]चयनादिवत् । **विस्तार्य भेदयेच्छक्तिमधस्तादाद्यवह्निना ।** विस्तार्य विकास्य । आद्यवह्निनाऽधस्तात् [6]शक्तिं विभेदयेदित्यन्वयः । अयमर्थः—आद्यवह्न्य[7]परभागाश्र[8]यं सव्यापसव्यरेखाद्व[9]यं मर्म[10]द्वयभेदनक्रमेण तृतीय-शक्त्यग्रप्रदेशावध्यधस्ताद्विकृष्य पुनस्तिर्यक्तयाऽधस्ताच्छक्तिं विभेदयेदिति । अधस्ताच्छब्द[11]स्तन्त्रोच्चारितः । एवं द्वितीयदशारनिष्पत्तिर्भवति ।। ३२-३४।।

**ततो मध्यादिशक्त्यूर्ध्वशक्तिं विस्तारयेदधः । तथैव संपुटीकुर्यात् सर्वं**

---

कृते वह्नित्रयं भवति । चक्रमध्यस्थाश्चतस्रः शक्तयो भवन्ति । तत्रा[12]द्यमध्यवह्निद्वयं वर्जयित्वाऽधोवह्निसव्यापसव्यरेखाद्वयमध[13]स्ताद् बाह्यशक्त्यन्तःस्थितशक्त्यग्रप्रदेशावधि विस्तार्य बाह्यशक्तिं भेदयेदि[14]ति । एवं विन्यासे कृते द्वितीयदशारं भवति ।। ३२-३४ ।।

तत इत्यारभ्य विस्तारयेदित्यन्तस्यायमर्थः—ततोऽनन्तरं म[15]ध्या चासावादिश्चेति

---

१. अतो–वाक. ख. । २. ध्वं–वाग. से. सख. घ. । ३. अतिप्र–क. । ४. तिर्यक्त्व-नाडीवत्–क. । ५. निचया–ख. । ६. 'शक्ति.......वध्यधस्ता' नास्ति–ख. । ७. वह्नि–क. । ८. श्रय–क. । ९. द्वय–क. । १०. तन्मर्म–ग. । ११. ब्दः स्वत–क. । १२. तत्र बाह्यमध्यवह्नि–ख. ङ. ज. । १३. मध्यस्था–क. ख. ग. छ. । १४. दित्यर्थः–क. ग. घ. छ. । १५. मध्यं चादि–क. ग. छ. ।

विस्तार्येत्यस्य कर्मसापेक्षत्वादाद्यवह्निनेति तृतीयान्तस्य तदन्वयायोग्यत्वादव्यवहितपूर्वत्वेनोपस्थितमिदमेव पदं तत्रान्वेति । तत्राधोवह्निशब्दः सर्वोर्ध्ववह्निपरः, अस्यैव चक्रस्य विपर्यासेनावलोकने सर्वोर्ध्वतनस्यापि सर्वाधस्तनत्वसंभवात् । तेनोर्ध्वमध्यवह्निभिन्न आद्यवह्निरेवेति प्रथमवह्निं विस्तार्येत्यर्थः संपद्यत इत्याहुः" (से. पृ. ३२) ।

1. "एवं दशारद्वयमुक्त्वा चतुर्दशारचक्रलेखनोपायमुपदिशति ततो मध्यादीत्यारभ्य सर्वाधस्ताद्विभेदयेदित्यन्तैः सार्धैः पञ्चभिः श्लोकैः" ( से. पृ. ३३ ) ।
2. प्रतिषेधमात्रमिति । प्रतिषेधस्य विधिर्नास्ति, किन्त्वनुवाद एवेति मात्रपदस्यार्थः । तत्र दृष्टान्तः—दिव्यग्निचयनादिवदिति । यथा "न दिव्यग्निश्चेतव्यः" (तै. सं. ५।२।७।१) इति श्रुतौ दिव्यग्निचयनस्य प्राप्त्यभावेन प्रतिषेधविध्याश्रयणेऽप्रसक्तप्रतिषेधदोष आपतति, अतो नित्यानुवादमात्रं तद् हिरण्यनिधानविधानार्थम्, तथैवात्राप्यग्नित्रयप्रसक्त्यभावेनानुवादमात्रमिति भावः ।

**तथैव संपुटीकुर्यात्[1] सर्वं[2] चक्रं सुरेश्वरि ।। ३५ ।।**

**तां च तेन महेशानि वह्निचक्रेण भेदयेत् ।**

**[1]ग्रन्थिभेदक्रमेणैव[3] सर्वोर्ध्वं सर्वबाह्यतः ।। ३६ ।।**

---

**चक्रं सुरेश्वरि ।।** ततः पश्चात् । **मध्यादिशक्त्यूर्ध्वशक्तिः** मध्यशक्तिश्चासावादिशक्तिश्चेति मध्यादिशक्तिस्तस्या ऊर्ध्वशक्तिर्मध्यादिशक्त्यूर्ध्वशक्तिस्तां **विस्तारयेद्** विकासयेत्[4] । **अधः** अधस्तात् । अयमर्थः—महामध्यशक्तेरूर्ध्वभागे स्थिता या[5] शक्तिस्तस्याः[6] पश्चिमरेखा आद्यवह्न्यग्रभागगा[7] या तां दक्षिणोत्तरतो[8] मनाग् विकृष्य चतुर्थशक्त्यग्रप्रदेशाद्[9] बहिस्तन्मानदेशे[10] पञ्चमशक्त्यग्रं यथा भवति तथाऽधस्ताच्चक्रं संपुटीकुर्यादिति । एवं मध्यात् प्रभृत्यधोधः क्रमेण पञ्च शक्तयः प्राप्ताः[11] ।। ३५ ।।

**तां च तेन महेशानि वह्निचक्रेण भेदयेत् । ग्रन्थिभेदक्रमेणैव सर्वोर्ध्वं सर्वबाह्यतः ।। मध्योर्ध्वशक्तिपर्यन्तमादिशक्त्यवधि प्रिये । तां शक्तिं भेदयेत्**

---

मध्यादिशक्तिस्तस्या ऊर्ध्वशक्तिर्मध्यादिशक्त्यूर्ध्वशक्तिस्तां[12] विस्तारयेत् प्रस्तारयेत् । अधः अधोभागं प्रतीति[13] । कोऽर्थः ? समस्तचक्रस्यादौ "शक्त्या शक्तिं विनिर्भिद्य" (१।२९) इत्यत्र द्वितीयशक्तिनिर्भेद्यत्वेनोक्ता या प्रथमा शक्तिः सा आद्या शक्तिः । सैव रचनावशात् समस्तचक्रमध्यशक्तिः संवृत्ता[14] । तस्या अनन्तरोर्ध्वशक्तिपश्चिमरेखां[15] दक्षिणोत्तराशानुबन्धतयेषद्विकृष्याधो[16] विस्तारयेदित्यर्थः । तथैवेत्यारभ्य सुरेश्वरीत्यन्तस्यायमर्थः—तथेति पूर्वं प्रस्तारिता या शक्तिस्तया शक्त्याऽधोभागस्थं चक्रं संपुटीकुर्यादित्यर्थः । तां चेत्यारभ्य भेदयेदित्यन्तस्य व्याख्या लिख्यते । तामिति चक्रसंपुटन्यायेनाधः प्रस्तारिता या[17]

---

१. कृत्य–सख. । २. सर्वचक्रं–वाग. से. ब. सक. घ. । ३. णाधः सर्वोर्ध्वात्–वाक. ख. ब. । ४. 'विकासयेत् । अधः' नास्ति–क. । ५. 'या' नास्ति–क. । ६. स्ततः–क. । ७. मध्यवह्निपरभागगतां–ख. । ८. दक्षिणे–ख. । ९. चतुश्श–ख. । १०. स्तन्मनाग्देशे–क. । ११. शक्तिनिष्पत्तिः प्राप्ता–ख. ग. । १२. 'र्मध्यादि····प्रथमा शक्तिः' नास्ति–ख. ङ. ज. । १३. 'गं प्रतीति····निर्भेद्यत्वेनोक्ता' नास्ति–ग. । १४. संभूता–क. ग. छ. । १५. रेखा–क. ग. घ. छ. । १६. बद्ध–क. ग. छ. । १७. यथा–क. ग. ।

1. "प्राचामेतच्छ्लोकोपेक्षाऽत्रत्यविशेषणानां यथाकथञ्चिदन्यथा नयनमपि न स्वरसमित्युपेक्षितम्" ( से. पृ. ३४ ) ।

**मध्योर्ध्वशक्तिपर्यन्तमा[1]दिशक्त्यवधि प्रिये ।**
**ततो बाह्यस्थशक्त्यन्तः शक्तिमूर्ध्वं विकासयेत् ।। ३७ ।।**

---

विदलयेत् । सर्वोर्ध्वं यथा भवति तथा [2]चतुर्थवह्न्यग्रं यथा भवति तथा कृत्वेत्यर्थः । पर्यन्तावधिशब्दौ मर्यादावचनौ । एतदुक्तं भवति—यद्वह्निचक्रं द्वितीयदशारं प्रस्तारक्रमे[3]णैतामेव शक्तिम[4]भिनत् तेन वह्निचक्रेणेदानीं भासमानवह्निपुरत्रयबाह्यवह्निपुरपश्चिमरे[5]खां दक्षिणोत्तरतो विकृष्य भेद्यशक्त्य-[6]श्राग्रावधि तदश्रद्वयविदलनद्वारेण तत्तत्स्थानगताश्रचतुष्टयम[7]र्यादाविन्यासक्रमेण सर्वचक्रकवलनक्र[8]मेण [9]च तृतीयवह्न्यग्रप्रदेशाद् बहिस्तन्मानदेशे [10]तुरीयाग्निकोणं यथा भवति तथा तां शक्तिं तेन वह्निचक्रेण विदलयेदिति । **ततो बाह्यस्थशक्त्यन्तः शक्तिमूर्ध्वं विकासयेत्** । अस्यायमर्थः—

---

शक्तिस्तां भेदयेदित्यर्थः । तेनेति । तेन "[11]भूयो वह्निपुरेण संपुटीकृत्य"(१।२९) इ[12]त्यत्र रचितो योऽयं प्रथमो[13] वह्निस्तस्याधः समनन्तरस्थितवह्निपाश्चात्त्यरे[14]खां दक्षिणोत्तराशानुक्रमेण पूर्वप्रसृतशक्त्य[15]ग्रावधि विकृष्य [16]तदश्रविदलनद्वारेण ग्रन्थिसंश्लेषानुरोधेन वह्न्यायमानेन तेनोर्ध्वं प्रस्तारयेदित्यर्थः । ग्रन्थीत्यादि बाह्यत इत्यन्तस्यायमर्थः—ग्रन्थिभेदक्रमेणैवे[17]त्यग्राणां संश्लेषयोगेनेत्यर्थः । सर्वोर्ध्वमिति । सर्वोर्ध्वं वह्निर्यथा भवति तथोर्ध्वं विस्तारयेत् । सर्वबाह्यत इति सर्वचक्रकवलनक्रमेणेत्यर्थः । केन प्रकारेण [18]प्रस्तारयेदित्यपेक्षायां विशिनष्टि—मध्योर्ध्वशक्तिपर्यन्तमिति । समस्तचक्रमध्यस्थिता या प्रथमा शक्तिस्तस्याः समनन्तरोर्ध्वस्थिता या शक्तिस्तस्याः पर्यन्तं समीपं रेखाविन्यासः कर्तव्यः । आद्यशक्त्यवधीति । आद्यशक्तिर्मध्यशक्तिः सैव रचनावशात् सर्वबाह्योर्ध्ववह्न्यन्तःशक्तिरभवत् । तदवधि प्रस्तारयेत् । कोऽर्थः ? यथा तस्या भेदो न भवति संश्लेषश्च संभवति तथा प्रस्तारयेदिति यावत् । ततो बाह्यस्थेत्यादेः सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं

---

१. माद्य–अ. सक. ख. । २. 'चतुर्थ····तथा' नास्ति–ग. । ३. ण ता–क. ख. । ४. 'अभिनत्' नास्ति–क. ख. । ५. रेखा–क. ख. । ६. श्रावधि–क., ग्रावधि–ग. । ७. मध्यपदा–क. । ८. रूपेण–क. ख. । ९. 'च' नास्ति–क. । १०. तुर्या–क. ख. । ११. 'भूयो' नास्ति–क. ग. छ. । १२. तत्र–क. ग. छ. । १३. मव–क. ग. घ. छ. । १४. रेखाद्वय–क. ग. घ. छ. । १५. श्रा–ख. घ. ङ. ज. । १६. तदग्र–क. ग. छ. । १७. अश्राणां–ख. ङ. ज. । १८. 'प्रस्तार····संभवति तथा' नास्ति–ख. ङ. ।

[1]तथा विस्तारयेच्छक्तिमाद्या[2]मप्यूर्ध्वमीश्वरि ।
सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं वीरवन्दिते ।। ३८ ।।
[3]तया विभेदयेद् वह्निचक्रं सर्वोर्ध्वसंस्थितम् ।

---

अनन्तरप्रसृतपञ्चशक्तिरूपा बाह्यस्थिता या शक्तिस्तस्या [4]अन्तः स्थिता या शक्तिस्तस्याः शक्तेः पश्चिमरेखाद्वयं [5]सव्यापसव्यरेखाद्वयं मनागूर्ध्वं विकास्य[6] सर्वोर्ध्वशक्तिपाश्चात्त्यरेखादक्षिणोत्तरा[7]ग्राभ्यां सह [8]विकासयेद् बध्नीयादिति विकासयेदिति[1] पदं [9]तत्रोक्तम् ।। ३६–३७ ।।

**तथा विस्तारयेच्छक्तिमाद्यामप्यूर्ध्वमीश्वरि । सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं वीरवन्दिते ।। [10]तया विभेदयेद्वह्निचक्रं सर्वोर्ध्वसंस्थितम् । वीरवन्दिते !**

इदन्ताकवलनप्रगल्भा वीरास्तैर्वन्दिते आत्मत्वेन परामृष्टे । अयमर्थः—चक्रराजविन्यास[11]क्रमे सर्वाद्या या शक्तिः प्रस्तारवशादूर्ध्वतया [12]स्थिता तस्याः शक्तेः

---

वीरवन्दिते इत्यन्तस्यायमर्थः—[13]ततः अनन्तरं सकलचक्रसंपुटन्यायेन बहिः स्थिता या [14]शक्तिस्तस्याः [15]समनन्तरावस्थितशक्तिसव्यापसव्यरेखाद्वयमनागूर्ध्वं सर्वोर्ध्व[16]वह्न्यन्तस्थवह्निगर्भ[17]स्थशक्तिपाश्चात्त्यरेखाव[18]धि [19]ऊर्ध्वं प्रस्तारयेदित्यर्थः । अयमर्थः—सर्वोर्ध्वशक्तिपाश्चात्त्य[20]रेखायाः पूर्वंप्रस्तारितरेखाद्वयं पुनस्तिर्यगीषत् प्रस्तार्य निबध्नीयादिति यावत् । सर्वोर्ध्ववह्निरिति रचितसमस्तचक्रस्योर्ध्वस्थितो यो वह्निस्तस्यान्तर्वह्निसमीपं हे वीरवन्दिते इत्यर्थः । तथेत्यारभ्य सर्वोर्ध्वसंस्थितमित्यन्तस्यायमर्थः—तथा तेन प्रकारेण ।

---

१. 'सर्वोर्ध्व' 'तथा' इति पङ्क्तिक्रमः–ऋ. से. विहाय सर्वत्र । २. द्यां सर्वोर्ध्व–ब. । ३. तथा–ब. सक. घ., भद्रे–सख. । ४. अनन्तर–ग. । ५. 'सव्यापसव्यरेखाद्वयं' नास्ति–क. । ६. विकासयेत्–क. । ७. राभ्यां–ख. ग. । ८. 'विकासयेद् बध्नीयादिति' नास्ति–ख. । ९. प्रोक्तम्–क. । १०. तथा–ख. ग. । ११. क्रमेण–ग. । १२. 'स्थिता' नास्ति–क. । १३. 'ततः' नास्ति–क. ग. घ. छ. । १४. 'तस्याः' नास्ति–ख. ङ. ज. । १५. न्तः स्थिता शक्तिः–ख. ङ. ज. । १६. 'वह्न्यन्तस्थ' नास्ति–ग. । १७. पश्चाद्रे–क. ग. घ. छ. । १८. 'वधि····प्रस्तारितरेखा' नास्ति–ग. छ. । १९. 'ऊर्ध्वं' नास्ति–क. ग. घ. । २०. रेखापूर्वप्रस्तारितरेखाद्वयं–ख. ङ. ज. ।

1. "विकासयेदिति पदस्यैवैतावानर्थ इति तु प्राञ्चः" ( से. पृ. ३४ ) ।

**[1] सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः प्रिये ॥ ३९ ॥**
**विस्तार्य बाह्यशक्तिं[2] तु[3] सर्वाधस्ताद्विभेदयेत् ।**

---

पश्चिमरेखाश्रयं [4] सव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेण सर्वोर्ध्ववह्न्यन्तः-स्थितवह्न्यग्रप्रदेशावध्यूर्ध्वं विकृष्य पुनस्तिर्यक्तया [5] सर्वोर्ध्ववह्निं भेदयेदिति ॥ ३८ ॥

**सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः प्रिये । विस्तार्य बाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेत्** ।। अनेन सूत्रेण [6] परिशिष्टचतुष्टयाश्रसमुल्लासः क्रियते । अयमर्थः—सर्वचक्रस्योर्ध्वभागतया स्थितो यो वह्निस्तस्य वह्नेरधोभाग-प्रदेशे बाह्यशक्तिरेखाश्लिष्टाश्रिसव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदनक्रमेणाधो[7] विस्तार्य पुनस्तिर्यक्तया [8] सर्ववह्न्यूर्ध्वरेखाग्रयोर्विकासयेत्[9] सर्वाधस्तात् स्थितां

---

यथा पूर्वं [10] सर्वोर्ध्ववह्निपरिसर एव रेखाप्रस्तारोऽकारि तथेत्यर्थः । आद्यामिति प्रथमां शक्तिमिति यावत् । आदिशक्तिरेव प्रस्तारवशादूर्ध्वशक्तित्वेन विस्तृता[11] । तस्याः सव्या-पसव्यरेखाद्वयमूर्ध्ववह्न्यन्तःस्थवह्न्यग्रप्रदेशावधि विस्तार्य तथा स्थितया [12] तया शक्त्या सर्वोर्ध्वस्थितं वह्निचक्रं भेदयेदिति यावत् । एवं विन्यासे कृते नवकोणदशकोणद्वयाद्बहिः परिवेषक्रमेण चतुर्दशकोणं भवति ॥ ३५-३८ ॥

---

१. अ. ब. सख. घ. पुस्तकेषु "ततः" (१।४२) इत्यादिश्लोकानन्तरमेष श्लोकः स्थापितः । २. वह्नि–सख. । ३. च–सक. । ४. 'सव्यापसव्यरेखाद्वयं' नास्ति–क. । ५ 'सर्वोर्ध्व.... पुन-स्तिर्यक्तया' नास्ति–ग. । ६. विशिष्टाश्रचतुष्टयसमु–क. । ७. 'अधो' नास्ति–ख. । ८. 'सर्व.... सयेत्' नास्ति–क. ग. । ९. इतः परम्–'तदनु वह्निस्थानगतसव्यापसव्यरेखाद्वयं तन्मर्मद्वयभेदन-क्रमेण विस्तार्य पुनस्तिर्यक्तयाऽधस्तात् स्थितां' इत्यधिकः पाठः–ख. । १०. सर्वोर्ध्वं–क. ग. घ. । ११. स्थिता–ख. ङ. ज. । १२. 'तया' नास्ति–ग. ।

1. "अर्थरत्नावल्यां त्वयं श्लोकस्ततः सृष्टिमहाचक्रमिति वक्ष्यमाणश्लोकोत्तरं व्याख्यातः । ततोऽपि प्राचीनटीकायां त्विहैव व्याख्यातः संमतश्चेति स एव पक्षः स्वीकृतोऽस्माभिः" (से. पृ. ३५) । प्राचीनटीकायामृजुविमर्शिन्याम् ।

[1]एतद्बाह्यगतं [2]पद्ममष्टपत्रं समालिखेत् ॥ ४० ॥
तद्बाह्यतोऽपि देवेशि षोडशारं [3]तथैव च ।
[4]परिवेषं भूपुरं च [5]चतुर्द्वारोपशोभितम् [6]॥ ४१ ॥

---

बाह्यां शक्तिं भेदयेदिति । अस्य सूत्रस्य [2]पूर्वार्धेनाश्रिद्वयमुत्त[7]रार्धेनाश्रि[8]द्वयं च कथितम् । एवं चतुर्दशारं सम्पन्नम् ॥ ३९ ॥

सार्धेन सूत्रेण चक्रशेषमाह—एतद्बाह्य[9]गतमित्यादिना [10]चतुर्द्वारोपशोभित-मित्यन्तेन । परि[11]वेषशब्देन [3]वृत्तत्रयं लक्ष्यते ॥ ४०-४१ ॥

---

१. पङ्क्तित्रयं वाग. ऋ. से. विहाय सर्वत्र ७५ श्लोकानन्तरं दृश्यते । २. चक्र–सघ. । ३. समालिखेत्–ब. तद्बाह्ये षोडशदलं विलिखेत् परमेश्वरि–सख. । ४. परिवेश-समायुक्तं–वाक. ख, ग., समोपेतं–सघ. । ५. रं सुशोभितम्–सघ. । ६. इमे श्लोका अधिकाः—[4]"मध्यं त्र्यश्रं तथाष्टारं द्वे दशारे चतुर्दश । तद्बाह्यतोऽष्टपत्रं च षोडशारं महीपुरम् (प्रदम्) ॥ सर्वानन्दमयं चादौ सर्वसिद्धिप्रदं परम् । सर्वरोगहरं चान्यत् सर्वरक्षाकरं तथा ॥ सर्वार्थसाधकं चक्रं सर्वसौभाग्यदायकम् । सर्वसंक्षोभणं चान्यत् सर्वाशापरिपूरकम् ॥ त्रैलोक्य-मोहनं चेति नवधा नवभिर्भवेत् ।" वाग. से. । ७. श्र–क. । ८. श्र–क. । ९. गतमिति–क. ख. । १०. 'चतुर्द्वारोपशोभितमित्यन्तेन' नास्ति–क. ख. । ११. शेष–क. ख. ।

1. "एवं षट्चक्राणि मन्वस्रान्तान्युपदिश्यावशिष्टं चक्रत्रयमुपदिशति सार्धश्लोकेन····। अयं तु सार्धश्लोक एवमेतस्य चक्रस्येति दूरस्थश्लोकोत्तरमर्थरत्नावल्यां व्याख्यातः। तदपि प्राचीनटीकाविरोधादसंमतत्वाच्चोपेक्ष्यम्" (से. पृ. ३५)। प्राचीनटीका ऋजुविमर्शिनी। जयरथस्तु अर्थरत्नावलीक्रममेव समर्थयति, अन्या मातृकाश्च ।

2. "प्राञ्चस्तु—अस्मिन् श्लोके पूर्वार्धेनैव कोणद्वयमुत्तरार्धेनैवेतरत्कोणद्वयमुक्तमिति व्याचक्षते" (से. पृ. ३५)।

3. "यत्तु वृत्तत्रयं च धरणीसदनत्रयं चेति यामलं यच्च ज्येष्ठारूपचतुष्कोणं वामारूपभ्रमित्रय-मिति षष्ठपटले वक्ष्यमाणं तत्सर्वं कर्णिकावृत्तद्वयमेलनेनैव त्रित्वाभिप्रायकमिति बहवो व्याचक्षते" (से. पृ. ३६)।

4. "एतेऽभ्युष्टश्लोकाः क्वचिट्टीकायां न दृश्यन्ते, पुस्तकेषु तूपलभ्यन्ते" (से. पृ. ४०)। वामकेश्वरीमतविवरणे ऋजुविमर्शिन्यामर्थरत्नावल्यामन्यासु मातृकासु च नैवोपलभ्यन्ते ।

**ततः [१]सृष्टिर्महाचक्रं [२]तृतीयं तु [३]हुताशनम् ।**
**[४]मध्यं स्थितिर्द्वितीयं तु [५]संहारः प्रथमं च यत् [६]॥४२॥**

---

एवं प्रसृतस्य चक्रराजस्य [७]त्र्यात्मकतामाह—**ततः सृष्टिर्महाचक्रं तृतीयं तु हुताशनम् । मध्यं स्थितिर्द्वितीयं तु संहारः प्रथमं च यत् ॥** ततो बहिश्चतुरश्रं [८]पद्मद्वयं च । [९]सृष्टिः सृष्टिरिति संज्ञा । महाचक्रं [१०]सम्पूर्णंचक्रम् । तृतीयम[११]ष्टारं [१२]मध्यं त्र्यश्रं च । [१३]तुर्विशेषार्थे । तच्चक्रं हुताशनाधिष्ठातृकम् । हुताशनोऽधिष्ठाता तृतीय[१४]चक्रस्येत्यर्थः । मध्यं चतुर्दशारं दशारद्वयं च । **स्थितिः** स्थितिरिति संज्ञा । द्विती[१५]यमान्तरापेक्षया बाह्यापेक्षया च । पूर्वत्र हुताशन-शब्दप्रयोगादत्र [१६]सूर्यशब्दः प्रयुक्तो मन्तव्यः । सूर्याधिष्ठातृकं मध्यं द्वितीयं [१७]चक्र-मित्यर्थः । [१८]बाह्यं चक्रं सोमाधिष्ठातृकमि[१९]ति च बोद्धव्यम् । बाह्यमध्यमयो-श्चक्रयोः सृष्टिरिति स्थितिरिति संज्ञेति । कथमिति चेत्तदाह—**संहारः प्रथमं**

---

ततः पुनरेवंविशिष्टं किञ्चिदवशिष्टमप्यभीष्टदमिष्टजनसेवितमष्टसिद्धिप्रदा-ष्टयोगिनीजुष्टं प्रकृष्टाष्ट[२०]गुणसिद्धिदं [२१]भक्तदृष्टितुष्टिकरमनिष्टापहं चक्रमष्टमूर्तिभि-र्विभज्य [२२]शिष्टजनानामतिरहस्यमपि [२३]विशिष्टचेतसा तत इत्यादिना संहारं प्रथमं च यदि-त्यन्तेन ग्रन्थेनाभिलषितसकलपुरुषार्थानां निजभक्तिक्षालित[२४]सकलमलाना[२५]ममलाशयाना-मनुग्राह्या[२६]णां सर्वार्थसाधकं सुन्दरं श्रीमहात्रिपुरसुन्दरीमन्दिरं सृष्टिस्थितिसंहारात्मना

---

१. सृष्टया–वाक. ख. ग. अ. सक., सृष्टिम–से., शक्त्या–ब. । २. प्रथमं–वाक. ख. ग., तुरीयं–अ., नृकायं–ब. सक. । ३ हुताशनः–से., रुद्रनाशनम्–ब. सक., भूतनाशकम्–सख. । ४. मध्ये तु द्वितयं स्थित्या–वाक. ख. ग., मध्यस्थितं–अ. ब. सक. ख., मध्ये स्थितं–से. । ५. रं प्रथमं–अ., रं पञ्चमं–वाक. ख. ग. । ६. "चतुर्दशदशद्वन्द्वमष्टावेकं महे-(सुरे) श्वरि । पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः ॥" एष श्लोकोऽधिकः–ब. सघ. । ७. त्रितयात्मक–क. । ८. रश्रद्वयं–क. । ९. 'सृष्टिः' नास्ति–ख. । १०. सम्पूर्णम्–क. ग. । ११. 'अष्टारं' नास्ति–क. । १२. मध्य–क.ख. । १३. तत्र विशेषार्थौ–ग. । १४. 'चक्र' नास्ति–क. । १५. मन्त–ग. । १६. शब्दप्रयोगो–क. । १७. यच–क. ख. । १८. ह्यच–क. ख. । १९. 'इति' नास्ति–क. । २०. 'गुण' नास्ति–क. ग. छ. । २१. भवतु–छ. । २२. 'शिष्टजना नाम्' नास्ति–क. ग. छ. । २३. पक्षहृष्टचेतसा–ख. ङ. ज. । २४. सर्व–क. ख. ग. । २५. 'अमलाशयानां' नास्ति–ख. घ. ङ. ज. । २६. कानां–क. ग. छ. ।

**च यदिति** । प्रथमं चक्रं संहारसंज्ञमिति[1] यस्मात् । एतदुक्तं भवति—यथोक्तं[2] त्रिभेदभिन्नं सृष्टिस्थितिसंहारात्मकं सोमसूर्यवह्न्यधिष्ठातृकं[3] शक्तिकामवाग्भव-[4] बीजप्रधानं ब्रह्मविष्णुरुद्रमयं जाग्रत्स्वप्नसुषुप्तिरूपं पृथिव्यन्तरिक्षाद्युप-लक्षितमकारोकारमकारविग्रहम् ऋगादिशब्दराश्युज्ज्वलं[5] क्रियाज्ञानेच्छापर-पर्यायं सत्त्वरजस्तमःस्वभावं सर्वदेवतासारं[6] विश्वात्मकमिदं त्रैपुरं महाचक्र-मिति। अस्य महाचक्रस्यैवं स्कन्धत्रित्वेऽभियुक्तोक्तिः—

---

त्रिधा व्यवस्थितमिदं त्रिधाम[7]त्रिमूर्तित्रिशक्तित्रितत्त्वादि[8]भिस्त्रिभेदेन व्यवस्थितं सर्वात्मक-मिति परमकारुणिको भगवानुपदिशति[9] । तत्रैषाक्षरयोजना–महाचक्रमिति । सनवयोनि-दशकोणद्वयचतुर्दशकोणस्फुरत्कर्णिकाष्टदलनलिनवलय[10]परीतं परितः प्रस्फुरत्षोडशदल-वृत्तचतुरश्र[11]चतुर्द्वारशोभितं चतुर्द्वारतोरणपरिघटितं घण्टानिनादरमणीयं सुरवरसपर्या-समुल्ल[12]सितमन्दारसन्तानाद्यनेकसुरतरु[13]कुसुमपरिमलमिलदलिकुलबहु[14]झङ्कारमुखरपरिसरं सन्ततति[15]रस्कृतभास्करकरप्रभावत्प्रभामण्डलमण्डितसकलदिगन्तरालम् इतस्ततः प्रकीर्ण-तारकावि[16]लसितनभस्तल[17]महावितानत्रैलोक्यमण्डपान्तः सर्वर्तुसन्निधानसम्पन्नसकल-सुमनस्[18]समन्वितवसन्तकन्दर्पपरिरक्षितनन्दनोद्यानमध्यस्थिताधारशक्तिहेत्व[19]र्णवमहापङ्के-रुहमहाप्रेतासनोपरि पर्यस्तपर्यङ्कस्फुरत्सहस्रदलकमलकर्णिकान्तरुल्लसितं पूजामण्डलं[20] महाचक्रमुच्यते । ततः सृष्टचेति[21] । सृष्ट्या स्थितमिदं चक्रं सृष्ट्यात्मकमित्यर्थः । चतुरश्रा-दारभ्या[22]ष्टदलान्तं महाचक्रं सृष्टिसंज्ञमिति यावत् । तुरीयं तु हुताशनमिति । अस्य चक्रस्य तुरीयं चक्रं चतुर्दशारदशारद्वयमतीत्यानन्तरं नवयोनिचक्रं यत्[23]तत्संहारात्मक-मिति यावत् । मध्यस्थितं द्वितीयं त्विति । सृष्टिसंहारयोरन्तरालं यत्तद्दशारद्वन्द्वचतुर्दशारं

---

१. चक्र-क. । २. यथोक्तत्रिविधभिन्न-क. । ३. 'सोम····तृकं' नास्ति-ख. । ४. वाग्भव-काम-क., कामराजवाग्भव-ख. । ५. द्वोज्ज्व-क. । ६. धारं-क. । ७. धाममूर्ति-क. छ. । ८. दित्रिस्त्रि-क. ख. ग. घ. ङ । ९. वान् वदति-ख. ङ. ज. । १०. वलयं परितः-क. ख. ग. छ. ज. । ११. रस्रं-क. । १२. ल्ला-ख. ङ. ज. । १३. 'सुरतरु' नास्ति-ख. ङ. ज. । १४. 'बहु' नास्ति-ख. घ. ङ. ज. । १५. 'कर' नास्ति-क. ग. छ. । १६. विक-घ. । १७. स्थल-ख. घ. । १८. कुसुमस्मयान्वित-क. ग. छ. । १९. हेतुर्नवमहाप्रेतासनपङ्केरुहो-परि-ख. घ. ङ. ज. । २०. मण्डपं-ख. । २१. सृष्टचादि सृष्टचान्त-ख. ङ. ज. । २२. श्राद-ग्रमा-ख. ङ. ज. । २३. 'यत्' नास्ति-क. ग. घ. छ. ।

ब्राह्म्याद्यष्टौ[1] च तद्युक्तमनङ्गकुसुमात्मकम्[2] ।
सृष्टिचक्रं तथा प्रोक्तं स्थितिचक्रं ततः[3] परम् ॥
चतुर्दशारं प्रथमं दशारं पुनरेव तत् ।
स्थितिचक्रं तथा प्रोक्तं संहारमपि संशृणु ॥

---

स्थितिचक्रमित्यर्थः । एवं कथमिति चेत् ? संहारं प्रथमं च यत् । प्रथमं चक्रं संहारचक्रमित्युक्तमिति यतस्तृतीयं चक्रं सृष्टिरूपमित्युक्तमिति यतस्तस्माद् द्वितीयमन्तरालस्थं[4] चक्रं[5] स्थित्यात्मकमित्यर्थः ।

अथ पुनरिह लोपामुद्रासम्प्रदाये विशेषोऽस्ति । पूर्वं "चतुराज्ञाकोशभूताम्" ( १।१२ ) इत्युक्तम् । अत्र सृष्ट्यादिपदेन चतुराम्नायरूपत्वं चक्रस्य लक्ष्यते । तदुक्तं संकेतपद्धत्याम्—

पूर्वाम्नायः सृष्टिरूपः स्थितिरूपस्तु दक्षिणः ।
संहारः पश्चिमो ज्ञेयो ह्यनाख्यस्तूत्तरः स्मृतः ॥ इति ।

तत्र चतुरश्राद्यष्टारान्तचक्रत्रितयं पूर्वाम्नायरूपं सृष्टिरूपत्वात्[6], तथा चतुर्दशारदशार[7]द्वयमिति त्रितयं दक्षिणं स्थितिरूपत्वात्, तथाष्टारं त्र्यस्रं मध्यमिति त्रितयं पश्चिमरूपं संहाररूपत्वात् । सर्वसमष्टिचक्रमनाख्येयत्वादुत्तररूपमिति । अन्यच्च सृष्ट्यादित्रितयं[8] प्रत्येकं त्रैविध्यात्मकं नव[9]नित्यामयमवगन्तव्यम् । पुनरेकैकस्य समष्टिव्यष्ट्यात्मना पञ्चरूपत्वमवगन्तव्यम्[10] । यथा समष्टिसृष्टिः, सृष्टिसृष्टिः, स्थितिसृष्टिः, संहारसृष्टिः, अनाख्येति सृष्टिपञ्चकं पूर्वे; एवं स्थितिपञ्चकं दक्षिणे; तथा संहारपञ्चकं पश्चिमे; अनाख्यारूपमुत्तरमेकरूपमेव[11] । एवं चक्रस्य त्रिपञ्चीकरण[12]समष्टिव्यष्ट्यात्मना षोडशात्मकत्वात्[13] षोडशनित्यारूपत्वमवगन्तव्यम् । एवं परमगुरुणा परमशिवेनोपदिष्टं यो

---

१. नास्त्येषा पङ्क्तिः—ख. । २. द्युग्म—क. । ३. क्रमतः—क. ख. । ४. 'अन्तरालस्थं' नास्ति—क. ग. घ. छ. । ५. 'चक्रं' नास्ति—क. ख. ङ. छ. ज. । ६. 'सृष्टिरूपत्वात्' नास्ति—क. ग. घ. छ. । ७. 'दशार' नास्ति—क. घ. छ. । ८. त्रिकं—ख. घ. ङ. ज. । ९. 'नव' नास्ति—क. ग. छ. । १०. इतः परम्—'चक्रस्य त्रिवृत्करणे मूलविद्यारूपत्वमवगन्तव्यम्' अधिकः पाठः—क. ग. छ. । ११. अनाख्येय—ख. ग. ङ. ज. । १२. त्रिपञ्चकरणे—ख. छ. । १३. षोडशाकार—क. ग. छ. ।

[1]वशिन्यष्टौ[1] तदादिस्थं त्र्यश्रं[2] मध्यं क्रमात् पुनः ।
संहारस्त्रिविधः प्रोक्तस्त्वनाख्या सर्वचक्रगा ॥ इति ॥ ४२ ॥

---

जानाति स योग्यो[3] भवति गुरुप्रसादत इति । एतदुक्तं[4] संकेतपद्धत्याम्—

तुर्यात्मकं पञ्चयुतं[5] योगिनीचक्रमण्डलम् ।
यो जानाति स मुक्तात्मा सोऽन्वयी देशिकाग्रणीः ॥ इति ।

शिष्टमप्यभीष्टदमित्यत्र शिष्टशब्देन ईषदसमाप्तिः[6] सूचिता चक्रस्य । तदिदानीं दर्शयति । सर्वोर्ध्ववह्न्यधोभाग इत्यारभ्य भेदयेदित्यन्तस्यायमर्थः—सर्वोर्ध्ववह्न्यधोभाग इति सर्वचक्रस्योर्ध्वभागे स्थितो यो वह्निस्तस्य वह्नेरधोभाग इत्यधःप्रदेशे बाह्यशक्तिश्लिष्टाश्रितया सव्यापसव्यस्थितवह्निद्वयग्रन्थिपर्यन्तस्थितरेखाद्वयं[7] वामतोऽधो विस्तार्य तथा सव्यभागस्थितरेखाद्वयमप्यधो विकृष्य एवं स्थिते सति रेखाचतुष्टयं भवति । तत्र बाह्यस्थिते रेखे बाह्यशक्त्यन्तर्गतरेखाश्लिष्टे यथा भवतस्तथा ताभ्यां बाह्यशक्तिं भेदयेत् । तुशब्दो[8] विशेषाभिद्योतको भवति । पुनरपि तामेव शक्तिं प्रसृताश्रिस्थितश्लिष्टरेखाद्वयं तिर्यक्प्रस्तारेण प्रस्तार्य बाह्यशक्तिं[9] भेदयेदिति[10] । अत्रैषाक्षरयोजना—विस्तार्य बाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेदित्येकमपि[11] वाक्यं प्रयोजनद्वैविध्यवशाद् भेदं[12] कृत्वा योजनीयम् । विस्तार्य[13] बाह्यशक्तिं भेदयेदिति, चतुर्दशारचक्रस्य द्वादशारसम्पादनावसरे इति यावत्[14] । तुशब्देन[15] पुनरपि सर्वाधस्तादपि बाह्यशक्तिं भेदयेदिति योजनीयम्[16] ॥४२॥

---

१. न्योऽष्टौ–क. । २. श्रम–क. । ३. योगी–ख. । ४. यदुक्तं–क. ग. छ. । ५. युगं–ख. ङ. ज. । ६. प्तिता चक्रस्य–ख. ङ. ज. । ७. सव्याव–घ. । ८. शब्दोऽपि–क. ग. छ. । ९. शक्तिद्वयं–ख. ङ. ज, शक्तिमध्यं–घ. । १०. दित्यर्थः–क. ग. घ. छ. । ११. 'एकमपि.... भेदयेदिति' नास्ति–ग. छ. । १२. विभेदकं–क. ग. घ. । १३. 'विस्तार्य.... योजनीयम्' नास्ति–ख., 'विस्तार्य.... दिति' नास्ति–ङ. ज. । १४. 'इति यावत्' नास्ति–क. ख. ग. घ. छ. । १५. 'तुशब्देन.... योजनीयम्' नास्ति–ङ. ज. । १६. इतः परम्–'चतुर्दशारचक्रस्य द्वादशारसंपादनावसर इति यावत्' इत्यधिकः पाठो ङ. ज. मातृके विहाय सर्वत्र, स चानावश्यकः ।

1. "तदुक्तं संकेतपद्धत्याम्—"वशिन्यष्टौ सान्तरालम्" इत्यादिना "अनाख्या सर्वगा ततः" इत्यन्तेन" ( यो. दी., पृ. ८५ ) इत्यमृतानन्दवचनेनेमे श्लोकाः संकेतपद्धतिस्था इति प्रतीयते ।

**एवमेतन्महाचक्रं महाश्रीत्रिपुरामयम् ।**
**क्लेदनं द्रावणं चैव क्षोभणं मोहनं तथा ।।४३।।**

---

**एवमेत**दित्यादिभिः [१]पञ्चदशसूत्रैस्त्रैपुरं [२]चक्रराजं [३]स्तौति । एवं "शक्त्या शक्तिम्" ( १।२९ ) इत्यादिना रचितम् । **एतत्** पुरःप्रसृतम् । **महाचक्रम्** [४][1]पश्चिमतनूनां [५]सुदुर्लभमित्यर्थः । **महाश्रीत्रिपुरामयम्** । न केवलमिदं चक्रं मातुरभिव्यक्तिस्थानम्, किन्तु [६]तन्मयम् । यथावत् पूजितं ध्यातं [७]परिभावितं

---

एवं सर्वलक्षणसम्पूर्णं महाचक्रं संपाद्यास्य प्रभावं वक्ति परमशिव एवमेतदित्यारभ्य कल्पकोटिशतैरपीत्यन्तेन [८]श्लोकजालेन । एवमेतत् सृष्टिस्थित्यप्ययात्मना स्थितं चक्रं महाचक्रम् । कोऽर्थः ? सृष्ट्याद्यनुग्रहपर्यन्तकृत्यपञ्चककर्तृ [९]आणवादिमलत्रयभेतृ मायादिरागान्तकञ्चुकपञ्चकभेतृ निवृत्त्यादिशान्त्यतीतान्तकलापञ्चकविगलयितृ मूलादि[१०]भ्रूमध्या[2]न्तग्रन्थिद्वादश[११]विगलयितृ [3]व्योमपञ्चकभञ्जयितृ कालाग्न्यादिशिवान्तविश्व[१२]धर्तृ अकुल[१३]कुलकुलाकुलरश्मिपुञ्जप्रोतमणिगणमहा[१४]सूत्रपरापरकुण्डलिनीशक्तिकदम्बरूपं श्रीमहात्रिपुर[१५]सुन्दर्याः परममभिव्यक्ति[१६]योग्यं दर्पणस्थानीयकमिदं चक्रमित्यर्थः । महाश्रीत्रिपुरा-

---

१. पञ्चभिः सूत्रैः–ख. । २. चक्रं–क. । ३. प्रस्तौति–ख. । ४. अपश्चिम–ग. । ५. न सुलभ–क., सुलभ–ग. । ६. 'तन्मयं' नास्ति–ख. । ७. षितं–क. । ८. जातेन–ख. ज. । ९. 'आणवादिमलत्रयभेतृ' नास्ति–ख. घ. ङ. ज. । १०. लतान्त–क. घ. । ११. दल–क. ग. घ. छ. । १२. कर्तृ–ख. । १३. 'कुल' नास्ति–क. ख. घ. ङ. ज. । १४. सूति–ख. ङ. । १५. र्या रूपं पराभि–ख. छ. । १६. 'योग्यं' नास्ति–ख. ङ. ज. ।

1. जन्तोरपश्चिमतनोः सति कर्मसाम्ये····कारुण्यतो भवति शाम्भववेधदीक्षा ।।" (पञ्चस्तव्यां स्थितेऽम्बास्तवे एकादशः श्लोकः ) । न विद्यते पश्चिमाऽग्रिमा तनुर्यस्य तस्य, अस्मिन्नेव जन्मनि मुच्यमानस्येत्यर्थः । पश्चिमतनवश्च आवागमनशीलाः संसारिणो जीवाः ।

2. माया-पाशव-ब्रह्म-विष्णु-रुद्र-ईश्वर-सदाशिव-इन्धिका-दीपिका-बैन्दव-नाद-शक्त्याख्या द्वादशग्रन्थयः "जन्ममूले तु मायाख्यो" ( ने. त. ७।२२–२५) इत्यादिना नेत्रतन्त्रापराभिधे मृत्युञ्जयभट्टारके प्रदर्शिताः ।

3. जन्म-नाभि-हृद्-बिन्दु-नादरूपाणां व्योम्नां पञ्चकं "खमनन्तं तु जन्माख्यम्" ( ने. त. ७।२७–२८ ) इत्यादिना नेत्रतन्त्र एव प्रदर्शितम् ।

**आकर्षणं महादेवि जम्भनं[1] स्तम्भनं तथा ।**
**व्याधिदारिद्र्यशमनं सर्वदुर्नीति[2]नाशनम् ॥४४॥**

---

हृदि परिरूढमेतच्चक्रं साधकस्य तत्तत्फलाकाङ्क्षया तत्र तत्र तथा तथा भावितं तत्तत्कामं[3] साधयतीत्याह—**क्लेदनमित्यादि । क्लेदनं**[4] साध्यविषये[5] तत्तत्प्रयोजनानुगुण्येन ध्यातं क्लेदयतीति । एवं **द्रावणादयः । जम्भनम्**

---

मयमिति । न केवलमभिव्यक्तिस्थानीयमिदं चक्रमित्येतावत्[6], किन्तु महच्छब्दलक्षितायाः श्रीत्रिपुरायास्त्रिपुरीकृतायाः[7] परं[8] विग्रहरूपमेवेदं चक्रमित्यर्थः । क्लेदनम् । क्लेदयति समस्तं जगदिति क्लेदनम् । कोऽर्थः[9] ? सर्वप्राणिनामन्तश्चिच्चन्द्रमण्डलतया ब्रह्मरन्ध्रान्तः प्रविश्य परामृतास्रावरूपेण शिवादिकालाग्न्यन्तं जगदाह्लादयतीत्यर्थः । पातालादिष्ववतीर्णानां[10] सर्वासां सुन्दरीणां विक्षोभकमित्यर्थः । द्रावणं चेति । द्रावयति[11] समस्तं जगदिति द्रावणम् । ब्रह्माण्डकुहरान्तश्चारिपरि[12]तप्तानुग्राह्यजीवराशीनां कल्याणदेशिककटाक्षवीक्षणवशात् कालानलमाविश्य दक्षिणावर्तवातचक्रविक्षोभवशात् तडित्कोटिज्वालाजटिलमहाकुण्डलीवलयपरिवेष्टितोर्ध्वं[13]मार्गं चटुलचारचतुरमा[14]ब्रह्मविलोकनोत्सुकमिदं चक्रं निखिलपाशजालं[15] द्रावयति विलापयतीत्यर्थः । अथवा समस्तसुरासुरसुन्दरीमदन[16]मन्दिरान्तः परिचिन्तितमिदं चक्रं द्रावयतीति । कोऽर्थः ? मदनमन्दिरारविन्दस्यन्दिमकरन्दमहामदवारिसरित्[17]प्रवाहप्रवर्तकमिदं चक्रमित्यर्थः । क्षोभणं चेति । क्षोभयति समस्तं जगदिति क्षोभणम्[18] । समस्तसुरासुरयक्षराक्षसगन्धर्वाप्सरोगणब्रह्मविष्णु[19]रुद्रेश्वरसदाशिवादिपरिपूरितमिदं दहराकाशकुशेशयकोटरान्तःप्र[20]स्फुरन्महाचक्रकालानल[21]प्रभा[22]च्छटानिबिडीकृतदक्षिणावर्तवातचक्रप्रक्षोभितं स्वान्तश्चिन्त्यमानं

---

१. जृम्भणं–वाग. से. । २. दुःखार्ति–अ. सख., दुर्गति–सक. । ३. कर्म–ख. ग. । ४. 'क्लेदनं' नास्ति–ख. । ५. वाग्भवविषये–ख. । ६. 'इत्येतावत्' नास्ति–क. ग. घ. ज. । ७. महात्रिपुरसुन्दर्या–ख. ङ. ज. । ८. परा–घ. । ९. 'कोऽर्थः' नास्ति–क. ग. छ. । १०. ष्वन्तर्वर्तिनां–ख. घ. ङ. ज. । ११. 'द्रावयति' नास्ति–क. ग. छ. । १२. 'परि' नास्ति–क. ग. । १३. तमूर्ध्व–ख. घ. ङ. ज. । १४. चतुरस्रा–ग. छ. । १५. प्राणिपाश–क. ग. छ. । १६. 'मदन' नास्ति–क. ग. छ. । १७. 'सरित्' नास्ति–क. छ. । १८. क्षोभणं संक्षोभणम्–ख. ङ. ज. । १९. 'विष्णु' नास्ति–ख. छ. । २०. 'प्र' नास्ति–क. ग. छ. । २१. कल्पा–ख. ङ. ज. । २२. 'प्रभा' नास्ति–ख. ङ. ज. ।

आवर्जनम्। **स्तम्भनं** निश्चेष्टीकरणम्[1]। **व्याधिदारिद्र्यशमनमिति**[2]। **व्याधि**-रपूर्णम्मन्यतात्मा संकोचः। **दारिद्र्यम्** अज्ञानम्। यदाह[3] **भट्टगङ्गाधरमिश्रः**[4]—

> अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः[5]।
> क्लेशावहो[6] जुगुप्सश्च[7] सर्वधर्मबहिष्कृतः॥
> आनन्दकणभिक्षार्थं शब्दस्पर्शादिपक्कणे[8]।
> अटत्यविरतं येन तद्दारिद्र्यं विदुर्बुधाः॥

---

जगत् क्षोभयतीत्यर्थः। आकुलं करोतीति यावत्। मोहनं तथेति। पूर्वोक्तदहराकाशान्तश्चक्रमध्यवह्निसन्तापशिथिलीकृत[9]मनोवारणानां साध्यवृन्दानां[10] मोहनं भवति। परवशीभावं[11] नयति स्वमध्यस्थानित्यर्थः॥४३॥

आकर्षणमिति। चक्रमध्यस्थितत्वेन चिन्तितमाकर्षयति। जम्भनमावर्जनम्। स्तम्भनं निश्चेष्टीकरणम्। व्याधिदारिद्र्यशमनमिति। व्याधिः स्वरूपापरिज्ञानम्, तन्मूलत्वाद्बाह्याभ्यन्तरक्लेशानाम्। दारिद्र्यं स्वस्वरूपालाभः[12]। शमनं स्वविमर्शपराहन्तेश्वर[13]-स्वरूपोल्लासप्रदर्शनेन परिपूर्णपराद्वयानन्दात्मप्रकाशनेन[14] च[15]। तदुभयं प्रणाशयतीदं चक्रमित्यर्थः। अथवा[16] व्याधयो राजयक्ष्मादयः, दारिद्र्यं रिक्तता, तदुभयमपि[17] स्मृतिमात्रेण प्रणाशयतीदं[18] चक्रमित्यर्थः। सर्वदुःखार्तिनाशनमिति। अतीतानन्तजन्मोपात्तकल्मषवशादेकमपि दुःखं बहुधा भवति, अर्थपुत्र[19]कलत्रलोभनिमित्तवशात्। तस्य सर्वदुःखस्य नाशनं तत्तदिष्टसार्थ[20]प्रकृष्टसम्पत्प्रदानेनेति। आर्तिरिति क्लेशः, आध्यात्मिकाधिदैविकाधिभौतिकस्त्रिविधोऽपि। आध्यात्मिकस्तु वायु[21]पित्तश्लेष्मादीनां प्रकोपसंभवः। आधिदैविकस्त्वतिवृष्ट्यादि[22]देवताप्रकोपसंभवः। आधिभौतिकश्चौर[23]व्याघ्राप-

---

१. ष्टित-ग.। २. व्याधिरित्यपूर्णम्मन्यतात्मकसंकोचः-ख.। ३. 'यदाह····मिश्रः' नास्ति-ख.। ४. गङ्गाधरः-ग.। ५. निवेशनम्-ख. ग.। ६. होऽतिकष्टश्च-ग. दी.। ७. प्सा च-दी.। ८. णम्-क.। ९. 'कृत' नास्ति-क. ग. छ.। १०. वृन्दारकाणां-क. ग. छ.। ११. परमशिव-ख. ङ. ज.। १२. भावः-ख. ङ. ज.। १३. स्वाधीनत्वं-क. ग. छ.। १४. परात्माहन्ता-ख. ङ. ज.। १५. 'च' नास्ति-ख. ङ. ज.। १६. 'अथवा····मित्यर्थः' नास्ति-ग.। १७. 'अपि' नास्ति-क. ग. छ.। १८. प्रदर्श-क. ग. छ., प्रशम-घ.। १९. तीत्यर्थः। पुत्र-घ.। २०. ष्टार्थ-ख. ङ. ज.। २१. वात-ङ. ज.। २२. स्त्ववृष्टचा-क. ग. छ., स्तु परमेश्वरा-ख. ङ. ज.। २३. कस्तु अपस्मारा-ख. घ. ङ. ज.।

**शान्तिपुष्टिधनारोग्यमन्त्रसिद्धिकरं परम् ।**
**भोगदं मोक्षदं चैव खेचरत्वप्रवर्तकम् ॥४५॥**

**सर्वदुर्नीतिनाशनम्** । सर्वासां दुर्नीतीनां नाशनम् । उपासकान् सन्मार्गे स्थापयतीति भावः । **यच्छ्रुतिः**—"सुनीतिभिर्नयसि त्रायसे जनम्" ( ऋ० २।२३।४ ) इति ॥ ४३-४४ ॥

**शान्तीति** । अत्र करशब्दः प्रत्येकमभिसम्बद्ध्यते । **शान्तिकर**मित्यादि । **परं** सर्वोत्कृष्टम् । **भोगदं** भोगार्थिनाम् । भोगश्चमत्कारः । **मोक्षदं** मोक्षार्थिनाम् । चित्तकल्मषनिवृत्तिद्वारेण ज्ञानं प्रयच्छतीति भावः ।

---

स्मारादिभूतप्रकोपसंभवः । एवं त्रिविधानामप्यार्तीनां स्मृतिमात्रेण प्रशमं करोतीदं चक्रमित्यर्थः ॥४४॥

शान्तिपुष्टिधनारोग्येति । शान्तिकरं समस्तविघ्नोपद्रवप्रशमकरमित्यर्थः । पुष्टिरिति समस्तसम्पत्समृद्धिः, तामप्यस्मै साधकाय ददातीति पुष्टिकरम् । अर्थानां संचयो धनम्, तदस्मै ददातीति धनकरम् । आरोग्यं जाठरजातवेदसो दीपनादिद्वारेण देहपीडाभावः, तत्करोतीत्यारोग्यकरम् । मन्त्रसिद्धिकरं मन्त्राणां सिद्धिर्मन्त्रसिद्धिस्तां करोतीति मन्त्रसिद्धिकरम् । मन्त्रा आणवाद्युपायसंबन्धिनस्तेषां सिद्धिः शक्तिचक्रोच्चारणेनैव संभवति नान्यथेत्यर्थः । तथा चोक्तं शिवेनोत्तरषट्केऽपि—

तद्यदुच्चरते मन्त्री मन्त्रवर्णं शुभाशुभम् ।
तत्तत्सिद्ध्यति देवेशि योनिमुद्रानिबन्धनात् ॥ इति ।

भोगदं भोगं ददातीति भोगदम् । भोगस्तु द्विविधः—ऐहिकः, आमुष्मिक इति । ऐहिकस्तु स्रक्चन्दनवनितादिः । आमुष्मिकस्तु हृद्यनन्दनोद्यानमध्यस्थितकेलिशैलदरीषु सरभसप्रहतमृदङ्गवेणुवीणामर्दलकाहलादिदिव्यध्वनिपरिबृंहिततुम्बुरुनारदप्रमुखसिद्ध-

---

१. बला–ब. । २. श्रुतिश्च–क. । ३. गच–ग. । ४. कलुष–ग. । ५. पप्लव–ख. घ. ङ. । ६. तीत्यर्थः–क. ग. छ. । ७. तं क–ख. घ. ङ. ज. । ८. 'मन्त्रसिद्धिकरं' नास्ति–क. ग. छ. ज. । ९. संभवा–क. ग. छ. । १०. वर्णरूपं–क. ग. घ. ङ. छ. ज. । ११. देवेश–ख., योगे हि–घ. । १२. भोगदमिति–क. ग. छ. । १३. 'तु' नास्ति–क. ग. । १४. रहस्य–ख. ङ. । १५. पटह–ख. घ. ङ. ज. । १६. तुष्ट–क. ग. छ. ।

**सर्वरक्षाकरं देवि[1] सर्वानन्दकरं तथा[2] ।**
**सर्वकर्मकरं चापि[3] सर्वकार्यार्थसाधकम्[4] ।। ४६ ।।**

**खेचरत्वप्रवर्तकं** विद्याधराद्याधिपत्यप्रवर्तकम्[5] । **सर्वरक्षाकरं** शस्त्रसलिलाग्नि-[6]राजचोरवातादिभ्यः सर्वेभ्यः । **सर्वानन्दकरं** तत्तद्भुवनतत्तदाधिपत्यद्वारेण । **सर्वकर्मकरं** वश्यादीनि[7] कर्माणि साधकस्य करोति[8] । **सर्वकार्यार्थसाधकं**

गन्धर्वोपगीयमानदिव्यगीत[9]परि[10]पूरितश्रवणविवराभिनंवनवप्रवृद्धरागसागरनिमग्नमान - साभिः प्रियजनहृदयविदारणप्रवीणनिशितकुसुमशरसदृशनयननलिनाभिः कलरणित-[11]मणिगणाद्यनेका[12]कल्पकल्पितालङ्कारललिततनुलताभिरमरविला[13]सिनीभिरविरतविनोदनम् । एतदुभयं[14] स्मृतिमात्रेण ददाति । ऐहिकामुष्मिकनिरीहचेतसः परमयोगिनः पुनः[15] पञ्च-शक्तिचतुर्वह्न्यात्मकदेहमहापीठे प्रकाशविमर्शमयीं[16] परमानन्दलक्षणां स्वात्मदेवतां त्रिपुरसुन्दरीमनुसन्दधानस्य परमशिवसामरस्यपरमभोगं प्रयच्छतीत्यर्थः । मोक्षदं चेति[17] । जीवन्मुक्तिं प्रयच्छतीत्यर्थः । इदन्ताभरितस्य कृत्रिमाहंस्वरूपस्य जीवत एव ज्ञप्तृकर्तृ-स्वभावपराहंभाव[18]भावनात्मकविमर्शानन्दलक्षणस्वरूपाभिव्यक्तिं करोतीत्यर्थः । खेच-रत्वप्रवर्तकमिति । खे चिन्मये पराकाशे तत्र चारित्वं समरसता खेचरत्वम् । अथवाऽ-णिमाद्यष्टसिद्धिसमन्वितः सदा सृष्ट्यादिपञ्चकृत्यकारी स्वेच्छा[19]गृहीतविग्रहः स्वच्छन्द-चारी महाभैरवदशामापन्नः खेचरीभिरेवंगुणविशिष्टाभिश्चतुष्षष्टियोगिनीभिः संचरन्[20] क्रीडमानः खेचर इत्युच्यते[21] । तथात्वप्रवर्तकमिति यावत् ॥ ४५ ॥

सर्वरक्षाकरं[22] चैवेति । सर्वतः शस्त्रवह्निरोगादिभ्यः स्मर्तुः साधकस्य रक्षां करोतीत्यर्थः । अथवा [1]सर्वेषां समयनिष्ठानां समयच्युतिसंभवाद्यनिष्टेभ्यो रक्षतीति यावत् ।

१. चैव–सख. । २. परम्–ब. । ३. देवि–सक. । ४. नम्–सघ. । ५. राधि–क. ख. । ६. ग्निवातराजचोरादि–ख. ग. । ७. दिक–क. । ८. करोतीति–ख. ग. । ९. गीति–ख. ङ. । १०. 'परि' नास्ति–क. ग. । ११. मणित–ख. घ. । १२. 'आकल्प' नास्ति–क. ग. छ. । १३. निवा–ख. ज. । १४. एवमु–ङ. । १५. 'पुनः' नास्ति–ख. ङ. ज. । १६. मयीमात्म-देवतां त्रिपुर–क. ग. छ. । १७. 'मोक्षदं····तीत्यर्थः' नास्ति–क. ग. घ. छ. । १८. हंभावात्मक–ख. ङ. । १९. 'स्वेच्छा····चारी' नास्ति–ख. ङ. ज. । २०. संक्रीडमानः–क. ग. छ. । २१. 'इति' नास्ति–क. ग. घ. छ. । २२. 'सर्व····रक्षतीति यावत्' नास्ति–ख. ङ. ज. ।

1. सर्वेषामिति । सर्वेषामिति षष्ठ्यर्थस्य संबन्धस्यारिष्टेष्वन्वयः । सर्वेषां समयनिष्ठानां समयच्युतिसंभवादीनि यान्यनिष्टानि तेभ्यो रक्षतीति यावत् ।

सर्वावेशक[1] देवि सर्वश्रेयस्करं[2] परम् ।
सर्वमन्त्रमयं देवि सर्वयोगेश्वरीमयम्[3] ॥ ४७ ॥
सर्वपीठमयं देवि[4] सर्ववेधकरं[5] पुनः[6] ।

यत्कर्तव्यमर्थ्यं[7] च तस्य सर्वस्य साधकमित्यर्थः । **सर्वावेशकरं** साधकसमीहितसर्वावेशकरम्[8] । **सर्वश्रेयस्करं** सर्वस्य श्रेयसः कारकम् । **परम्** अनुपमम् । **सर्वमन्त्रमयं** पूर्णाहन्तासारत्वात् । **सर्वयोगे[9]श्वरीमयं** महाशक्त्यधिष्ठानत्वात्,

सर्वानन्दकरं तथेति । सर्वेषामानन्दकरम्[10] । अयमर्थः—ब्रह्मरन्ध्रसहस्राराम्बुजोदरगतमेतन्मातृकापीठं[11] परमानन्दामृतपूर्णं[12] [13] शरीराधारनाड्यधिष्ठितानां[14] चतुष्षष्टिलक्षकोटिप्रभृतियोगिनीनां सर्वासां कुलदेवीनामविरतवर्षत्परामृतवर्षधाराप्लावितानां[15] परमसमावेशकरमित्यर्थः । सर्वकर्मकरं चापीति । शिवशक्त्यात्मकं चक्रं प्राणापानात्मनाऽन्तःकरणबहिष्करणात्मना च[16] प्रविश्य वचनादानगमनोत्सर्गानन्दात्मकं[17] श्रवणस्पर्शनादिकं[18] च करोतीति यावत् । अथवा वश्याकृष्ट्यादिसर्वकर्मकरं चेत्यर्थः । सर्वकार्यार्थसाधकमिति[19] । कार्यं कर्तव्यम्[20] । अर्थः पुरुषार्थः । कर्तव्यतयाऽभिप्रेतपुरुषार्थानां सकलानां साधकमिदं[21] चक्रमित्यर्थः ॥ ४६ ॥

सर्वावेशकरमिति । सर्वेषामावेशकरं[22] सर्वेषां भूतप्रेतपिशाचादीनां दुष्टचेतसां दर्शनमात्रेणावेशकरं महाभयोत्पादनद्वारेण कम्पकरमिदं चक्रमित्यर्थः । सर्ववेधकरं

१. देश–ब. । २. 'सर्वश्रेयस्करं परम्' इत्यतः पूर्वं 'सर्ववेधकरम्' इत्यादि 'सर्वार्थसंयुतं चैव' इत्यन्तः ४८-४९ श्लोकस्थो भागो वर्तते–वाक. ख. ग. से. अ. । ३. 'सर्वयोगेश्वरीमयम्' इत्यतः पूर्वं 'सर्वतीर्थमयं पुनः' इत्यादि 'सर्वोन्मादकरं देवि' इत्यन्तः ४९–५० श्लोकस्थो भागो वर्तते–वाक. ख. ग. । ४. चैव–अ. ब. सख. घ. । ५. बोध–सक. । ६. परम्–वाग. अ. से. । ७. मर्थश्च–क. । ८. णम्–क. । ९. गीश्व–क. । १०. सर्वानन्दकरमित्यर्थः–क. ग. छ. । ११. मन्त्रमातृका–घ. । १२. पीठ–क. ग. । १३. पूरं–ख. घ. ङ. ज. । १४. रधारणाद्य–क. ग. छ. ज. । १५. प्यायितानां–क. ग. छ. । १६. 'च' नास्ति–क. ग. छ. । १७. नविसर्गा–क. ग. छ. । १८. दि कर्म करो–क. ग. घ. छ. । १९. नमिति–ख. घ. ङ. ज. । २०. व्यमिति–क. ग. छ., अर्थसाधनम् अर्थः पुरुषार्थः, तत्साधनम्–घ. । २१. 'इदं' नास्ति–क. ग. घ. छ. । २२. 'सर्वेषामावेशकरं' नास्ति–क. ग. छ. ज. ।

**सर्वतत्त्वमयं[1] देवि[2] सर्वाज्ञानिलयं[3] तथा ॥ ४८ ॥**

**सर्वार्थसंयुतं[4] चैव[5] सर्वज्ञानमयं[6] प्रिये ।**

---

"चतुष्षष्टिर्यतः[7]" ( ४।५७ ) इत्युक्तत्वाच्च । **सर्वपीठमयं** विश्वकारणोपलब्धि-स्थानत्वात्[8] । **सर्ववेधकरमिति** । अयमर्थः[9]—

उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः ।

यो भवेत् स समावेशः सम्यगाणव उच्यते ॥

उच्चाररहितं वस्तु चेतसैव विचिन्तयन् ।

यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥

अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः[10] ।

उत्पद्यते य आवेशः शाम्भवः स उदाहृतः[11] ॥ ( २।२१-२३ )

इति **श्रीमालिनीविजयोत्तर**निर्णीतदिशा आणवशाक्तशाम्भवसमावेश-रूपं वेधं करोतीति । **सर्वतत्त्वमयं** महासंविदाधारत्वात् तदुल्लासितषट्-

---

परमिति । आणवशाक्तशाम्भवप्रकारेण त्रिविधो वेधः । तस्य सर्वस्य कारकमिदं चक्र-मित्यर्थः । सर्वतत्त्वमयं देवीति । सर्वेषां तत्त्वानामात्मविद्याशिवतत्त्वान्तर्भूतानां[12] समुदाय-स्वरूपमिदं[13] चक्रमित्यर्थः । सर्वज्ञानप्रदं तथेति । सर्वेषां प्राणिनामन्तः प्रविश्य तत्तच्छ्रोत्रादि-घ्राणान्तेन्द्रियमुखेनात्मशक्त्युपोद्बलितेन शब्दादिगन्धान्तानामर्थानां[14] विषयभूतानां ज्ञानानि तेषां ददात्यनुग्रहीतुमिच्छयेदं[15] चक्रमित्यर्थः[16]। अथवा सकलशास्त्रतत्त्वज्ञानं ददातीति सर्वज्ञानप्रदम्[17] । सर्वऋद्धिप्रदं[18] चेति । सर्वासामृद्धीनां प्रदं सर्वऋद्धिप्रदम्[19]।

---

१. करं–वाक. ख. । २. चापि–सघ. । ३. सर्वज्ञानप्रदं–वाग. अ. से. सक., सर्वज्ञानालयं–ब., सर्वज्ञानमयं–सख. । ४. सर्वधिसंयुतं–वाक. ख., सर्वसिद्धिप्रदं–वाग. से. सख., सर्वऋद्धिप्रदं चेति–अ. । ५. चापि–सख. । ६. तथा–सघ. । ७. 'चतु····त्वाच्च' नास्ति–ख. । ८. अष्टपीठाधिष्ठानत्वात्–ख. । ९. 'अयमर्थः' नास्ति–ख. । १०. धितः–क. ग. । ११. वोऽसावुदीरितः–ख. ग. । १२. विद्यानाम्–क. ग. छ. । १३. रूपं चक्रम्–क. ग. घ. छ. । १४. न्तानां विषयाणां–क. ग. छ. । १५. गृहीत–क. ख. ग. छ. । १६. 'इत्यर्थः' नास्ति क ग. छ. । १७. 'सर्वज्ञानप्रदम्' नास्ति–क. ग. घ. छ. । १८. सिद्धि–ख. घ. ङ. ज. । १९. सर्वासां सिद्धीनां प्रदं सर्वसिद्धिप्रदम्–ख. ज., नास्ति–क. ग, छ. ।

**सर्व[१]वेदमयं देवि सर्वतीर्थमयं पुनः ।। ४९ ।।**

त्रिशत्तत्त्वमयम् । **सर्वा[२]ज्ञानिलयम्** । आज्ञा शास्त्राणि, तेषां **[३]निलयः** कोशगृहम् । उक्तं च—"श्रुतिस्मृती ममैवाज्ञे"[1] इति । सर्वा[४]न्वयोत्पत्तिभूमिमहाशक्त्यधिष्ठानमित्यर्थः । **सर्वार्थसंयुतं** सर्वप्रयोजनसंयुतम् । **सर्वज्ञानमयम्** एतदुपासनेन सर्वज्ञत्वसिद्धिरित्यर्थः । **[५]वेदमयं** वेदेषु यत्फलं तदत्रेति ।

पुत्रमित्रकलत्रवित्तरत्नगजतुरगपशुदासदासी[६]गृहगृहोपकरणगुणवृत्तशीलदाक्षिण्यसौन्दर्यविचित्रभूषणा[७]दीनामृद्धिमुन्नतिमन्वहं ददाति स्मरणमात्रेणेदं चक्रमित्यर्थः । सर्वश्रेयस्करं परमिति । सर्वेषां [८]श्रेयसां करं सर्वश्रेयस्करम् । योगान्तरायभूतानामर्वाचीनसिद्ध्युपसिद्ध्याख्यश्रेयसां [९]सर्वेषां स्मरणमात्रेण संपादकम[१०]िदं चक्र[११]मित्यर्थः । सर्वमन्त्रमयं देवीति । वर्णाध्वसंभवा ये सप्तकोटिमहामन्त्रास्तेऽपि चिच्छक्त्युल्लासात्मकतामाश्रित्य दीपिताः सर्वकामफलप्रदा [१२]भवन्तीत्यतः सर्वमन्त्रमयम[१३]िदं चक्रमित्यर्थः । सर्वयोगेश्वरीमयमिति । गगनस्वर्गमर्त्यपातालनागाख्यपञ्चस्थलेषु श्रीकण्ठानन्तशङ्करपिङ्गलसादाख्याः पञ्च नाथा अधिकारिणः । तत्परिग्रहाश्चतुष्षष्टिलक्षकोटि-द्वात्रिंशल्लक्षकोटि-षोडशलक्षकोटि-अष्टलक्षकोटि-चतुर्लक्षकोटि[एकलक्षकोटि]-डाकिन्यादिहाकिन्यन्तषड्योगिन्यंशभूतानां समस्तयोगेश्वरीणां स्वरूपं समस्तयोगिनीवृन्दविग्रहमि चक्रमित्यर्थः । सर्वपीठमयं चैवेति । सर्वपीठानि [१४]चतुष्षष्टिसंख्याकानि । [2]पीठोपपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्रपीठेशपीठेशीक्षेत्रपालबटुकगणेशादिसहितं सर्व[१५]मेवाध्युष्टयोगपीठान्तर्भूतम् । तादृशयोगपीठमयमिदं चक्रमित्यर्थः । सर्वज्ञानमयं प्रिये ! इति । अकुलकुलकुलाकुलकौलशुद्धकौलाख्यकुलपञ्चकशास्त्रप्रतिपाद्यतत्तज्ज्ञान[१६]मयमिदं चक्रमित्यर्थः । सर्वदोषहरं प्रिये ! इति । दोषा

---

१. देवमयं–वाक. ख., दोषहरं–वाग. अ. से. । २. यं तथा–ख. । ३. निलयं–ग. । ४. द्वयो–ग. । ५. सर्ववेद–ख. । ६. 'गृह' नास्ति–क. ख. ग. छ. । ७. 'आदि' नास्ति–क. ग. छ. । ८. 'श्रेयसां करं सर्वश्रेयस्करम्' नास्ति–क. ग. छ. । ९. 'सर्वेषां' नास्ति–क. ग. छ. । १०. 'इदं चक्रमित्यर्थः' नास्ति–क. ग. छ. । ११. 'सर्व····मन्त्रमयमिदं चक्रमित्यर्थः' नास्ति–ख. ङ. ज. । १२. अवगन्तव्या इत्यतः–क. ख. ग. छ. । १३. 'इदं चक्रं' नास्ति–क. ग. छ. । १४. विधसंख्यानि–ख. ङ. ज. । १५. मेवं देव्याद्यष्टयोग–ख. ङ. ज. । १६. मयमित्यर्थः-क. ग. छ. ।

1. "श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ।।" इति वाधूलस्मृतिस्थः १८९ तमः श्लोकः । "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न मे प्रियः ।।" इति भक्तिचन्द्रोदयोद्धृतः (पृ० २२८) पाठः ।
2. पीठोपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्राणि तन्त्रालोके (१५।८४-९२) तट्टीकायां च द्रष्टव्यानि ।

**सर्व[1]व्रतमयं च[2]ैव सर्वामृतमयं तथा ।**
**सर्व[3]दुःखप्रशमनं सर्वशोकनिवारणम् ॥ ५० ॥**

---

[4]**तीर्थमयं** गङ्गादिषु यत्पुण्यं तदत्रेति । [5]**व्रतमयं** कृच्छ्रादिषु [6]यत्फलं तदत्रेति । **सर्वामृतमयम्**[1] । यद्यदनिष्टं तत्तन्मृत्युरूपम्, तस्य सर्वस्य प्रत्यनीकमिदं चक्रमित्यर्थः । **दुःखप्रशमनम्** आध्यात्मिकादिदुःखानां प्रशमन[7]म् । [8]**शोकनिवारणम्** इष्टविषयवियोगजानां शोकानां निवारणम् । अयं भावः—सवासनस्य चक्रराजस्योपासनेन सर्वविषयसङ्ग[9]हेतुभूताज्ञाननिवर्तकमात्मज्ञानमुदेति । **यदुपनिषत्**—"सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् । श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि । तं मा भगवान् शोकस्य पारं तारयतु" ( छा० उ० ७।१।३ ) इत्युपक्रम्य "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय ( देवर्षये नारदाय ) तमसस्पारं दर्शयति भगवान् सनत्कुमारः" ( छा० उ० ७।२६।२ ) इति चोपसंहरति ।

---

ब्रह्महत्यादयस्तान् स्मरणमात्रेण [10]नाशयतीदं चक्रमित्यर्थः । सर्वतीर्थमयं [11]पुनरिति । [12]सर्वासां शुद्धीनां [13]सर्वतीर्थशब्दोपलक्षितानां स्वरूपमिदं चक्रमित्यर्थः ।

सर्वामृतमयं तथेति । मृत्युपाशपाशितानां [14]सर्वप्राणिनाममृतमयं मृत्युपाशजालमोचनकरमिदं [15]चक्रमित्यर्थः । [16]सर्वदुःखप्रशमनमिति । सर्वेषां मानसानामाधिसंभवानां दुःखानां प्रशमनमिदं चक्रमित्यर्थः । सर्वशोकनिवारणमि[17]ति । सर्वेषां पुत्रमित्रकलत्रादिवियोगजानां [18]शोकानां निवारणमिदं [19]चक्रमित्यर्थः ॥ ४७-५० ॥

---

१. तत्त्व–सख. । २. देवि–सख. । ३. दुष्ट–सघ. । ४. सर्वतीर्थ–ख. । ५. सर्वव्रत–ख. । ६. यत्पुण्यं–क. । ७. नमिति–क. । ८. सर्वशोक–ख. । ९. र्तन–ख. । १०. नाशयतीति–क. ग. घ. छ. । ११. 'पुनः' नास्ति–क. ग. घ. छ. । १२. सर्वशुद्धीनां–क. ग. घ. छ. । १३. 'सर्व' नास्ति–ख. ङ. ज. । १४. 'सर्वप्राणिनां' नास्ति–क. ग. । १५. 'इदं चक्रमित्यर्थः' नास्ति–क. ग. छ. । १६. 'सर्व···प्रशमनमिदं चक्रमित्यर्थः' नास्ति–क. ग. छ. । १७. 'इति' नास्ति–क.ग.छ. । १८. 'शोकानां' नास्ति–क. ग. छ. । १९. 'इदं चक्रमित्यर्थः' नास्ति–क. ग. छ. ।

1. "सर्वामृतमयं पञ्चविधमोक्षावहम् । मृतमनिष्टं तन्निवारकमिति केचित्" ( से. पृ. ४२ ) ।

सर्वोन्मादकरं[1] देवि सर्वाह्लादनकारकम्[2] ।
सर्वदौर्भाग्यशमनं[3] सर्वविघ्ननिवारणम्[4] ।। ५१ ।।
सर्वसिद्धिकरं[5] चक्रं[6] सर्वाशापरिपूरकम्[7] ।
रौद्राभिचारकोद्दण्डपरमन्त्रौघभक्षणम्[8][9][10][11] ।। ५२ ।।

---

**सर्वोन्मादकरम्** । **उन्मादो** विभ्रमः, लोकोत्तरो विलास इत्यर्थः । **सर्वाह्लादनकारकं** महानन्दहेतुत्वात्[12] । **दौर्भाग्यम्** अस्पृहणीयता । **विघ्नः** प्रस्तुतहन्ता[13] । **सिद्धिरणिमाद्या** विभूतिः । **रौद्रेति** । **रौद्राः** क्रूराः । **अभिचारका** हिंसितारः ।

---

सर्वोन्मादकरं चेति । सर्वासां सुन्दरीणां कन्दर्पदर्पजन्यप्रेमगर्भोपबृंहितकृत्याकृत्यापरिज्ञानेनोन्मत्तवत् स्वात्मवृत्तानभिज्ञानप्रायः कोऽप्यान्तरो भाव उन्मादः । साधकार्थे तमर्थयुक्तं[14] करोतीदं चक्रमित्यर्थः । सर्वाह्लादकरं तथेति । सर्वेषामाह्लादकरं सर्वाह्लादकरम् । सर्वेषां[15] संसारतापपरितप्तचित्तानां देशिकेन्द्रपादोपसर्पणसंलब्धचक्रविभवानां[16][17] स्वविन्यासपरिज्ञानमात्रेण संसारतापप्रशमनद्वारेणाह्लादकरम् आह्लादं जनयतीदं[18] चक्रमित्यर्थः । सर्वदौर्भाग्यशमनमिति । दौर्भाग्यं दुर्भगत्वं सकललोकपरिहासविषयत्वम्[19] । तच्छमयतीदं[20] चक्रमित्यर्थः । सर्वविघ्ननिवारणमिति । सर्वेषां[21] योगान्तरायभूतानां विघ्नानां निवारणमित्यर्थः । सर्वसिद्धिप्रदमिति । सर्वासामणिमादीनां सिद्धीनां साधकमिदमित्यर्थः[22] । सर्वाशापरिपूरकमिति । सर्वेषां मनोरथानां परिपूरकं साधकमिदं चक्रमित्यर्थः[23] ।

---

१. सर्वदोषहरं–ब. सघ. । २. करं तथा–अ., कारणम्–सख. घ. । ३. नास्त्येषा पङ्क्तिः–सख. । ४. विनाशनम्–सघ. । ५. त्रैलोक्यमोहनं–सख. । ६. प्रदं–वाग. से. अ. सक. । ७. 'सर्वाशापरिपूरकम्' इत्यतः परम् 'सर्वसंक्षोभकं चैव सर्वसौभाग्यदायकम् । सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा ।। सर्वरोगहरं चक्रं सर्वसिद्धिप्रदं तथा । सर्वानन्दमयं देवि नवमं चक्रनायकम् ।।' इति द्वौ श्लोकावधिकौ स्तः–सख. । ८. 'रौद्राभिचार' इत्यादि 'स्तम्भकरं परम्' इत्यन्तं श्लोकद्वयं नास्ति–सख. । ९. कोचण्ड–वाक. ख., कोदण्डं–वाग. से. सघ., कोदण्ड–ब. सक. घ. । १०. परमं शैवलक्षणम्–सघ. । ११. कम्–वाक. ख. ग. । १२. सर्वदौ–ख. । १३. विघ्नप्रस्तुता–क. । १४. तदर्थ–क. ग. घ. छ. । १५. 'सर्वेषां''''ह्लादकरम्' नास्ति–ग. । १६. सर्पणैकल–ख. ङ. ज. । १७. विभागानां–क. ख. ग. छ. । १८. यतीत्यर्थः–क. ग. छ. । १९. सर्व–क. ग. छ. । २०. तीत्यर्थः–क. ग. छ. । २१. सर्वरोगा–क. ग. घ., सर्वभोगा–छ. । २२. 'इदं' नास्ति–क. ख. ग. ङ. छ. ज. । २३. 'साधकमिदं चक्रमित्यर्थः' नास्ति–क. ग. छ. ।

**परसिद्ध्याकर्षणं च पराज्ञाकर्षणं[1] तथा ।**
**परसैन्यस्तम्भकरं[2] परविज्ञान[3]मोहनम् ॥ ५३ ॥**
**परचक्र[4]स्तम्भकरं[5] शस्त्रस्तम्भकरं[6] परम्[7] ।**
**महाचमत्कारकरं[8] महाबुद्धि[9]प्रवर्तकम्[10] ॥ ५४ ॥**

---

अत एवोद्दण्डा उन्मार्गाः । **परे** शत्रवः । तेषां **मन्त्रौघो** मन्त्रराशिः । तस्य **भक्षणम्** ।[11] अक्रमोपासकानामयथादेवताज्ञानानां मन्त्रग्रामघस्मरमिदं चक्रमिति भावः । **महाचमत्कारकरम्** । [1]अनेडमूकानामपि हस्तमस्तकसंयोगात्

---

रौद्राभिचारकोद्दण्डपरमन्त्रौघभक्षणमिति । परैः शत्रुभिः साधकध्वंसमाशंसमानैरभिचाराय प्रयुक्ता ये मन्त्रास्ते[12] रौद्रा निर्घृणाः, उद्दण्डा नृशंसाः, तान् मन्त्रान्[13] भक्षयति[14] तत्सामर्थ्यमुपसंहरतीदं[15] चक्रमित्यर्थः ॥ ५१-५२ ॥

परसिद्ध्याकर्षणं चेति । पराः प्रतिस्पर्द्धिनो ये सिद्धाः शात्रवं गता मारणादिक्रियानिपुणाः क्षुद्रसिद्धिसम्पन्नास्तेषां सिद्धिं साधकेन स्वचक्रमध्यस्थिततया चिन्तितां[16] तामाकर्षयतीदं चक्रमित्यर्थः । पराज्ञाकर्षणं तथेति । परेषामन्येषां प्रतिस्पर्द्धिनामाज्ञां निग्रहानुग्रहकरीमपि चक्रवैश्वानरपरितप्ततया[17] चिन्तितामाकर्षयतीदं चक्रमित्यर्थः । [18]परसैन्यस्तम्भकरमिति । परेषां शत्रूणां सैन्यं स्तम्भयतीदं चक्रमित्यर्थः । स्तम्भनप्रकारश्च [2]प्रयोगप्रकरणे तदवसरे भणितव्यः । परविज्ञानमोहनमिति । परेषामन्येषां विज्ञानं[19] तस्य मोहनं तस्य प्रमोषकरं[20] चक्रमित्यर्थः ॥ ५३ ॥

---

१. ज्ञा–सघ. । २. कं च–वाक. ख. ग. । ३. ज्ञानवि–सघ. । ४. वक्र–वाक. ख. । ५. कं च–वाक. ख., नं च–सघ. । ६. नकं–वाक. ख. ग. । ७. तथा–से. । ८. महत्कार–वाग. । ९. भुक्ति–वाक. ख. अ., भक्ति–अ. सघ., मुक्ति–सक. । १०. वर्धं–सख. । ११. अयं भावः–अक्र····चक्रमिति–ख. । १२. 'ते' नास्ति–क. ग. घ. छ. ज. । १३. 'मन्त्रान्' नास्ति–क. ग. छ. । १४. जयति–क. ग. छ. । १५. मपहरतीत्यर्थः–क. ग., मपहन्तीत्यर्थः–छ. । १६. चिन्तितानां कर्ष–क. ग. घ. छ. । १७. तप्ता या चिन्तिता ता–ख. ङ. ज. । १८. 'पर···· स्तम्भयतीदं चक्रमित्यर्थः' नास्ति–ख. । १९. ज्ञानस्य–क. ग. छ. । २०. षकमिति–क. ग. छ. ।

1. अनेडमूकानामपीति । "भगवत्पादैरनेडमूकेभ्यो लघुचर्चास्तोत्रद्वयं हस्तमस्तकसंयोगमहिम्नाऽवाचि" ( लक्ष्मीधरा, पृ. २८१ ) ।

2. प्रयोगप्रकरण इति । द्वितीये प्रयोगाख्ये पटले ६७ इत्यादिश्लोकेषु स्तम्भनप्रकारो दृश्यते ।

**[ महावाणोकरं[1] देवि महासौभाग्यदायकम्[2] ।**
**महावश्यकरं देवि महासौभाग्यदायकम् ।। ]**
**महाज्वरहरं देवि महाविषहरं[3] परम् ।**
**महामृत्युप्रशमनं[4] महाभयविनाशकम्[5] ।। ५५ ।।**

---

सारस्वताद्यावेशकरमित्यर्थः । **महाबुद्धिप्रवर्तकम्** अव्युत्पन्नानामपि वेदशास्त्राद्युपन्यासकरम्[6] । **महावाणीकरम्** अशिक्षितैकपदप्रयोगनिपुणानामपि महाकाव्यकर्तृताकरमित्यर्थः । **महासौभाग्यं** सर्वस्पृहणीयता । **महाज्वरो**ऽप्यभिचारादिकृतः । **महामृत्युः** कालप्राप्तः । **महाभयं** देहप्रमातृता[7] । तदुक्तं[8] **क्षेमेन्द्रेण गोतानिष्यन्दे**—

तावद् व्याघ्रभयं नृपानलभयं वेतालकृत्याभयं
शून्यारण्यभयं महाशनिभयं[9] दुःस्वप्नशङ्काभयम् ।
वातोत्पातभयं ग्रहज्वरभयं क्षुब्धाब्धिवेलाभयं
**वैराग्येण न यावदेव गलितः कायाभिमानभ्रमः** ।। इति ।

---

परचक्रस्तम्भकरमिति । परेषां स्वविपरीतानां विषयान्तरादागतानां राज्ञां चक्रं स्तम्भयतीदं चक्रमित्यर्थः[10] । शस्त्रस्तम्भकरमिति । परैः शत्रुभिः प्रयुक्तानि शस्त्राणि[11] स्तम्भयति, यथा साधकस्य बाधकानि[12] न भवन्ति तथा करोतीदं चक्रमित्यर्थः । महाचमत्कारकरमिति । महाचमत्कारा उड्डीनादयो झटिति लोकानां[13] बहुमानहेतवः प्रयोगविशेषाः, तेषां सम्पादनकरं[14] चक्रमित्यर्थः । अथवा महत्या परायास्त्रिपुरायाश्चमत्कारोऽनुभवः, शक्तितत्त्वपरिज्ञानमिति यावत् । महाभुक्तिप्रवर्तकमिति[15] । हाटकेश्वरादि[16]भुवनेष्वधिकारितया स्थितिर्महाभुक्तिस्तत्सम्पादकमित्यर्थः ।। ५४ ।।

---

१. एषा पङ्क्तिः से.वाग.ऋ. विहायान्यत्र न दृश्यते । २. सौख्यप्र–वाग.से. । ३. तथा–वाग. से. सघ. । ४. अप–सघ. । ५. विनाशनम्–वाक. ख., निवारणम्–वाग. से. । 'रौद्राभिचार' इत्यादि 'स्तम्भकरं परम्' इत्यन्तं श्लोकद्वयमत्र वर्तते–सघ. । ६. सप्रवर्तकम्–ख. । ७. 'देह' नास्ति–क. ख. । ८. एतदुक्तं–क. । ९. घना–ख. ग. । १०. 'इत्यर्थः' नास्ति–क. ग. । ११. न्यस्त्राणि–क. ग. छ. । १२. बन्धकानि–छ., साधकानि भवन्ति–घ. । १३. लौकिकानां–क. ग. ङ. ज. । १४. करमिदं–घ. । १५. भक्ति–क. ग. छ. । १६. समस्तसुन्दरादि–घ. ।

**महावश्यकरं[1] देवि महावेधकरं परम्[2] ।**
**महापुरक्षोभकरं महासुखशुभप्रदम्[3] ॥ ५६ ॥**
**महालक्ष्मीमयं[4] देवि महामाङ्गल्यदायकम् ।**

---

**महावश्यकरं** राजोर्वश्यादीनामपि[6] । **महावेधकरं** पर्वतादीनामपि । **महापुरक्षोभकरं** साधकेन्द्रे[7] प्रविष्टे द्वारवतीन्द्रप्रस्थमथुरादिषु कृष्णाभिगमने यथा, यथा वा देवदारुवनादिषु परमेश्वरप्रवेशे । **महासुखशुभप्रदम्** । **महासुखं[8] महाशुभमिति** । **महासुखम्** अकृत्रिमाहंपरामर्शः । **महाशुभं[9]** विश्वदेहिविलयः। **महालक्ष्मीमयम्** । शिवशक्तिसामरस्यरूपं महाविकासमयमित्यर्थः । **महा-**

---

महावश्यकरं देवीति । समस्तलोकवशङ्करमित्यर्थः[10] । महासौभाग्यदायकमिति । समस्तसुन्दरीवल्लभसम्पादकमित्यर्थः । महाज्वरहरं देवीति । महतां चातुर्थिकादीनां ज्वराणां नाशकरमिति यावत् । महाविषहरं परमिति । महतामत्युग्राणामपि[11] विषाणामपहारकमिति यावत् । महामृत्युप्रशमनमिति । केनचिद्दोषेणाकालसम्भवानामपि मृत्यूनां नाशकरमित्यर्थः । अथवा[12] कालमृत्यूनां नाशकरं भवति । महाभयविनाशकमिति । राजचौरादिनिमित्तानामपि भयानां[13] नाशकरमित्यर्थः[14] ।

महापुरक्षोभकरमिति[15] । महतामिन्द्रचन्द्रादिपुराणामपि[16] क्षोभकरम्, किमुताल्पविभवानां[17] भूवलयसंस्थितानामिति[18] यावत्[19] । महासुखशुभप्रदमिति । समस्तकरणोल्लास-[20]

---

१. एषा पङ्क्तिः से. सघ. ऋ. विहायान्यत्र न दृश्यते । २. पुनः—सघ. । ३. मुक्तिप्रवर्तनम्—सक., शुभसुख—सख. । ४. करं—सख. । ५. मङ्गल्य—वाक. ख. ग., मङ्गल—अ. सख. । ६. राजवश्या—क. । ७. साधके—ग. । ८. 'महासुखं महाशुभमिति' नास्ति—ख. । ९. 'महाशुभं····परामर्शः' नास्ति—ख. ग. । १०. समस्तवश्यकर—क. ग. घ. । ११. 'अपि विषाणां' नास्ति—क. ग. छ. । १२. 'अथवा कालमृत्यूनां नाशकरं भवति' नास्ति—ख. ङ. । १३. 'भयानां' नास्ति—क. ख. ग. छ. । १४. नाशकम्—क. ख. ग. छ. । १५. इतः पूर्वम्—'पौष्टिकादिविशेषफलदम् । मोहमनेन दर्शयतीति भावः । सर्वर्तुकैः सर्वफलैः सर्वपुष्पैरपि प्रिये । विहाय मारणोक्तानि फलपुष्पाणि सुव्रते ॥ यो जुहोति स वै सर्वसम्पदामालयो भवेत् ।' अधिकः पाठः—क. छ. । १६. 'आदि' नास्ति—क. ग. घ. छ. । १७. विभाव्या—ख. ङ. । १८. भूर्लोकस्थि—क. ग. छ. १९. 'यावत्' नास्ति—क. ग. छ. । २०. कारणो—क. ग. घ. छ. ।

**महाप्रभावसंयुक्तं महापातकनाशनम् ॥ ५७ ॥**

**एवमेतस्य चक्रस्य प्रभावो वर्णितुं[1] मया ।**

**न शक्यते महादेवि कल्पकोटिशतैरपि ॥ ५८ ॥**

---

**माङ्गल्यदायकम्** । महामाङ्गल्यं द्वैतग्रामधिक्कारः । **महाप्रभावं** सदाशिवादिकं यद्बलम् । **महापातकं** शिवात्मभेदपरामर्शः[2] । तदुक्तं भट्टगङ्गाधरेण—

आत्मेशजगतां भेदं[3] यो नरः कुरुतेऽमतिः[4] ।
स महापातकी सत्यं पातकस्य महत्त्वतः ॥ इति ।

किं बहुना, चक्रराजवर्णनं कर्तुं[5]मशक्यमित्याह—**एवमेतस्येति** । अर्थवादा[6]शङ्का न कार्या । तदुक्तं **श्रीत्रिंशिकाशासने**—

---

संकोचवशाद् मूलादिब्रह्मरन्ध्रान्तरालकुहरस्फुरित[8]महायोगपीठ[9]पीठिकासु समुल्लसिताकारपरापरलिङ्ग[10]महाह्लदनिमग्नमनो[11]महावारणानां महायोगिनां यदनुभवसुखं तदेव शुभं प्रकाशयति[12] । तत्सुखं[13] ददातीति यावत् । उक्तं च श्रीमतशास्त्रे—

[1]यत्र यत्र मनस्तुष्टिस्तत्र तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥

अथवा शुभं शोभनं तत्संपादकमित्यर्थः । महालक्ष्मीमयं देवीति । महालक्ष्मी राज्यादिलाभस्तं ददातीत्यर्थः । महामङ्गलदायकमिति । महाभ्युदयपरम्परा[14]प्रदायकमिति यावत् । महाप्रभावसंयुक्तमिति । महासामर्थ्यं ददातीत्यर्थः । महापातकनाशनमिति । प्राकृतानां ये ये पातका न ते कुलमार्गवर्तिनां[15] महापातकाः, किन्तु [2]वीरहत्यादयोऽन्ये महापातकाः[16] पञ्च । तेषामपि नाशकरमिदं[17] चक्रमित्यर्थः ॥ ५५-५७ ॥

---

१. वर्णितो–से. । २. उक्तं–क. । ३. भेदे–क. ख. । ४. ते मतिम्–क. ख. । ५. वक्तुं–ग. । ६. 'अर्थवादा.....नार्हति ॥ इति' नास्ति–क. ख. । ७. विलोलकमल–ख. ङ. ज. । ८. 'स्फुरित' नास्ति–क. ख. ग. छ. । ९. 'पीठ' नास्ति–क. ग. छ. । १०. पिङ्गल–ख. ङ. ज. । ११. 'महा' नास्ति–ख. ङ. ज. । १२. प्रकाश्यते–ग. प्रकाशयतीति–ज. । १३. 'तत्सुखं.....शोभनं' नास्ति–ख. ङ. ज. । १४. पारम्पर्यदा–क. । १५. संबन्धिनां–क. ग. छ. । १६. महान्तः–घ. ज. । १७. नाशकमित्यर्थः–क. ग. घ. छ. ।

1. एष श्लोकः स्वल्पेन पाठभेदेन सह विज्ञानभैरवे ( श्लो. ७४ ) उपलभ्यते ।
2. वीरहत्यादय इति । "वीरहत्या वृथापानं वीरपत्नीनिषेवणम् । वीरद्रव्यापहरणं तत्संयोगश्च

नार्थवादादिशङ्का च वाक्ये माहेश्वरे भवेत् ।
अबुद्धिपूर्वं हि तथा संस्थिते सततं भवेत् ॥···
अनवच्छिन्नविज्ञानवैश्वरूप्यसुनिर्भरः ।
शास्त्रात्मना स्थितो देवो मिथ्यात्वं क्वापि नार्हति ॥ इति ॥४५-५८॥
(तन्त्रा० ४।२३२-३४)

---

एवमेतस्येत्यारभ्य कल्पकोटिशतैरपीत्यन्तस्यायमर्थः—एवंप्रभावस्यास्य महाचक्रस्य प्रभावो वर्णयितुं मया न शक्यते । बहुकालं[1] वर्णयता मयापीति यावत् ॥ ५८ ॥

अन्यच्च (च)क्रस्तुत्यां (महा?मोह)नादिपदेन मूलस्वामिन्या नवचक्रनामसंकेतः कृत इति । तदुक्तं वामकोत्तरतन्त्रे—

त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् । सर्वसंक्षोभणं देवि सर्वसौभाग्यदायकम् ॥
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा । सर्वरोगहरं चक्रं सर्वसिद्धिप्रदायकम् ॥
सर्वानन्दमयं चापि नवमं सुरसुन्दरि । इति ।

[1]एतद्बाह्यगतमिति । एतस्य चतुर्दशारचक्रस्य बहिरष्टदलं पद्मं समालिखेत् । [2]तद्बाह्यतस्तस्याष्टारपद्मस्य बाह्यतोऽपि षोडशारं पद्मं रचयेत् । परिवेषो वृत्तत्रयम् । चतुरिति चतुरश्रम् । चतुर्द्वारोपशोभितमित्यर्थः[3] ॥ ४०-४१ ॥

अस्ति चात्र प्रमेयान्तरविषयो ह्येष चक्रसंबन्धः । तदुक्तं श्रीमन्त्रराजे[4]—

अष्टापदे चाष्टशूले गदा चाष्टसु सर्वदा । अष्टाष्टकपदव्या[5](पि?पी) स गुरुर्भैरवागमे ॥
वृत्तद्वये[6] चतुर्द्वारे चतुरश्रत्रये[7] प्रिये । गणेशादिपदव्या[8] (पि?पी) स गुरुर्भैरवागमे ॥
षोडशाधारचक्रस्थः षोडशस्वरवाचकः[9] । षोडशान्तकलाधारी[10] स गुरुर्भैरवागमे ॥

---

१. 'बहुकालं वर्णयता मयापि' नास्ति—क. ग. छ. । २. 'तद्बाह्यत····मित्यर्थः' इत्यस्य स्थाने 'तद्बाह्ये षोडशदलं पद्मं परिवेषरूपेण वृत्तत्रयं द्वारोपशोभितं चतुर्द्वारोपशोभितमित्यर्थः' इति पाठः—ख. ङ. ज. । ३. द्वारोपशोभितमिति यावत्—क. ग. छ. । ४. श्रीतन्त्रराजीये—ज. । ५. अष्टाष्टकेसरैर्वापि—ङ. । ६. त्रये—ज. । ७. लये—ङ. । ८. स्यापि—ङ. । ९. वाचनः—ङ. । १०. धारे—ङ. ।

पञ्चमः ॥ महापातकमित्युक्तं कौलिकानां कुलान्वये ।" (कुलार्णवे, ११।७०) । मनुस्मृतौ तु—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥" (११।५५) इति पञ्च महापातकानि परिगणितानि ।

1. 'एतद्बाह्यगतम्' इत्यादि 'शोभितम्' इत्यन्तं पङ्क्तित्रयं से. ऋ. ४०-४१ श्लोकत्वेन स्थापितं पूर्वमेव व्याख्यातम् । अर्थरत्नावल्यां तदत्र व्याख्यायते ।

अष्टानामष्टधारूपः पदव्यक्तिक्रमेण यः। इति मध्याष्टकं वेत्ति स गुरुर्भैरवागमे ॥

चतुर्दशपदान्तस्थश्चतुर्दशविराजितः। (नश्च? न च) तुर्दशभिन्यू[1]नः स गुरुर्भैरवागमे ॥

दशधा दशगर्भान्तर्विचित्ररचनोज्ज्वलः। दशभूमिपदान्तस्थः स गुरुर्भैरवागमे ॥

दशकौलेश्वरो धीमान् दशदिग्[2] दशभैरवः। दशाश्वमेधमध्यस्थः स गुरुर्भैरवागमे ॥

अष्टधा स्फुरते साधुर्वशिन्यादिभिरष्टधा। वेत्ति तां यन्त्रचक्रस्थां स गुरुर्भैरवागमे ॥

चतुर्धा[3] क्रमविज्ञाने चतुर्धा[4] सन्ततो यथा। यः समाक्रोशचण्डेशः[5] स गुरुर्भैरवागमे ॥ इति।

इदमेव चक्रमान्तरीकृत्य सूत्रपातदशायां श्रीवामकेश्वरतन्त्रे प्रतिपादितम्। तत्प्रकारं यथा तथा वक्ष्ये—

अथातः संप्रवक्ष्यामि चक्रसंकेतनिर्णयम्[6]। तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ॥

अस्य कार्या तृतीयेन कर्णिका चक्रलाञ्छिता[7]। पद्मद्वयं चतुर्द्वारं चतुरं चैकभागकम् ॥

ब्रह्मस्थानं ततः कृत्वा कर्णिकाभूमिमध्यमे। चतुर्विंशत्यङ्गुलेन[8] ब्रह्मस्थानं महेश्वरि ॥

भ्रामयेद् वृत्तरूपेण मण्डलं सम्यगालिखेत्। तस्मिन् वृत्ते महादेवि ब्रह्मसूत्रं निपातयेत् ॥

प्राक्प्रत्यगायतं देवि सम्यक् प्राचीविधानतः। तस्मिन् सूत्रे महादेवि नवधा लाञ्छनं पतेत् ॥

षट् षट् पञ्च त्रयस्त्रीणि चतुश्च त्रयमेव च। षट् षट् षडङ्गुलेनैव[9] दशभागानलाञ्छितान् ॥

याम्यसौम्यायतं दद्यात् सूत्राणां नव लाञ्छने। नवधा पातिते सूत्रे पार्श्वयोरुभयोरपि ॥

अङ्गुलानि क्रमेणैव मार्जयेत् परमेश्वरि। भ्रमणं सप्तमं चैव तृतीयं चैव वन्दितम् ॥

प्रथमे नवमे चैव पार्श्वयोरुभयोरपि। त्रीणि त्रीण्यङ्गुलान्यत्र मार्जयेदुभयोरपि ॥

पञ्च पञ्चाङ्गुलं मार्ज्यं षष्ठे चैव चतुर्थयोः। उभयोः पार्श्वयोर्मार्ज्यं षोडशाषोडशाङ्गुलम्[10] ॥

पञ्चमस्योभये[11] पार्श्वे मार्जयेत् षोडशाङ्गुलम्। एवं संमार्जयेद्[12] देवि समक्षेत्रं च कर्णिका(म्) ॥

सर्वसूत्राणि पार्श्वौ द्वौ ब्रह्मसूत्रेण संगतम्। योजयेत् क्रमशस्तस्मिन् सप्तमं च तृतीययोः ॥

योजयेदुभयोः पार्श्वौ सृष्टिनिष्ठं[13] महेश्वरि। पञ्चशक्तिचतुर्वह्नितद्विकारसमन्वितम् ॥

द्वितीयस्य[14] द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम्। नवमं[15] योजयेद् देवि नवमं प्रथमे युतम् ॥

नवमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम्। द्वितीयस्य द्वयोः पार्श्वौ[16] ब्रह्मसूत्रेण संगतम् ॥

योजयेदष्टमे देवि अष्टमं च द्वितीयके। अष्टमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥

चतुर्थस्य द्वयोः षष्ठे ब्रह्मसूत्रेण संगतम्। पञ्चमस्य द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम् ॥

षष्ठस्यैव द्वयोः पार्श्वौ ब्रह्मसूत्रेण संगतम्। पञ्चशक्तिश्चतुर्वह्निरेवमेव तु योजयेत् ॥

इति संसिद्ध्यते चक्रं कर्णिकान्तर्गतं समम्। पूर्वभागे पञ्चशक्तिः पश्चाद्वह्निश्चतुः प्रिये ॥

---

१. हीनः—ङ. ज.। २. दल—ख. ङ.। ३. थागम—ङ.। ४. चतुर्था—ङ.। ५. क्रोधचण्डीशः—ज.। ६. त्रिपुराचक्रमन्यथा—वा.। ७. च कलाञ्चिता—ख. ङ. ज.। ८. त्र्यङ्गुलैव—ज.। ९. वन्नव—ज.। १०. षोडशः—ख.। ११. भयोः—ख.। १२. जंनाद्—ख. ङ.। १३. स्पष्ट—ख. ङ.। १४. प्रथमं मध्ययो—ज.। १५. नवमे—ख. ङ.। १६. पार्श्वे—ङ.।

**[१]अथातः संप्रवक्ष्यामि [२]त्रिपुराचक्रमन्यथा ।**
**तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ।। ५९ ।।**

---

**अथात** [३]इत्यादिसूत्रसप्तदशकेन पुनरपि प्रकारान्तरेण चक्रराजविन्यासमाह । **अन्यथा** "शक्त्या शक्तिम्" ( १।२९ ) [४]इत्युक्तक्रमात् । **तदर्थं** चक्रराजविन्यासार्थम् । **त्रिहस्तं मण्डलोत्तममिति** चक्रराजविन्यासाय स्वीकृतं क्षेत्रमुच्यते । तत् त्रिहस्तं कुर्यात् । त्रिहस्तशब्देन समानं [५]त्र्यवयव-

---

विपरीतं तु वक्ष्यामि पश्चिमं पञ्चशक्तिकम् । चतुर्वह्निः पुरस्तात्तु तद्विशेषं शृणु प्रिये ।।
सप्तमं [६]भ्रमणे योगं ब्रह्मसूत्रेण संगतम् । अष्टमं च द्वितीयेन ब्रह्मसूत्रेण संगतम् ।।
प्रथमं नवमं योगं नवमे प्रथमे युतम् । द्वितीयं चाष्टमे योगं ब्रह्मसूत्रेण संगतम् ।।
अष्टमं च द्वितीयेन ब्रह्मसूत्रेण संगतम् । षष्ठं चैव चतुर्थेन ब्रह्मसूत्रेण संगतम् ।।
चतुर्थं सप्तमे योगं ब्रह्मसूत्रेण संगतम् । विपरीतमेवमेवं तु यथोक्तं परमेश्वरि ।।
पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः । तत्रैकम[७]ष्टमं मध्ये द्विदशारं चतुर्दश ।।
चतुर्दश दश[८]द्वन्द्वमष्टावेकं महेश्वरि । सृष्टिसंहारयोगेन शक्तिस्थानान्यनुक्रमात् ।।
स्थितानि त्रिपुराचक्रे यद्बोधाद् भैरवो भवेत् । बहिः [९]पद्मद्वयं कुर्यादष्टषोडशकच्छदम् ।।
गुणवृत्तं ततः कुर्याच्चतुरश्रं च तद्बहिः । चतुरश्रं ततः कुर्यात् कुर्याद् द्वारचतुष्टयम् ।।
चतुष्कोणसमायुक्तमेवं स्याच्चक्रमुत्तमम् । रक्तेन रजसापूर्य चक्रे शुक्लोच्चरेखिकम् ।। इति ।

अन्यच्चात्रैतज्ज्ञातव्यं चक्रम्—

[1]चक्रं बैन्दवमम्बिकामयमियं वामा त्रयो ये भ्रमा
ज्येष्ठेयं यदिदं पुरन्दरपुरे रेखाचतुष्कं बहिः ।
योऽयं शक्त्यनलत्रिकोणनिवहो रौद्रीयमित्यामृशन्
योऽर्चाधारमकृत्रिमं कलयते मातः स ते पूजकः ।।

सृष्टयादिप्रविभागेन धामत्रयाख्यप्रमेयमपि निरूपितं द्रष्टव्यम् ।

---

१. 'अथातः' इत्यादि 'चक्रमुत्तमम्' इत्यन्ताः सप्तदश श्लोका ऋ. से. विहाय कुत्रापि न दृश्यन्ते । २. चक्रमङ्कितनिर्णयम्–वाक. ख. । ३. इत्यादिसूत्रसप्तकेन–क., इत्येकादशकेन–ख. । ४. इत्युपक्रमात्–क., इत्युक्तत्वात्–ख. । ५. मानं–क., सामान्य–ख. । ६. भ्रमणं–ङ. । ७. ष्टकं–ङ. ज. । ८. द्वन्द्वमष्टावेकमेव–ख. ङ., युतावष्टावेकं–ज. । ९. पद–ङ. ।

1. एष श्लोको वामकेश्वरीमतविवरणेऽपि ( पृ० २९ ) दृश्यते ।

**अस्य[1] कार्या तृतीयेन कर्णिका चक्रलाञ्छिता ।**

**पद्मद्वयं द्वितीयेन चतुरस्रं च शेषतः ।। ६० ।।**

**ब्रह्मसूत्रं पुरा दत्त्वा कर्णिकाभूमि[2]मध्यतः ।**

**याम्यसौम्यायतं दद्यात्तत्रस्थं सूत्रसप्तकम् ।। ६१ ।।**

**तुर्यसूत्रं ततो लुप्याद्[3] मध्यांशः स्याद् द्विभागशः[4] ।**

**तृतीयपञ्चमौ नागभूपांशौ[5] द्व्यंशवर्जितौ ।। ६२ ।।**

---

कतामात्रमुच्यते[6] । अमुमेवार्थं स्फुटीकरोति—**अस्ये**त्यादिना । अयमर्थः—स्वीकृतस्य क्षेत्रस्य भागेनैकेन **कर्णिकां** भागेन **पद्मद्वयं** भागेन **चतुरश्रं च** कुर्यादिति । **ब्रह्मसूत्रं** प्राक्प्रत्यगायतं मध्यतो निहितं सूत्रम् । **पुरा** प्रथमम् । **कर्णिकाभूमिमध्यतः** तच्चक्रराजविन्यासाय स्वीकृतस्य त्र्यवयवस्य क्षेत्रस्य[7] मध्यतः कर्णिकालाभाय[8] विरचितस्य वृत्तस्य मध्ये । **याम्यसौम्यायतं** दक्षिणोत्तरायतम् । **तत्रस्थं** वृत्तस्थम् । **सूत्रसप्तकं** सूत्राणां सप्तकम् । अयमत्र प्रकारः—प्रथमं प्राक्प्रत्यगायतब्रह्मसूत्रावलम्बनेन[9]

प्राक् सूत्रं प्रथमं निधाय विदधीतार्धेन[10] तस्याङ्कितं
मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः ।
ताभ्यां सूत्रमभिप्रसार्य चतुरः कोणांस्ततो लाञ्छयेत्
क्षेत्रं[11] स्याच्चतुरश्रमत्र जनयेदन्यानि कुण्डान्यपि ।।

( त्रि. सा. ९।५ )

इत्यभियुक्तोक्तस्थित्या समचतुरश्रोत्पादनानन्तरं त्रिभागीकृते क्षेत्रे मध्यतः कर्णिका[12]वृत्तं[13] विरच्य तत्र दक्षिणोत्तरायतं समकोष्ठं सूत्रसप्तकं पूर्वादि[14]क्रमेण दद्यादिति[15] । **तुर्यसूत्रं**[16] प्रसृतेषु सप्तसु सूत्रेषु मध्ये[17] पूर्वतश्चतुर्थं सूत्रं

---

१. तस्य कुर्यात् त्रिभागेन कर्णिकां चक्रलाञ्छिताम् । पद्मद्वयं तदर्धेन द्वारक्षेत्रं च तत्समम् ।।-वाक. ख. । २. भ्रम-वाक. ख. से., क्रम-वाग. । ३. लुप्त्वा-वाक. ख., लुम्पेत्-वाग. से. । ४. द्विभागिकः-वाक. ख., द्विभागतः-वाग. से. । ५. भागौ कृत्वा त्र्यंश-वाक. ख. । ६. त्रं लक्ष्यते-क. । ७. 'क्षेत्रस्य' नास्ति-ख. । ८. भागाय-क. ग. । ९. सूत्रनिधाना-ग. । १०. दलितार्धेन-क. । ११. सूत्रं-ख. । १२. कर्णिकां-ख. । १३. 'वृत्तं' नास्ति-ख. । १४. दितः क्र-क. ग. । १५. 'इति' नास्ति-क. । १६. आदितुर्य-क. । १७. 'मध्ये' नास्ति-क.ख. ।

**तेन मानेन सप्तैव वीथ्यस्तन्त्रेषु मध्यमम् ।**
**तृतीयस्य द्वितीयस्य चाद्यसूत्रस्य चान्तयोः ॥६३॥**
**प्रसारयेदधोधःस्थं ततः सूत्रद्वयद्वयम् ।**
**भौमे सप्तमके सूत्रे ब्रह्मस्थाने च संगतम् ॥६४॥**

---

**लुप्यात्** मार्जयेत् । **मध्यांशः स्याद् द्विभागश** इति । तुर्यसूत्रमार्जने कृते मध्यतः कोष्ठद्वयमेकभागो भवतीत्यर्थः । पुनरपि मध्यमभागस्य किञ्चिद्विकासमाह—**तृतीयेति । तृतीयपञ्चमौ** । भागाविति पूर्यम् । **नागभूपांशौ** अष्टांशषोडशांशौ । **द्व्यंशवर्जितौ** [1]द्वयेनांशेन वर्जितौ । कुर्यादित्यध्याहार्यम् । अयमर्थः—अष्टधा षोडशधा च विभक्तौ तृतीयपञ्चमौ भागावेकेनांशेन[2] किञ्चिद्ध्रस्वीकुर्यादिति[3] । **तेनेति । तेन मानेन** परित्यक्तांशद्वयेन मध्यभागमावर्जिततुर्यसूत्रमेकीकृतं महामध्यकोष्ठं पुनश्च विवर्धयेत् पुनरपि विकसितं कुर्यात् । तृतीयपञ्चमौ भागौ किञ्चिद्विकसितौ कुर्यादित्यर्थादायातम् । **तृतीयस्येत्य**र्धपद्यं पूर्वतः पश्चिमाग्रं त्र्यश्रत्रयमाह । तृतीयस्येत्यनेनान्वितोऽन्त्यशब्दः पर्यन्तवचनः[4] ।

---

१. भागेन च पुनर्मध्यभागं विवर्धयेत्–वाक. ख. । २. आदि–वाक. ख. ग., त्वाद्य–से. । ३. द्वयं–वाक. ख. ग. । ४. भ्रमे–वाक. ख. । ५. भवेदि–ख. । ६. द्विकासभाग–क., विभाग–ख. । ७. 'विति····दित्यध्या' नास्ति–ग. । ८. तुर्यान्नाग-क. । ९. येनांशेन–क. । १०. षोडशांसौ–ग. । ११. 'विभक्तौ····भागा' नास्ति–ग. । १२. वेकांशेन वर्जितौ कुर्यादिति–क., द्व्यंशवर्जितौ द्वयेनांशेन वर्जितौ–ग. । १३. त्यक्तेनांश–क. ग. । १४. पञ्चमभागमावर्जिततुरीय–ग., 'मध्यभाग····न्त्यशब्दः' इत्यस्य स्थाने 'मध्यत्रयं त्र्यश्रत्रयमाह–तृतीयस्येति । अनेनान्वितोऽन्तशब्दः' इति पाठः–ख. । १५. 'मध्य' नास्ति–ग. । १६. त्यर्थपदेन–क. । १७. अस्त्र–क ।

1. "द्वाभ्यामंशाभ्याम्" (पृ. ४५) इति सेतुबन्धे ।
2. एकेनांशेनेति । अष्टस्वेकः षोडशसु चैक इति प्रत्येकमेकैकेन, संभूय द्वाभ्यामंशाभ्यां वर्जिताविमौ भागौ कुर्यादित्यभिप्रायः ।
3. "यत्तु तृतीयवीथीस्थांशाष्टके पञ्चमवीथीस्थांशषोडशके च द्वौ द्वावंशौ पार्थक्येन न्यूनीकुर्यादिति व्याख्यानं तत्तन्त्रान्तरेण भूयो विसंवादापत्तेरुपेक्षितम्" ( से. पृ. ४६ ) ।
4. "अन्ये त्वन्तशब्दस्तृतीयस्येत्यनेनान्वयदशायां प्रान्तपरः । द्वितीयाद्याभ्यामन्वयदशायां समीपपर इत्याहुः" ( से. पृ. ४६ ) ।

**आपञ्चमादधःस्थानां त्रयाणां चान्ततो नयेत् ।**
**[१]भौमे प्राथमिके सूत्रे विश्रान्तं च तृतीयके ।।६५।।**
**सूत्रद्वयं [२]चान्य[तस्तु] त्र्यस्राण्येवं भवन्ति षट्[1] ।**
**[३]चतुर्दशारं देवेशि दशारं चात्र सिद्धयति ।।६६।।**

---

**द्वितीयस्य चाद्यस्य** चेत्येताभ्यामन्तशब्दः समीपवचनः । आस्फालनीयसूत्र-[४]मर्मानुगुणस्थान इत्यर्थः । **ब्रह्मस्थाने** एकभागीकृतस्य महामध्य[५]कोष्ठस्य पुनर्विकासरूपस्य प्रतिष्ठीकृतस्य पश्चिमतः परित्यक्तमहात्र्यश्राद् बहिर्यवैकमात्रे । [६]अयमर्थः—प्रसृतेषु [७]सप्तसूत्रेषु [८]मध्ये पूर्वतस्तृतीयद्वितीयाद्यसूत्राणां त्रयाणा-[९]मन्तरेषु सूत्राण्याबध्य ब्रह्मसूत्रपश्चिमाग्र[१०]भ्रमरेखायां तदनन्तरस्थसप्तमसूत्र-मध्यभागे [११]महोपह्वरब्रह्मस्थाने च सूत्रद्वयाग्राणि [१२]यथा भवन्ति [१३]तथा प्रसार-येदिति । **आपञ्चमे**त्यर्धपद्यं [१४]पश्चिमतः पूर्वाग्रं त्र्यश्रत्रयमाह । [१५]अयमर्थः—प्रसृतेषु सूत्रेषु मध्ये पूर्वतः पञ्चमसूत्रमारभ्य पश्चिम[१६]तोऽवस्थितानां त्रयाणां सूत्राणां [१७]पूर्वदलेषु सूत्राण्याबध्य ब्रह्मसूत्रप्रागग्रभ्रमरेखायां तदनन्तरस्थ[१८]प्रथम-सूत्रमध्यभागे [१९]तदनन्तरस्थतृतीयसूत्रमध्यभागे च सूत्राग्राणि यथा भवन्ति तथा प्रसारयेदिति । एवं कृते त्र्यश्रषट्कं संपद्यते । आद्या शक्तिराद्यं वह्नि-[२०]पुरं च कर्णिकाभ्रमसंश्लेषीति चक्रराजस्येयं महोपनिषत् । [२१][2]शक्त्या शक्ति-

---

१. एषा पङ्क्तिर्न दृश्यते–वाक. ख. । २. द्वयं चान्यत्–वाक. ख. ग. । ३. चतुर्दशारमित्येवं दशारं च प्रसिद्धयति–वाक. ख. ग. । ४. कर्मा–ख. । ५. छस्यापु–ख. ग. । ६. इतः परम्–'यवैकमात्रे' इत्यधिकः पाठः–क. । ७. 'सप्त' नास्ति–क. ग. । ८. मध्यात्–ख., नास्ति-क. । ९. मन्तेषु-क. ग. । १०. मभ्रमशिखायां–क. । ११. महोपहृत–क., महापद्माद्–ख., महोपर–ग. । १२. यदा–ख. । १३. तदा–ख. । १४. पश्चिमतः पूर्वाग्रत्र्यस्रसूत्रद्वयमाह–क., ऊर्ध्वं चतुस्सूत्राश्रयमाह–ख. । १५. 'अयमर्थः' नास्ति–ख. । १६. तोऽधः–क. ख. । १७. पश्चिमदलेषु–ख., पूर्ववदन्तेषु–ग. । १८. ब्रह्म–ख. । १९. 'तदन····भागे' नास्ति–ख. । २०. रूपं–क. । २१. 'शक्त्या····द्रष्टव्यम्' नास्ति–ख. ।

1. "वस्तुतस्त्र्यस्राण्येवं भवन्ति षड् इत्यृजुविमर्शिन्युक्त एव पाठः साधुः" ( से. पृ. ४७ ) ।
2. "शक्त्या शक्तिम्" ( १।२९ ) इत्यादिना प्रतिपादिते प्रथमे चक्रनिर्माणविधावप्येवं द्रष्टव्यमिति यावत् ।

**सूत्राद् द्वितीयकात् षष्ठाद् ब्रह्मसूत्रस्य पार्श्वयोः ।**
**सत्रद्वयद्वयं[1] देयमधऊर्ध्वक्रमात्मकम्[2] ।। ६७ ।।**
**तत्कोटिसंगतं पश्चात् सूत्रयुग्मं प्रसारयेत्[2] ।**
**दशारं[3] देवि संसिद्धमेतच्चक्रं तृतीयकम् ।। ६८ ।।**
**सूत्रात्[4] पञ्चमकान्मध्यादन्यत् सूत्रद्वयं नयेत् ।**
**ऊर्ध्वाधोमुखमध्यस्थत्र्यस्रमर्मद्वयावधि ।। ६९ ।।**
**दद्यात् तृतीयकं सूत्रं तयोरन्योन्यसंगतम् ।**
**एवं चतुर्थमष्टारं[5] मध्ययोनिश्च पञ्चमो ।। ७० ।।**

---

क्रमे[6]ऽप्येवं द्रष्टव्यम् । एतावति[7] कृते चतुर्दशार[8]निष्पत्तिः सम्पन्नेत्याह—**चतुर्दशारमिति** । **सूत्राद् द्वितीयकादिति** द्वाभ्यां पुनर्दशार[9]माह । **द्वितीयकात्**[1] पूर्वतो[10] द्वितीयकात्[11] सूत्रात् । **षष्ठात्** पूर्वतः षष्ठात् सूत्रात् । **ब्रह्मसूत्रस्य** प्राक्-प्रत्यङ्निहितस्य महासूत्रस्य । **तत्कोटिसङ्गतम्**[12] **अधऊर्ध्वक्रमात्मकं** विन्यस्य **सूत्रद्वया**ग्रसङ्गतम् । अयमर्थः—पूर्वतो द्वितीयसूत्रमध्यभागमारभ्य ब्रह्मसूत्रस्य पक्षयोरनन्तरकोणक्लृप्तदशारकोणद्विरेखावधि पूर्वाग्रं[13] सूत्रद्वयं[14] प्रसार्य पुनस्तत्तत्सूत्राग्रावलम्बनेन दक्षिणोत्तरतः सूत्रद्वयं प्रसारये[15]दिति । एवं कृते पुनर्दशारं सम्पन्नमित्याह—**दशारं देवीति** । **सूत्रात् पञ्चमका**दित्यर्धपद्य-मष्टारं मध्ययोनिं चोत्पादयति । **पञ्चमकात्** पूर्वतः प्रसृतपञ्चमसूत्रात् । **मध्यात्** मध्यमभागात् । अयं विन्यासक्रमः—पूर्वतः[16] पञ्चमसूत्रमध्यभाग-

---

१. द्वयं-वाक. ख. ग. । २. प्रसारितम्-वाक. ख. । ३. रमेवं कथितं चक्रमेतत्-वाक. ख. । ४. सूत्राग्रात् पञ्चमादूर्ध्वम्-वाक. ख. । ५. रमेकारं चात्र पञ्चमम् । इति संसिद्धयते चक्रं कर्णिकान्तर्गतं समम्-वाक. ख. । ६. मेणेदं-क. । ७. एवं-क. । ८. दशारचतु-क. ख. । ९. मित्याह-क. ख. । १०. सूत्रतो-क. । ११. यसू-क. ख. । १२. ताध-क. ख. । १३. पश्चिमाग्रं-क. । १४. इतः परम्-'पूर्वतः षष्ठसूत्रमारभ्य ब्रह्मसूत्रस्य पक्षयोरन्तरक्लृप्तदशारकोणद्विरेखावधि पूर्वाग्रं सूत्रद्वयं' इत्यधिकः पाठः-क. । १५. विस्तार-क. । १६. 'पूर्वतः' नास्ति-ख. ।

1. "ऋजवस्तु—द्वितीयसूत्रस्य षष्ठसूत्रस्य यो मध्यभागस्तस्य ब्रह्मसूत्रस्पृष्टत्वात्तत्पार्श्वयोरित्यनेन तन्त्रेण वह्निप्राक्कोणशक्तिप्रत्यक्कोणयोरेव स्थाननिर्देश इति व्याचक्षते" (से. पृ. ४७) ।

एवं सिद्ध्यति देवेशि सर्वचक्रं मनोहरम् ।
तच्छक्तिपञ्चकं सृष्टचा लयेनाग्निचतुष्टयम् ।। ७१ ।।
पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भवः ।
तत्रैकमष्टकं देवि द्वे[1] दशारे चतुर्दश ।। ७२ ।।
चतुर्दश दशद्वन्द्वमष्टावेकं महेश्वरि ।
सृष्टिसंहारयोगेन शक्तिस्थानान्यनुक्रमात् ।। ७३ ।।
स्थितानि त्रिपुराचक्रे यद्बोधाद्[2] भैरवो भवेत् ।
बहिः पद्मद्वयं कुर्यादष्टषोडशकच्छदम् ।। ७४ ।।
[3]गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः ।
चतुर्द्वारसमायुक्तमेवं स्याच्चक्रमुत्तमम्[1] ।। ७५ ।।

---

**मारभ्य** ब्रह्मसूत्रभागयोः प्रागग्रमूर्ध्वाधोमुखयोर्मध्यस्थयोस्त्र्यश्रयोः[4] पक्षद्वय-प्राप्तमर्मयुगावधि[5] सूत्रद्वयं प्रसार्य तदग्रावलम्बनेन दक्षिणोत्तरतः[6] सूत्रमेकं निदध्यादिति । एवं कृतेऽष्टारं मध्यत्र्यश्रं च सम्पन्नमित्याह—**एवमिति । समम्** अन्योन्यतः । **मनोहरम्** आश्चर्यरूपत्वात्[7] । तच्चक्रं **पञ्चशक्तिचतुर्वह्निसंयोगात्** पञ्चानां शक्तीनां चतुर्णां वह्नीनां संयोगात् । **भैरवः**[8] जगद्भरणलक्षण-श्चिन्नाथः । **गुणवृत्तं** गुणशब्दस्त्रित्वं[9] लक्षयति ।। ५९-७५ ।।

---

१. मध्ये द्विदशान्तचतुर्दश–वाक. ख. । २. धादमरो–वाक. ख. । ३. चतुरश्रं ततो दत्वा कुर्याद् द्वारचतुष्टयम् ।। चतुष्कोणसमायुक्तमेवं स्यान्मण्डलोत्तमम् । रक्तेन रजसापूर्यं चक्रं शुक्लोच्चरेखिकम् ।।–वाक. ख. । ४. मध्यस्थितयोः–क., मध्ययोस्त्र्यश्रयोः–ख. । ५. कर्मद्वयावधि–ख. । ६. त्तरसूत्रं निद–ग. । ७. भूत–ख. । ८. 'भैरवः····न्नाथः' नास्ति–ख. । ९. त्कारण–क. ।

1. "एते च सप्तदश श्लोकाः कस्याञ्चिट्टीकायां न दृश्यन्ते । अन्यस्यां दृश्यन्ते च" (से. पृ. ५०) । अर्थरत्नावल्यादिषु न दृश्यन्ते, ऋजुविमर्शिन्यां च सन्ति । वामकेश्वरीमतविवरणतः श्लोका इमे रसमहोदधिनाम्नो ग्रन्थस्येति परिज्ञायते ( पृ. ३२ ) । अत्रत्याः केचन श्लोका अर्थरत्नावल्या मद्रासमातृकास्वपि दृश्यन्ते ।

**संस्थितात्र[1] महाचक्रे महात्रिपुरसुन्दरी ।**

**शृणु देवि यथा सात्र[2] पूज्यते साधकोत्तमैः ।।७६।।**

**वर्गानुक्रमयोगेन[3] देवताष्टकसंयुता[4] ।**

**अवर्गः प्रथमो देवि वशिनी तत्र संस्थिता[5] ।।७७।।**

**तत्परस्तु कवर्गो[6] यस्तत्र कामेश्वरी स्थिता[7] ।**

**मोदिनी तु[8] चवर्गस्था टवर्गे विमला तथा[9] ।।७८।।**

---

एवमुभयथा चक्रराजप्रस्तार[10]मभिधायात्र पूज्यां देवतामाह—**संस्थितेति**[11] । वशिन्यादिवाग्देवताष्टकोपेता महादेवी चक्रराजेऽस्मिन् पूज्येत्याह—**शृणु देवीति** । अत्र चक्रराजे[12] **पूज्यते** ।

"निर्विकल्पे परे[13] व्योम्नि सा पूजा ह्यादराल्लयः" (वि० भै० १४७) इति,

न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम् ।

स्वे महिम्न्यद्वये धाम्नि[14] सा पूजा या परा स्थितिः ।। (सं० प०)

इति चोत्तमविषये पूजोपनिषत् । इह[15] तु साधकान् प्रति पूजा ।।७६।।

**अवर्ग** इत्यादिसार्द्धत्रिभिर्वशिन्यादिवाग्देवताष्टकानां नामधेयं मातृकाष्ट-

---

संस्थिताऽत्रेति । एवंभूते श्रीचक्रे सम्यक् स्थिता पुरत्रयस्य स्वामिनी महात्रिपुरसुन्दरी । सा तु येन प्रकारेण पूज्यते तथाऽवधारयेत्यर्थः ।

वर्गानुक्रमयोगेनेत्यादि । मातृकाया[16] अष्टवर्गानुक्रमयोगेन वशिन्यादिकौलिन्यन्ताष्टवागीश्वरीसहिता पूज्येत्यर्थः[17] ।। ७६ ।।

अवर्गः प्रथम इत्यादिना देवताष्टकं निर्दिशति । वर्गाष्टकेऽपीत्यादि । वर्गा-

---

१. तु—वाक. ख. ग. । २. सा तु—वाक. ख. अ.ब. सक. ख. ग. घ. । ३. चक्रा—सख. । ४. तम्—सघ. । एतदनन्तरं सखपुस्तके 'चितिश्चैत्यं च चैतन्यं चेतनाद्वयकर्म च । जीवः कलेति देवेशि सूक्ष्मं पुर्यष्टकं स्मृतम् ।।' इति श्लोको दृश्यते । स चात्राप्रासङ्गिकः प्रतीयते । योगिनीहृदयदीपिकायामन्यत्र च प्रामाणिकवचनत्वेनोद्धृत एष दृश्यते । ५. देवता—से. ब. सक. ख. ग. घ. । ६. र्गोऽयं यत्र—से. सख. ग.घ. । ७. मता—सग., तथा—सघ. । ८. च—सघ. । ९. स्मृता—से , स्थिता—ब. सक. ख. ग. । १०. रं विधा—क. । ११. त्यर्थः—क. ख. । १२. चक्रे पूज्येति—क., चक्रराजः—ग. । १३. महाव्योम्नि—क. ख. ग. । १४. व्योम्नि—क. ख., नाम्नि—ग. । १५. 'इह''''पूजा' नास्ति-ख. । १६. 'मातृ''''योगेन' नास्ति—क. ग. छ. । १७. पूजयेदित्यर्थः—ख. ङ. ज. ।

अरुणा तु[1] तवर्गस्था पवर्गे जयिनी स्थिता[2] ।
सर्वेश्वरी यवर्गे तु शवर्गे कौलिनी[3] तथा ।।७९।।
एता वर्गाष्टके स[4]म्यगष्टावेव हि देवताः ।
अर्चिताः पुरुषस्याशु प्रकुर्वन्ति व[5]शं जगत् ।।८०।।
उद्धरेत् प्रथमं रेफं तदधः कुटिला[6]न्तकम् ।
तदप्यवनिबीजस्थं षष्ठस्वरसमन्वितम् ।।८१।।
ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यं कारयेत् परमेश्वरि ।
एतत्त[7]द्वशिनीबीजं योगिनीनां मुखे स्थितम् ।।८२।।

---

वर्गं च यथायो[8]गं संश्लेषयति । सम्यग् अविपर्यस्तत्वेन ।।७७-८०।।

उद्धरेदित्यादिपञ्चदशभिर्वशिन्यादिवाग्देवता[9]ष्टकस्य बीजाष्टकं क्रमेण कथयति[10] । तदधः[11] तस्याधस्तात् । कुटिलान्तकम्[12] । कुटिलः फकारस्तस्यान्तकं बकारः[13], तद्[14] बकारबीजम् । अ[15]वनिबीजं लकारः । षष्ठस्वर ऊकारः । ऊर्ध्वं[16] शिरः । अर्धेन्दुः कला । बिन्दुरनुस्वारः ।।८१-८२।।

---

ष्टकदेवता वशिन्यादयः साधकेनार्चितास्तस्य वशे जगत् कुर्वन्तीत्यर्थः ।।७७–८०।।

उद्धरेत् प्रथममित्यादि शृणु विद्याङ्गरूपिणीमित्य[17]न्तस्यायमर्थः—आदौ रेफं[18] वह्निं समुद्धृत्य तदधः कुटिलान्तगमिति । कुटिलः फकारः, तस्यान्तगं बकार[19]मुद्धरेदित्यर्थः । तदप्यवनिबीजस्थमिति । तदुद्धृताक्षरद्वयं ल[20]कारस्थितं कुर्यात्, यथा भवति तथोद्धरेदित्यर्थः । षष्ठस्वरसमन्वितमिति । ऊकारसमन्वितमिति यावत् । ऊर्ध्वमर्धेन्दु-

---

१. च–सग. । २. तथा–वाग. से. सग. । ३. नीति च–वाक. ख. ग., की स्थिता–सख. । ४. देवि अ–वाक. ख. ब. अ., देवि ह्य–सघ. । ५. जगद्वशम्–सख. । ६. न्तगम्–वाक. ख. ब. अ., नुगम्–सग. । ७. त्तु व–से. सक. ख. ग. घ. । ८. भागं–ख. । ९. ताबीजा–क., ताष्टकबी–ग. । १०. कथ्यते–ख. ग. । ११. तस्मादध–क. । १२. 'कुटिलान्तकम्' नास्ति–क. । १३. 'बकारः, तद्' नास्ति–क. ख. । १४. घमातृका इतः परं पुनर्दृश्यते । १५. अग्नि–ख. । १६. 'ऊर्ध्वं शिरः' नास्ति–ख. । १७. त्यन्तस्य व्याख्या लिख्यते–क. ग. घ. छ. । १८. 'रेफं' नास्ति–क. ग. छ., रेफमुद्धृत्य–घ. ङ. ज. । १९. बकाराक्षरमु–घ. । २०. लकारस्थं भवति–क. ग. छ. ।

**द्वितीयवर्ग[1]प्रथममिन्द्रा[2]रूढं महेश्वरि ।**
**अधस्तान्ना[3]भसं बीजमाग्नेयस्थं समुद्धरेत् ॥ ८३ ॥**
**चतुर्थस्वरसंयुक्तं बिन्दु[4]खण्डेन्दुलङ्कृतम् ।**
**एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् ॥ ८४ ॥**

---

**द्वितीयवर्गप्रथमं** ककारः । **इन्द्रो** लकारः । **नाभसं** बीजं हकारः । **आग्नेयो** रेफः । **चतुर्थस्वर** ईकारः ॥ ८३-८४ ॥

---

बिन्द्वाढ्यमिति । उद्धृतवर्णचतुष्टयस्य शिरसि अर्धेन्दुं कृत्वा बिन्दुरनुस्वार एतद्द्वयमुद्धरेदित्यर्थः । यथा ब्लूँ । एतद्वशिनीबीजं योगिनीनां मुखे स्थितमिति । [1]योगिनीभिः सदा जप्तमित्यर्थः ॥ ८१-८२ ॥

द्वितीयवर्गप्रथममिति । द्वितीयवर्गः [5]कवर्गस्तस्य [6]वर्गस्य प्रथमाक्षरः ककारः । ऐन्द्रारूढमिति लकारारूढमित्यर्थः । अधस्तान्नाभसं [2]बीजमिति । तदनन्तरं हकारमुद्धरेदित्यर्थः । आग्नेयस्थं समुद्धरेदिति । आग्नेयो रेफः । तत्स्थान्युद्धृतानि वर्णानि यथा भवन्ति तथा कुर्यादित्यर्थः । चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतमिति । चतुर्थस्वर ईकारः, बिन्दुरनुस्वारः, खण्डेन्दुरर्धचन्द्रः । [7]एतत्त्रितयमुद्धृतबीजानामुपरि [8]कुर्यादिति यावत् । एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् । कामेश्वरीबीजमित्यर्थः । यथा क्ल्ह्रीँ ॥ ८३-८४ ॥

---

१. वर्गात्–वाक. ख. ग. । २. मैन्द्रा–वाक. ख. ब. अ. । ३. च्छाम्भवं–सक. । ४. खण्डद्वयं कृतम्–ब., नादविभूषितम्–सक. । ५. 'कवर्गः' नास्ति–क. ग. घ. छ. ज. । ६. 'वर्गस्य' नास्ति–क. ग. घ. छ. । ७. एतत्त्रय–ख. । ८. कुर्यादित्यर्थः–क. ग. छ. ।

1. "तदिदं योगिनीनां तद्वाचकवशिनीपदस्य मुखे स्थितमारम्भे प्रयोज्यम् । इदमुपलक्षणं कामेश्वर्यादिबीजानामपि तत्तद्वाचकपदारम्भे प्रयोक्तव्यतायाः ।....योगिनीनां वशिन्यादिबीजाष्टकस्य मुखे स्थितं तेषु प्रथममित्यर्थ इति केचित् । योगिनीभिर्जप्तमित्यर्थ इत्यन्ये" (से. पृ. ५२)

2. "नाभसबीजाग्नेयशब्दा व्यञ्जनमात्रपरा इत्यपि केचित्" (से. पृ. ५३) ।

**अरुणापञ्चमस्याधो वारुणं विनियोजयेत् ।**
**[१]तदधोऽपीन्द्रबीजं तु सर्वोर्ध्वमिपरं प्रिये ।। ८५ ।।**
**[२]एतत्तन्मोदिनीबीजं सर्व[३]सत्त्ववशङ्करम् ।**
**वायव्यमिन्द्रबीजस्थं[४] षष्ठस्वरसमन्वितम् ।। ८६ ।।**
**अर्धेन्दुमस्तकाक्रान्तं बिन्दुना[५] परिभूषितम्[६] ।**
**[७]एतत्ते कथितं देवि विमलाबीजमुत्तमम्[८] ।। ८७ ।।**
**सर्वपापक्षयकरं सर्वोपद्रवनाशनम् ।**

---

**अरुणापञ्चमो** नकारः । **वारुणं** वकारः । **इन्द्रबीजं** लकारः[९] । **इपरम्** ईकारः । कलाबिन्दू चात्रा[१०]ध्याहार्यौ ।। ८५-८६ ।।

**वायव्यं** यकारः । **सर्वपापं** देहादिसङ्कुचितकर्तृत्वम् । **उपद्रवो** विकल्पबुद्धिः ।। ८६-८८ ।।

---

अरुणापञ्चमस्याधो वारुणं विनियोजयेदिति । अरुणावर्गस्तवर्गस्तस्य[११] पञ्चमो नकारस्तस्याधो वारुणं[१२] वकारं विनियोजयेदित्यर्थः । तदधोऽपीन्द्रबीजं त्विति । उद्धृत-वकारस्याधोदेशे[१३] इन्द्रबीजं लकारं योजयेदित्यर्थः । सर्वोर्ध्वमिपरं प्रिये ! इति । एवमुद्धृताक्षरत्रयस्योपरि[१४] ईकारमुद्धरेत्[१५] तथा बिन्दुकलान्वितं च कुर्यात् । एतन्मोदिनी-बीजम् । यथा न्व्लीँ ।। ८५-८६ ।।

वायव्यमिन्द्रबीजस्थमिति । वायव्यं यकारः । इन्द्रबीजं लकारः । षष्ठस्वरसम-न्वितम्[१६] ऊकारसमन्वितम् । अर्धेन्द्वित्यादि । अर्धेन्दुः[१७] कला, बिन्दुरनुस्वारः, ताभ्यां विभूषितं[१८] कुर्यादित्यर्थः । एतत्ते कथितं देवि विमलाबीजविग्रहमिति । एतदुद्धृतं[१९] बीजं विमलारूपमित्यर्थः । यथा य्लूँ ।। ८६-८८ ।।

---

१. तदधः शक्तिबीजं च सर्वान्तिमिपरं प्रिये–सक. । २. एतत्तु–सख. ग. घ. । ३. तत्त्व–वाक. ख. अ. । ४. जं तु–सक., जं च–सख. । ५. नोपरि–बाग. से. ब. सख. ग. घ., कलाबिन्दुविभू–अ. । ६. शोभितम्–सक. । ७. एतत्तु–सख. । ८. विग्रहम्–अ. से. सक. घ. । ९. 'लकारः । इपरम्' नास्ति–ग. घ. । १०. चाध्या–ख. । ११. तवर्ग-पञ्चमो–क. ग. घ. छ. । १२. 'वारुणं' नास्ति–क. ग. घ. छ. । १३. बीजस्या–ख. ङ. ज. । १४. 'त्रय' नास्ति–क. ग. घ. । १५. रं विनियोजयेत्–ख. ङ. ज. । १६. षष्ठस्वरसमन्वितं लकारस्याधोदेशे ऊकारो देयः–क. घ., षष्ठस्वर ऊकारः, अकारस्य स्थाने ऊकारं यथा भवति तथा कुर्यादित्यर्थः–ख. ङ. ज. । १७. 'अर्धेन्दुः' नास्ति–क. ग. घ. छ, । १८. भूषितं च–ख. ङ. ज. । १९. एतत्तृतीयं बीजं विमलाविग्रहमित्यर्थः–क. ग. घ. छ. ।

**ज[1]कारं कालमारूढं तदधो ज्वलनाक्षरम् ॥ ८८ ॥**
**चतुर्थस्वरसंभि[2]न्नं बिन्दुनादस[3]मन्वितम् ।**
**एतत्तदरु[4]णाबीजमरुणं सर्वमोहनम् ॥ ८९ ॥**
**शिवबीजं तदादिस्थमध[5]स्तादैन्द्रवारुणौ ।**
**वायव्यमुपरो[6]द्भिन्नं संयोज्य परमेश्वरि ॥ ९० ॥**
**जयिनीबीजमेवेदं ना[7]दबिन्दुविभूषितम् ।**

---

**कालो** मकारः । **ज्वलनो** रेफः ॥ ८८-८९ ॥

**शिवबीजं** हकारः । **तदादिस्तस्य** हकारस्यादिः, सकार इत्यर्थः[8] । **ऐन्द्रं**[9] लकारः । **व[ा]रुणो** वकारः । **उपर** ऊकारः ॥ ९०-९१ ॥

---

जकारं कालमारूढमिति । [10]कालो मकारः, [11]तं जकारस्याधः कुर्यादिति यावत् । तदधो ज्वलनाक्षरमिति । मकारस्याधो[12]देशे रेफं संपादयेत् । चतुर्थस्वरसंयुक्तमिति । चतुर्थस्वर ईकारः, [13]तेन संयुक्तं यथा भवति शिरस्थानं तथा कर्तव्यमित्यर्थः । [14]एतच्चतुःपिण्डात्मकमरुणाबीजम् । अरुणाबीजं समस्तं जगन्मोहयितुं समर्थम् । यथा ज्म्रीँ ॥ ८८-८९ ॥

शिवबीजमित्यादि । शिवबीजं हकारस्तदादिस्थं सकारम् । हकारस्याधः सकारः कर्तव्य इत्यर्थः । तादृ[15]शस्य सकारस्याधोदेशे इन्द्रवारुणौ इन्द्रो लकारः, वारुणं वकारः, तदुभयमुद्धरणीयम् । वायव्यं यकारः । उपरोद्भिन्नम् [16]उकारात् परस्थित ऊकारस्तत्संबद्धं कुर्यात् । [17]उद्धृतषडक्षराणां संयोजनमेकीकरणं विधाय नादबिन्दुविभूषितं कुर्यात् । एतज्जयिनीबीजं षट्[18]पिण्डात्मकं सर्वरोगभया[19]पहं सर्वेषामा[20]रोग्याभयङ्करमित्यर्थः । यथा ह्स्ल्व्य्ऊँ ॥ ९०-९१ ॥

---

१. भान्तं जकार-ब. । २. संयुक्तं-वाग. अ. से. ब. सक. ख. ग. घ. । ३. विभूषि-सख. ग. । ४. देवा-सग. । ५. धः सोमेन्द्रवारुणे-सक., धस्ताच्चे-से. सख. ग., धस्तादि-अ. सघ. । ६. मूष-ब, मूस्व-सक. । ७. सर्वरोगभयापहम्—अ., कला-वाग. से., बिन्दुनाद-ब. । ८. 'इत्यर्थः' नास्ति-क. । ९. 'ऐन्द्रं····वकारः' नास्ति-ख. ग. घ. । १०. 'जकाराक्षरं कालमारूढं' अधिकः पाठः-ख. ङ. ज. । ११. 'तं' नास्ति-क. ग. घ. छ. । १२. 'देशे' नास्ति-क. ग. ङ. छ । १३. तेन संयुक्तं कुर्यात् । बिन्दुनादसमन्वितं कुर्यात् । यथा ज्म्रीं-क. ग. छ. । १४. चतुर्वर्णा-ख. ङ. ज. । १५. शस-क. ग. घ. । १६. उकारात् परमूकारम् । उद्धृत-क. ग. छ. । १७. 'उद्धृत····कुर्यात्' नास्ति-ख. ङ. ज. । १८. खण्डा-ज. । १९. भयहरं-क. ग. छ. । २०. सर्वेषां प्रियकरमित्यर्थः-क. ग. घ. छ. ।

उद्धरेन्मोदिनीवर्गचतुर्थं[1] परमेश्वरि ।। ९१ ।।
अधः कालाग्निवायव्यान् क्रमेण[2] विनियोजयेत् ।
दीर्घायुर्बीजसंयुक्तान्[3] यथानुक्रमयोगतः ।। ९२ ।।
उपरीश्वरबिन्द्वन्तानेकत्र[4][5] सुरसुन्दरि ।
एतत्सर्वेश्वरीबीजं सर्वत्रैवापराजितम्[6] ।। ९३ ।।

---

**मोदिनीवर्गचतुर्थो**[7] झकारः । **दीर्घायुर्बीजम्** । अमरेश्वरीबीजत्वादायुर्बीजमुकारः, दीर्घायुर्बीजमूकारः । ईश्वरः कला ।। ९१-९३ ।।

---

उद्धरेन्मोदिनीवर्गेत्यादि । मोदिनीवर्गश्चवर्गस्तस्य चतुर्थो झकारस्तं झकारं प्रथममुद्धरेत्[8] । अधः कालाग्निवायव्यान् क्रमेण विनियोजयेदिति[9] । कालो मकारः, अग्नी रेफः, वायव्यो यकारः । तेन[10] क्रमेण झकारस्याधोदेशे योजयेदित्यर्थः । दीर्घायुर्बीजसंयुक्तानिति । दीर्घायुर्बीजमूकारं दीर्घरूपम्[11] तदादाय पूर्वोक्तान् वर्णान् तेन संयुवतान् यथानुक्रमयोगेन कुर्यादित्यर्थः । उपरीश्वरबिन्द्वन्तानिति । ईश्वरो नादः । बिन्दुरनुस्वारः । समस्तानेतान् एकत्र संयोजयेत् । एकबीजतां नयेदित्यर्थः । एतत्सर्वेश्वरीबीजमिति । एतदुद्धृतं[12] सर्वेश्वरीबीजं पञ्चपिण्डात्मकं[13] सर्वाणि सत्त्वानि साधकस्य वशे करोतीत्यर्थः । यथा झ्म्र्य्ऊँ ।। ९१-९३ ।।

---

१. बीजं-अ., वर्गे-से., वर्गाच्च-ब. सख. ग. । २. णैव-सख. । ३. दीर्घेन्दु-ब., दीर्घोकारसमा-सघ. । ४. बिन्दूना-ब., बिन्द्वाढ्य-सग., बिन्द्वन्त-सख. । ५. मेकत्रापि तथैव च-ब. सघ., मेकत्रापि नियोजयेत्-सग., मेकत्र विनियोजयेत्-वाग.. अ. से. सक. ख. । ६. सर्वसत्त्ववशङ्करम्-अ. । ७. दीर्घायुर्बीजममरेश्वरत्वादयो बीजमूकारः-क., दीर्घायुर्बीजमूकारः । ईश्वरः कला-ग. । ८. अथ-ख. घ. ङ. ज. । ९. 'इति' नास्ति-क. ग. छ. । १०. तेन प्रकारेण क्रमेण पूर्वोक्तझकार-ख. घ. ङ. ज. । ११. दीर्घरूपमादाय पूर्वोक्तवर्णं तेन संयुक्तं यथा-ख. ङ. ज । १२. उद्धृतमेतद्रूपं-ख. ङ. ज., एतदुद्धृतं बीजमिति । एतदुद्धृतं बीजं-घ. । १३. खण्डा-ज. ।

**कौलिनीपञ्चमं देवि कालबीजोपरि स्थितम् ।**
**सर्वाधस्तादपि तथा[1] वह्निबीजं[2] नियोजयेत् ॥९४॥**
**चतुर्थस्वरसंयुक्तं बिन्द्विन्दुसमलङ्कृतम्[3] ।**
**एतद् बीजवरं[4] भद्रे कौलिनीरूपमास्थितम्[5][6] ॥९५॥**

---

**कौलिनीपञ्चमं क्षकारः । वह्निबीजं रेफः । बीजानि [1]सुभगोदये लिखितानि ॥ ९४-९५ ॥**

---

कौलिनीपञ्चमं देवीति । [2]कौलिनीवर्गः शवर्गस्तस्य पञ्चमं क्षकारस्तमुद्धरेत् । कालबीजोपरि स्थितमिति[7] । कालबीजं मकारस्तदुपरि तच्छिरसि[8] स्थितं यथा भवति तथा कुर्यादित्यर्थः । सर्वाधस्तादपि तथेति । उद्धृताक्षरादधोदेशे वह्निबीजमिति रेफस्तं नियोजयेत्[9] । चतुर्थस्वरसंयुक्तं[10] चतुर्थस्वर ईकारस्तेन संयुक्तं कुर्यादित्यर्थः । नादेन्दुसमलङ्कृतमिति । कलानादान्वितं कुर्यादित्यर्थः । एतदुद्धृतं बीजवरं[11] कौलिनीबीजं चतुःपिण्डात्मकमित्यर्थः[12] । यथा क्ष्म्रीँ[13] ॥ ९४-९५ ॥

---

१. तदा–सख. । २. बीजं वह्नेः–सग. । ३. नादे–वाग. अ. से. सग. घ., बिन्दुनादविभूषितम्–सक., बिन्दुखण्डेन्द्वलङ्कृतम्–सख. । ४. वरे–वाग. से., जंपरं–सघ. । ५. बीज–ब. । ६. माश्रितम्–ब., संस्थितम्–सघ. । ७. 'इति' नास्ति–क. ग. ङ. । ८. 'तच्छिरसि' नास्ति–क. ग. । ९. येदित्यर्थः–ख. ङ. ज. । १०. 'चतुर्थस्वरसंयुक्तं' नास्ति–क. ग. छ. । ११. बीजं परं–ख. घ. । १२. विग्रहं–क. ग. छ. । १३. खण्डा–ज. ।

1. शिवानन्दविरचितः सुभगोदयोऽत्रैव परिशिष्टे प्रकाश्यते । तत्रेमानि बीजानि द्रष्टव्यानि । एवमेवाग्रेऽपि सुभगोदयनाम्ना निर्दिष्टा विषयास्तत्रैवान्वेषणीयाः । अर्थरत्नावल्यामपीमानि बीजान्युद्धृतान्यत्रैवावलोकनीयानि । वामकेश्वरीमतविवरणे सेतुबन्धे च तथैव ।

2. "यत्तु कौलिनीवर्गः षवर्ग इति मूर्धन्यादिवर्गपरत्वेनार्थरत्नावलीकृतां व्याख्यानं तच्छवर्गे कौलिनीति पूर्वग्रन्थविरुद्धम्" (से. पृ. ५६) । अत्र शवर्ग इत्येव पाठो दृश्यतेऽर्थरत्नावल्याः सर्वासु मातृकासु । तेन "यवर्गषवर्गयोरपि पञ्चपञ्चवर्णात्मकतैवेति तु केचित्" (से. पृ. ५१) इत्याक्षेपोऽपि तत्रालग्नकः ।

**एवमेतानि बीजानि क्रमादष्टौ[1] महेश्वरि ।**
**कथितानि मयेदानीं[2] शृणु विद्याङ्गरूपिणीम्[3] ।।९६।।**
**करशुद्धिकरीं[4] विद्यां तथाङ्गन्यासस्संस्थिताम्[5] ।**
**आत्मासनगतां[6] चापि[7] तथा चक्रासनस्थिताम्[8] ।।९७।।**

---

एवमादि मयान्तेन वृत्तानुवादः क्रियते । **इदानीं शृणु विद्याङ्गरूपिणी**-मित्यनेन[9] भागेन सह[10] सूत्रद्वयेन वक्ष्यमाणविद्योद्देशः क्रियते । **विद्याङ्गरूपिणीं** प्रधानविद्याया[11] अङ्गरूपिणीं विद्यां शृण्वित्यर्थः ।। ९६ ।।

**करशुद्धिकरीं**[12] स्पृष्टपदार्थविशुद्ध्यर्थमङ्गुलितलशोधिनीं[13] विद्यामित्यर्थः । **अङ्गन्यासस्संस्थिताम्**। अङ्गन्यासः षडङ्गविधिः । **मूलविद्यां शृणु प्रिये** ! इति।

---

एवमेतानीत्यादि । एवमुक्तप्रकारेण[14] । एतानि बीजान्युद्धृतानि[15] क्रमाद् । यथानुक्रमेण[16] अष्टौ अष्टसंख्याकानि[17] । हे[18] महेशानि ! प्रकाशितानीत्यर्थः ।

शृणु विद्याङ्गरूपिणीमित्यारभ्य एवमेतस्य चक्रस्य साधकोऽर्चां समारभेदित्यन्तस्य व्याख्या लिख्यते । हे देवि[19] ! शृणु श्रोतुमर्हसि । विद्याङ्गरूपिणीमिति । मूलविद्याया अङ्गरूपिणीं[20] विद्यां शृण्विति समुदायोक्तिः ।। ९६ ।।

पुनर्विशेषतस्तासामङ्गविद्यानां नामानि निर्दिशति शिवः—करशुद्धिकरीं[21] विद्या-मिति । करस्थस्य पूजोपकरणद्रव्यस्य स्पर्शयोग्यतामापादयति या विद्या सा करशुद्धि[22]-करी विद्येति । तथाङ्गन्यासरूपिणीमिति । अङ्गन्यासे विनियुक्ता या विद्या सा अङ्ग-

---

१. मेणाष्टौ–सक. । २. महादेवि–वाक. ख., महेशानि–अ., मया देवि–अ. । ३. पिणीः–वाक. ख. ग. । ४. 'करशुद्धिकरी' इत्यादि 'देव्यावाहनविद्यापि' इत्यन्तः सर्वत्र प्रथमान्तः पाठः–से. । ५. रूपिणीम्–वाग. अ. सख. घ. । ६. स्थितां–सक. । ७. वापि–सघ. । ८. सने–ब. । ९. मित्यन्तेन–क. ख. घ. । १०. सः–क. घ. । ११. 'प्रधान····पिणी' नास्ति–क. ख. । १२. 'कर····विधिः' नास्ति–ख. । १३. नीमि–क. ख. । १४. 'उक्तप्रकारेण' नास्ति–क. ग. छ. । १५. 'उद्धृतानि' नास्ति–क. ग. छ. । १६. 'यथानु' नास्ति–क. ग. छ. । १७. अष्टसंख्यानि–क. ग. छ. । १८. 'हे' नास्ति–क. ग. छ. । १९. हे देवि श्रोतु–क. ग. छ., शृणु देवि–ख. ज., देवि शृणु–घ. । २०. अङ्गरूपिणीः करशुद्ध्यादिविद्या इत्यर्थः । अङ्ग-रूपिणीर्विद्याः–क. ग. छ. । २१. करी विद्या–ख. घ. ज. । २२. 'कर' नास्ति–क. ।

**सर्वमन्त्रासनगतां साध्यसिद्धासनस्थिताम् ।**
**देव्यावाहनविद्यां[1] च[2] मूलविद्यां[3] शृणु प्रिये ।। ९८ ।।**
**वाग्भवं प्रथमं देवि कामराजं[4] द्वितीयकम् ।**

---

**मूलविद्याम्** अङ्गिविद्याम् । शृण्वित्यत्र[5] पुनराख्यातं श्रोतृजनप्रवृत्त्यर्थम् । **प्रिये** इत्यामन्त्रणयोग्यताप्रदर्शनम्[6] । **यच्छ्रुतिः**[7]—

[1]ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः ।
विद्यया वा विद्यां यः[8] प्राह तानि तीर्थानि षण्मम ।। इति ।।९७-९८।।
(सं० ब्रा० ३)

**वाग्भवमिति** सार्धैकेन[9] सूत्रेण करशुद्धिकरीं विद्यामाह । **प्रथमम्** अहं-विमर्शप्रथमकलानुत्तराक्षरम् **वाग्भवमिति** वाचां प्रसवस्थानम् । अनुत्तरा-

---

न्यासरूपिणी विद्या । आत्मासनगतां[10] चापीति । देवीरूपस्य साधकस्य आत्मासने विनि-[11]युक्ता या[12] विद्यते । तथा चक्रासनस्थितामिति । चक्रासने विनियुक्ता सा चक्रासन-स्थितेत्यर्थः । सर्वमन्त्रासनगतामिति[13] । सर्वमन्त्राणामासने विनियुक्तामित्यर्थः । साध्य-सिद्धासनस्थितामिति । तथा साध्यसिद्धासनस्थिता या विद्या । ताः सर्वाः शृण्वित्यर्थः । देव्यावाहनविद्यां चेति । देव्याः श्रीमहात्रिपुरसुन्दर्या आवाहनविद्यां शृण्वित्यर्थः । मूलविद्यां शृणु प्रिये ! इति । हे प्रिये[14] ! समस्तजगदुत्पत्तिस्थितिलयहेतु[15]परमशिवात्मशक्तेः[16] परमानन्दभावात्मिकायाः[17] श्रीमहात्रिपुरसुन्दर्या वाचिका विद्या[18] समस्तविद्यादिभूता या मूलविद्या तां शृण्वित्यर्थः ।। ९७-९८ ।।

---

१. द्यापि–से. । २. तु–सग. । ३. द्यामपि–वाक. ख. । ४. बीजं–सग. । ५. शृण्विति–क. । ६. न्त्रणं–ख. घ. । ७. 'प्र' नास्ति–क. ख. । ८. यो ह्याह–क. । ९. सार्धेन सूत्रेण–क., सार्धेनैकेन–ख. । १०. गता–ख. ग. ङ. ज. । ११. 'वि' नास्ति–क. ग. । १२. सा तथेति–ख. ङ. ज. । १३. 'सर्व''''स्थितामिति' नास्ति–ख. ङ. ज. । १४. 'हे प्रिये' नास्ति–ख. घ. ङ. ज. । १५. हेतुः–ख. ङ. ज. । १६. शिवात्मशक्तिः–ज., शिवात्मिकायाः–क. ग. छ. । १७. 'परमानन्दभावात्मिकायाः' नास्ति–क. ग. छ. । १८. 'विद्या समस्त' नास्ति–क. ग. घ. छ. ।

1. तुलनीयम्—"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नास्ति साधनम् ।।" इत्यनेनाभाणकेन ।

**शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम्[१] ॥ ९९ ॥**
**एषा विद्या महेशानि[२] करशुद्धिकरी स्मृता[३] ।**

---

देव सर्ववर्णोत्पत्तिरित्युपह्वरम् । अत्राभियुक्तोक्तिः[४]—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥
अनयोः सामरस्यं यत् परस्मिन्[५] महसि स्फुटम् ।
अवर्णः सर्ववर्णानां व्यापकस्त्रिविधः स्मृतः ॥ इति ।

**श्रीसिद्धामतेऽपि[६]—**

[1]सात्र[७] कुण्डलिनी बीजं[८] जीवभूता चिदात्मिका ।
तज्जं[९] ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥ इत्यादि ।

**रहस्यमपि**—"अकारो वै सर्वा वाक्" ( ऐ० आ० २।३।६ ) इति, "अ इति ब्रह्म तत्रागतमहम्[१०]" ( ऐ० आ० २।३।८ ) इति, "छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय[११] एव तस्यैतस्याकारो रसः" ( ऐ० आ०

---

करशुद्धिविद्येत्यादि मूलविद्यान्तं यथाक्रमेण निर्दिष्टानां विद्यानां[१२] क्रमेणोद्धारं दर्शयत्युत्तरैः[१३] श्लोकैः । तत्र प्रथमं करशुद्धिविद्योद्ध्रियते—वाग्भवं प्रथमं देवीत्यादिना । वर्णक्रमस्य प्रथममक्षरं सबिन्दुकमबिन्दुकं वा[१४] करशुद्धिविद्याया आद्यं बीजम् । तदेव वाग्भवमित्युच्यते । तथा वर्गक्रमस्य द्वितीयमक्षरमाकारं करशुद्धिविद्याया द्वितीयं बीजम्[१५] । तदेव कामराजसंज्ञकम् । शान्तान्तं शकारस्यान्तं षकारस्तस्यान्तं सकारस्तं विसर्गसंयुक्तं[१६] कुर्यात् । ऐकारान्तान्तयोजितम् । ऐकारस्यान्तमोकारस्तस्यान्त-

---

१. संयुतम्—सक. ग. । २. महाविद्या—सख., महादेवि—सग. । ३. परा—सग. । ४. भियुक्ताः—क. । ५. कः स त्रिधा—क. । ६. श्रीसिद्धान्तमते—क., श्रीमदोड्डामरेऽपि—ख., श्रीसिद्धामृते—वि., सिद्धयोगीश्वरीमते—त. । ७. मात्रा—क. ख. ग. घ. । ८. बीज—वि. । ९. तज्जीव इच्छोन्मेषाख्यस्त्रिधा—क. ख. ग. घ. । १०. तत्रागमनमहमिति छन्दः—ग. घ. । ११. यमवाचामा—ग. घ. । १२. मूलविद्यानां—ख. । १३. त्तरश्लोकैः—क. ग. छ. । १४. सबिन्दुकं वा कर—ङ. ज । १५. 'बीजम्' नास्ति—क. ग. घ. छ. । १६. विसर्गयु—ग. घ. ।

1. तन्त्रालोके (३।२२०–२२१) सिद्धयोगीश्वरीमतस्यार्थानुवादमुखेन पठितोऽयं श्लोकः ।

**ऐं[1]-ओमध्यगतं बीजं वाग्विधानाय केवलम् ॥१००॥**
**रुद्रयामलतन्त्रे[2] तु निर्दिष्टं परमाक्षरम् ।**

---

३।२।३ ) इति च । एवमनुत्तरप्रसरत्वं[3] विश्वस्य[4] विश्वत्र प्रकाशितम्[5] । इत्थमनुत्तरस्य[6] वाग्भवत्वमभिधायानन्दस्य कामराजसंज्ञत्वमाह—**कामराजं द्वितीयकमिति** । **द्वितीयकम्**[7] आनन्दः शिवस्तद्बीजं कामराजसंज्ञम्[8] । "प्रसरन्ती आनन्दरूपा सती" (शि० वि०, पृ० ६०) इत्यत्र महासमृद्धिरूपा[9]नन्दात्मना व्याख्याततत्वात् । अनुत्तरानन्दौ सबिन्दुकाविति[10] सम्प्रदायः । **शान्तान्तमिति** । **शान्तः** षकारः, तस्यान्तः सकारः । **कादिसंयुक्तम्** । कादिः विसर्गः । **ऐकारान्तान्तयोजितम्** औकारयोजितम् । **एषेति** । अस्यार्थः—एवंप्रकारा वाग्भवकामराजशक्त्यात्मिका **विद्या करशुद्धिकरोति** ॥९९-१००॥

**ए-ओमध्यगतमिति** चतुर्भिर्महारहस्यभूत[11]षडङ्गन्यासविनियुक्तसमस्तत्रिकभेदकन्दरूपमूलबाला[12]विद्योद्धारः क्रियते । **वाग्विधानाय**[13] वाक्प्रसरणाय ( वाग् )व्यक्त्यर्थम्, ( **निर्दिष्टं** ) स्वाध्यासेन सोऽहमित्यभिसन्धानेन[14] वा । **केवलं**[15] ध्यानयोगाद्यनपेक्षमित्यर्थः । तुर्विशेषे । [1]अर्धेन्दुबिन्द्वङ्कितमित्यर्थः[16] ।

---

मौकारः सविसर्गसकारौकारान्वितं कुर्यात् । यथा अं आं सौः । एषेत्यादि । एषा उद्धृता श्रीमहात्रिपुरसुन्दर्या अङ्गविद्यानामष्टविधानां[17] प्रथमा । अस्यास्तु करशुद्धिकर्मणि विनियोग इत्यर्थः ॥ ९९-१०० ॥

ए-ओमध्यगतमित्यादि । ए-ओमध्यगतमैकारं यद्बीजं तदिहाङ्गन्यासविद्याया आद्यं बीजम् । तदपि वाग्भवं वाग्विधानाय केवलं रुद्रयामलतन्त्रेषु निर्दिष्टं परमाक्षरमिति

---

१. एतन्–सख. । २. तन्त्रेषु–अ. सक. ख. ग. घ. । ३. रूपत्वम्–क. ख. । ४. विश्व–ग. । ५. शितः–क. ख. ग. । ६. नन्तरस्य–क. । ७. द्वितीयः कामानन्दः–ख. ग. । ८. संज्ञा–क. । ९. मदन–ख., महारूपा–ग. घ. । १०. अबि–घ. । ११. रात्मरक्षाभूतं–ख., र्महाक्षरभूत–ग. घ. । १२. 'बाला' नास्ति–क. । १३. 'वाग्वि····सन्धानेन वा' नास्ति–ख. । १४. सम्बन्धेन–ग. घ. । १५. केवल–क. । १६. मिति–ग. घ. । १७. अष्टविधानामङ्गानां–ख. ङ. ज. ।

1. ए-ओमध्यगतम् ऐकाराक्षरम्, तद् अर्धेन्दुबिन्द्वङ्कितम् ऐँ बीजं भवतीति यावत् ।

**मादनं शक्रसंयुक्तं चतुर्थस्वरसंयुतम् ॥१०१॥**
**ऊर्ध्व[1]मर्धेन्दुबिन्द्वाढ्य[2]माद्यन्तेऽतः[3] परं पुनः ।**
**शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम्[4] ॥१०२॥**
**एषा विद्या महाविद्या योगिनीनां महोदया ।**

---

**परमाक्षरम्** । विश्वाभेदमयत्वात् **पारम्यम्** । **अक्षरं** [1]प्राग्वत् । **यच्छ्रुतिः**— "वागक्षरं प्रथमजा ऋतस्य" ( तै० ब्रा० २।८।८।५ ) इति । **मादनमिति** । मदनः कामस्तद्बीजं **मादनम्** । इह तदेकदेशभूतं ककारमात्रं गृह्यते मादनमिति । **शक्तसंयुक्तम्** । **शक्रो** लकारः । **चतुर्थस्वर** ईकारः । **ऊर्ध्वं** शिरः । **आद्यन्ते** आद्यस्य वाग्भवस्यान्ते । योजित[5]मिति शेषः । **अतः परं पुनरिति** ।

---

यावत् । मादनं शक्रसंयुक्तमिति । मादनं ककारः । शक्रसंयुक्तं लकारसंयुक्तम् । चतुर्थस्वर ईकारः । ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यमिति[6] अर्धचन्द्रबिन्दुयुक्तम्[7] । इत्युद्धृतबीजमिदमङ्गन्यास[8]-विद्याया द्वितीयं बीजम् । एतदपि कामबीजं प्रसिद्धम् । आद्यन्तेऽतः परं पुनरिति । आदेर्वाग्भवबीजस्यान्तेऽनन्तरमुद्धृतकामराजबीजं योज्यम् । अत इत्यस्यायमर्थः— अस्मात् कामराजादनन्तरं पुनः परं योज्यम् । परमिति सविसर्गंसौकारम् । करशुद्धि-विद्यायास्तार्तीयं बीजमङ्गन्यासविद्याया अपि तार्तीयत्वेन योज्यं नान्यदिति सूचयितुं पुनः शान्तान्तमित्यादि पठति । कोऽर्थः ? करशुद्ध्यङ्गन्यासविद्ययो[9]स्तार्तीयं बीजमेक-मेवेति[10] । एषा विद्येत्यादि । एषा विद्या अङ्गन्यासविद्या महाविद्या[11] महती चेयं विद्या चेति महाविद्या । महती महत्त्वसंपादिनी । विद्या[12] ज्ञानप्रदा । केषाम् ?

---

१. अर्धेन्दुयुक्त-सक. । २. द्व्यं कामराजं समुद्धृतम्-वाग. से., कामराजं भवेत् प्रिये-सख. । ३. तत्परं पुनः-वाक. ख., त्वपरं पुनः-ब. । ४. संयुतम्-सग. । ५. योज्य-ग.घ. । ६. इन्दुखण्डेन्द्वलङ्कृतमिति-घ. । ७. बिन्दुकलासंयुक्तमिति-क. ग. घ. छ. । ८. 'इत्युद्धृत···· परं पुनः' इत्यस्य स्थाने 'एतदङ्गविद्याख्यद्वितीयं कामराजम् । आद्यन्तेऽतः परं पुनः' इति पाठः-ख. ङ. ज. । ९. 'बीज····स्तार्तीयं' नास्ति-ख. ङ. । १०. मेवेत्यभिप्रायः-घ., मेवेत्यर्थः-ख. ङ. ज. । ११. 'महाविद्या' नास्ति-क. ग. छ. । १२. 'विद्या' नास्ति-क. ग. छ. ।

1. प्राग्वदिति । "अक्षरे न क्षरत्यश्नुते वेति निष्पन्ने" (पृ. १४, प. १०) इत्येवं व्याख्यातवत् ।

**कुलविद्या महेशानि सर्वकार्यार्थसाधिका[1] ॥ १०३ ॥**

**अनया विद्यया गौरि[2] रक्षामात्मनि कारयेत् ।**

**एतस्या एव विद्यायाः शिवमायाग्निबिन्दुमत्[3] ॥ १०४ ॥**

**बीजमादिपदे[4] युक्त्वा[5] कार्यात्मासनरूपिणी[6] ।**

---

कामराजबीजोद्धारात् पश्चादित्यर्थः । **शान्तान्तमिति** । अस्य बीजस्य पुनरुद्धारो मूलविद्योद्धारे पूर्णोद्धारः कर्तव्य इति द्योतयितुं महाविद्यादरविधा[7]नार्थं च । **महाविद्या**[8] । पूर्णाहन्ताप्रदत्वाद् **महत्त्वम्**, स्वरूपप्रकाशहेतुत्वाद् **विद्यात्वम्** । **योगिनीनां** नित्यसमावेशयुक्तानाम् । **महोदया,** भोगमोक्षलक्ष्म्यात्मकतृप्तिप्रदत्वात् । **कुलविद्या**[9] कुलाङ्गनावदतिकौतुकेन[10] योग्येन[11] स्वीकर्तव्येत्यर्थः । हे[12] **गौरि** ! प्रकाशात्मतया स्वच्छभावे[13] ! **रक्षामात्मनि कारयेदिति** । अयमर्थः—अनया मूलविद्यया[14] आत्मशब्दाभिधेये देहे रक्षार्थं षडङ्गमाचरेदिति ॥ १००-१०४ ॥

---

योगिनीनाम् । महोदयेति । उदयशब्देन सम्पत्करी । कुलविद्येति[15] । योगिनीनामियं विद्या कुलधनमूलभाण्डारम् । कोऽर्थः ? सुगोप्येति यावत् । सर्वकार्यार्थसाधिकेति । कर्तव्यत्वेनाभिमतानां चतुर्णामपि पुरुषार्थानां साधिकेयं[16] विद्या स्वातन्त्र्येण । ऐं क्लीं सौः[17] इति । इह त्वङ्गन्यासकर्मणि[18] विनियोगः[19] । अनया विद्यया देवि[20] रक्षामात्मनि कारयेदिति । अनयोद्धृतया[21] विद्यया हे देवि[22] ! आत्मरक्षां कारयेदित्यर्थः[23] । आत्मनीत्यनेन[24] तृतीयबीजे शिवान्वितत्वं सूचितम् ॥ १००–१०४ ॥

---

१. धिनी–वाग. से., धका–ब., धकी–सक. ख. । २. देवि–अ. । ३. युक्–सक. । ४. बिन्दु–सघ. । ५. युक्तम्–वाग. से.अ., युक्ता–ब. सघ. । ६. तदा–वाग. से. सख. घ., देव्या–सक. । ७. 'महा' नास्ति–क. ख. । ८. 'महाविद्या····प्रदत्वात्' नास्ति–क. ख. । ९. मूल–क. । १०. दिति–क. ख. । ११. योगेन–क., योऽन्येन–ग. घ. । १२. 'हे गौरि····भावे' नास्ति–ख. । १३. त्मस्वभावे–क. । १४. मूलकुलवि–ख. ग. घ. । १५. कुलविद्येयम् । महेशानीति । इयं विद्या कुलधनं योगिनां मूलभण्डारम्–ख. ङ. ज. । १६. साधकीयं–ख. ङ. ज. । १७. 'ऐं क्लीं सौः इति' नास्ति–क. ग. घ. छ. । १८. त्वस्याङ्ग–ख. घ. ङ. । १९. योग इति भावः–क. ग. घ. छ. । २०. गौरि–घ. । २१. या तूद्धृ–क. ग. छ. । २२. गौरि–ख. घ. ङ. ज. । २३. येत् सम्प्रदायेनेत्यर्थः–ख. घ. ङ. ज. । २४. नेनैव–ख. घ. ङ. ज. ।

**पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितम् ।। १०५ ।।**
**त्रैलोक्यमोहनीयं सा विद्या चक्रासनस्थिता ।**

---

**एतस्या एवे**त्यादिपञ्चभिरासनचतुष्टयमाह । **एतस्या** मूलविद्यायाः । **आदिपदे** आदिस्थाने । **शिवो** हकारः । **माया** ईकारः । **अग्नी** रेफः । अयमर्थः—अस्या विद्याया वाग्भवस्थाने भुवनेश्वरीबीजं युक्त्वा [1]स्थिता यदा, तदेय**मात्मासनरूपिणी** विद्येति । आत्मनः स्वस्य साधकस्य ।।१०४-१०५।।

[2]**पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितमिति । विद्यादिमस्य** मूलविद्याया आदिभूतस्य वाग्भवस्य । **ऊर्ध्वम्** उपरि । **अन्तं** सकारः । कथं

---

एतस्या एव विद्यायाः शिवमायाग्निबिन्दुमद् बीजमादिपदे युक्तमिति । एतस्या आत्मरक्षाविद्यायाः । आदिपदे आदिस्थाने स्थितं वाग्भवमुद्वास्य बीजान्तरं प्रक्षिपेत् । शिवो हकारः । माया ईकारः । अग्नी रेफः । बिन्दुरनुस्वारः । एतेषां चतुर्णां समुदायरूपं बीजं यदा प्रक्षिप्तं भवति तदा आत्मासनरूपिणी भवतीयं विद्येत्यर्थः । ह्रीं क्लीं सौः इति ॥ १०४-१०५ ॥

पुनर्विद्याद्यमित्यादि । पुनरपि विद्याद्यम् आत्मरक्षाविद्याया आदिस्थाने स्थितं वाग्भवमेव चतुष्कलमुद्वास्य प्रक्षिपेदित्यर्थः । अस्योर्ध्वेऽनन्तरं तु शिवान्वितमिति । अस्योऽर्ध्वे अस्य बीजत्रयस्योर्ध्वे । अनन्तरम् आदिमध्यान्तरम् । प्रत्येकं बीजानामासन-

---

१. दिमासार्ध–ब., द्यम–अ., वाक. ख. ग. । २. र्ध्वेऽनन्तरं तु–अ., मन्तरं तु–वाग. से. मन्तरन्तं–वाक. ख., मन्तरन्तः–सख. ग., मन्त्यमत्र–ब., मन्त्रमन्तः–सघ. । ३. हिनी या–ब., हिनीयं–सग. । ४. सने–ब. सक. । ५. कुल–ग. । ६. 'आदि' नास्ति–क. । ७. जयुक्ता–क. ख. । ८. 'आत्मनः····कस्य' नास्ति–ख. । ९. 'प्र' नास्ति–क. ग. छ. । १०. 'ह्रीं क्लीं सौः इति' नास्ति–क. ग. घ. छ. । ११. 'पुनरपि विद्याद्यम्' नास्ति–क. ग. घ. छ. । १२. 'अस्योर्ध्वे' नास्ति–क. ग. छ. । १३. न्तम्–ख. ङ. ज. ।

1. स्थिता यदेति । यदा इयं विद्या स्थितेत्यर्थः ।
2. "केचित्तु विद्याया बालाया आद्यं बीजमस्योर्ध्वं द्वितीयं बीजम् । ····अन्ये तु पुनर्विद्यादिमस्योर्ध्वमन्तमन्तं शिवान्वितमिति पठित्वा विद्यादिमस्य मूलविद्याया आदिभूतस्य वाग्भवस्योर्ध्वमन्तं सकारं कुर्यात् । हंसमन्त्रे सकारस्यान्त्यत्वाभिप्रायेणेह तथा निर्देशः । अन्तं तृतीयं बीजं तु शिवान्वितं कुर्यादिति व्याचख्युः" (से. पृ. ६०) ।

**पुनराद्यां महाविद्यां शिवचन्द्रसमन्विताम् ॥ १०६ ॥**
**कृत्वा कामप्रदा[1] विद्या[2] सर्वमन्त्रासनस्थिता[3] ।**

सकारस्यान्तत्वमिति चेत् ? उच्यते—अत्र वक्तुः शिवशक्तिबीजे बुद्धिस्थे । इह सर्वत्र विद्यासु हंसात्मनोः शिवशक्तिबीजयोः सन्निहितत्वात्तयोरादिबीजं हकारः, अन्तबीजं सकारः । अत्रान्तबीजं सकारमादौ[4] विनियुङ्क्ते, आदिबीजं हकारमन्ते विनियुङ्क्त[5] इति । आदिबीजस्योपरि अन्तं सकारं कुर्यादिति शेषः । अन्तं तृतीयबीजम् । शिवान्वितं हकारान्वितम् । [6]**चक्रासनस्थिता** चक्रस्यासनतया स्थिता ॥ १०५-१०६ ॥

**पुनराद्यामिति** । [1]आद्यां कुलविद्याम् । [7]**महाविद्यां** सर्वविद्याकन्द-भूमिम्[8] । **शिवचन्द्रसमन्विताम्** । **शिवचन्द्रौ** हकारसकारौ । **सर्वमन्त्रासन-स्थिता** । सर्वेषां मन्त्राणामासनतया स्थिता । शिवचन्द्रसमन्वितामित्य-

---

स्थाने शिवान्वितं[9] शिवो हकारस्तेनान्वितं संबद्धं कुर्यादित्यर्थः । [10]हैं ह्क्लीं ह्सौः । त्रैलोक्यमोहनीयं[11] सा विद्या चक्रासनस्थितेति । अस्या विद्याया नाम त्रैलोक्यमोहनीति[11] न केवलं नामतः, अर्थतोऽपि त्रैलोक्यमोहनीति[12] त्रैलोक्यं मोहयतीति, योगिन्या-वृतेत्यर्थः । [13]अस्या विद्यायाश्चक्रासने[14]ऽत्र विनियोगः ॥ १०५–१०६ ॥

पुनराद्यां महाविद्यां शिवचन्द्रसमन्वितां कृत्वेति । पुनरप्याद्यां विद्याम् । आत्म-रक्षाविद्यामित्यर्थः[15] । शिवो हकारः । चन्द्रः सकारः । प्रतिबीजमादिस्थाने तदुभया-

---

१. दां–सक. ग. घ. । २. नित्यां–सग., विद्यां–सक. घ. । ३. ताम्–सक. ग. घ. । ४. मकारादौ–ग. घ. । ५. क्तमिति । आदि–क. ख. । ६. 'चक्रा....राद्यामिति' नास्ति–ख. । ७. 'महाविद्यां' नास्ति–क. घ. । ८. भूताम्–ख., भूमिमिति–ग. । ९. 'अन्वितं' नास्ति–क. ग. छ. । १०. 'हैं ह्क्लीं ह्सौः' नास्ति–क. ग. घ. छ. । ११. हि–ख. घ. ङ. । १२. क्यं मोहयतीति त्रैलोक्यमोहनं–ख. ङ. ज. । १३. 'अस्या विद्यायाः' नास्ति–ख. ङ. ज. । १४. अत्र विनियोगोऽपि चक्रासने–क. ग. घ. छ. । १५. मिति–ख. ङ. ज. ।

1. "मतान्तरयोस्त्वाद्यपदेन बालैव कथं परामृश्यत इति चिन्त्यम्" (से. पृ. ६१) ।

**देव्यात्मासनविद्यायाः पूर्वोक्तया यथाक्रमम् ॥ १०७ ॥**
**अन्तदेशे[1] तोयबिन्दुशक्रशक्तीरनुक्रमात् ।**
**संयोज्य परमेशानि साकम[2]र्धेन्दुना[3] ततः ॥ १०८ ॥**
**केवलाक्षरभेदेन[4] साध्यसिद्धासनस्थिता[5] ।**

---

विशेषोक्तेऽपि तृतीयबीजस्य पूर्वमेव[6] तत्सम्बन्धस्य[7] विद्यमानत्वात् शिवचन्द्रसमन्वितत्वं पूर्वबीजयोरेवेति तात्पर्यम् ॥ १०६-१०७ ॥

**देव्यात्मासनेति । देव्यात्मासनविद्याया**[8] देवीरूपतामापन्नस्य[9] साधकस्यासनतया[10] स्थितायाः । **अन्तदेशे**[11] तृतीयबीजस्य स्थाने । **तोयबिन्दुशक्रशक्तीरनुक्रमात्** । **तोयं** वकारः । **शक्रो** लकारः । [1]**शक्ति**रेकारः, योन्याकारत्वात् । **केवलाक्षरभेदेन** तृतीयस्थानप्राप्ताक्षरमात्रेण[12] । **साध्यसिद्धासनस्थिता**[13]

---

न्वितं कुर्यादितीयं[14] विद्या कामप्रदा भवति । न[15] केवलमैश्वर्यार्थे, अत्रास्या विद्यायाः सर्वमन्त्रासने[16] विनियोगः । ह्सैं[17] ह्स्क्लीं ह्स्सौः इति ॥ १०६–१०७ ॥

देव्यात्मासनविद्यायाः पूर्वोक्तया यथाक्रममिति । पूर्वोक्तया देव्या आत्मासनविद्याया बीजद्वयं यथाक्रमेण स्थितं भवतु[18] । अन्तदेशे तार्तीयबीजस्थाने पूर्वस्थितबीजं विसृज्य बीजान्तरं प्रक्षेपणीयम् । तोयबिन्दुशक्रशक्तीरनुक्रमादिति । तोयो वकारः । बिन्दुरनुस्वारः । शक्रो लकारः । शक्तिरेकारः । एतान् यथाक्रमं[19] संयोज्य गुरूपदेशपूर्वकम् । साकमर्धेन्दुनादत इति । अर्धेन्दुनादतः[20] कलानादाभ्यामुपेतं कुर्यात् । केवलाक्षर-

---

१. अन्तर्देशे–सक. ख. । २. सार्ध–सख. ग. । ३. नादतः–अ. से. सक., संयुतम्–सख. । ४. योगेन–ब. । ५. विद्या साध्यासनस्थिता–वाक. ख., विद्या सिद्धा–अ. । ६. मेवं-ग. घ. । ७. स्यावि–क. ख. । ८. 'देव्यात्मा····स्थितायाः' नास्ति–ख. । ९. पमा–क. ख. । १०. 'साधकस्य' नास्ति–क. ख. । ११. देंशे–क. ख. ग. । १२. भेदेन–ख. । १३. 'साध्य····सिद्धा इति' नास्ति–ख. । १४. यमपि–घ. । १५. केवलमैश्वर्यप्रदा भवतीति सर्व–ख. ङ. ज., कैवलमैश्वयर्थिऽस्या अपि विद्यायाः सर्व–घ. । १६. सनस्थाने–क. ग. घ. छ. । १७. 'ह्सैं हस्क्लीं ह्स्सौः इति' नास्ति–क. ग. घ. छ. । १८. भवति–क. ख. ग. छ., भवेत्–ज. । १९. क्रमेण–क. ग. छ. । २०. नादकला–घ. ।

1, शक्तिश्चतुर्थस्वरः । तथा च ह्रीं क्लीं ब्लीं इत्युद्धारो वामकेश्वरीमतविवरणे ।

**हंसबीजसमारूढामाद्यामग्न्यासनस्थिताम्[१][२][३] ।। १०९ ।।**

**सर्वार्थसाधिका[४] विद्या[५] देव्यावाहनकर्मणि ।**

तत्तन्मन्त्रप्रतिपाद्यानां साध्यानां[६] सिद्धानां च देवतानामासनतया स्थिता । देवतानां तु[७] द्वयी स्थितिः—कर्मसिद्धा आजानसिद्धा[८] इति ।। १०७-१०९ ।।

देव्यावाहनविद्यामाह—**हंसेति** । **आद्यां**[९] मूलविद्याम् । **हंसबीजसमारूढाम्** । [1]हंसशब्देनानच्कौ हकारसकारौ लक्ष्येते । **अग्न्यासनस्थितां** रेफासनस्थिताम्, कुर्यादिति शेषः । **सर्वार्थसाधिका**[१०] पुरुषार्थचतुष्टयकरी । इयं **विद्या** देवीसन्निधिकरीत्यभिप्रायः । एतद्विद्योद्धारेऽभियुक्तोक्तिः[११]—

---

भेदेन विद्या सिद्धासनस्थितेति । केवलमन्तदेशस्थबीजव्यत्यासमात्रेण[१२] पूर्वोक्तात्मासनविद्यैव साध्यसिद्धासनस्थिता भवतीत्यर्थः । ह्रीं क्लीं ब्लें[१३] ।। १०७-१०९ ।।

हंसबीजसमारूढामाद्यामग्न्यासनस्थितामिति । हंसबीजं[१४] हकारसकारौ । तदारूढामाद्यां विद्याम् आत्मरक्षाविद्याम् । अग्न्यासनस्थितां रेफसहितां कुर्यादिति यावत् । सर्वार्थसाधको विद्या देव्यावाहनकर्मणीति । इयमुद्धृता[१५] विद्या धर्मार्थकाममोक्षाणां चतुष्टयानां साधकी पञ्चकूटात्मिका । अस्या विनियोगो देव्यावाहनकर्मणीत्यर्थः । ह्स्रैं[१६] ह्स्क्ल्रीं ह्स्रौः ।। १०९-११० ।।

---

१. सोम–वाक. ख. । २. रूढां मायामात्मा–ब., रूपां–सघ. । ३. स्थिता–सख. ग. । ४. साधकी–वाक. ख. अ., साधिकीं–ब. सघ., साधिकां–सख. । ५. विद्यां–ब. सख. घ. । ६. 'साध्यानां' नास्ति–क. ख. । ७. 'तु' नास्ति–क. ख. । ८. पूजासन–क. ख. । ९. 'आद्यां मूलविद्यां' नास्ति–क. ख. । १०. साधनी–क. ख. । ११. 'एतद्विद्योद्धारे' नास्ति–क. । १२. विन्यास–क. ख. ग. ङ. छ. ज. । १३. 'ह्रीं क्लीं ब्लें' नास्ति–ग. घ. छ. ज. । १४. बीजौ–क. ख. ग. छ. । १५. 'इयमुद्धृता····कर्मणीत्यर्थः' इत्यस्य स्थाने 'एषा धर्मादिसाधकी पञ्चकूटात्मिकी विद्या । अत्रावाहनकर्मणि विनियोगः' इति पाठः–ख. ङ. ज. । १६. 'ह्स्रैं ह्स्क्ल्रीं ह्स्रौः' नास्ति–क. ग. घ. छ. ज. ।

1. "प्राञ्चस्तु—हंसमन्त्रघटकं व्यञ्जनद्वयमित्येव हंसपदार्थः । तेन हकारसकारौ द्वावपि सिद्धचत इत्याहुः । ये तु हंसेति स्वरूपमेव न बीजनामेति व्याचक्षते····। ऋजवस्तु ईदृशं क्रमं मूलानुक्तं मन्यमानास्तदर्थं सम्प्रदायमेव शरणीकुर्वन्ति" (से. पृ. ६१) ।

**एवमेता[1] महाविद्या देवि[2] सर्वार्थसिद्धिदा[3]: ।। ११० ।।**
**महात्रिपुरसुन्दर्या मूलविद्यां शृणु प्रिये ।**

---

[1]व्योमेन्दुवह्न्यधरबिन्दुभिरेकमन्यद्रक्ता[4]च्छकेन्द्रशिखिभिः सरमार्धचन्द्रैः[5] ।
अन्यद् द्युशीतकरपावकमन्वमन्तै[6]र्बीजैरमीभिरुदिता त्रिपुरेति विद्या ।। इति ।
(प्र० सा० ९।३ )

करशुद्ध्याद्या[7]वाहनान्ता उद्धृता[8] विद्याः स्तौति—**एवमिति । ऋजुविमर्शिन्यां** विद्या न लिख्यन्ते, **सुभगोदये**[9] लिखितत्वात् । **ऋजुविमर्शिन्यां** तु ग्रन्थविवरणं क्रियते[10] । इदमप्युक्तमस्माभिः—

---

एवमेता महाविद्या देवि सर्वार्थसिद्धिदा इति । एवमुद्धृता विद्याः[11] करशुद्ध्याद्यावाहनान्तेषु[12] कर्मसु विनियुक्ताः सर्वार्थसिद्धिदाः[13] सकलपुरुषार्थसाधिका इत्यर्थः[14] । तत्र प्रथमोद्धृता करशुद्धिकरी विद्या प्राधान्येन विद्यैश्वर्यप्रदा । तत[15] उद्धृता अङ्गन्यासविद्या आत्मरक्षाकर्मणि विनियुक्ता द्वितीया[16] । तृतीयविद्या च साधयति यत्किञ्चित्तल्लोके नास्ति, तथा देव्यात्मासनकर्मणि ( विनियुक्ता ) । चतुर्थी विद्या समस्तसम्पदमाकर्षयति, तथा चक्रासनकर्मणि विनियुक्ता । पञ्चमी विद्या[17] त्रैलोक्यं मोहयति[18], तथा सर्वमन्त्रासनकर्मणि स्थिता । षष्ठी विद्या[19] प्राधान्येन[20] समग्रैश्वर्यप्रदा, तथा साध्य-

---

१. मेषा–सग. । २. देव्याः–सक. । ३. दा–सग. । ४. च्छाक्ताच्छिवेन्द्र–क. ख. । ५. मार्य–दी. । ६. मन्त्यमन्त्यै–दी., मन्यमन्तैः–क.ख. । ७. द्ध्यावा–क. ख. । ८. 'उद्धृता···शिन्यां तु' नास्ति–घ. । ९. दयोक्तत्वात्–क. ख. । १०. 'क्रियते' नास्ति–क. ख. । ११. 'विद्याः' नास्ति–ख. ङ. ज. । १२. नान्तकर्मणि–क. ग. घ. छ. । १३. सिद्धिदाः–ख. ङ. ज. । १४. 'इत्यर्थः' नास्ति–ख.ङ. ज. । १५. तदनन्तरोद्धृता विद्या–क. ग. घ. छ. । १६. 'द्वितीया···देव्यासनकर्मणि' नास्ति–क. ग. छ. । १७. 'विद्या' नास्ति–ख. ङ. ज. । १८. तीत्यर्थः–क. ग. घ. छ. । १९. 'विद्या' नास्ति–ख. ङ. ज. । २०. न्येनैव–क. ग. छ. ।

1. व्योमेति । व्योम हकारः । इन्दुः शुक्लः सकारः । वह्नी रेफः । अधर ऐकारः । बिन्दुरनुस्वारः । एतैः सम्पिण्डितैराद्यबीजम् । रक्तं हकारः । अच्छः सकारः । क इति स्वरूपम् । इन्द्रो लकारः । शिखी रेफः । रमारःकारः । (?) (रमा ईकारः—इति तु विवरणदीपिका, पृ. ५७१) । अर्धचन्द्रो बिन्दुः । एतैः सम्पिण्डितैर्द्वितीयं बीजम् । द्युर्हकारः ।

**मादनं तदधः शक्तिस्त[1]दधो बिन्दुमालिनी ।।१११।।**
**ऐन्द्रमाकाशबीजस्थमधस्ताज्ज्वलनाक्षरम् ।**

पूर्वं विद्यां गुरोर्लब्ध्वा मूलमृजुविमर्शिनीम् ।
महासारं सुकृतिनः पश्यन्तु सुभगोदयम् ।। इति ।। ११० ।।

**मादन**मित्यादिसप्तकेन मूलविद्योद्धारः क्रियते । एतद्विषयेऽ**भियुक्त-वचनम्**—

अनेककोटिभेदैस्तु[2] गदितं त्रैपुरं महः ।
[3]तन्मध्ये तु[4] परा दीक्षा महात्रिपुरसुन्दरी ।। इति,

सिद्धासनकर्मणि विनियुक्ता । स[5]प्तमी विद्या किं किं न साधयेत्, सर्वमपि साधये-दित्यर्थः, तथा देव्यावाहनकर्मणि स्थिता पञ्चकूटसं(ज्ञाष्टमी ? ज्ञा सप्तमी) म[6]हाविद्या सर्वार्थसाधकीत्यर्थः । एवं स्वातन्त्र्येण सर्वार्थसाधक्यो विद्या यस्या मूलविद्याया अङ्ग-भूतास्तस्याः स[7]कलपुरुषार्थसाधनसामर्थ्यमस्तीति किमु वक्तव्यम् । तदुक्तं संकेतपद्धत्याम्—

आसामष्टवि[8]धानां तु विद्यानां पृथग् नामग्रहणं कृ[9]तम् । तथा—

त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीर्मालिनी च सिद्धाम्बा त्वष्टमी त्रिपुराम्बिका ।।
त्रिपुरा प्रथमा नित्या द्वितीया त्रिपुरेश्वरी ।
[10]सुन्दरीति तृतीया स्याच्चतुर्थी पुरवासिनी ।।
पञ्चमी त्रिपुराश्रीः स्यात् षष्ठी त्रिपुरमालिनी ।
[11]सप्तमी त्रिपुरासिद्धा त्वष्टमी त्रिपुराम्बिका ।। इति ।। ११० ।।

१. स्तदन्तर्बि–अ. ब. सक. ख. ग. घ. । २. भोगि–घ. । ३. तत्र मध्ये–घ. चि. । ४. महा–ख. । ५. सप्तमस्थाने स्थिता–ख. घ. ङ. ज. । ६. 'महाविद्या' नास्ति–ख. । ७. सकलार्थप्रदान–ख. ङ. ज. । ८. 'विधानां तु' नास्ति–ग. । ९. 'कृतम् । तथा' इत्यस्य स्थाने 'यथा' इत्येव पाठः–ख. ङ. ज. । १०. सुन्दरी च–क. ग. छ. । ११. एषा पङ्क्तिर्नास्ति–ख. ङ. ज. ।

शीतकरः सकारः । पावको रेफः । मनुरौकारः । अमन्त इति अं अनुस्वारः । अन्तो विसर्गः । बिन्दुविसर्गयुक्तमित्यर्थः । (अमन्तो विसर्जनीयः—इति तु विवरणदीपिका, पृ० ५७१) । एभिः सम्पिण्डितैस्तृतीयबीजम् । एभिस्त्रिभिर्बीजैः संयुक्ता त्रिपुरा नाम विद्या (प्र. सं. ५७-५८ पत्रयोः) ।

प्रोत्कीलनं विधायास्या देवदेवेन दर्शितम्[१] ।
चतुर्विंशतिसाहस्रे[२] रससारकसंज्ञ(कः?के)[३] ।। इति च[४] ।

अत्र लोपामुद्राप्रस्थानमाश्रित्य[५] निष्कीलविद्यानुसारेण सत्सम्प्रदायान्वयेन[६] व्याख्या लिख्यते । अस्याः सत्सम्प्रदायान्वितत्वं[७] नाम ओड्याणकाम[८]-रूपजालन्धरपूर्णगिरिपीठचतुष्टयाश्रय[९]श्रीमहात्रिपुरसुन्दरीकामेश्वरीवज्रेश्वरी-भगमालिनीदेवीस्वरूपविमर्शक[१०]चर्यानाथोड्डी[११]शनाथषष्ठी[१२]शनाथमित्रीशनाथलोपा-मुद्रागस्त्यकङ्काल[१३]तापसधर्माचार्यमुक्तकेशी[१४]श्रीमद्दीपकनाथदिव्यसिद्ध[१५]क्रमान्वित-त्वात्, दीपकाचार्यौ[१६]रसपुत्रसङ्केतपुञ्जप्रकाशकजिष्णुदेवप्रभृतिमहायोगिवर्यमान-वौघपरिगृहीतत्वाच्च । इयं[१७] मध्यमबीजप्रधाना विद्या, बीजत्रयेऽपि कामराज-बीजसंयोगात् । मादनं [1]मदयति हर्षयतीति मादनः प्राणः शिवरूपः । सति

---

[१८]अथेदानीं मूलविद्यामुद्धर्तुमुपक्रमते—महात्रिपुरसुन्दर्या मूलविद्यां शृणु प्रिये ! इति । मादनं तदधः शक्तिस्तदन्तर्बिन्दु[१९]मालिनीति । मादनं क्रोधीशः । तस्याधोदेशे शक्ति-र्झिण्टीशः । तदधस्तस्याधोदेशे बिन्दुमालिनी त्रिमूर्तीशः । ऐन्द्रमाकाशबीजस्थमिति । ऐन्द्रं पिनाकीशः । आकाशबीजस्थमिति लकुलीशः[२०] । लकारं हकारोपरि स्थितं यथा भवति तथा कुर्यादित्यर्थः । अधस्ताज्ज्वलनाक्षरमिति । आकाशबीजस्याधःस्थाने

---

१. ता—ग. घ. । २. साहस्रैः—क. ख. घ. । ३. ससाररससंज्ञितः—क., रसारकमसंज्ञितम्-ख. । ४. 'च' नास्ति—क. ख. । ५. प्रसार—क. । ६. दायत्वेन येन—ग. । ७. 'सत्' नास्ति—क., सत्सम्प्रदायत्वं कथमिति—ख., सत्सम्प्रदायत्वं कथम्—ग. घ. । ८. उड्याण—क. । ९. 'आश्रय' नास्ति—क., आश्रया—ख. । १०. र्शन—क. । ११. थोड्डुना—ग. घ. । १२. षष्ठना—ग. घ. । १३. कालतापन—क. । १४. शीश्वरश्रीदीपकला—क. । १५. सैद्ध-ग. घ. । १६. दीपकला—क. । १७. इयं च—क. । १८. 'अथेदानीं····वाग्भवसंज्ञकं भवतीति' इत्यस्य स्थाने 'मादनं क्रोधीशः, शक्तिः मुण्डीशः, बिन्दुमालिनी त्रिमूर्तीशः, ऐन्द्रं पिनाकीशः, आकाशबीजस्थमिति लकुलीशः, अधस्ताज्ज्वलनाक्षरमिति भुजङ्गेशः, मायाबीजं त्रिमूर्तीशः, बिन्दुरनुस्वारः, ईश्वरो नादः । एतद्वाग्भवसंज्ञम्' इति पाठः—ख. ङ. ज. । १९. 'स्तदधो बिन्दु' इति तु टीकानुगुणः पाठः । २०. 'लकुलीशः' नास्ति—क. ग. छ. ।

1. ''ऋजुविमर्शिन्यामपि—(मा?म)दयति हर्षयतीति मादनः प्राणो हकारः । प्राणस्यैव वृत्त्यन्तरेऽपाने प्राणो वाग्रसोऽपानो मदन इति श्रुतेश्च । तस्य हकारस्याधः शक्तिः पूर्वोच्चार्यं बीजं सकारः । बिन्दुमालिनीशब्देन ककार एव गृह्यते सम्प्रदायादिति व्याख्यातम्'' (से. पृ. ६५) ।

**मायाबिन्द्वीश्वरयुता[1] सर्वोपरि नियोजिता[2] ॥११२॥**
**अयं स वाग्भवो देवि वागीशत्वप्रवर्तकः ।**

हि[3] प्राणे हर्षे[4] सर्वे प्रहृष्यन्ति[5] नासति[6]। प्राणस्य[7] वृत्त्यन्तरात्मन्यपाने मदशब्दः श्रुतौ दृष्टः—"प्राणो वै गृत्सोऽपानो मदः" ( ऐ० आ० २।२।१ ) इति। तत्संबद्धं[8] बीजं मादनम्। स च महाप्राणरूपो हकारः, शिवबीजमित्यर्थः। अथवा माद्यतीति[9] शक्त्युपभोक्तुः शिवस्य मादन[10] इति नाम। ननु[11] शास्त्रेऽत्र[12] सर्वत्र मादनशब्दः ककारवाचकः, इह कथमन्यथेति। उच्यते। सत्यम्। किन्त्विहत्यो मादनशब्दो हकारमेव गृह्णाति। कथम्? विद्याया निष्कील-त्वात् सत्सम्प्रदायान्वितत्वादतिरहस्यत्वाच्च, आगमान्तरे तथा व्याख्या-तत्वाच्च। सत्सम्प्रदायविहीना पुनरत्रापि[13] स्वोत्प्रेक्षया तथा मन्यन्त इत्यस्म-दुक्तमेव समञ्जसम्। **तदधः** तस्य हकारस्याधः। **शक्तिः** अमृतबीजम्, सकार इत्यर्थः। मादनशक्तिशब्दाभ्यामाधात्राधाररूपं[14][15] शिवशक्त्यात्मकं हंसबीजमुद्धृतमिति यावत्। **तदधः** तस्य सकारस्याधःप्रदेशे। **बिन्दुमालिनी** तुण्डबीजम्[16], ककार इत्यर्थः। तदुक्तं[17] **रससारसंग्रहे**—

ज्वलनाक्षरं भुजङ्गीशः। माया[18] त्रिमूर्तीशः। बिन्दुरनुस्वारः। ईश्वर इति नादः। पूर्वोद्धृतबीजवरस्य शिरःस्थाने बिन्दुनादान्वितं यथा भवति तथा नियोजितं बीजं वाग्भवसंज्ञकं भवतीति। अयं स वाग्भवो देवि वागीशत्वप्रवर्तक इति। अयं स वाग्भव इति[19] प्रसिद्धो वागीशत्वं प्रवर्तयतीति[20] भावः॥ १११-११३॥

---

१. युतं-वाग. से. सक. ग.। २. जितम्-वाग. अ. से. सक. ग., जयेत्-सख.। ३. 'हि' नास्ति-क. ख. घ.। ४. 'हर्षे' नास्ति-क. ख. घ.। ५. 'प्र' नास्ति-क. ख. घ.। ६. 'नासति' नास्ति-क. ग.। ७. प्राणवृ-क.। ८. बन्धि-क. ख.। ९. मामत्तीति-ग. घ.। १०. नमिति-क. ख. ग.। ११. 'ननु' नास्ति-क., 'ननु....समञ्जसम्' नास्ति-ख.। १२. 'अत्र सर्वत्र' नास्ति-क., 'सर्वत्र' नास्ति-ग.। १३. पुनरपि-क.। १४. रूपा-ख.। १५. भ्यामत्राधार-क. ग.। १६. मदन-क.। १७. मन्त्र-क.। १८. मायाबीजं-घ.। १९. 'अयं स वाग्भव इति प्रसिद्धो' नास्ति-ख. ङ. ज.। २०. यतीत्यर्थः-ख. घ. ङ. ज.।

विद्यां तु नवमीं सम्यक् प्रवक्ष्यामि समासतः ।
कीलिता[1] या रहस्यत्वान्मादनेंत्यादितः[2] क्रमात् ।।
मादनः[3] प्राणरूपस्तु[4] विकासः शिव[5] उच्यते ।
सकारस्त्वपरो ज्ञेयः संकोचः शक्तिरूपवान्[6] ।।
संकोचः परमा शक्तिर्विकासः[7] परमः शिवः ।
संकोचश्च विकासश्च हस[8] इत्यक्षरद्वयम् ।।
तयोराधाररूपेण[9] कर्तनं[10] बिन्दुमालिनी ।
प्राणो बिन्दुरिह[11] प्रोक्तः साहचर्यादपानके ।।
अधो[12] धरेन्द्रमाकाशं[13] ज्वलनं च[14] तयोरधः ।
मायाबिन्दूर्ध्वगौ[15] चैव वाग्भवोऽसावकीलितः[16] ।। इति ।

**श्रीहंसपारमेश्वरेऽपि[17]—**

मा शक्तिस्तु समाख्याता दनं स्वीकारकृच्छिवः[18] ।
स[19] वै मादन इत्युक्तो हकारः शिवसंज्ञकः ।।
तत्र[20] शक्तिर्यथार्थत्वे[21] सकारत्वं[22] विधीयते ।
शिवे[23] हकार इत्युक्तः सकारे[24] शक्तिरव्यया ।।
बिन्दुमालिनिकार्णस्य पर्यायं परमेश्वरि[25] ।
शक्रव्योमानलार्णा[26] ये मायाबिन्द्वीश्वरादयः ।।
यथा स्थिताश्च[27] तत्तथ्या वाग्भवः[28] स निराविलः ।
द्वावन्यौ कामशक्त्याख्यौ वर्णौ[29] निष्कीलितात्मकौ ।। इति ।

---

१. कीलितांति–क., ललिताया महादेव्या–चि. । २. त्यादिभिः–क. । ३. मादनं–क. ख. । ४. पं तु–ख. ग. घ. । ५. परमः शिवः–क., जीव उच्यते–ख. ग. । ६. रूपतः–चि. । ७. 'शक्तिर्वि' अत्रैव कमातृकासमाप्तिः । ८. हंस–चि. । ९. रूपे तु–ख. । १०. कर्तव्यं–चि. । ११. रिति–ख. । १२. अथो–ख. । १३. कार–ख. । १४. तु–चि. । १५. र्ध्वगा–चि. । १६. सावकीलकः–ग., नाम कीर्तितः–चि. । १७. पर–चि., सारेऽपि–ख. । १८. रकः शिवः–ख., रतः शिवः–ग. घ. । १९. सर्वैः–ख., सैव–चि. २०. तस्य–चि. । २१. थोर्ध्व–चि. । २२. रस्य–ग. घ., रः स–चि. । २३. शिवो–ख. ग. चि. दी. । २४. सकारः–चि. दी. । २५. श्वरे–ग. घ., श्वरम्–चि. । २६. र्णाश्च–चि. । २७. नि तत्तथ्यं–ख. ग. घ. । २८. स्यान्नि–ख., वं सनिलानिलः–चि. । २९. निष्कलकात्मकौ–चि. ।

**शिवबीजं त्रिधा युक्त्वा[1] सृष्टिस्थितिलयक्रमैः[2] ।।११३।।**

**द्वयमाद्येन रहितमाद्याधो मदनाक्षरम् ।**

**पुनः स्थितिशिवाधस्तादिन्द्रबीजं नियोजयेत् ।।११४।।**

---

अत्र **त्रिपुरसुन्दरीकल्पलतायामभियुक्तोक्तिः—**

प्राणो देवीसखाद्यो दशशतनयनः शम्भुरग्निस्त्रिमूर्तिः[3]

शून्यश्चन्द्रार्धनादः[4] शिखिरुचिरुचिरो वाग्भवोऽसावकीलः ।। इति ।

**ऐन्द्रं** लकारः । **आकाशबीजं**[5] हकारः । **ज्वलनाक्षरं**[6] रेफः । **माया** ईकारः । **बिन्दीश्वरौ** [1]प्राग्वत् । **अयं स वाग्भव इति** । एवमुद्धृतोऽयं **वाग्भव इत्यर्थः**[7] ।। १११-११३।।

कामराजबीजमाह—**शिवबीजं त्रिधा युक्त्वेति** । **शिवबीजं** हकारः । अयमर्थः—सृष्टिस्थितिसंहारक्रम[8]बुद्ध्या हकारत्रयं[9] योजयेदिति । **द्वयमाद्येन रहितमिति** । स्थिति[10]संहारात्मकहकारद्वय[11]माद्येन सकारेण रहितमित्यर्थः ।

---

शिवबीजं त्रिधा कृत्वा सृष्टिस्थितिलयक्रमादिति[12] । शिवबीजं शवर्गचतुर्थमक्षरम् । तत्[13] सृष्टिस्थितिलयक्रमात् त्रिधा कुर्यादित्यर्थः । द्वयमाद्येन रहितमिति । स्थितिलयात्मकशिवाक्षरद्वयमाद्येन चन्द्रबीजेन[14] रहितं कुर्यादित्युक्तं[15] भवति । द्वयमाद्येन रहितमित्युक्त्या सृष्टिशिवस्याधःस्थाने आद्योपेतं कुर्यादिति "अप्रतिषिद्धमनुमतम्" इति न्यायेनार्थात् संपद्यते । अन्यच्च, समानबलयोरुभयोः प्रकृतयोः सतोस्तयोर्मध्येऽन्यतरे निषिद्धेऽन्यतरस्यापरिहार्यत्वं संपद्यते । आद्याधो मदनाक्षरमिति । आद्यस्य चन्द्रबीजस्य अधः[16]स्थाने द्वितीयवर्गाद्यमक्षरं प्रक्षिपेदित्यर्थः । पुनः स्थितिशिवाधस्तादिति । मदनाक्षर-

---

१. कृत्वा—वाग. अ. से. ब. सक. ख. ग. घ., युङ्क्त्वा—वाक. ख. । २. क्रमात्—वाग. अ. से. सक. । ३. शङ्करोऽग्नि—ख. । ४. दश्रुति—ख. । ५. 'आकाशबीजं हकारः' नास्ति—ख. । ६. ज्वलनो—ख. । ७. इति—ख. । ८. 'क्रम' नास्ति—ख. । ९. रमत्र—ख. । १०. 'स्थिति' नास्ति—घ. । ११. त्मकं हरमिति द्वय—ख. । १२. क्रमैरिति—ख. ङ. ज. । १३. तं—ख. घ. ङ. ज. । १४. 'चन्द्रबीजेन' नास्ति—ख.घ.ङ.ज. । १५. कुर्यात् । आद्यं चन्द्रस्तेन रहितं कुर्या—ख. ङ. ज. । १६. 'अधः' नास्ति—क. ग. छ. ।

1. प्राग्वदिति । "बिन्दुरनुस्वारः" (पृ. ९०, प. १३), "ईश्वरः कला" (पृ. ९४, प. ७) इति ।

**तथा लयशिवाधोऽपि ज्वलनं[1] च महेश्वरि ।**
**चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतम्[2] ।।११५।।**
**ऐवमेतन्महाबीजं कामराजं महोदयम् ।**

---

सामर्थ्यात् सृष्टिशिवाधःस्थाने[3] सकारबीजमस्तीति[4] प्राप्तम्, "अप्रतिषिद्ध[5]मनुमत(म्" इति) न्यायेन । एवमादितो हंसबीजं सिद्धम्[6] । **आद्याधो मदनाक्षरमिति** । आद्यस्य सकारस्याधःस्थाने[7] ककारबीजं[8] भवतीत्यर्थः[9] । **पुनः स्थितोति** । अस्यार्थः—मध्यमशिवबीजस्य[10] हकारस्याधःस्थाने,[11] इन्द्रबीजं लकारम्, **नियोजयेदिति । तथा लयेति । ज्वलनं** रेफः । अयमभिप्रायः—संहारशिवरूपतृतीयहकारस्याधःस्थाने[12] रेफं नियोजयेदिति । **चतुर्थस्वरबिन्दुखण्डेन्दवः** प्राग्वत्[13] । **एवमेतदिति** । एवमुद्धृतं कामराजबीजमित्यर्थः ।। ११३-११६ ।।

---

स्याधःस्थाने[14] स्थितो यः स्थितिशिवस्तस्याधस्ताद्[15][16] अधःस्थाने । इन्द्रबीजं नियोजयेत् । माधवीबीजं नियोजयेदित्यर्थः । तथा तेन प्रकारेण । पूतनाबीजस्याधःस्थाने स्थितो यो लयशिवः, ज्वलनार्णं महेश्वरीति,[17] तस्य लयशिवस्याधःस्थानेऽसृग्बीजं नियोजयेदित्यर्थः । चतुर्थस्वरसंयुक्तमिति । शान्त्यक्षरं नियोजयेदित्यर्थः । बिन्दुखण्डेन्दुलङ्कृतमिति । एवमुद्धृतं बीजं बिन्दुनादकलान्वितं[18] कुर्यादित्यर्थः । एवमेतन्महाबीजं कामराजं महोदयमिति । एवमुद्धृतं कामराजं न नामतः कामराजम्, अर्थतोऽपि महोदयं सकलपुरुषार्थसाधनमित्यर्थः ।। ११३-११६ ।।

---

१. ज्वलनार्णं—वाग. अ. से. सक. ख. ग. घ., ज्वलनं तु—ब. । २. न्दुसंयुतम्—से. । ३. शिवस्थाने—ख. । ४. सकारं—ग. । ५. अत्राप्रति—ग. । ६. संसि—घ. । ७. हका—ख. । ८. ककारं—ग. । ९. त्वित्य—ग. घ. । १०. मध्यशि—ख. । ११. रूपस्य—ख. । १२. शिवरूपस्या—ख. । १३. 'बीज' नास्ति—ख. । १४. घः स्थितो—क. ग. छ. । १५. 'स्थिति' नास्ति—क. ग. घ. छ. । १६. 'अधस्ताद्' नास्ति—ख. घ. ङ. ज. । १७. महेशानीति—ख. ङ. ज. । १८. 'बिन्दु' नास्ति—क. ग. छ. ।

1. प्राग्वदिति । "चतुर्थस्वर ईकारः" (पृ. ९१, प. ६), "बिन्दुरनुस्वारः" (पृ. ९०, प. १३), "अर्धेन्दुः कला" (पृ. ९०, प. १३) इति ।

**मायाबीजं महेशानि मादनं शक्रसंयुतम् ॥११६॥**
**चन्द्रबीजं केवलं तु[1] विनियोज्य[2] वरानने ।**
**त्यक्त्वा सृष्टिक्रमं देवि प्रागुद्धारक्रमेण[3] तु ॥११७॥**
**संहारक्रमयोगेन शक्तिबीजं समुद्धरेत् ।**

---

शक्तिबीजमाह—**मायेति । मायाबीजं** भुवनेश्वरीबीजम्[4]। हे[5] **महेशानि !** महेशानस्य महाभैरवस्य आत्मभूते । **मादनशक्रौ** [1]प्राग्वत् । **चन्द्रबीजं** सकारः । **केवलमिति** । शिवबीजसंयोगवर्जितमित्यर्थः । तुरवधारणे । **संहारक्रमयोगेनेति** । वाग्भवकामराजबीजवन्नानुलोमेन[6] शक्तिबीजोद्धारः, किन्तु विलोमेनेत्यर्थः । इह विद्यायां त्रिष्वपि[7] बीजेष्वन्तःस्थातृतीयमस्तीति[8],

---

मायाबीजं[9] महेशानीति । मायाबीजं भुवनेश्वरीबीजम्[10] । मादनं विसर्गान्तम् । [2]शक्रसंयुतम् । शक्रो मांसबीजम्[11], तत्समायुक्तं तदुपेतम् । कोऽर्थः ? भुवनेश्वरीबीजस्योर्ध्वे लकारं नियोजयेत् । लकारोपरि ककारं योजयेदित्यर्थः । चन्द्रबीजं केवलं त्विति । हकारवर्जितं केवलं चन्द्रबीजमेवादौ योजनीयं[12] हे वरानने ! इत्यर्थः । त्यक्त्वा सृष्टिक्रमं देवि प्रागुद्धारक्रमेण त्विति । कामराजबीजस्योद्धारावसरे यः क्रमोऽसौ सृष्टिक्रमस्तं सृष्टिक्रमं त्यक्त्वा तत्रैव शक्तिबीजोद्धारावसरे[13] संहारक्रम[14] इति मन्तव्यम् । न तत्रोच्चारक्रम[15] उक्तः । उच्चारक्रमस्तु पूर्ववत् । सृष्टिक्रम एवेत्यर्थः । पूर्वोद्धृतकामराजबीजे आदिमध्यहकारद्वयलोपात् तदेव शक्तिबीजं[16] भवतीत्यर्थः । इदमुद्धृतं तार्तीयं बीजं शक्तिसंज्ञं सकलसामर्थ्ययुक्तम् ।

---

१. च—सक. । २. योज्यं—वाक. ख. । ३. गुच्चार—वाक. ख. । ४. नेशीबी—ख. । ५. 'हे महेशानि····आत्मभूते' नास्ति ख. । ६. 'बीज' नास्ति—ख. । ७. यास्त्रि—ग. घ. । ८. 'इति' नास्ति—ग. घ. । ९. 'मायाबीजम्' इत्यत आरभ्य ४ पटल २४ श्लोकस्थ 'प्रथमबीजमभ्य' इति यावन्नास्ति—घ. । १०. भुवनेशी—ख. ङ. । ११. मादन—ख. । १२. नीयमिति—ख. ङ. ज. । १३. क्रमो—ख. ङ. ज. । १४. संहारक्रमेणैवोद्धारक्रम—ख. ङ. ज. । १५. तूच्चार—ख. ङ. ज. । १६. शिवशक्ति—ख. ङ. ।

1. प्राग्वदिति । "मदनः कामः····शक्रो लकारः" ( पृ० १००, प० ७-८ ) इति ।
2. "ये तु शक्रसंयुतमिति मायाबीजविशेषणत्वेन व्याचक्षते····" ( से. पृ० ६७ ) ।

सम्प्रदायस्य कश्मीरोद्भूतत्वात्, योगिनीप्रधानतया विद्यायाः प्राकृतभाषाविशेषत्वाच्च यथासम्प्रदायं तस्य व्यवहार इत्युपदेशः। इयं विद्या सुभगोदयेऽपि न लिखिता, अतिरहस्यत्वात् ॥ ११६-११८ ॥

---

अत्र लोपामुद्रामते वाग्भवोद्धारे स्वागमसम्प्रदायविशेषोऽस्तीति[1][2]। तद्यथा—मादनमिति मादयतीति[3] मादनमिति व्युत्पत्त्या शक्त्युपभोक्तुः शिवस्याभिधानम्[4]। तदधः शक्तिरिति मानसस्याभिधानम्[5]। तदन्तर्बिन्दुमालिनीति तुण्डस्याभिधानम्। ऐन्द्रमाकाशबीजस्थमित्यादि यथापूर्वं द्रष्टव्यम्। तदुक्तं हंसपारमेश्वरे रससारसंग्रहे च—

विद्यां तु नवमीं सम्यक् प्रवक्ष्यामि समासतः।
कीलिता[6] या रहस्यत्वान्मादनेत्यादितः क्रमात् ॥
मादनः[7] प्राणरूपस्तु विकासः शिव उच्यते।
सकारस्त्वपरो[8] ज्ञेयः संकोचः शक्तिरूपवान्[9] ॥
संकोचः परमा शक्तिर्विकासः परमः शिवः।
संकोचश्च विकासश्च हस[10] इत्यक्षरद्वयम् ॥
तयोराधाररूपेण कर्तनं[11] बिन्दुमालिनी।
प्राणो बिन्दुरिति प्रोक्तः साहचर्यादपानके ॥
अधो[12] धरेन्द्रमाकाशं ज्वलनं च[13] तयोरधः।
मायाबिन्दूर्ध्वगौ[14] चैव वाग्भवोऽसावकीलितः[15] ॥ इति।
मा शक्तिस्तु समाख्याता दनं[16] स्वीकारकृच्छिवः।
स[17] वै मादन इत्युक्तो हकारः[18] शिवसंज्ञकः ॥
तत्र शक्तिर्यथार्थत्वे[19] सकारत्वं[20] विधीयते।
शिवे[10] हकार इत्युक्तः सकारे[21] शक्तिरव्यया ॥

---

१. मुखागम–ख., स्वनाम–ग., सुखादिम–ङ, मुखागमनं–ज.। २. 'इति' नास्ति–ख. ङ. ज.। ३. 'मादयतीति मादनमिति' नास्ति–क. ग. छ.। ४. धानं मादनमिति–ख. ङ. ज.। ५. मादन–ख. ङ. ज.। ६. ललिताया महादेव्या–चि.। ७. मादनं प्राणरूपं तु–क. ख. ग. ङ. छ. ज.। ८. रस्थं परं–क. ग. छ.। ९. रूपतः–चि.। १०. हंस–ख. ङ. छ. ज. चि.। ११. कवर्णं–क. ग. छ., कर्तव्यं–चि.। १२. अथो–ङ. ज. चि.। १३. तु–चि.। १४. र्ध्वगा–ख. ङ. ज. चि.। १५. नाम कीर्तितः–चि.। १६. तस्याः–क. ग. छ.। १७. एवं मादनमित्युक्तं–क. ख. ग. छ.। १८. हकारं शिवसंज्ञकम्–ख. ग. ङ. छ.। १९. र्यथोर्ध्वत्वे–चि.। २०. रस्य–ङ. ज., रः स–चि.। २१. सकारः–क. ग. छ. चि.।

**[1]एवमेषा महाविद्या महात्रिपुरसुन्दरी ॥११८॥**

**संस्मृतैव [2]महादेवि त्रैलोक्यवशकारिणी ।**

**[3]एतयैतस्य चक्रस्य साधको[4]ऽर्चनमा[5]रभेत् ॥११९॥**

विद्यास्तुतिः क्रियते—**एवमेषेति** । **संस्मृतैव** चिन्तितैव । जपादि-वैधुर्येणेत्यर्थः । अनया चक्रार्चनमारभेदित्याह—**एतयैतस्येति** । **एतया** विद्यया ॥ ११८-११९ ॥

---

बिन्दुमालिनीकार्णस्य [6]पर्यायं परमे[7]श्वरि ।
शक्रव्योमानलार्णा[8] ये मायाबिन्द्वीश्वरादयः ॥
यथा स्थिताश्च [9]तत्तथ्या [10]वाग्भवः स निराविलः ।
द्वावन्यौ [11]कामशक्त्याख्यौ वर्णौ [12]निष्कीलितात्मकौ ॥इति॥११६-११८॥

एवमेषा महाविद्या महात्रिपुरसुन्दरीति । एवमेषा त्रिबीजात्मिका विद्या महाविद्या सकलविद्या[13]नां मध्ये उत्तमा विद्येत्यर्थः । का सा विद्या ? महात्रिपुरसुन्दरीवाचिकेत्यर्थः । एवं मूलविद्यामुद्धृत्य तस्याः सामर्थ्यं वर्णयति—संस्मृतैव महादेवी त्रैलोक्यवशकारिणीति । संस्मृतैव संस्मृतिमात्रेणै[14]व । इयं महाविद्या त्रैलोक्यं साधकस्य व[15]शं करोतीत्यर्थः । एवमेतस्य चक्रस्य साधकोऽर्चां समारभेदिति । यस्तावदस्यां त्रैलोक्यमोहिन्यां महाविद्यायां कल्याणदेशिककटाक्षतो[16] लब्धचतुर्विधाभिषेकः सन्ध्यातर्पण[17]सवितृद्वाःस्थ-लोकपालवास्तुस्वासनादिसपर्यापुरस्सरं कृतन्यासमण्डलः, तस्य महात्रिपुरसुन्दर्याश्चक्रस्य अर्चां समारभेत् प्रारभेदित्यर्थः । तत्र सन्ध्या[18]वन्दनन्यासमण्डलार्घशुद्धिपर्यन्तं श्रीमहात्रिपुरसुन्दरीकल्पलतायामुक्तप्रकारेण द्रष्टव्यम्[19] । एवं मन्त्रप्रमेयनिरूपणं कृतम् । इतः परं पूजाप्रयोगमुद्रा[20]दिक्रमेण तदङ्गभूतं द्रष्टव्यम्[21] ॥ ११८–११९ ॥

---

१. एषा विद्या–सग. । २. महेशानि–वाग. से. सख. । ३. एवमे–अ. ब. सक. ग. । ४. कोऽर्चां स–अ. । ५. चरेत्–ब. । ६. पर्यायः–क. ग. । ७. श्वरे–ङ., श्वरम्–चि. । ८. र्णास्ते–क. ग. छ., र्णाश्च–चि. । ९. नि कर्तव्यं–क. ग. छ. । १० वाग्भवं सनिलानिलः–चि. । ११. नाद–क. ग. छ. । १२. निष्कलकात्मकौ–चि. । १३. बीजानां–ख. ङ.ज. । १४. 'एव' नास्ति–क.ग.छ. । १५. वशी–ख.ङ. । १६. 'कटाक्षतो' नास्ति क.ग.छ. । १७. समर्पण–ख. ङ. ज. । १८. 'वन्दन' नास्ति–क. ग. छ. । १९ 'एवं····द्रष्टव्यम्' नास्ति–क. ग. छ. । २०. मुद्राप्रयोगे–ख. । २१. मन्तव्यम्–ङ. ज. ।

**कुङ्कुमारुणदेहस्तु[1] वस्त्रारुणविभूषितः[2] ।**
**ताम्बूलपूरितमुखो[3] धूपामोदसुगन्धितः[4] ॥१२०॥**
**कर्पूरक्षोददिग्धाङ्गो[5] रत्नाभरणमण्डितः[6] ।**
**रक्तपुष्पावृतो योगी[7] रक्तगन्धानुलेपनः ॥१२१॥**
**रक्तासनोपविष्टस्तु[8] लाक्षारुणगृहस्थितिः[9] ।**
**सर्वशृङ्गारवेषाढ्यस्त्रिपुरीकृतविग्रहः ॥१२२॥**
**मनःसंकल्परक्तो[10] वा साधकः स्थिरमानसः[11] ।**

---

सार्धत्रिभिरर्चकस्य गुणविधिमाह—**कुङ्कुमारुणेति** । अत्र पूजामखे[12] प्रायशः सर्वं वस्तुजातमरुणाधिकरणपूर्वपक्षनिर्णयवदिति[13][1] पिण्डार्थः । **रत्नाभरणं** रत्नसंयुक्ताङ्गदादि । **योगी**[14] नित्यसमावेशयुक्तः । **सर्वशृङ्गारवेषाढ्यः** तिलकाञ्जनमृगमदात्युज्ज्वलावयवविशेषः[15] । **स्थिरमानसः** अचञ्चलमनाः[16] ।

---

कुङ्कुमारुणदेहस्त्वित्यारभ्य खेचर्या शक्तिचक्रं तु क्षमस्वेति विसर्जयेदित्यन्तेषु श्लोकेषु विषमपदव्याख्या लिख्यते। कर्पूरक्षोद इति कर्पूरचूर्णम् । रक्तपुष्पावृत इति प्रथमार्तं-

---

१. देहश्च–सख. । २. वस्त्राभरण–ब., रक्तवस्त्रादिसंयुतः–वाग. से., रक्तवस्त्रादिभूषितः–सक. ख. घ. । ३. एषा पङ्क्तिर्नास्ति–ब. । ४. न्धिभिः–सख. ग. । ५. रक्ता–वाक. ख. ग., रक्षा–ब. । ६. भूषितः-ब. सक. ख. घ. । ७. मौनी–वाक. ख. ग. ब. सक. ग. । ८. रक्तास्तरो–वाग. से. । ९. स्थितः–वाग. सक. ग., गृहे स्थितः–से. ब. सख. घ. । १०. युक्तो–सग., रक्तं–वाग. । ११. सुस्थिरासनः–सक. । १२. मुखे–ख. । १३. विनि–ख. । १४. योगिनी–ग. घ. । १५. दाद्यु–ख. घ. । १६. अचलमनाः–ख., नास्ति–घ. ।

1. अरुणाधिकरणपूर्वपक्षनिर्णयवदिति । पूर्वमीमांसायां तृतीयाध्याये प्रथमपादे षष्ठमरुणाधिकरणम् । अस्यायमभिप्रायः–"अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति" (तै. सं.६।१।६।७) इत्यत्राऽरुणयेति तृतीयया आरुण्यगुणस्य क्रयसाधनत्वं प्रतीयते । न चामूर्तस्य गुणस्य तत्संभवति । अतो वाक्यस्येहाविनियोजकत्वात् प्रकरणमेव विनियोजकं ग्राह्यम् । ततश्च सोमप्रकरणे यानि ग्रहचमसादीनि द्रव्याणि सन्ति, तानि सर्वाण्यपि परिच्छिद्य तेन द्वारेणारुण्यं साधनं भवतीति पूर्वपक्षन्यायः । तेन न्यायेनात्रापि पूजायामुक्तो रक्तवर्णः पूजासाधनसर्वद्रव्यपरिच्छेदक इत्यायाति । अतो रक्तवर्णतयोक्तान्यनुक्तानि च पूजाद्रव्याणि रक्तान्येव संपादनीयानि । इह पूर्वपक्षन्यायोऽपि निर्णयहेतुतयाऽभ्युपेयते, बाधकाभावादिति ।

**भूप्रदेशे समे शुद्धे गोमयेनोपलेपिते ॥१२३॥**

**पुष्पप्रकरसंकीर्णे[1] धूपामोदसुगन्धिते ।**

**सिन्दूररजसा देवि कुङ्कुमेनाथवा[2] पुनः ॥१२४॥**

**आलिखेत् प्रथमं चक्रं समरेखं मनोहरम्[3] ।**

**समत्रिकोणशक्त्यग्रं[4][5] समाश्रमतिसुन्दरम्[6][7] ॥१२५॥**

---

अबहिर्मुख इत्यर्थः । उक्तं च—[8]

[1]"चपलः सर्वजन्तूनां[9] द्वेष्यो भवति भारत" इति ॥ १२०-१२३ ॥

पूजाचक्रविन्यासस्थलस्य गुणविधिमाह—**भूप्रदेश** इति । अत्र प्रदेश-शब्दः स्थलवाची[10] । यथाह भगवान् **व्यासमुनिः**—

"प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत"(म० भा० १।१०८।५) इति । **समे** निम्नोन्नतविवर्जिते । **शुद्धे** यजनार्हे । चक्रराजविन्यासद्रव्यमाह—**सिन्दूरेति** । पूजाचक्रविन्यासे गुणविधिमाह—**आलिखेदिति** । प्रथमन्यास-

---

वम्[2] । तद्युक्तं[11][3] कुण्डगोलोन्मिश्रितं गोरोचनाभावितं कुङ्कुमादिपङ्कमिश्रितम् । ( तेन ) सर्वाङ्गमनुलिप्येति भावः । सर्वशृङ्गारवेषाढ्य इति । शृङ्गारो भावरसस्थितिप्रेक्षणादि-लक्षणः[12] । वेषः स्त्रीरूपधारित्वम् । त्रिपुरीकृतविग्रह इति । न्यासादिना देवीवपुर्भूत्वेति[13] भावः । स्थिरमानस इति चित्तैकाग्र्यं कृत्वेति ॥ १२०-१२३ ॥

---

१. र्ण-सग. । २. कौसुम्भे-सग. । ३. रमम्-वाक. ख.ब.अ.सग.घ. । ४. कोणं-अ. सघ. । ५. शक्तीकं-सख., शक्त्यश्रं-सघ. । ६. समास्त्रं चाति-वाग. से., सश्रीक-वाक. ख. ब. अ. । ७. इतः परम्-"हेमादिपात्रे साधारे स्थापयेदर्घ्यमम्बुना । रोचनाचन्द्रकाश्मोरलघुकस्तूरिकायुतम् ॥ भावयेद्वह्निसूर्येन्दुभूतानि परमेश्वरि । जपेच्च दशवारं तत्तर्पयेत्तेन योगिनीः ॥" इति श्लोकद्वय-मधिकं दृश्यते-वाग. से. सक. । ८. 'उक्तं च····इति' नास्ति-ख. । ९. फलस्य-ग. । १०. स्थिर-ख. । ११. 'युक्तं' नास्ति-ख. ङ. ज. । १२. णम्, अथवा पत्रलतादिलक्षणम्-ख. ङ. ज. । १३. त्वेत्यर्थः-ख. ङ. ज. ।

1. "न तात चपलैर्भाव्यमिह प्राप्तैः कथञ्चन" इत्यस्य श्लोकस्योत्तरार्धः "चपलः सर्वभूतानां द्वेष्यो भवति मानवः" इत्येवं दृश्यते भाण्डारकरशोधसंस्थानमुद्रितमहाभारतस्यारण्यपर्वणि १५६ तमाध्यायस्य ३१ तमश्लोकस्य टिप्पण्यां पाठान्तरप्रदर्शनप्रसङ्गे । पी. पी. एस. शास्त्रिसंस्करणे (१३२।३१), कुम्भघोणसंस्करणे ( १६०।३२ ) च मूल एव स्थापितः । पुण्यपत्तनस्थचित्रशालामुद्रणालयसंस्करणे ( १५९।३२ ), गोरखपुरस्थगीतामुद्रणालय-संस्करणे ( १५९।३२ ) त्वत्रत्यः पूर्वार्ध एव दृश्यते ।
2. "यत्तु रक्तपुष्पावृत इत्युत्तरत्र विशेषणं तस्य प्राथ( पाश्च )मिककुण्डगोलोत्थपरतया साम्प्रदायिकैर्व्याख्यानान्न पौनरुक्त्यम्" ( से. पृ. ९६ )
3. कुण्डगोलोन्मिश्रितमिति । अत्र जयरथः—"अर्घ इति कुण्डगोलकाख्यो द्रव्यविशेषः । शक्तिसंगमा-

**ध्यात्वा पुरत्रयं देवि बीजत्रयसमन्वितम् ।**

**सर्वाद्यविद्यया देवि करशुद्धिं तु कारयेत् ।।१२६।।**

**तत[1] आत्मासनं दद्याच्चक्रासनमथेश्वरि[2] ।**

**सर्वमन्त्रासनं देवि साध्यसिद्धासनं तथा ।।।१२७।।**

---

क्रियायाः पूर्वमेव **समरेखं** सर्वत्र तत्तत्प्रमाणान्वितम्[3] । **मनोहरं** चित्त-प्रियम् । **समत्रिकोणशक्त्यग्रम्** । त्रिकोणानां शक्तीनां[4] चाग्राणि यथा समानि भवन्ति तथेति । **समाश्रं**[6] यथाश्रयः समा भवन्ति तथेति । **अतिसुन्दरम्** अतिस्पृहणीयम् । अथवा **प्रथमं चक्रं** मध्यत्र्यश्रम् । **समरेखं** कर्त्रभिलाषेण[1] समत्रिरेखम् । **समत्रिकोणशक्त्यग्रं** शक्तेरग्राणि त्रीणि यथा समत्रिकोणानि स्युः । **समाश्रं** सर्वानन्दमयस्थानाद् बहिर्यथाश्राः[7] समा भवन्ति ।।१२३-१२५।।

**ध्यात्वे**त्यादिभिश्चतुर्भिर्बीजत्रयान्वितसोमादित्र्यात्मकचक्रध्यानपूर्वक-[8] न्यासविधानमाह[9] । **ध्यात्वे**त्यनेन[10] प्रायत्यार्थं प्राणनिग्रहोऽपि विवक्षितः । तदुक्तं

---

त्रिकोणमिति वह्नीनामभिधानम् ॥ १२३–१२५ ॥

ध्यात्वा पुरत्रयं देवि बीजत्रयसमन्वितमिति । देवीचक्रं [2]पुरत्रयं सोमसूर्याग्न्यात्मकं कृत्वा बीजत्रयसमन्वितं वाग्भवकामराजशक्तिबीजाख्यं बीजत्रयम्, प्रतिचक्रमेकैकसम-[11] न्वितं यथा भवति तथा ध्यात्वेति भावः । सर्वाद्यविद्ययेति करशुद्धिविद्ययेति भावः ।

---

१. ततश्चात्मा–सघ. । २. मपी–सक., मतः परम्–सख. ग. । ३. 'तत्तत्प्रमाणान्वितम्' नास्ति–ख. । ४. रमं–घ. । ५. चाग्नीनां–ख. । ६. 'समाश्रं····तथेति' नास्ति–ख. । ७. त्र्यश्रयः–ग., त्र्यश्राः–घ. । ८. दित्या–ग. । ९. विधि–ख. । १०. 'ध्यात्वे····निग्रहात् । इति' नास्ति–ख. । ११. 'च' नास्ति–क. ग. छ. ।

दिति आद्ययागतया वक्ष्यमाणात्''(पृ० १४-१५) इति, ''नन्दस्य आनन्दस्य हेतुभिः सुरादिभिः, फलैश्च कुण्डगोलकादिभिः'' ( पृ० १८ ) इति, ''विद्राव्य गोलकं तत्र कुण्डं च तनुमध्यमे । तत्स्थं गृह्य महाद्रव्यं मुखेन तनुमध्यमे ॥ तद्वक्त्रगं ततः कृत्वा पुनः कृत्वा स्ववक्त्रगम् । पात्रं प्रपूरयेत्तेन महाल्यम्बुविमिश्रितम् ॥ तेनार्घपात्रं कुर्वीत सर्वसिद्धिफलप्रदम् ।'' ( पृ० ९२ ) इति चैकोनत्रिंशाह्निके तन्त्रालोकविवेके ।

1. कर्त्रभिलाषेणेति । चक्रकर्तुरर्चकस्याभिलाषानुसारं रेखा बृहत्यो लघ्व्यो वा कर्तुं शक्यन्ते, किन्तु ताः सर्वाः समानाकारा एव विधेया इत्यभिप्रायः ।

2. ''पुरत्रयं सूर्यसोमानलत्रयरूपं श्रीचक्रं विद्याबीजत्रययुक्तं ध्यायेदित्यर्थ इति प्राञ्चः''(से.पृ. ७३)।

**ततो रक्षां प्रकुर्वीत पूर्वोक्तकुलविद्यया[1] ।**
**षडङ्गन्यासयोगेन नमस्कारादियुक्तया ॥१२८॥**
**[2]शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ।**
**आधारे [3]व्यूहकं यावन्न्यासमष्टभिराचरेत्[4] ॥१२९॥**

---

**मानवे शास्त्रे—**

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥ (६।७१) इति ।

**पुरत्रयम्** । चक्रात्मकमिति शेषः । **सर्वाद्यविद्यया** "वाग्भवं प्रथमम्" (१।९९) इति सूत्रोक्तया[5] । अनया "न्यस्याङ्गान्यपि चाङ्गुलीषु करयोः स्थित्या" ( त्रि० सा० २।३ ) इति **भट्टनागोक्त**नीत्या मध्यमादितालान्तिमं कर-शुद्धिरुक्ता[6] । **ततो रक्षामिति** । तत आसनचतुष्टयकल्पनानन्तरम् । **रक्षां** देहरक्षाम् । **पूर्वोक्तकुलविद्यया**[7] "ए-ओमध्यगतम्" ( १।१०० ) इति सूत्रो-क्तया । **षडङ्गन्यासयोगेन** हृदयशिरःशिखाकवचनेत्रास्त्रयोगेन । [1]**नमस्कारा-दियुक्तया** नति-हुति-वषड्-हुं-वौषट्-फट्पदयुक्तया । तदुक्तमभियुक्तैः—

हृदयशिरसोः शिखायां कवचाक्ष्यस्त्रेषु सहचतुर्थीषु[8] ।
नत्या हुत्या च वषड्-हुं-वौषट्-फट्पदैः षडङ्गविधिः ॥ इति ।
( प्र० सा० ६।६ )

---

[9][1]नमस्कारनियुक्तयेति । प्रत्यङ्गमन्त्रं[10] देवतानामसंबोधनान्ते नमस्कारपदं प्रयोजनीयमिति[11] भावः । व्यूहकमिति पाददृयगुल्फनाम ॥ १२६-१२९ ॥

---

१. रनि–वाक. ख. ब. अ. । २. शिखा–वाक. ख. अ. । ३. प्यूहकं–वाक. ख. । ४. ११७ पृष्ठे ७ टिप्पणीस्थं हेमादिरिति श्लोकद्वयमेतदनन्तरं विद्यते–सख. घ. । ५.'सूत्रोक्तया.... रक्षामिति' नास्ति–ख. । ६. न्यासा–ख. । ७. पूर्वो–ख. । ८. सचतुर्थेषु–ख ग. घ. । ९. 'नम.... प्रयोजनीयमिति भावः' नास्ति–ग. । १०. प्रत्यङ्गं मन्त्र–ख. ङ. ज. । ११. जयेदिति–ख. ङ. ज., प्रयोज्यम्–से. ।

1. "केचित्तु नमस्कारनियुक्तयेति मूलं पठन्तः प्रत्यङ्गमन्त्रं देवतानामसंबोधनान्ते नमःपदं प्रयोज्यमिति व्याचक्षते । अन्ये तु नमस्कारादीत्येव पठन्तोऽपि 'सर्वज्ञता.......' इति वचनात् 'सर्वज्ञताशक्तिधाम्ने' इत्यादिपदान्यपि योजनीयानीत्याहुः । परे तु बालां सम्पूर्णामुक्त्वा

**ततः पद्मनिभां देवीं बालार्ककिरणारुणाम् ।**
**जपा[1]कुसुमसंकाशां दाडिमीकु[2]सुमोपमाम् ॥१३०॥**
**पद्मरागप्रतीकाशां कुङ्कुमोदकसंनिभाम् ।**

---

किञ्च, अर्थतः सर्वज्ञतादीनि षडङ्गानि । तदुक्तम्—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ इति ।
( वा० पु० १२।३३ )

**शिरोललाटेति । गोचरे** स्वाधिष्ठाने । **आधारे** मूलाधारे । [2]**व्यूहकं यावद्** [३]यावद् व्यूहकम्, पादतलावधीत्यर्थः । **अष्टभिः** वशि[४]न्यादिभिः । एतेषां कर-शुद्ध्यादि[५]न्यासप्रकारः **सुभगोदये** द्रष्टव्यः ॥ १२६-१२९ ॥

**तत** इत्यादिसार्धैकोनविंशत्या ध्यानमाह । **पद्मनिभामिति** संकोच-[६][1]विकासात्मकं[७] धर्मद्वयं लक्ष्यते । **बालार्ककिरणारुणामिति** रक्तवर्णत्वे[८] प्रकाशात्मता लक्ष्यते सुसेव्यता[९] च । **[१०]जपाकुसुमसङ्काशामिति** रक्तवर्णत्वे बहुलता[११]

---

पद्मनिभाम् आह्लाददायिप्रभाम् । बालार्ककिरणारुणामिति । अनुग्रहसे[१२]व्यशोभामित्यर्थः । जपाकुसुमसंकाशामिति । देव्यङ्गगतारुणिमोदाहरणमिति भावः । दाडिमीकुसुमोपमामिति । सान्द्रप्रभामिति भावः । पद्मराग इति । अत्युज्ज्वलकान्तिमित्यर्थः ।

---

१. जवा–सग. घ. । २. मप्रभाम्–सघ. । ३. 'यावद् व्यूहकं' नास्ति–ख. । ४. कमला–ग. । ५. दीनां–घ. । ६. 'संकोच·······लक्ष्यते' इत्यस्य स्थाने 'रक्तवर्णत्वेऽतिस्निग्धता लक्ष्यते, प्रत्यग्रधर्माधर्मद्वयं लक्ष्यते' इति पाठः–ग. । ७. 'कं' नास्ति–घ. । ८. उक्त–ख. । ९. वेषता–ख. ग. । १०. 'जपा····लता लक्ष्यते' नास्ति–ग. । ११. बहलात्मता–घ. । १२. 'सेव्य' नास्ति–क. ग. छ. ।

श्रीमहात्रिपुरसुन्दरि मां रक्ष रक्षेत्येकमेव मन्त्रं जातियुक्तं हृदयादिषु योजयन्ति" ( से. पृ. ७६ ) ।

1. "नव्यास्तु—गोचरपदस्य लिङ्गार्थकत्वं प्राचीनैरुक्तं प्रमाणाभावपराहतमभिप्रेत्य·······" ( से. पृ. ७७ ) ।

2. "व्यूहकं यावदित्यस्याधारात् पादाग्रान्तमित्यर्थमाहुः साम्प्रदायिकाः" ( से. पृ. ७७ ) ।

स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम् ।। १३१ ।।
कालालिकुलसंकाशकुटिलालकपल्लवाम् ।
प्रत्यग्रारुणसंकाशवदनाम्भोजमण्डलाम् ।। १३२ ।।
किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ।
पिनाकिधनुराकारसुभ्रुवं परमेश्वरीम् ।। १३३ ।।
आनन्दमुदितोल्लोललीलान्दोलितलोचनाम् ।
स्फुरन्मयूखसंघातविततस्वर्णकुण्डलाम् ।। १३४ ।।
सुगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ।
विश्वकर्मादिनिर्माणसूत्रसुस्पष्टनासिकाम् ।। १३५ ।।
ताम्रविद्रुमबिम्बाभरक्तोष्ठीममृतोपमाम् ।
स्मितमाधुर्यविजितमाधुर्यरससागराम् ।। १३६ ।।
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।
कम्बुग्रीवां विशालाक्षीं मृणालललितैर्भुजैः ।। १३७ ।।

---

लक्ष्यते । दाडिमीकुसुमोपमामिति रक्तवर्णत्वे प्रकाशात्मता लक्ष्यते । पद्मरागप्रतीकाशामिति रक्तवर्णत्वे वर्णप्रभयोरपृथक्ता लक्ष्यते । कुङ्कुमोदकसन्निभामिति रक्तवर्णत्वे स्निग्धता लक्ष्यते । प्रत्यग्रशब्देन प्रथमोन्मेषो लक्ष्यते ।

---

कुङ्कुमोदक इति । अच्छप्रभामिति भावः । प्रत्यग्रशब्देन ईषद्विकासोऽभिमतः । आदिनिर्माणमिति । प्रथमसृष्टिमिति भावः । कम्बुग्रीवामिति । कम्बुः शङ्खः, तद्वत्त्रिरेखायुक्त-

---

१. कालाग्नि–सख. ग. घ. । २. कुरला–वाग. से. । ३. संकुलाम्–से. । ४. मण्डिताम्–सघ. । ५. पिनाक–वाग. से. सक. । ६. भ्रूलताम्–वाग. से. ब. सक., सुभ्रुवां–सघ. । ७. संकाश–सक. । ८. विलसद्धेम–वाग. से. ब. सक. ख. घ., विततां हेमकुण्डलीम्–सघ. । स्फुरदित्यादिपङ्क्तिद्वयं विश्वकर्मादीत्यादिपङ्क्त्युत्तरं दृश्यते–सघ. । ९. विस्पष्ट–वाग. से., वत् स्पष्ट–सघ. । १०. तेश्वरीम्–सक. । ११. शृङ्गार–सघ. । १२. गोचराम्–वाक. ख. । १३. इतोऽनन्तरम्–''दाडिमीबीजवज्राभदन्तपङ्क्तिविराजिताम् । रत्नबीजजगद्धासिजिह्वामलसभाषिणीम् ।।'' इत्येष श्लोकोऽधिको दृश्यते सेतुबन्धे । १४. अत्र–''करङ्कवाहिनेन्द्रेण दत्तताम्बूलवीटिकाम् । भुवनोत्पत्तिकल्याणकण्ठसूत्रविराजिताम् ।। धृतपाशाङ्कुशामिक्षुधनुःपुष्पसरां तथा । बाहुमूलेन केयूरकटकाङ्गदशोभिताम् ।।'' इति पङ्क्तिचतुष्टयमधिकं वर्तते–सक. । १५. महादेवीं–वाग. से. ब. सक. ख. ग. घ. । १६. लसितैः–ब. । १७. 'दाडिमी'''स्निग्धता लक्ष्यते' नास्ति–ख., 'दाडिमी'''प्रकाशात्मता लक्ष्यते' नास्ति–ग. । १८. अत्युच्च–ङ. ज. । १९. रिति–ख. ङ. ज. ।

रक्तोत्पलदलाकारसुकुमारकराम्बुजाम्[1] ।
कराम्बुजनखज्योत्स्नावितानितनभस्तलाम्[2][3][4] ॥ १३८ ॥
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ।
त्रिवलीवलनायुक्तमध्यदेशसुशोभिताम्[5][6] ॥ १३९ ॥
लावण्यसरिदावर्ताकारनाभिविभूषिताम् ।
अनर्घ्यरत्नघटितकाञ्चीयुक्तनितम्बिनीम्[7] ॥ १४० ॥
नितम्बबिम्बद्विरदरोमराजिवराङ्कुशाम्[8] ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम्[9] ॥ १४१ ॥
लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम्[10][11] ।
नमद्ब्रह्मशिरोरत्ननिर्घृष्टचरणाम्बुजाम्[12][13][14] ॥ १४२ ॥
शीतांशुशतसंकाशकान्तिसन्तानहासिनीम्[15] ।
लौहित्यजितसिन्दूरजपादाडिमरागिणीम्[16] ॥ १४३ ॥
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ।
रक्तपुष्पनिविष्टां तु रक्ताभरणमण्डिताम्[17][18][19] ॥ १४४ ॥

---

चिबुकमित्यधरमुखफलकमुच्यते[20][21] । कम्बुः शङ्खः । आवर्तः पयसां भ्रमः । काञ्ची रशनादाम । अङ्कुशः सृणिः । शीतांशुलौहित्येतिभागाभ्यां[22] जगन्मातुसमग्रीवामिति भावः । मृणाल इति पद्मनालम् । तद्वत्कोमलदीर्घभुजलता-

१. समा–वाक. ख. अ. । २. द्योत–वाक. ख., ज्योतिर्वि–ब. सख. घ. । ३. राजि–सख. । ४. स्थलाम्–से., स्थलम्–ब. । ५. संयुक्त–से. सक. । ६. शोप–सक., शेन–सघ. । ७. खचित–ब., छटित–सख. । ८. राज्यपरा–वाक. ख., राजिजिता–सघ. । ९. एतदनन्तरम्–'माणिक्यमुकुटाकारजानुद्वयविराजिताम्' इत्येषा पङ्क्तिरधिका–वाग. से. । १०. लावण्येत्यादिकः श्लोको नास्ति–ब. । ११. एतदनन्तरम्–'गूढ''''जिताम्' इत्यादिकः १४६ संख्याकः श्लोकोऽत्र दृश्यते–वाग. से. सख. ग. । १२. ब्रह्मविष्णु–से. सक. ग. घ., एषा पङ्क्तिश्च 'सर्वशृङ्गार' इत्यतः परं दृश्यते–से. । १३. निघृष्ट–से. सक. ग. घ. । १४. एषा पङ्क्तिः १४७ श्लोकानन्तरं दृश्यते–से., नास्त्येव–सख. । १५. कारिणीम्–ब., हारिणीम्–सक. । १६. जवा–सग. घ. । १७. पद्म–वाक. ख. ग. । १८. तां–से. सघ. । १९. भूषिताम्–से. सख. ग. । २०. धरम्–ख. । २१. 'मुखफलकमुच्यते' नास्ति–ख. । २२. 'भागाभ्यां जगन्' नास्ति–ख. ।

चतुर्भुजां त्रिनेत्रां[1] तु[2] पञ्चबाणधनुर्धराम्[3] ।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम्[4] ।। १४५ ।।[5]
[गूढगुल्फपदद्वन्द्वां प्रपदाजितकच्छपाम् ।][6]
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ।। १४६ ।।
सर्वशृङ्गारवेषाढ्यां[7] सर्वालङ्कारभूषिताम्[8] ।
जगदाह्लादजननीं जगद्रञ्जनकारिकाम्[9] ।। १४७ ।।
जगदाकर्षणकरीं जगत्कारणरूपिणीम्[10] ।
सर्वमन्त्रमयीं देवीं सर्वसौभाग्यसुन्दरीम्[11] ।। १४८ ।।
सर्वलक्ष्मीमयीं नित्यां[12] परमानन्दनन्दिताम्[13] ।
महात्रिपुरमुद्रां तु स्मृत्वावाहनरूपया[14] ।। १४९ ।।

---

रग्नीषोमात्मता लक्ष्यते । **महामृगमदः** कस्तूरिका ।। १३०-१४९ ।।

**महात्रिपुरेति**[15]द्वयेनावाहनपूजारम्भौ विधीयेते । **महात्रिपुरसुन्दरीमुद्रां**

---

मित्यर्थः । मृगमद इति कस्तूरिका । शृङ्गार इति पत्रलतादिकपोलालङ्कार इति भावः ।। १३०-१४९ ।।

महात्रिपुरमुद्रां तु स्मृत्वेति । देव्यावाहनवेलायामन्तर्यागानन्तरमान्तर[16]मुद्रानवकमाधारादिब्रह्मरन्ध्रान्तनवाधारेषु परशक्तिविभ्रम[17]रूपमनुस्मृत्यानन्तरमावाहयेदिति भावः । सुभगे [1]नमस्कारनियुक्तयेति । सुभगे इति सुन्दरि । नम इति नमस्कारपदम् ।

---

१. त्रिनयनां–वाग. से. । २. च–सक. ख. ग. घ. । ३. बाणां–सघ. । ४. ताम्बूल–सख । ५. एतदनन्तरम्–'करण्डवाहिनेन्द्रेण दत्तताम्बूलपत्रिकाम्' इत्येषा पङ्क्तिर्दृश्यते–वाग. से. । ६ 'गूढ····जिताम्' न दृश्यते–वाक. ख. । ७. वेशा–वाक. ख. ग. । ८. भरण–सख. । ९. कारिणीम्–से. सक. ख. ग. घ. । १०. त्स्थावर–सख. । ११. वर्धिनीम्–वाग. । १२. देवीं–सख. । १३. रूपिणीम्–सक. ख., कारिणीम्–सग., एतदनन्तरम्–'एवं ध्यात्वा महादेवीं महात्रिपुरसुन्दरीम्' इत्येषा पङ्क्तिरधिका दृश्यते–सख. । १४. मुद्रया–सक., विद्यया–सख., एतदनन्तरम्–'आसनं तत्र संकल्प्य पूर्वोक्तं चक्रमध्यतः' इत्येषा पङ्क्तिरधिका दृश्यते–सघ. । १५. पुरसुन्दरीति–ख. । १६. 'आन्तर' नास्ति–क.ग.छ. । १७. विद्या–ख.ङ.ज. ।

1. "तस्मादर्थरत्नावलीकृदुक्तो नमस्कारेण युक्तयेति पाठ एव स्वीकार्यः" ( से. पृ. ८१-८२ ) ।

**विद्ययावाह्य सुभगे नमस्कारान्तया[1] तया ।**
**पूर्वोक्तया साधकेन्द्रो महात्रिपुरसुन्दरीम् ।। १५० ।।**
**चक्रमध्ये तु[2] संचिन्त्य ततः पूजनमारभेत् ।**
**शिवाग्निबिन्दवो देवि दिनकृद्वह्निरिन्दवः ।। १५१ ।।**
**युगपत् क्रमरूपेण[3] योजनीया महेश्वरि ।**

---

[1]त्रिशिखाख्यां[4] वक्ष्यमाणलक्षणाम्[5] । **नमस्कारान्तया** अन्ते नमस्कारवत्या । [2]**तया पूर्वोक्तया** "हंसबीजसमारूढाम्[6]" ( १।१०९ ) इत्यत्र । **चक्रमध्ये** सर्वानन्दमयाभिधेये स्थाने । **संचिन्त्य** बहिः सकलीकरणादिना भावेन महाविभूतियुक्तामपि सम्यगभेदेन चिन्तयित्वेत्यर्थः ।। १४९-१५१ ।।

**शिवाग्नीति**द्वयेन पूज्यदेवतानामादौ प्रयोज्यं बीजद्वयमुद्धरति । **शिवाग्निबिन्दवो** हकाररेफानुस्वाराः । **दिनकृद्वह्निबिन्दवः** शकाररेफा-

---

कोऽभिप्रायः ? [3]आवाहनविद्यानन्तरं त्रिपुरसुन्दरीति संबोध्य तदन्ते नमःपदं वदेदिति भावः ।। १४९-१५१ ।।

शिवाग्निबिन्दव इति । शिवो हकारः । अग्नी रेफः । दिनकृत् शकारः । वह्निरिति रेफः । बिन्दुरनुस्वारः । ( पूर्ववत्[7] ? ) । युगपत् क्रमरूपेणेति । उद्धृतान्यक्षराणि यथायोग-

---

१. रनियुक्तया—वाक. ख. अ. सख. ग. घ., रादियुक्तया—वाग. से. सक. । २. पूजां समा—वाग. सख. ग. घ., एवं चक्रे तु संचिन्त्य क्रमात् पूजां समारभेत्-सक. । ३. योगेन—सख. । ४. त्रिशिखां-ख. । ५. माणाम्—ख. । ६. हस-घ. । ७. वदिति-ख. ज., नास्ति-ङ. ।

1. त्रिशिखाख्यामिति । ३।३–४ इत्यत्र प्रदर्शिता खण्डत्रयवती त्रिखण्डामुद्रैवात्र त्रिशिखापदेन परामृष्टा । "त्रिखण्डाख्याम्" ( पृ. ८० ) इति सेतुबन्धव्याख्यानम् ।
2. तयेति । पूर्वोक्तया "हंसबीजसमारूढाम्" इत्यत्र पूर्वमुक्तया तयावाहनविद्ययावाह्येति यावत् ।
3. "पूर्वोक्तावाहनविद्ययाऽन्ते नमस्कारादेर्नम इहागच्छागच्छेति वाक्यस्य योजनं कृत्वा चक्रस्य मध्ये बिन्दुस्थाने देवीमावाह्य बिन्दुस्थां पुनरपि ध्यात्वा पूजामारभेतेति यथाश्रुतं केचिद् व्याचक्षते । अन्ये तु महात्रिपुरमुद्रां संक्षोभिण्यादियोन्यन्तमुद्रानवकं मूलाधारादिब्रह्मरन्ध्रान्तस्थाननवके स्मृत्वावाहनविद्याया अन्ते सुभगे नम इति पञ्चाक्षरीं संयोज्य देवीमावाह्य पूजयेदित्यर्थ इत्याहुः" ( से. पृ. ८०–८१ ) ।

**मायार्धेन्दुसमायुक्तं[1] बीजयुग्मं[2] यदुत्थितम् ।। १५२ ।।**

**मायालक्ष्मीमयं तेन यावत्[3] पूज्यास्तु मातरः ।**

**[4]अणिमां पश्चिमद्वारे लघिमामपि चोत्तरे ।। १५३ ।।**

**[5]महिमां पूर्वद्वारे तु ईशित्वाख्यां तु दक्षिणे ।**

**वशित्वाख्यां तु वायव्ये प्राकाम्यामीशदेशके ।। १५४ ।।**

---

नुस्वाराः । **माया** ईकारः । **बीजयुग्मं** बीजद्वयम् । **उत्थितं** निष्पन्नम् । **मायालक्ष्मीमयम्** । मायामयं लक्ष्मीमयं भुवनेश्वरीबीजं[6] श्रीबीजं च । **तेन** बीजद्वयेन । **यावत् पूज्यास्तु मातर** इति । **यावत्** साकल्येन । **मातरः** शक्तयः ।। १५१-१५३ ।।

षट्त्रिंशद्भिः पूजामाह—**अणिमां पश्चिमद्वार** इत्यापटलान्तम्[7] । तत्र[8]

---

मेकदा[9] संयोजयेत् । ह्लं[10] श्रं इति । मायार्धेन्दुसमायुक्तमिति[11] । माया ईकारः । अर्धेन्दुः कला । एतदुद्धृतबीजयुगलस्य शिरोदेशे कृते ह्लीँ श्रीँ इति भवतीति भावः । मायालक्ष्मीमयमिति । उद्धृतमेतद्[12] बीजयुग्मं भुवनेश्वरीलक्ष्मीबीजमित्यर्थः ।। १५१–१५३ ।।

अत्र पश्चिमपूर्वमिति सर्वत्र यथाक्रममेव । [1]यदा पश्चिमाभिमुखः पूजकस्तदा[13] देवीपृष्ठतः पश्चिमं तत्पुरतः पूर्वम्, यदा तु पूर्वाभिमुखस्तदा देवीपुरतः पश्चिमं

---

१. कला–वाग. अ. से. सग. । २. ग्ममुपस्थि–सक., ग्मं समु–सघ. । ३. पूज्यास्तत्राष्ट-मातरः–वाक. ख. अ., संपूज्याः सर्वमातरः–ब., संपूज्याः सर्वदेवताः–सक. । एतदनन्तरम्– "त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी । श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ।। प्रकटाश्च तथा गुप्तास्तथा गुप्ततराः पराः । नवधा चक्रयोगिन्यो नामभिस्ताः समर्चयेत् ।।" इति श्लोकद्वयमधिकम्–वाग. से. । ४. अणिमामित्यादिश्लोकद्वयं नास्ति–वाक. ख., अस्य स्थाने ब्रह्माणीमित्यादिश्लोकद्वयं वर्तते । अत्र सर्वत्र प्रथमान्तः पाठः । ५. पूर्वद्वारे तु महिमा–से. । ६ शी–ख. । ७. त्याद्या–घ. । ८. अणिमामित्यादिसार्धचतुर्भिस्तत्र–ग. । ९ धा–ख. ङ. ज. । १०. हरशरीमिति–क. ग. छ. । ११. कला–क. ग. छ. । १२. 'एतद्' नास्ति–क. ग. छ. । १३. 'पूजकः····तु पूर्वाभिमुखः' नास्ति–ग. ।

1. "अत्र देवतान्तरपूजायां सिद्धं पूज्यपूजकयोर्मध्यं प्राचीति नियममेव क्लृप्तत्वादिहापि केचिदाद्रियन्ते, अन्ये तु लोकसिद्धामेव प्राचीमाश्रयन्तो वदन्ति—यदा पश्चिमाभिमुखः पूजकस्तदा

भुक्तिसिद्धिं तथाग्नेये[1] इच्छासिद्धिं तु नैर्ऋते ।
अधस्तात्[2] प्राप्तिसिद्धिं तु सर्वकामां तदूर्ध्वतः[3] ।। १५५ ।।
[4]ब्रह्माणीं पश्चिमद्वारे [5]माहेशीमपि चोत्तरे ।
[6]कौमारीं पूर्वदिग्भागे वैष्णवीं दक्षिणे तथा ।। १५६ ।।
वाराहीमपि वायव्ये इन्द्राणीमीशदेशके ।
चामुण्डामपि[7] चाग्नेये महालक्ष्मीं तु नैर्ऋते[8] ।। १५७ ।।
[9]कामाकर्षणरूपां च बुद्ध्याकर्षणरूपिणीम्[10] ।
अहङ्काराकर्षिणीं च शब्दाकर्षणरूपिणीम्[11] ।। १५८ ।।

---

त्रैलोक्यमोहनाभिधेये चतुरश्रे पूज्याः शक्तीराह—अणिमामित्यादि[12] । मन्त्र-[13]बीजरूपपूजाप्रकारौ सुभगोदये द्रष्टव्यौ ।। १५३-१५७ ।।

सर्वाशापरिपूरकाभिधेये षोडशारे पूज्याः शक्तीराह—कामाकर्षण-त्यादिपञ्चभिः[14] । [15]मायालक्ष्मीकलाभिरिति । माया [16]भुवनेश्वरीबीजम् । लक्ष्मी

---

[17]तत्पृष्ठतः पूर्वम् । इतरदिङ्मुखपक्षे पूर्वाभिमुखपूजावदेव दिग्व्यवस्थेति गुरुमुखा-[18]म्नायः ।। १५३-१५७ ।।

---

१. ग्नेय्या-से. । २. नास्त्येषा पङ्क्तिः-वाक. ख. ग. । ३. एतदनन्तरम्-'एवमेता महादेव्यो देवि सर्वार्थसिद्धिदाः' इत्येषा पङ्क्तिरधिका वर्तते-वाग. से. सक. ख. ग. । ४. ब्रह्माणी-वाक. ख. । ५. माहेश्वर्यपि-वाक. ख. । ६. पूर्वे चैव तथेन्द्राणी कौमारी दक्षिणे तथा ।। वैष्णव्यपि च वायव्ये वाराहीमीशदिग्गताम्-वाक. ख. । ७. ण्डां देवि-वाक. ख. । ८. इतः परम्-'मातृरष्टौ महेशानि पूजयेत् सर्वकामदाः' इत्यधिकः पाठो दृश्यते-वाग. से. सक. ख. ग. घ. । ९. कामाकर्षणरूपामित्यादि शरीराकर्षिणीं तथेत्यन्तं सर्वत्र प्रथमान्तः पाठः-वाक. ख । १०. र्षस्व-वाक. ख.ब. । ११. र्षस्व-वाक.ख.ब. । १२. अणिमा महिमेत्यादि-घ. । १३. 'मन्त्र····षोडशारे पूज्याः शक्तीराह' नास्ति-ख. । १४. 'पञ्चभिः' नास्ति-ख. घ. । १५. मायेत्यतः पूर्वम्-'सर्वाशापरिपूरकाभिधेये षोडशदले पूज्याः शक्तीराह' इत्यधिकः पाठः-ग. । १६. ह्रीं-ख. । १७. 'ततुरतः' इति सर्वासु मातृकासु, स चाशुद्धः । अत्र तु सेतुबन्धाधारेण शोधितः पाठः स्थापितः । १८. 'स्था । इति मुख्याम्नायप्रकारः' इति सर्वासु मातृकासु, सेतुबन्धस्थः पाठोऽत्र स्थापितः ।

देवीपृष्ठतः पश्चिमं तत्पुरतः पूर्वम्, यदा तु पूर्वाभिमुखस्तदा देवीपुरतः पश्चिमं तत्पृष्ठतः पूर्वम् । इतरदिङ्मुखपक्षे पूर्वाभिमुखपूजावदेव दिग्व्यवस्थेति गुरुमुखाम्नायः ।····" (से. पृ. ८४) ।

स्पर्शाकर्षणरूपां तु[1] रूपाकर्षणरूपिणीम्[2] ।
रसाकर्षकरीं[3] देवीं गन्धाकर्षणरूपिणीम्[4] ॥ १५९ ॥
चित्ताकर्षकरीं[5] देवीं धैर्याकर्षणकारिणीम्[6] ।
स्मृत्याकर्षणरूपां तु[7] नामाकर्षणरूपिणीम्[8] ॥ १६० ॥
बीजाकर्षकरीं[9] देवीमात्माकर्षणकारिकाम्[10] ।
[11]अमृताकर्षिणीं देवीं शरीराकर्षिणीं[12] तथा ॥ १६१ ॥
षोडशारे महादेवि वामावर्तेन[13] पूजयेत् ।
मायालक्ष्मीकलाभिस्तु कलाषोडशकं[14] त्विदम् ॥ १६२ ॥

---

श्रीबीजम्[15] । [1]कला अकाराद्याः षोडश स्वराः । उच्चारक्रमः सुभगोदये लिखितः ॥ १५८-१६२ ॥

---

षोडशारे....वाममार्गेणेति[2] । अप्रदक्षिणतया । कोऽर्थः ? षोडशारे [3]पूर्वदलादारभ्य[16] वामावर्तेन पूजयेदित्यर्थः । मायालक्ष्मीकलाभिरिति[17] । मायाबीजलक्ष्मीबीजषोडशस्वरैरित्यर्थः[18] । कलाषोडशकं त्विदमिति । प्रतिदैवतं [4]कलेतिपदं सम्बन्धनीयमिति

---

१. च–वाक. ख. । २. कारिणी–वाक. ख., र्षस्व–सग. घ. । ३. र्षणरूपां च–से. सख. । ४. करी तथा–वाक. ख. अ. । ५. कर्षणरूपां च–से. सख. ग. घ. । ६. स्वरूपिणीम्–वाक. ख. सग. घ. । ७. च–वाक. ख. । ८. स्वरूपिणीम्–वाक. ख. ब., कारिकाम्–सग. घ. । ९. कर्षणरूपां च–से. सख. ग. घ., रूपान्या–वाक. ख. । १०. तथात्माकर्षिणी परा–वाग., र्षस्वरूपिणी–वाक. ख. । ११. अमृतस्याकर्षणी च–वाक. ख. । १२. पराम्–सख. घ. वाक. ख. । १३. वाममार्गेण–वाक. ख. ब. अ. । १४. कान्वितम्–सख., कं तथा–सघ. । १५. श्रीं–ख. । १६. पूर्वदिग्दलमा–ख. ङ. ज. । १७. स्त्विति–ख. ङ. ज. । १८. शाक्षरैः–ग. ।

1. "कलाशब्द इह षोडशसंख्याकस्वरपर इति वृद्धाः" ( से. पृ. ९० ) ।
2. "वाममार्गेणेति क्वचित् पाठः" ( से. पृ. ८९ ) ।
3. अत एव पूर्वदलमारभ्येति व्याख्याप्यसाध्वी" ( से. पृ. ८९ ) ।
4. "त्रिपुरादिपदोत्तरं चक्रेश्वरीपदं प्रकटादिपदोत्तरं योगिनीपदमणिमादिपदोत्तरं सिद्धिपदं कामाकर्षिण्यादिपदोत्तरं कलापदं च प्रयोक्तव्यमित्यादिकं तु सम्प्रदायसिद्धं ज्ञापकसिद्धं च" ( से. पृ. ८३ ) ।

अनङ्गकुसुमां पूर्वे दक्षिणेऽनङ्गमेखलाम्[1] ।
पश्चिमेऽनङ्गमदनामुत्तरे[2] मदनातुराम्[3] ।। १६३ ।।
अनङ्गरेखामाग्नेये[4] नैर्ऋतेऽनङ्गवेगिनीम्[5] ।
अनङ्गाङ्कुशां वायव्य ईशानेऽनङ्गमालिनीम्[6] ।। १६४ ।।
[7]सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा[8] ।
[9]सर्वाकर्षकरी चापि सर्वाह्लादनकारिणी[10] ।। १६५ ।।
सर्वसंमोहिनी शक्तिः सर्वस्तम्भनरूपिणी[11] ।
सर्वजम्भनरूपा तु[12] सर्वतोवशरूपिणी[13] ।। १६६ ।।

---

[14]सर्वसंक्षोभणाभिधेयेऽष्टारे[15] पूज्याः शक्तीराह—**अनङ्गकुसुमा-मित्यादि** ।। १६३-१६४ ।।

सर्वसौभाग्याभिधेये चतुर्दशारे पूज्याः शक्तीराह—**सर्वसंक्षोभिणी शक्तिरित्यादि** ।। १६५-१६९ ।।

---

भावः । नित्यापदमपि सर्वत्र योजनीयमिति मुखागमः[16] । तद्यथा—ह्रीँ श्रीँ अँ कामा-कर्षिणीनित्याकलादेवीश्रीपादुकां[1] पूजयामीति । एवं[17] क्रमेण सर्वत्र पूजयेदिति[18] यावत् ।। १५८-१६२ ।।

अनङ्गकुसुमां पूर्व इति । अत्रापि पूर्व(ादि)दिग्(वि)भागः पूर्ववदेव[19] ।।१६३-१६४।।

---

१. मङ्गलाम्–वाक. ख. अ. । २. मथना–वाक. ख. । ३. नोत्तराम्–वाक. ख. । ४. लेखा–वाक. ख. । ५. वासिनोम्-वाक. ख. । ६. इतः परम्–'अष्टपत्रे महापद्मवेष्टिते परिपूजयेत्' इत्येषा पङ्क्तिर्नानापाठभेदैः सह दृश्यते–वाग. से. सक. ख. ग. घ. । ७. सर्वसंक्षोभिणीत्यादि सर्वद्वन्द्वक्षयङ्करीति पर्यन्तं सर्वत्र द्वितीयान्तः पाठः–से. ब. सक. ख. ग. घ. । ८. तत–सग. । ९. कर्षणशक्तिश्च–वाग., करी चान्या–वाक. ख. । १०. ह्लादकरी तथा–वाक. ख. । ११. कारिणी–वाग. से. । १२. च–सक. ग. घ. । १३. कारिणी–वाक. ख., तथा सर्ववशङ्करी–वाग. । १४. 'सर्वसंक्षोभणा····शक्तिरित्यादि' इत्यस्य स्थाने 'अनङ्गकुसुमा-मित्यादि द्वाभ्यां सर्वसंक्षोभणाभिधेयेऽष्टदले पूज्याः शक्तीराह । सर्वसंक्षोभिणी शक्तिरित्यादि-सार्धचतुर्भिः सर्वसौभाग्यदायकाभिधेये चतुर्दशारे पूज्याः शक्तीराह' इति पाठः–ग. । १५. अष्टदले–ख. । १६. सुखागमः–क., त्रिमुखागमः–ख. ङ. । १७. 'एवं' नास्ति–क. ग. छ. । १८. योजये–ख. ङ. ज. । १९. पूर्वोक्तवदेव–ख. ङ. ज. ।

1. "केचित्तु कलापदोत्तरं देवीपदमपि योजयन्ति" ( से. पृ. ९० ) ।

**सर्वरञ्जनशक्तिश्च सर्वोन्मा[1]दस्वरूपिणी ।**
**सर्वार्थ[2]साधिका शक्तिः [3]सर्वसम्पत्तिपूरिणी ।। १६७ ।।**
**सर्वमन्त्रमयी [4]शक्तिः सर्वद्वन्द्वक्षयङ्करी ।**
**वामावर्तक्रमेणैव पश्चिमाद् [5]देविदक्षिणम् ।। १६८ ।।**
**गृहीत्वा पूजयेदेता[6] [7]देवीस्त्रिभुवनेश्वरीः ।**
**सर्वसिद्धिप्रदा [8]शक्तिः सर्वसम्पत्प्रदा[9] तथा ।। १६९ ।।**
**सर्व[10]प्रियङ्करी [11]चापि सर्वमङ्गलकारिणी ।**
**सर्वकामप्रदा देवी [12]सर्वदुःखविमोचनी ।। १७० ।।**

---

[13]सर्वार्थसाधकाभिधेये द्वितीयदशारे पूज्याः शक्तीराह—**सर्वसिद्धिप्रदे**-त्यादि । **आद्यविद्यया** लक्ष्मीविद्यया ।। १६९-१७२ ।।

---

वामावर्तेत्यादि दक्षिणं गृहीत्वेत्यन्तस्यायमर्थः—चतुर्दशारे वामावर्तेन पश्चिम-[14]कोणादारभ्य दक्षिणमवलम्ब्य पूजयेदित्यर्थः । अयमर्थः—[1]पश्चिमाभिमुखपूजायां [15]देवीपृष्ठादारभ्य [16]देवीदक्षिणं गृहीत्वा पूजयेत् । पूर्वाभिमुखपूजायां [16]देवीपुरत आरभ्य [16]देवीदक्षिणं गृहीत्वा पूजयेदिति[17] यावत् । सर्वसंक्षोभिणी शक्तिरिति शक्तिशब्दप्रयोगाच्छक्तिपादुकां [18]पूजयामीति [19]सर्वत्र ।। १६५-१६९ ।।

---

१. दनरू—वाग. से. सख. । २. साधनी—वाग. से. सख. ग. । ३. सर्वाशापरिपूरकी—वाक. ख., रूपिणी—सक., कारिका—सग. । ४. देवी—वाक. ख.ग. । ५. देव—वाक. ख. ग. से. । ६. तां—सक. ख. । ७. देवीं त्रिपुरसुन्दरीम्—सक., त्रिभुवनेश्वरीम्—सख., देव्यस्त्रिभुवनेश्वरि—ब. सग. घ. । ८. देवी—वाग. से. सख. । ९. यिनी—सक. । १०. श्रेयस्करी—ब.सक.ख.ग.घ. । ११. शक्तिः—सक., देवि—सख. । १२. सौभाग्यदायिनी—वाग. से. । १३. सर्वसिद्धिप्रदामित्यादिसार्धत्रिभिः सर्वार्थसाधकाभिधेये द्वितीयदशारे पूज्याः शक्तीराह । आद्यविद्यया मायालक्ष्मीविद्यया । सर्वसिद्धिप्रदामित्यादि—ग. । १४. कोणमारभ्य—ख. ङ. ज. । १५. पृष्ठत आ—ख. ङ. ज. । १६. देवीं—ख. ङ. ज. । १७. 'इति यावत्' नास्ति—क. ग. ङ. ज. । १८. पूजयेत्—क. ग. छ. । १९. इतः परम्—'पूजनीयमित्याशयः' इत्यधिकः पाठः—क. ग. छ. ।

1. "ये तु पश्चिमाभिमुखपूजायां देवीपृष्ठादारभ्य देवीदक्षिणं गृहीत्वा पूजयेत् । पूर्वाभिमुखपूजायां देवीपुरत आरभ्य दक्षिणं गृहीत्वा पूजयेदिति व्याचक्षते ।....." ( से. पृ. ९१ ) ।

सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी[1] ।
सर्वाङ्गसुन्दरी देवी सर्व[2]सौभाग्यकारिणी ॥ १७१ ॥
तथैव देवदेवेशि पुनरेवा[3]द्यविद्यया ।
द्वितीयावरणे देवि देवीदशकमर्चयेत् ॥ १७२ ॥
[4]सर्वज्ञा सर्वशक्तिश्च [5]सर्वैश्वर्य[6]प्रदायिनी ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥ १७३ ॥
सर्वाधारस्वरूपा [7]तु सर्वपा[8]पहरा तथा ।
सर्वानन्दमयी देवी [9]सर्वरक्षा[10]स्वरूपिणी ॥ १७४ ॥
[11]पुनरेव महेशानि सर्वेप्सितफलप्रदा ।
[12]दशैव [13]देवताः ख्याताः स्वनामसदृशोदयाः ॥ १७५ ॥
एवमेता महा[14]देव्यो देवि सर्वार्थसिद्धिदाः ।
पूर्वोक्तेन विधानेन [15]तृतीयावरणेऽर्चयेत् ॥ १७६ ॥

---

सर्व[16]रक्षाकराभिधेये [17]प्रथमदशारे पूज्याः शक्तीराह—सर्वज्ञेत्यादि । [18]¹तृतीयावरणे चतुर्दशारद्वितीयदशारापेक्षया ॥ १७३-१७६ ॥

---

तथैवेत्यारभ्य आद्यविद्ययेत्यन्तस्यायमर्थः—पश्चिमादारभ्य प्रदक्षिणतया दक्षिणं गृहीत्वा पूर्ववत् प्रथमदशारे मायालक्ष्मीबीजाभ्यां पूजयेदिति[19] ॥ १६९–१७२ ॥

पूर्वोक्तेनेति । तृतीयावरणे द्वितीय[20]दशारेऽपि पश्चिमादारभ्येत्यादि ज्ञातव्यमित्याशयः ॥ १७३–१७६ ॥

---

१. विनाशिनी–वाक. ख. । २. दुःखविमोचिनी–वाग. से., सौभाग्यदायिनी–सक. ख. । ३. राद्येव–ब । ४. सर्वाशा–ब. । ५. सर्वरक्षा–सघ. । ६. तथा–वाग. से. । ७. च–सख. । ८. हरी–वाक. ख. । ९. सर्वाधार–सख. । १०. प्रदायिनी–सघ. । ११. तथैव च–सख. । १२. दशमी–वाक. ख., दशैता–सघ. । १३. एकवचनान्तः पाठः–सक. । १४ वीर्दे–वाक. ख. सख. ग. । १५. देवीदशकमर्चयेत्–ब. । १६. रक्षाभि–ख. । १७. 'प्रथम····रापेक्षया' नास्ति–घ. । १८. द्वितीयावरणे–ग. । १९. 'यावत्' इत्यधिकः–क.ग.छ. । २०. द्वितीये दशारे–ख. ।

1. तृतीयावरण इति । "अणिमादितो गणनया विस्तृतार्चने सप्तमेऽपि चतुर्दशारादिसंक्षिप्तार्चने तृतीयात्मके" ( से. पृ. ९३ ) ।

**मध्यचक्रे**[1] **महेशानि शृणु पूजां**[2] **यथाक्रमम् ।**
**एकैकं**[3] **देवतानाम प्रोक्तबीजसमन्वितम्**[4] **॥ १७७ ॥**
**अधस्ताद् देवदेवेशि वामावर्तेन**[5] **पूजयेत् ।**
**यावद् दक्षिणमार्गं तु रक्तपुष्पैर्महेश्वरि**[6] **॥ १७८ ॥**
**पश्चिमोत्तरपौरस्त्यदक्षिणाशाक्रमेण**[7][8] **तु ।**

---

सर्वरोगहराभिधेये[9] आद्याष्टारे पूज्याः शक्तीराह—**मध्यचक्रे महेशानीति** । **मध्यचक्रे** अष्टकोणे[10] । **देवतानां** वशिन्यादीनां **नाम** । **प्रोक्तबीजसमन्वितम्** "उद्धरेत् प्रथमम्" ( १।८१ ) इत्युक्तबीजाष्टकसमन्वितम्[11] । **अधस्तादि**त्यस्यायमर्थः—[1]एकैकं[12] वशिन्यादीनां नाम यथाऽधस्ताद्भवति, तथा पूर्वोक्तबीजसंयुतमिति[13] । अयमत्र क्रमः—प्रथमं वर्गः, तदनन्तरं बीजम्, तदनु देवतानामेति । एवं **सुभगोदये**ऽस्माभिः परामृष्टम्[14] ॥ १७७-१७८ ॥

आयुधावरणपूजामाह[15]—**पश्चिमोत्तरे**त्यादि सहितमङ्कुशमित्यन्तेन[16] ।

---

मध्यचक्र इति नवयोनिचक्र इत्यर्थः । [1]अधस्तादित्यत्र देवीपुरत[17] आरभ्य । वामावर्तेन[18] दक्षिणान्तं पूजयेत् । अत्र पूर्वादिकल्पना नास्तीति भावः[19] ॥ १७७–१७८ ॥

पश्चिमोत्तरपूर्वेत्यादि । अष्टकोणत्रिकोणमध्यचतुष्के पश्चिमादिदक्षिणान्तं पूज-

---

१. आद्य–वाक. ख. । २. एतदनन्तरम्–"वशिनीमपि कामेशीं मोदिनीं विमलामपि । अरुणां जयिनीं चापि सर्वेशीं कौलिनीमपि ॥" एष श्लोको दृश्यते–वाग. से. । ३. एकैक–सघ. । ४. पूर्वोक्तं बीजसंयुतम्–वाक. ख., पूर्वोक्त–ब. सग., देवतायुतम्–सख. । ५. वाममार्गेण–वाक. ख. व. । ६. ष्पैः सुरे–सक. । ७. एषा पङ्क्तिर्न दृश्यते–सघ. । ८. पूर्वादिदक्षिणानु–वाक. ख., पूर्वाशा–वाग. से., पूर्वासु दक्षिणादि–सक. । ९. सर्वरोगहराभिधेये पूज्याः शक्तीराह–ग., 'सर्व ... आद्या' नास्ति–घ. । १०. त्वष्टारकोशो–ख. । ११. इति बीजाक्षरसम–ख., उक्तबीजषट्क–घ. । १२. एकैक–ख. । १३. 'इति' नास्ति–ख. । १४. मृष्टाः–ख. । १५. वरणे–ख. । १६. पद्यद्वयेन–ग. । १७. देव्याः–ख. ङ. ज. । १८. देवीवामा–ख. ङ. ज. । १९. यावत्–ख. ङ. ज. ।

1. "एकैकं देवतानाम स्वस्वाधस्ताद्भागे स्वस्वबीजसमन्वितमिति रीत्येहैवाधस्तात्पदं योजयन्ति केचित् । परे तु परत्रैव योजयन्तोऽधस्ताद् देवीपुरत आरभ्य वामावर्तेन दक्षिणान्तं पूजयेत् । अत्र पूर्वादिदिक्कल्पना नास्तीति भाव इति व्याचक्षते" ( से. पृ. ९३ ) ।

**चक्रमध्ये[1] चतुष्के[2] तु क्रमेण परिपूजयेत् ।। १७९ ।।**
**कामबाणान् महेशानि धनुस्तत्पाशमेव च ।**
**जम्भमोहवशस्तम्भपदैः सहितमङ्कुशम् ।। १८० ।।**
**सर्वमध्ये[3] त्रिकोणे[4] तु पूजयेन्मूलविद्यया ।**
**केवलाक्षरभेदेन समस्तव्यस्तयेश्वरि ।। १८१ ।।**

---

अयमर्थः—महायोनिसर्वानन्दमयस्थान[5]गतमहादेवतायाः षडङ्गावरणाद् बाह्यदेशे पश्चिमोत्तरपौरस्त्यदक्षिणाशाचतुष्टये जम्भमोहवशस्तम्भपद[6]चतुष्टयोपेतं बाणधनुःपाशाङ्कुशाख्य[7]मायुधचतुष्टयं **सुभगोदयो**क्तक्रमेण पूजयेदिति ।। १७९-१८० ।।

**सर्वमध्य**[8] इत्यादिपद्यद्वयस्यायमर्थः—सर्वसिद्धिप्रदसर्वानन्दाभिधेययोः कोणत्रयसर्वमध्यस्थानयोः प्रत्येकं पृथग् वाग्भवादिबीजत्रयोच्चारणपूर्वकं कामेश्वर्यादित्रिकं समस्तविद्योच्चारणपूर्वकं मध्ये महा[9]त्रिपुरसुन्दरीं (च) पूजयेदिति । नवचक्राभिधानानि **श्रीमतोत्तरे**[10] कथितानि—

---

येत् । अत्रापि यथादिक्क्रममेव । जम्भमोहेत्यादिनैतदभिप्रेतम्—जम्भपदं बाणेषु, मोहपदं धनुषि, वशपदं पाशे, स्तम्भपदमङ्कुशे योजयेदित्यर्थः[11] ।। १७९-१८० ।।

समस्तव्यस्तयेति । त्रिकोणाग्रदक्षवामकोणेषु व्यस्तमूलविद्यैकैकबीजेन पूजयेत् । समस्तया बीजत्रयोपेतया विद्यया मध्ये पूजयेदित्यर्थः । अत्र दक्षिणं देवीदक्षिणम् । अथवा समस्तव्यस्तयेत्यस्यार्थान्तरमतिरहस्यमपि कथयामः—व्यस्तया त्रिभिर्बीजैरिति यथापूर्वम् । समस्तयेत्य[12]त्र[13] तुरीयं बीजमभिमतम् । कलान्ते पादुकामिति षोडशारे,

---

१. मध्य–ब. । २. चतुष्कं–वाक. ख. ग., ष्कोणे–सघ. । ३. मध्य–वाक. ख. ग. । ४. णेऽपि–वाक. ख. ग. । ५. मये–ग. । ६. 'पद' नास्ति–ग. । ७. 'अङ्कुश' नास्ति–ख. । ८. सर्वमध्यस्थित–ग. । ९. 'महा' नास्ति–ग. । १०. श्रीवामिकोत्तरे–ग. घ. । ११. 'योजयेदित्यर्थः' नास्ति–ख. ङ. ज । १२. समस्तव्यस्तयेत्यत्र–क. ग. छ. । १३. 'त्र तुरीय··· रायुधन्यास' नास्ति–क., तत्र ४१ तमस्य पत्रस्यानुपलब्धेः ।

**कामेश्वरीमग्रकोणे[1] वज्रेशीं[2] दक्षिणे तथा ।**

**वामेऽपि[3] भगमालां तु[4] मध्ये त्रिपुरसुन्दरीम् ।। १८२ ।।**

**एवं पूजाविधानं तु कृत्वादौ साधकोत्तमः[5] ।**

**धूपगन्धादि[6]नैवेद्यतर्पणा[7]नि निवेदयेत् ।। १८३ ।।**

---

त्रैलोक्यमोहनं चक्रं[8] सर्वाशापूरकं[9] तथा ।

सर्वसंक्षोभणं देवि[10] सर्वसौभाग्यदायकम् ॥

सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा ।

सर्वरोगहरं देवि सर्वसिद्धिप्रदं तथा ॥

सर्वानन्दमयं चापि[11] नवमं सुरसुन्दरि । १८१-१८२ ॥

**एवं[12] पूजाविधानमिति । पूजा** विश्वस्य वेद्यस्य चिद्भूमिविश्रान्तिः । **आदिशब्देन** दीपो लक्ष्यते ।

---

चतुर्दशारे शक्त्यन्ते पादुकामिति, दशद्वन्द्वे देव्यन्ते पादुकामिति, अष्टारे वाग्देवतान्ते[13] पादुकामिति विशेषः[14] । अन्यत् सर्वं सुगमम् ॥ १८१-१८२ ॥

तर्पणानीति । तर्पणमिति प्रथमद्रव्येणैव देवीचक्रस्य पूजनम् । अन्यथा पाशपूजा नात्र[15] संमता । यदि तथा[16] करोति तदा कुलद्रोही भवति[17], योगिनीनां शाप आपतेच्च । तत्प्रथमं द्रव्यं बहुविधं संपाद्य निवेदनीयम् । तदुक्तं श्रीसिद्धनाथपादैः—

---

१. मग्नि–सघ. । २. दक्षे वज्रेश्वरीं–ब. सक. ख. ग., दक्षिणे वज्रिणीं–सघ. । ३. भगमालां तथा वामे–वाग. से., वामे तु भगमालां वा–सख.,····तु–सग.,····च····च–सघ. । ४. च–सख. । ५. साधकसत्तमः–सख. । ६. धूपदीपौ च–वाग. से., धूपदीपादि–सक. ख. । ७. णादि–से. सख. । ८. पूरकं–ख. । ९. परिपूरकम्–ख. । १०. चक्रं–ख. । ११. चक्रं–ग.घ. । १२. 'एवं' नास्ति–घ. । १३. वा देव्यन्ते–क., देव्यन्ते–ख. ङ., देवतान्ते–ज. । १४. शेषः–ख. । १५. नात्रैव–क. ख. ङ. ज. । १६. त्रिधा–ख. । १७. भविष्यति–ख. ङ. ज. ।

1. "धूपादीनां वासनास्तर्पणद्रव्यनिष्कर्षश्च प्राचां टीकासु द्रष्टव्यः" ( से. पृ. ९६ ) ।
2. "ये त्वर्थरत्नावलीकृत ईदृशात् तत्र तत्रानुवादात् सुन्दरीपूजनं वाममार्गेणैव प्रशस्तं न दक्षिणमार्गेणेत्याहुस्ते मानाभावादुपेक्ष्याः ।····यदपि वीरद्रव्यकरणकं पूजनमेव वामो मार्ग इति व्यवहरन्ति" (से. पृ. ८९–९० ) ।

देहप्रमातृ[1]ताशान्तिर्येन सिद्धचति तं भजे ।
विश्वेन्धनं[2] निजं धूपं ज्ञानपावकसम्भवम् ॥
संविन्मार्गगतो योऽयं प्रयत्नस्त्वात्मसंश्रयः ।
[3]तमेव संश्रये गन्धमानन्दोदयकारणम् ॥
यस्मिन् सर्वमिदं भाति यः सर्वत्रावभासते ।
कल्पयामि प्रकाशं[4] तं दीपं पूजाविधौ निजे ॥
विश्वं शिवादिभूम्यन्तं चमत्काररसाश्रयम्[5] ।
महीयसे महा[6]भोक्त्रे महे[7]शाय निवेदये[8] ॥

[9]इति **भट्टगङ्गाधरस्तोत्रे** धूप(गन्ध)दीपनैवेद्यो[10]पनिषत्। अत्र[11] क्रियमाणलौकिक-धूपादीनां वासना कथिता । **गन्धादि[12]ष्वभियुक्तोक्तिः**—

चन्दनागुरुकर्पूरपङ्कं गन्ध इहोच्यते[13] ।
सगुग्गुल्वगुरूशीरसिताज्यमधुचन्दनैः ॥
साराङ्गारे विनिक्षिप्तैर्मन्त्री नीचैः प्रधूपयेत् ।
गोसर्पिषा वा तैलेन वर्त्या च लघुगर्भया ॥
दीपितं सुरभिं शुद्धं दीपमुच्चैः प्रदीपयेत् ।
सुसितेन सुशुद्धेन पायसेन सुसर्पिषा ॥
सितोपदंशकदलीदध्याद्यैश्च निवेदयेत् । इति ।

( प्र० सा० ६।४८, ५४-५६ )

---

तर्पणं बहुधा दद्यान्मधुपिष्टगुडोद्भवम् ।
पुष्पमूलफलोत्थं वा स्वाद्यमानन्दनं परम् ॥ इति ।

इह प्रथमद्रव्यस्योपादानाद् द्वितीयतृतीयचतुर्थपञ्चमानामप्यवश्यंभावित्वं सूचितम् । किं बहुना, कुलाचारक्रमेणैव एतच्चक्रं प्रपूजयेत् । पर[14]सहजकुलान्त्यजानां[15] मध्ये

---

१. तृका–ख. । २. न्धन–ख. । ३. तमेवं–ग. । ४. प्रकाशाख्यं–ख. । ५. श्रितम्–ग. । ६. महामोह–दी. । ७. शानि–ख.ग. । ८. दयेत्–ख.दी. । ९. 'इति' नास्ति–ख. । १०. नैवेद्य-गन्धो–ग., गन्धनैवेद्यो–घ. । ११. 'अत्र ··तर्पणानि। तर्पणम्' नास्ति–ख. । १२. 'गन्धादि··तर्पणानि' नास्ति–घ. । १३. गन्धमिहेष्यते–मु. । १४. पठनभङ्ग–ख., परसभङ्ग–ङ., परस्तभङ्ग–ज. । १५. जातीनां–ग. छ. ।

**संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः[1] ।**

**खेचरीबीजयोन्याख्या[2] नव मुद्रास्त्वनुक्रमात् ।। १८४ ।।**

**विरच्य साधकेन्द्रस्तु ध्यानं कुर्यात् समाहितः ।**

**बिन्दुं संकल्प्य वक्त्रं तु तदधस्तात्[3] कुचद्वयम् ।। १८५ ।।**

---

**तर्पणानि ।** तर्पणम्—''तर्पणं तृप्तिनयनं दैवतस्यामृतेन तु'' इति स्थित्या द्रष्टव्यम् । उक्तं च **श्रीलक्षणसारे—**

अनेन हेतुना सर्वपापविध्वंसकारिणा ।

समस्ताज्ञासिद्धिदेहदायिना तर्पयेज्जगत्[4] ।। इति ।। १८३ ।।

इत्थं वरिवस्यां विधाय [1]वक्ष्यमाणलक्षण[5]न्यायेन [2]मुद्रानवकं विरच्य पुनर्वरिवसितां महापूजात्मिकां तां[6] कामकलां ध्यायेदित्याह—**बिन्दुं संक-**

---

षोडशाष्टचतुरैकक्रमेण योगिनीरामन्त्र्य उपोषितास्ताः शुचीभूताः समानीय स्वर्णं-वस्त्रस्रक्चन्दनधूपदीपभक्ष्यभोज्यलेह्यचोष्यचर्वणद्रव्यपात्रासनदक्षिणादिसहितं समन्त्रकं नीराजनादिसकलोपचारैः परितोषयेत् । एतत्कुलाचारम्[7] ॥ १८३ ॥

संक्षोभेत्यादिना [2]दशमुद्रासु मध्ये त्रिखण्डा आवाहनार्थं विनियुक्ता । शिष्टा नवमुद्राः सन्ति । तास्त्रैलोक्यमोहनादिसर्वानन्दमयान्तेषु नवचक्रेषु प्रतिचक्रं पूज्याः । ता एकैकमेकैकं चक्रस्य प्रदर्शनीया इत्यर्थः । तदुक्तम्[8]—

सर्वानन्दमयं चादौ सर्वसिद्धिप्रदं परम् ।

सर्वरक्षाकरं[9] चान्यत् सर्वरोगहरं तथा ॥

---

१. कर्षविशो—वाक. ख., कर्षवशो—वाग. । २. जरूपादियोनिमुद्रा—वाक. ख., योन्यश्च—सक. ख. घ., मुद्रा च—सग. । ३. धस्थं कु—वाग. से. । ४. 'तर्पयेज्जगत्'''' महा-पूजात्मिकां' नास्ति—ख. । ५. 'लक्षण' नास्ति—घ. । ६. 'तां' नास्ति—घ. । ७. चार इति भावः—ग. छ. । ८. 'तदुक्तम्' नास्ति—ग. । ९. सर्वरोगहरं चान्यत् सर्वरक्षाकरं पुनः—ख. ङ. ज. ।

1. वक्ष्यमाणेति । चतुर्थपटलोक्तमुद्रालक्षणानुसारमित्यर्थः ।
2. ''नवमुद्रासु प्रत्यावरणान्तमेकैकां मुद्रां विरचयेदित्यर्थ इति केचित् । इहैव नवापि प्रदर्शये-दित्यर्थ इत्यन्ये ।''''ये तु दशानां मुद्राणां मध्ये त्रिखण्डाया आवाहने विनियुक्तत्वान्नवैवेह प्रदर्श्या इति हेतुं वर्णयन्ति''''" ( से. पृ. ९६ ) ।

**तदधः सपराधं च[1] चिन्तयेत्तदधोमुखम् ।**

---

ल्प्येति । **सपरार्धम्**[2] । ऊर्ध्वबिन्दुसमीपवर्तिनी अनच्कहकारार्धकला मात्रेति सम्प्रदायः । [1]**अधोमुखं योनिम्** । अयमर्थः—समात्रस्य बिन्दुत्रयात्मनश्चतुर्थ-स्वरस्योर्ध्वबिन्दुना वक्त्रम्, तदधः स्थितेन बिन्दुद्वयेन स्तनद्वयं च विमृश्य तदधः सपरार्धं तद्योनिं चिन्तयेदिति[3] ॥ १८४-१८६ ॥

---

सर्वार्थसाधको योऽसौ सर्वसौभाग्यदायकः ।
सर्वसंक्षोभणं[4] चान्यत् सर्वाशापरिपूरकम्[5] ।
त्रैलोक्यमोहनश्चान्यो[6] नवमश्चक्रनायकः[7] ॥[8] इति[9] ।
ईकारोर्ध्वगतो[10] बिन्दुर्मुखं भानुरधोगतौ ।
स्तनौ दहनशीतांशू योनिर्हार्धकला भवेत् ॥
नासाद्वीपाङ्गजातं[11] च[12] मुखं बिन्दोः समुत्थितम् ।
स्तनबिन्दुद्वयं बाहुर्योनिर्हार्धात्[13] पदद्वयम् ॥
एवं कामकलारूपं देवतामयमात्मनः ।
वपुर्विचिन्त्य शिवयोरायुधन्यासमाचरेत् ॥

बिन्दुं संकल्प्येत्यादि । इदानीं दर्शनसर्वस्वभूतकामकलाध्यानं[14] बाह्याभ्यन्तर-रूपेण दर्शयति[15] । चतुर्थस्वरस्य कामकलाभूतस्य चत्वारोऽवयवाः सन्ति । बिन्दुत्रयं मात्रा च । तत्र प्रथमबिन्दुना देवीमुखं[16] कल्पयेत्, बिन्दुद्वयेन स्तनद्वयम्, मात्रया हार्धार्धाङ्गतया[17] वराङ्गं[18] योनिम् । एवं कलाचतुष्टयेन परिकल्पितमहाकामकलाभूतां

---

१. तु—वाग. से. सक. ग. घ. । २. 'सपरार्धम्.....बिन्दुत्रयात्मनः' इत्यस्य स्थाने—'ऊर्ध्व-बिन्दुसमीपवर्तिनी मात्रेति संप्रदायः । अधोमुखं योनिम् । अमर्थासनमात्रयात्मन' इति पाठः—ख., सपरार्धमूर्ध्वबिन्दुत्रया—ग. । ३. विचि—ग. । ४. क्षोभकरं—ग.छ. । ५. तथा सर्वाशयप्रदः—ख.ङ.ज. । ६. नं चान्यत्—ख. ङ. ज. । ७. नवमं—ख. ङ. ज. । ८. कम्—ख. ङ. ज. । ९. 'इति' नास्ति—ग. छ. । १०. एष श्लोकः केवलं छपुस्तक एव दृश्यते । ११. 'नासा.....समाचरेत् ॥' नास्ति—ख. ङ. ज., ईनासा—ग. । १२. द्वीया—ग. । १३. हार्धपद—छ. । १४. रूप—क. छ. । १५. निरूपयति—ङ. ज. । १६. वक्त्रं प्रक—ख. ङ. ज. । १७. हार्दार्धभूतया—ख. ङ. ज. । १८. पराङ्गं—ख. ङ., परां—ज. ।

1. "अधोमुखशब्दो योनिपर इति सम्प्रदायः" ( से. पृ. ९६ ) ।

**एवं कामकलारूपमक्षरं यत्[1] समुत्थितम् ।। १८६ ।।**
**कामार्थ[2]धर्ममोक्षाणामालयं परमं[3] ध्रुवम् ।**

---

**एवमिति । कामकलारूपं** कामकलात्मकम्[4] । **समुत्थितं** "बिन्दुं संकल्प्य" ( १।१८५ ) इत्यादिना समुद्भावितम् । **कामार्थधर्ममोक्षाणामालयमित्यस्याभिप्रायः**––स्वात्मतया भावितं[5] कामकलात्मकमीकाराक्षरमेव[6] स्वेच्छाविग्रहां महात्रिपुरसुन्दरीमात्मानं ध्यात्वा श्रीमूलविद्यामभ्यसेदिति सकलोपास्तिभावनायां कामकलाविनियोगो दर्शितः । तदधस्तात् कुचद्वयमिति । प्रथमबिन्दोरधस्ताद् द्वयं स्थितम् । बिन्दुद्वयमित्यर्थात् सिद्धम् । तदधः स्थितं बिन्दुद्वयाधः स्थितं मात्रारूपम् । तत्कीदृशमिति ? सपरार्धम् । सकारस्य परं हकारस्तस्यार्धं[8] तस्याप्यर्धम् । कोऽर्थः ? अनच्कस्य[9] हकारस्यार्धं गृहीतमिति कृत्वा तद्वाचकस्यार्धार्धं भवति । ततः[10] सपरार्धंशब्देन हार्धार्धमेव[11] परममात्रारूपमत्र[12] गृहीतम् । तच्च[13] ईकारहकारयोरेकरूपमिति ईकारचतुर्थभागस्य सपरार्धत्वमुक्तम् । अथवा ईकारहकारयोर्द्वयोरपि[14] कलासाम्यात् कामकलारूपत्वमस्तीति[15] भक्त्योक्त्या[16] सपरार्धत्वमुक्तम् । तदधोमुखं चिन्तयेत् । अधोमुखमिति सुन्दरीणां मदनमन्दिरमभिधीयते । तेन तदिह लक्षितम् । यदिहानुक्तं तद्गुरुमुखाज्ज्ञात्वा कार्यमिति ।। १८४–१८६ ।।

एवं कामकलारूपमिति । यदिह ग्रन्थारम्भे "तामीकाराक्षर" ( १।८ ) इत्यादिना सूचितं कामकलारूपमक्षरं तदे(व ? वं) रूपमिति । एवं महिमायुक्तमिदं देवेन देव्यै दर्शितमिति भावः । अक्षरं यत्समुत्थितमिति । [1]श्रीवामकेश्वरशास्त्रार्णवमथनवेलायामिति यत्नपरम्परया[17] लभ्यमपि[18] भाग्यवशाल्लब्धमिति[19] भावः । कामादिविषमोक्षाणामालयमिति । तदिदमक्षरम्[20] उद्धृतमभ्यस्तं कामकलाक्षरं कामालयम् ।

---

१. समुपस्थि–ब. । २. कामादिविष–वाक. ख. ग., कामादिसुख–सक. । ३. परमेश्वरि–वाग. से. ब. सक. ख. ग. घ. । ४. कामात्मकं–ग. । ५. भाविता–ख. । ६. त्मिका–ख. । ७. नया–क. ग. छ. । ८. अर्धस्याप्यर्धम्–ख. ङ. ज. । ९. कस्य हकारस्या–ङ., तस्यानच्कस्य हकारस्या–ज. । १०. अतः–ङ.ज. । ११. द्वयेन–क.ग.छ. । १२. परममुद्रास्वरूपमनुगृ–क. ग. छ. । १३. तदिदम्–क. ग. छ. । १४. रुभयोरपि–ख. ङ.ज. । १५. 'रूप' नास्ति–क. ग. छ. । १६. तद्युक्त्या–ख. ङ. ज. । १७. यत्पर–क. ग. छ. । १८. मिति–ख. ग. ङ. ज. । १९. लभ्य–ख. ङ. ज. । २०. इदमभ्यस्तं काम–ख. ङ. ज. ।

1. "नित्याषोडशिकार्णवमथनादुद्धृतमित्यर्थ इत्यन्ये" ( से. पृ. ९६ ) ।

**तदेव तत्त्वप्रवरं निजदेहं[1] विचिन्तयेत् ।। १८७ ।।**

पुरुषार्थचतुष्टयस्य स्थानम्, न तु विद्याजपचक्रा[2]राधनादीनि । [1][3]**कामादिविषमोक्षाणामिति** पाठे कामः कामबीजम्, आदिर्वाग्भवम्, विषमोक्षः शक्तिबीजमिति ।

**तदेवेति**[4] । **तत्** कामकलारूपमक्षरम् । **तत्त्वप्रवरं** षट्त्रिंशत्तत्त्वानां कारणम् । **निजदेहं विचिन्तयेदि**त्यस्याय[5]मभिप्रायः—षट्त्रिंशत्तत्त्वमयमिमं[6]

---

[7]काममिति सौन्दर्यादिलक्षणं तत्साधकाय साधयति । विषमोक्षः । विषं संसारो जननमरणादिलक्षणः, तस्मादेनं साधकं मोचयतीति विष[8]मोक्षालयमुच्यते । अथवा विमर्शानन्दलक्षणपराहंभावस्थितिर्मोक्षः । त(म)स्मै साधकाय साधयतीति मोक्षालयम् । तस्य तदपेक्षायुक्तस्य तद्विघ्नरूपतया कालाग्न्यादिशिवान्त[9]तत्त्वभूमिषु यो महाभोगः स एवास्य विष[10]मुच्यते । विघ्नरूपेणागतं विषरूपं[11] तदपि[12] साधकाय प्रयच्छतीति विषालयमुच्यते । [1]अथवा विषं जलम्, विषममृतमिति विषशब्दस्यामृतपर्यायत्वमस्ति । तदालयममृतालयमिति भावः । परमामृ[13]तसमुद्रे प्रकाशानन्दसामरस्यलोलीभूते एनं साधकं प्ला[14]वयतीति यावत् । कालादिविषमोक्षाणामालयमिति पाठान्तरम् । तत्रैवं योजना—कालमोक्षालयं विषमोक्षा[15]लयं चेत्येवमादि द्रष्टव्य[16]म् ।।

तदेव तत्त्वप्रवरं निजदेहं विचिन्तयेदिति । इह वामके[17]श्वरदर्शने तदेव कामकलाक्षररूपमेव तत्त्वप्रवरमवश्यमेव ज्ञातव्यतयाऽवगन्तव्यम् । तत्किमिति ? कामः पञ्च[18]-

---

१. देहे–ब. सक. ख. । २. पाच्चक्राराधनादिति–ख. । ३. 'कामादि''''बीजमिति' नास्ति–ख. । ४. बीज–ख. । ५. यं भावः–घ. । ६. 'इमं' नास्ति–ख. । ७. काम इति–ख.ङ.ज. । ८. कामादिविषमोक्षाणामालयम्–ख.ङ.ज. । ९. 'तत्त्व' नास्ति–क. । १०. मित्युच्यते–ख.ङ.ज. । ११. 'विषरूपं' नास्ति–ग., विषमिति–ख. ङ.ज. । १२. 'तदपि'नास्ति–ख. ङ. । १३. परामृत–ख. ङ. । १४. प्राप–ख. ङ. ज. । १५. 'मोक्षालयम्' इत्यस्य द्विरावृत्तिः–ख. । १६. व्यमिति भावः–क. ग. छ. । १७. श्वरी–ख. । १८. कामपञ्चकावरणरूपः परबिन्दुः–क. ग. छ. ।

1. "विषशब्दोऽमृतपरः, विषजलामृतपदानां पर्यायत्वात् । तच्च मोक्षस्य विशेषणमिति प्राञ्चो व्याचक्षते ।''''कामः कामकूटम् । आदिर्वाग्भवकूटम् । विषमोक्षः शक्तिकूटमिति तु ततोऽपि

कार्यात्मकं[1] कार्यकारणयोरभेदेन[2] चिन्तयेदिति । तदुक्तं[3] **श्रीत्रिकसारशास्त्रे—**

शिवानन्दरसापूर्णं षट्त्रिंशत्तत्त्वनिर्भरम् ।
देहं दिवानिशं पश्यन्नर्चयन् स्याच्छिवात्मकः ॥
विश्वात्मदेहविश्रान्तितृप्तस्तल्लिङ्गनिष्ठितः ।
बाह्यं लिङ्गव्रजक्षेत्रचर्यादि नहि वाञ्छति ॥ इति ॥ १८६-१८७ ॥

( तन्त्रा० १५।२८५-२८७ )

---

कारणरूपपरबिन्दुस्वभावः शिव[4] एव परमानन्दलक्षणो नान्यः । स कामः, कमनीयत्वात् । कमनीयता लावण्यं भद्रता । तेनोपलक्षितं परमसुखमेव कमनीयम् । नान्यस्य तदस्ति, अनित्यतादि[5]दोषदुष्टत्वात् । तदुक्तम्—

कामरूपो ह्यहं देवि ह्यनङ्गो[6] रूपवर्जितः ।
क्षोभयामि[7] प्रजाः सर्वा नित्यं वै क्लेदयामि च ॥ इति ।

तथा तस्यैव निर्विशेषसुखस्य शिवशक्तिसामरस्यस्वभावत्वाद्[8] इतरकामवत्[9] कामत्वमुच्यते । तदुक्तं श्रीमतोत्तरे—

भैरवोऽहं कुलोऽहं[10] वै बिन्दुस्त्वं नादकुण्डली ।
उभयोः सङ्गमो योऽयं परानन्दस्वभावकः[11] ॥ इति ।

तथा आरण्यकेऽपि सामरस्यसुखोदाहरणत्वेन लौकिककामसुखमुदाहृतम्[12]—"तद्यथा प्रियया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्[13]" ( बृ. उ. ४।३।२१ ) इति । तथा श्रीविष्णु-

---

१. त्मकं कायः—ग. । २. 'तदेव' अधिकं वर्तते—ग.घ. । ३. 'तदुक्तं'''इति' नास्ति—ख.घ. । ४. वश्चैव—क. ग. छ. । ५. 'आदि' नास्ति—क. ग. छ. । ६. त्वन—क. ग. छ., ह्यानन्दो—ङ. । ७. एषा पङ्क्तिर्न दृश्यते—ख. ङ. ज. । ८. 'कमनीयताया लावण्यम्' अधिकः पाठः—क. ग. छ. । ९ कामतत्त्व—क. ग. छ. । १०. कुलेशानि—छ. । ११. परमानन्दलक्षणम—ख. ङ. ज., परमानन्दस्वरूपकमिति वा पाठः—ख. ङ. ज. । १२. योषित्काम—ख. ङ. ज. । १३. इतः परम्—"एवमेवायं प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति" इत्यधिकः पाठः—ख. ङ. ज. ।

प्राञ्चः" ( से. पृ. ९७ ) । तन्त्रालोके तु—"उवाच भगवानेव तच्छ्रीमत्कुलगुह्वरे ।.... काकचञ्चुपुटाकारं ध्यानधारणवर्जितम् । विषतत्त्वमनच्काख्यं तव स्नेहात् प्रकाशितम् ॥" ( ३।१६८-१६९ ) इत्यादिना विषतत्त्वं विवृतम् । उपोद्घातेऽस्य प्रपञ्चोऽवलोकनीयः ।

**ध्यात्वा चक्रेण सहितां[1] ततस्त्रिपुरसुन्दरीम् ।**

**ध्यात्वेति** । **ततः** पश्चात् कामकलाध्यानानन्तरम्[2] । **चक्रेण सहिताम**ित्यादि । बहिराराधितशक्तिचक्रोपेतां त्रिपुरसुन्दरीं ध्यात्वेत्यर्थः । अत्र[3] ध्यात्वेत्यनेन लिङ्गेन स्तुतिनमस्कारादिकमपि सूचितम् । पूजान्ते बलिविधानमिति नोक्तम् । "हुते तु देशिकः पश्चान्मण्डले बलिमारभेत्" ( प्र. सा. ६।१०६ ), "वसुभ्यो रुद्रेभ्यो दिनपरिवृढेभ्योऽपि च बलिं सभूतेभ्यो दद्यात्" ( त्रि. सा. ८।५० ) इत्याद्य**भियुक्तोक्त**स्थित्या,

अर्घान्नसलिलं पात्रं सहेतु दत्तपुष्पकम् ।
समन्त्रं नेत्रपात्रेण त्रिधा शान्तिबलिं भजेत् ।।

पुराणेऽपि सामरस्यसुखोदाहरणत्वेन स्त्रीसुखमेवोदाहृतम्—"कुमारीस्त्रीसुखं यथा"[1] इति । किं बहुना, बिन्दुद्वन्द्वाद्[4]द्वैधीभावजं परमसुखमेव लौकिकसुखलवमखिलमिति । तदिह परमसुखमेव नैर्मल्यतया[5] सुखमिति सिद्धम् । कामो बिन्दुः शिवसमरसतया[6] स्थितः । कला तद्विवर्तभूत[7]बिन्दुद्वयं शिवशक्तिरूपं चन्द्रसूर्यात्म प्रकाशविमर्शरूपं परमबिन्दुप्रापकम् । तदधस्तात् स्थितापि सपरार्धस्वरूपिणी[8] कुण्डलिनी चिद्दण्डरूपिणी । (सा ?) तदिच्छया यदृच्छया पशोरस्य मलावृतस्य पाशं विश्लेषयन्ती निजपदं स्मारयन्ती समरसभावेन स्थितं परमानन्दबिन्दुभावं नयति[9] सा कला । एवं कामकलारूपमिदमक्षरं[10] परमकामप्रापकमिति तदेव तत्त्वप्रवरमित्युक्तं निःशेषादिगुरुणा परमशिवेनेति भावः । इत्थं निष्कलोपासनायामपि कामकलाविनियोगः ।। १८६-१८७ ।।

---

१. तामत–सक., तां महा–सख., तां तत्र–सघ. । २. नादन–ख. ग. । ३. 'अत्र⋯⋯प्रकृतमनुसरामः' नास्ति–ख. । ४. द्वन्द्वाद् द्वन्द्वी–ख. ङ. ज. । ५. निरर्गलतया–ख. ङ. ज. । ६. शिवः सामरस्य–ख. ङ. ज. । ७. 'भूत' नास्ति–ख. ङ. । ८. सा परमार्थरूपिणी–ख.ङ.ज. । ९. नयन्ती–ख. ङ. । १०. रूपमक्षरमिति–ख. ङ. ।

1. श्रीविष्णुपुराणे नोपलभ्यत एतद्वचनम् । "स्वसंवेद्यं हि तद् ब्रह्म कुमारी स्त्रीसुखं यथा । अयोगी नहि तद्वेत्ति जात्यन्ध इव वर्णिकाम् ।।" इत्येवमेष श्लोके योगचिन्तामणौ २५ तमे पृष्ठे स्कन्दपुराणीयवचनत्वेनोद्धृतः । दक्षस्मृतौ च—"⋯⋯कुमारी मैथुनं यथा । अयोगी नैव जानाति जातान्धो हि यथा घटम् ।।" ( ७।२४ ) इति पाठः ।

**स्वमुद्रया[1] शक्तिचक्रं[2] खेचर्याद्याश्च योजयेत् ।। १८८ ।।**

**खेचर्या शक्तिचक्रं तु क्षमस्वेति विसर्जयेत्[3] ।**

इति श्रीनित्याषोडशिकार्णवे प्रथमः पटलः ।।

—:०:—

---

मुक्तकेनालिवर्णेन सर्वविघ्नविनाशिना ।
सर्वसिद्धिप्रदेनैव ध्यात्वा भू(त्वा?ता)दिवेष्टितम् ।।

इति **लक्षणसारो**क्तदिशा चात्रापि शान्ति[4]बलिरुक्तो मन्तव्य इति सम्प्रदायः[5] । तत्[6]प्रकारः **सुभगोदये** द्रष्टव्यः । **केचिदु**च्छास्त्रसम्प्रदायमिह पूजायां मन्त्रविशेषान् बहून् कर्माणि च बहूनि यथामति कल्पयन्ति । न ते स्वीकर्तव्याः । प्रकृतमनुसरामः[7] । पुनः किमित्याह—**स्वमुद्रया शक्तिचक्रं खेचर्याद्याश्च योजयेदिति** । **स्वमुद्रया**[8] कामकलात्मना भावितकारण[9]रूपमहाशक्तिरूपया [1]स्वभूतया मुद्रया सहेत्यर्थः । **शक्तिचक्रम्** आराधित[10]मणिमादिमहादेव्यन्तं[11] शक्तिचक्रम् । विरचिताश्च मुद्राः पर[12]मकारणमहाशक्तिरूपया संवित्स्वरूपपरमार्थया स्वभूतया[13] मुद्रया सह **योजयेद्** एकीकुर्यादिति । **खेचर्या शक्तिचक्रं**

---

स्वमुद्रया शक्तिचक्रमित्यादि । स्वस्य मुद्रा स्वमुद्रा (इति भावः । कोऽर्थः ?) । मुद्राशक्तिदेवीनां चक्रं समूहं पूजाकाले चतुरश्रस्थब्राह्म्यादि[14]देवीनामनन्तरं पूजनीयमित्यनेन दर्शितम् । इदानीं कास्ता इत्याह—खेचर्याद्याः । मुद्रा इत्यर्थः । खे आकाशे सुषुम्णो-

---

१. स्वमुद्रयेत्यादिकं पङ्क्तिद्वयं नास्ति–वाक. ख., तस्य स्थाने 'स्वमुद्रया साधकेन्द्रः क्षमस्वेति विसर्जयेत्' इत्येकैव पङ्क्तिरवलोक्यते । स्वमुद्राशक्तिचक्रं तु–सग., शक्तिचक्रेण–सख. । २. क्रे खेचर्याद्यास्तु चिन्तयेत्–ब., द्याः प्रपूजयेत्–सक. घ., खेचर्या वा प्रयोजयेत्–सख., खेचर्यात्मनि वेदयेत्–सग. । ३. एतदनन्तरम्–'एवं कृत्वा महेशानि साधको वाञ्छितं लभेत्' इत्यधिकं दृश्यते–सख. । ४. 'शान्ति' नास्ति–ग. । ५. यत्वात्-ग. । ६. 'तत्' नास्ति-ग. । ७. अतः-ख. । ८. 'स्वमुद्रया' नास्ति–ख. । ९. करण–ख. । १०. माद्यं–ख. । ११. इतोऽग्रे–'खेचर्याद्या मुद्रा इति शेषः । अयमर्थः–अणिमादि महादेव्यन्तं' अधिकः पाठः–ख. घ. । १२. पर-ग. । १३. 'स्वभूतया' नास्ति–ख. । १४. ब्राह्मण्यादि-छ. ।

1. "प्राञ्चस्तु स्वां मुदमानन्दं राति विषयीकरोतीति स्वमुद्रा स्वसंवित् । खेचर्याद्या नवमुद्रा अणिमादिशक्तिचक्रं च स्वस्वसंविदा योजयेत्, शुद्धचैतन्यमात्ररूपं भावयेदिति व्याचक्षते । अन्ये तु स्वमुद्रयेति सहार्थे तृतीया । प्रत्यावरणमेकैकस्या एव मुद्रायाः पूजनद्योतनाय स्वस्वमुद्रया सहितं तत्तदावरणशक्तिचक्रं खेचर्याद्यास्तत्तन्मुद्राश्च योजयेद् एकीकुर्यादित्यर्थ इत्याहुः" ( से. पृ. ९८ ) ।

**तु क्षमस्वेति विसर्जयेदिति । खेचर्या** संहारमुद्रया । **क्षमस्वेत्यस्यायं** भावः—
स्वानुभूतसंवित्स्वभावमकृत्रिमाहंपरामर्शमयं भवद्रूपं[1] बहिरिदन्तयोल्लास्य[2] चक्रे[3]

[4]निजनिजेषु पदेषु पतन्त्विमाः करणवृत्तय उल्लसिता मम ।
क्षणमपीश मनागपि मैव भूत् त्वदविभेदरसक्षतिसाहसम् ॥

( शि. स्तो. ८।५ )

इति **श्रीरहस्यगुरूक्त**नीत्या [1]भेदेन क्षणपरिभावितमस्मत्प्रमादं[5] क्षमस्वेति बहुधा प्ररोच्य **खेचर्या** संहारमुद्रया महाप्रकाशवपुषि चिन्मये स्वात्मनि **विसर्जयेत्** तन्मयं भावयेदिति शिवम्[6] ॥ १८८–१८८½ ॥

एवम् ऋजुविमर्शिन्यां नित्याषोडशिकार्णवे[7] ।
शिवानन्दपरामृष्टः प्रथमः पटलो गतः[8] ॥

—:०:—

पलक्षिते पराम्बरे[9] कुण्डलिनीरूपेण चरतीति कृत्वा खेचरीति देव्या नाम । तस्याः खेचर्या या मुद्रास्ताः पूजाकाले पूज्यत्वेन दर्शिता इति भावः । खेचर्या मुद्रया देवीचक्रं प्रणम्य विसर्जयेदित्यपि दर्शयति । तत्र[10] खेचर्या खेचरीमुद्रया पूजितः शक्तिचक्रं प्रणम्य क्षमस्वेति प्ररोच्य[11] प्रपूजितं देवीचक्रं[12] विसर्जयेदिति भावः ॥ १८८-१८८½ ॥

इति श्रीविद्यानन्द[13]विरचिते चतुःशतीटिप्पणेऽर्थरत्नावली[14]नाम्नि
पूजापटलः प्रथमः समाप्तः[15] ॥

—:०:—

१. पमिदं–ख., पं तं–घ. । २. द्वास्य–घ. । ३. चक्रभेदे–ख. । ४. 'निज''''भेदेन क्षण' नास्ति–ख. । ५. मत्प्रसादं–ख., स्मत्प्रसादं–घ. । ६. 'शिवम्' नास्ति–घ. । ७. शका–ग. । ८. ष्टं प्रथमं पटलं गतम्–ख. घ. । ९. परापर–क. ख. ग. ङ. ज. । १०. अत्र–ख. ङ. । ११. प्रबोध्य–क. ग. छ. । १२. इतः परम्–"प्रणम्य विसर्जयेदित्यपि च दर्शयति । अत्र खेचर्या मुद्रया पूजितः शक्तिचक्रं प्रणम्य क्षमस्वेति प्रणम्य प्रपूजितं देवीचक्रं विसर्जयेत् प्रापयेदिति भावः" इत्यधिकः पाठः–ख. ङ., 'विसर्जयेत् प्रापयेदिति भावः' इत्येवाधिकः–ज. । १३. नन्दनाथ–ख. ङ. ज. । १४. वल्यां–ख. ङ. ज. । १५. प्रथमः पटलः सम्पूर्णः–क. ग. छ. ।

1. भेदेनेति । अयं भावः—रहस्यगुरोः शिवस्तोत्रावलीकारस्य भट्टोत्पलस्य भगवदविभेदरसक्षतिः क्षणमपि मनागपि नाभिमता । उपासकेन च भगवती त्रिपुरसुन्दरी श्रीचक्रे बहिस्थे पूजामण्डले भेदेन इदन्तयोल्लास्य क्षणमुपास्यते । एष प्रमाद एव क्षाम्यतेऽत्रेति ।

# अथ द्वितीयः पटलः

**ईश्वर[1] उवाच**

**श्रृणु[2] देवि प्रवक्ष्यामि मन्त्रयोगं यथाविधि[3] ।**
**यत्रानेन विधानेन साधकेन[4] प्रपूज्यते ॥ १ ॥**
**देशे वा नगरे ग्रामे तत्र क्षोभः[5] प्रजायते ।**

---

एवमध्यर्धा[6]ष्टोत्तराशीत्यधिकशत[7]संख्योपेतसूत्रं प्रथमं पटलं विवृत्य सार्धनवाधिकसप्ततिसूत्रसंमितं बहुविधवश्यादिप्रयोगशरीरं द्वितीयं पटलं विवृणुमः । **ईश्वर उवाच । श्रृणु देवीत्यादि । मन्त्रयोगं** मन्त्रानुबन्धिनं प्रयोगम् । **यथाविधि** अन्यत्राप्यस्माभिर्यथोक्तं तथा, न त्वन्यमतानु[8]गुण्येनेति ।

---

अथ[9] द्वितीये[10] पटले विषमपदेषु[11] व्याख्या लिख्यते । मन्त्रयोगमिति[12] । योगो विनियोगः, प्रयोग इति यावत् । देशे वा नगर इत्यादिनैतदभिप्रेतम्—[1]ग्रामनगरपट्ट[13]नादि[14]षु प्रदेशेषु[15] यत्र[16] यत्राभिरुचिः, यत्र[16] यत्र पूजाङ्गभूतद्रव्याणि च[17] संभवन्ति, यत्र च राजचौर-

---

१. श्रीभैरव–वाग. से. सख. ग. घ. । २. एषा पङ्क्तिर्न दृश्यते–वाक. ख. । ३. यथास्थितम्–सक., यथाक्रमम्–सख. । ४. साधकः परिपूजयेत्–सक. । ५. जगत्क्षोभः–वाक. ख. ब. सक. ख. ग., पुरक्षोभः–सघ. । ६. मर्धा–ग. । ७. 'शत' नास्ति–ख. घ. ङ. । ८. तदानुगुण्येनेति–घ. । ९. इतः पूर्वम्–'श्रीभैरव उवाच इत्यादि' इत्यधिकः पाठः–ङ. ज., 'अथ''''यावत्' नास्ति–छ. । १०. यप–ङ. ज. । ११. पदव्याख्या–क. ग. । १२. 'मन्त्र''''यावत्' नास्ति–क. ग. । १३. नगरी–ख. । १४. पत्तन–छ. । १५. 'प्रदेशेषु' नास्ति–ख. । १६. 'यत्र' नास्ति–क. ग. छ. । १७. 'च' नास्ति–क. ग. छ. ।

1. "प्राञ्चस्तु देशादिग्रहणेन स्वेच्छया यत्र कुत्रापि पुरश्चरणार्थमवस्थातव्यमिति ध्वन्यते । तेन च पशुशास्त्रोक्तायाः पर्वताग्रनदीतीरतीर्थायतनाद्यावश्यकताया बाध इति व्याचक्षते" ( से. पृ० १०६ )। एतच्च "बाह्यं लिङ्गव्रजक्षेत्रचर्यादि नहि वाञ्छति" ( १५।२८७ ) इत्यत्रैव ( पृ० १३९ ) ऋजुविमर्शिन्युद्धृततन्त्रालोकवचनानुगुणं व्याख्यानम् ।

ज्वलत्कामाग्निसन्तापप्रतापोत्तप्तमानसाः ।। २ ।।
पिपीलिकास्थिन्यायेन दूरादायान्ति योषितः ।
मन्त्रसंमूढहृदयाः स्फुरज्जघनमण्डलाः ।। ३ ।।
तद्दर्शनान्महादेवि जायन्ते सर्वयोषितः ।
जप्ते लक्षैकमात्रे तु क्षुभ्यन्ते भूतलेऽङ्गनाः ।। ४ ।।

---

**यत्रेति देशनगरग्रामैः** संबद्धयते । **अनेन** वश्यादिषु प्रयोगेषु वक्ष्यमाणक्रमेण । **तत्र** देशादौ । **क्षोभो** मान्मथो विकारः ।। १-२ ।।

**पिपीलिकास्थिन्यायेने**त्यस्यायमर्थः—पिपीलिका यथा महीविवर-शायिन्यो बिल्वादिमहावृक्षाग्रलम्बमानफलास्थिसंचयमतीत्य तदन्तर्गतं सारं प्रविशन्ति, तथा योषितो दूरात् साधकमिति । दूरः कृच्छ्रप्राप्तपर्यन्तः । **अत्राभियुक्तवचनम्**—

देव्योऽपि विविशुस्तत्र व्योम व्योमात्म(के?कं) जगत् ।
ब्रह्मा(ण्डे?ण्डा)ऽन्तर्यथा पक्वं मृदुबिल्वं पिपीलिकाः ।। इति ।

**मन्त्रसंमूढहृदया** मन्त्रप्रयोगविस्मृतप्रस्तुतकर्तव्यहृदयाः । **स्फुरज्जघन-मण्डलाः** । तद्दर्शनादिति संबन्धः । **पाताले नागकन्यका** इति । साधकेन

---

दुर्भिक्षादिविपदो न सन्ति, तत्र तत्र जपहोमपूजामन्त्रपुरश्चरणादि कार्यम्; न तु पशु-शास्त्रोक्तनदीतीरपर्वताग्रादितीर्थान्वेषणमनुष्ठानाय कार्यमिति भावः ।। १-२ ।।

पिपीलिकास्थिन्यायेनेत्यस्यायं भावः—यथा पिपीलिका अस्थिकवचरक्षितमपि तदन्तर्गतं मज्जारूपं ग्रहीतुं प्राप्नुवन्ति केनाप्युपायेन, तथा योषितोऽपि मन्त्रानुष्ठान-

---

१. काला–सख. । २. संतप्त–सक. । ३. प्रभावो–सख. । ४. क्षुभ्यन्ते–सघ. । ५. त्रेऽपि–सख., त्रेण–सघ. । ६. लाङ्गनाः–वाग. से. सघ. । ७. न्यायेन दूरादायान्ति योषित इत्यभिप्रायः–ख. ङ. । ८. शालिन्यो–ग. । ९. 'बिल्वादि' नास्ति–ख. ङ. । १०. रससारं–म. । ११. दूरतः–ख. घ. । १२. पर्यन्ताः–ग. । १३. देहादि विशतुस्ते ते–ख., देव्यो विविशतुस्तत्ते–ग. । १४. त्मिके–ग. । १५. तद्यथा–ङ. । १६. 'मन्त्र' नास्ति–ङ. ज. । १७. शास्त्रोक्तं–क. ग. छ. । १८. पर्वतादिनदीतीरादि–क. ग. छ. । १९. राधन–क. ग. छ. ।

**यदि न क्षुभ्यतीत्थं[1] हि[2] साधकस्य मनो मनाक् ।**
**संक्षुभ्यन्ति[3] ततः[4] सर्वाः पाताले[2] नागकन्यकाः ॥ ५ ॥**
**तासामपि यदा नासौ क्षोभं याति मनागपि ।**
**ततः स्वर्गनिवासिन्यो विद्रवन्ति सुराङ्गनाः ॥ ६ ॥**
**एवं लक्षत्रयं जप्त्वा व्रतस्थः साधकोत्तमः ।**
**संक्षोभयति देवेशि त्रैलोक्यं सचराचरम् ॥ ७ ॥**
**लिखित्वा विपुलं चक्रं तन्मध्ये प्रतिमां यदि[5] ।**
**साध्यस्य[6] नाम्ना संयुक्तां[7] ज्वलन्तीं चिन्तयेत्ततः ॥ ८ ॥**

---

[8]लक्षजपे कृते नागकन्यकाः साधकसमीपमागत्य मन्त्रबलेन संक्षुभ्यन्त इत्यर्थः ॥ २-५ ॥

**तासामपीति ।** [1]दर्शन इति शेषः । **असौ** साधकः । **व्रतस्थः** स्त्र्यादिहीनः ॥ ६-७ ॥

**तन्मध्ये** चक्रस्य मध्ये । **प्रतिमां साध्यस्य नाम्ना संयुक्तामिति**

---

निरतं साधकमनेकनियमरक्षितमपि विघ्नहेतुभूताः प्राप्नुवन्तीति भावः । [9]संक्षोभ इति कामविकारः । तमुत्पादयतीति भावः ॥ २-५ ॥

व्रतस्थ इति ब्रह्मचर्यादिनियमयुक्त इत्यर्थः ॥ ६-७ ॥

लिखित्वा विपुलं चक्रमित्यस्य[10] सृष्टिस्थितिसंहारात्मकं[11] चक्रं लिखित्वेति[12] भावः । तन्मध्ये प्रतिमां लिखेदित्यस्य तस्य महाचक्रस्य मध्ये साध्याकृतिं लिखेत् । नाम्ना लिखति संयुक्तामिति । [2]तस्याः प्रतिकृतेः[13] । हृदयदेशे मूलविद्यां लिखित्वा तस्या हकारमध्ये

---

१. ते देवि—सक. । २. वै—सघ. । ३. भ्यन्ते—ब. । ४. ततस्तेन—सघ. । ५. लिखेत्—अ., यदा—वाग. से. ब. सक. ग. घ. । ६. नाम्ना लिखति—वाक. ख. ग. से. अ. ब. । ७. संयुक्तो—वाक. । ८. लक्षद्वयेन जपे—ख. ङ. । ९. 'संक्षोभ.......भावः' नास्ति—ख. ङ. ज. । १०. मित्यादि—क. ग. छ. । ११. त्मकचक्रत्रयमपि—क. ग. छ. । १२. यावत्—क. ग. छ. । १३. 'प्रतिकृतेः' नास्ति—क. ग. छ. ।

1. "दर्शनेनेति शेष इत्यन्ये" ( से. पृ. १०८ ) ।
2. "अर्थरत्नावलीकारास्तु—प्रतिमाया हृद्देशे मूलविद्यां लिखित्वा तस्या हृल्लेखाया हकारमध्ये

**शतयोजनमात्रस्था[१] त्वद्दृष्टापि[२] च या भवेत् ।**
**भयलज्जाविनिर्मुक्ता साऽप्यायाति[३] विमोहिता ॥ ९ ॥**
**तन्मध्यगोऽथवा भूत्वा मन्त्रं[४] संचिन्तयेद्[५] यदा ।**
**सर्वमात्मानमरुणं साध्यमप्यरुणीकृतम् ॥१०॥**
**[६]ततः स जायते देवि सर्वसौभाग्यसुन्दरः ।**
**वल्लभः सर्वलोकस्य साधकः परमेश्वरि ॥११॥**

---

संबद्धयते । **ज्वलन्तीं** [१]मन्त्रपावकशिखया[७] । **विमोहिता** आविष्टा ॥ ८-९ ॥

**तन्मध्यगः**[८] चक्रस्य मध्यगतः । **ततः स जायत** इत्यत्र तच्छब्दः साधकं परामृशति । **वल्लभः** क्षणमपि परिहर्तुमशक्यः ॥ १०-११ ॥

---

साधकसंज्ञां षष्ठ्यन्तामालिख्य तदधो रेफहकारमध्ये द्वितीयान्तं साध्यनामाक्षरमाकर्षयाकर्षयेति च कर्म लिखेत् ।[९]अनुक्तेष्वाकर्षणेष्वयमेव विधिः । ज्वलन्तीमिति[१०] । तां साध्याकृतिं [१]तद्योन्यन्तरालोत्थित[११]मन्त्रपावकशिखया दह्यमानां चिन्तयेत् ॥ ८-९ ॥

तन्मध्यगोऽथवा भूत्वेति । तस्य महाचक्रस्य मध्ये महाकामकलारूपमात्मविग्रहं ध्यायेत् । सर्वमात्मानमरुणं साध्यमप्यरुणीकृतमिति । [२]आधारादात्मनः शक्तिं विद्युल्लता[१२]भासुरां प्रवहणनाड्या बहिर्[१३]निस्सार्य साध्यनासाविवरेण तन्मूलाधारमावेश्य तच्छक्त्यैक्यभावनया तद्धृदयकमलं नीत्वा[१४] प्राणमनस्सहितं सविग्रहं तस्यात्मानं

---

१. मध्य–सघ. । २. हि–सघ., यदा–सग. । ३. समायाति–सग. । ४. मन्त्री–वाग. से. ब. सक. ख ग. घ. । ५. चिन्तयते यदा–ब. सक. ख. ग. घ । ६. ततश्च पूज्यते–ब., ततस्तामानयेद्–सक. । ७. शिखायामपि–घ. । ८. चक्रमध्यगः–ख. ङ. । ९. अनुक्तेष्टाकर्षणविधिष्वयमेव–क. ग. छ. । १०. मिमां–ख. ङ. ज. । ११. दित–क. ग. छ. । १२. विद्युद्वलयभास्वरां-ख. ङ. ज. । १३. 'बहिः' नास्ति-ख. ङ. ज. । १४ भित्वा-ख. ङ. ज. ।

साधकनाम षष्ठ्यन्तं विलिख्य तदधो रेफहकारयोर्मध्ये साध्यनाम द्वितीयान्तमाकर्षयेति क्रियापदं च लिखेदिति व्याचक्षते" ( से. पृ. १०९ ) ।

1. "मन्त्रपावकशिखाविमोहितामित्येके । सा च शिखा तद्योन्यन्तरालोदिता चिन्त्येत्यपि केचित्" ( से. पृ. ११० ) ।

2. "अर्थरत्नावलीकारास्तु—स्वीयां कुण्डलिनीं वहन्नाड्या बहिरानीय साध्यनासिकाद्वारा प्रवेश्य तत्कुण्डलिन्यैकीकृत्य तया कवलीकृतसाध्यबीजं स्वासन( भिन्न )तां नीत्वा स्वब्रह्म-

**सर्वरक्तोपचारैस्तु पूज्यते[१] मुद्रया युतम्[२] ।**
**यस्य नाम्नैव संयुक्तं[३] स भवेद् दासवद् वशी[४] ॥ १२ ॥**
**अदृष्टायास्तु[५] संयोज्य[६] नाम चक्रस्य मध्यगम् ।**
**विरच्य योनिमुद्रां तु तामाकर्षयति[७] क्षणात् ॥ १३ ॥**

---

**मुद्रया युतं** "गुदमेढ्रान्तरे[८] योनिस्तामाकुञ्च्य प्रबन्धयेत्[९]" इत्याम्नातनीत्या [1]योनिमुद्राबन्धं विधायेत्यर्थः । [2]य उपक्षपयिता कर्मणः स **दासः** । [१०]अथवा दीयते [११]यस्मै स्वामिना सर्वं यथाऽभिलषितमिति **दासः** । **वशी** सर्वसहः ॥ १२ ॥

दृष्टस्त्रीसमाकृष्टिर्मन्त्रान्तरेणापि सिद्धयति, एतन्मन्त्रप्रभावेणादृष्टस्त्रीसमाकृष्टिरपि सिद्धयतीत्याह—**अदृष्टाया** इति । [१२]**अदृष्टायाः** श्रुतायाः ।

---

तया कवलीकृतमाकृष्य [१३]स्वस्यासनतां नीत्वा चक्रजातवेदसो ज्वालाप्रज्वलितगात्रं स्वकीयब्रह्मरन्ध्रसहस्र[१४]दलकमलचिच्चन्द्रमण्डल[१५]द्रुतविद्रुमाकारया सुधाधारया मस्तकादिपादान्तव्याप्तया तथाऽरु[१६]णितमात्मानं [१७]स्वस्यासनभूतं तम् अरुणितं यथा भवति तथाऽऽप्लावयेदित्यर्थः ॥ १०-११ ॥

सर्वरक्तोपचारैस्तु पूजयेन्मुद्रया युतमिति । योनिमुद्रया[१८] संयुतमित्यर्थः । यस्य नाम्नैव संयुक्तमिति । तत्र वशीकरणप्रयोगे [3]साध्यसाधक[१९]नामलेखनमाकर्षणवदेव । कर्मलेखने[२०] तु विशेषः । वशीकुरु वशीकुर्वित्येवं वशीकरणप्रयोगे । उत्तरत्राप्ययमेव विधिः । यत्र विशेषस्तत्र ब्रूमः ॥ १२ ॥

---

१. पूजयेत्—वाग. अ. से. सग. । २. युतः—ब. सक. । ३. क्तः-सक. ग. । ४. वशः-सघ. । ५. यां तु—सग. घ. । ६. संयोज्यं—वाक. ख. । ७. यते—सघ. । ८. स्था—ख. घ. । ९. प्रपञ्च—ग. । १०. 'अथवा····वशी' नास्ति—ख. ङ. । ११. अस्मै—ग. । १२. 'अदृष्टायाः' नास्ति—ग. । १३. स्वास—ख.ङ.ज. । १४. स्रार—ख.ङ.ज. । १५. लामृत—क. ग. छ. । १६. तात्मानं—क. ग. छ । १७. स्वासन—ख. ङ. ज. । १८ द्रासंयुक्त—क. ग. छ. । १९. 'नाम' नास्ति—क. ग. छ. । २०. 'लेखने····ब्रूमः' नास्ति—ग. ।

रन्ध्रेन्दुमण्डलादारक्तामेव सुधाधारां निस्सार्य तया सर्वमात्मानं साध्यसहितमाप्लावयेदिति वर्णयन्ति" ( से. पृ. ११०–१११ ) ।

1. "व्याख्यातं च तथैव ऋजुविमर्शिन्याम्" ( से. पृ. १११ )
2. ब्रह्मसूत्रशाङ्करभाष्येऽपि—"ये चामी दासाः स्वामिष्वात्मानमुपक्षपयन्ति" ( २।३।४३ ) ।
3. "ये तु साध्यसाधकयोर्नामद्वयं वशीकुर्विति क्रियापदं च लेख्यमिति व्याचक्षते····" (से. पृ. १११)

**यक्षिणीं वाथ[1] गन्धर्वीं किन्नरीं वा सुरेश्वरीम्[2] ।**
**सिद्धकन्यां नागकन्यां[3] देवकन्यां[4] च[5] खेचरीम् ।। १४ ।।**
**विद्याधरीमप्सरसमृषिकन्यामथोर्वशीम्[6] ।**
**मदनोद्भवविक्षोभ[7]ज्झरज्जघनलम्बिकाम्[8] ।। १५ ।।**
**महाकामकलां ध्यायन्[9] क्षोभयेत् सर्वयोषितः ।**

---

क्षणाद् अभिसन्ध्यव्यवधानेन, होमादिक्रिया[10](र्वजित?वर्ज)मित्यर्थः । अदृष्टाया इत्येतद्विवृणोति—**यक्षिणी**मित्यादि **खेचरी**मित्यन्तम् । **महाकामकलां[11] ध्यायन्** महाकामकलारूपमात्मानं ध्यात्वेत्यर्थः ।

[1]न ध्यानं मुखहस्तादिकल्पनाकल्पितं बहिः ।
ध्यानं शाक्तमहावेशस्तन्महः सामरस्यता ।।

इति ध्यानोपनिषत्[12] ।। १३-१६ ।।

---

[13]अदृष्टायास्त्वित्यादि । अत्रापि नामलेखनं पूर्ववत् । योनिमुद्रामिति । योनिमुद्रया युतं पूजयेदित्यर्थः । [2]सर्वे प्रयोगाः सप्तदिनावधिकाः । यक्षिणीं चाथ गन्धर्वीमित्यादि क्षोभयेत् सर्वयोषित[3] इत्यन्तेन महाकामकलासकलीकृतदेवीरूपस्वात्मध्यानेनैव सर्वासामाकृष्टिर्द्योतिता परमशिवेन ।। १३–१६ ।।

---

१. चाथ–वाक. ख. अ., वापि–सक. ख. । २. श्वरि–सक. ग. घ. । ३. राज–सग. । ४. यक्ष–वाग. से. सक. । ५. तु–सक., सुरेश्वरि–सघ. । ६. न्यां तथो–सग. । ७. विक्षेपात्–सख. । ८. स्फुरज्जघनमण्डलाम्–वाग. से. ब., स्फुर····लम्बिकाम्–सक., चलज्जघनमण्डलाम्–सघ. । ९. लाध्यानात्–वाक. ख. ग. से. ब. अ. सक. ख. ग. घ. । १०. क्रियया–ख. ङ., क्रियावस्थित–ग. । ११. कलाध्यानात्–ग. घ. । १२. इतोऽग्रे–'इह तु काल्पनिकं ध्यानम् । गोरोचनेति' इत्यधिकः पाठः–ग. घ. । १३. 'अदृष्टा·········नाम' नास्ति–ग. ।

1. "ध्यानं हि निश्चला बुद्धिर्निराकारा निराश्रया । न तु ध्यानं शरीराक्षिमुखहस्तादिकल्पना ।।" ( श्लो. १४६ ) इति तु विज्ञानभैरवभट्टारके पाठः ।
2. "एते च सर्वे प्रयोगाः सप्तदिनावधिका इति केचित्" ( से. पृ. ११० ) ।
3. "केचित्तु वक्ष्यमाणप्रयोगस्थस्य सर्वयोषित इत्यस्य विशेषणं मन्यमाना इमं प्रयोगं मानुषीमात्रविषयं मन्यन्ते" ( से पृ. १११ ) ।

रोचनाकुङ्कुमाभ्यां तु[1] समभागं[2] च[3] चन्दनम् ।। १६ ।।
अष्टोत्तरशतं जप्त्वा तिलकं कारयेद्[4] बुधः[5] ।
ततो यमीक्षते वक्ति स्पृशते[6] चिन्तयत्ययम्[7] ।। १७ ।।
अर्थेन च शरीरेण सोऽवश्यं[8] याति दासताम् ।
तथा पुष्पं फलं गन्धं[9] पानं[10] वस्त्रं[11] महेश्वरि[12] ।। १८ ।।
शतमष्टोत्तरं[13] जप्त्वा यस्याः संप्रेष्यते[14] स्त्रियाः[15] ।
सद्य आकृष्यते[16] सा तु विमूढहृदया[17] सती[18] ।। १९ ।।
हठाकृष्टिरियं भद्रे न क्वचित् प्रतिहन्यते ।

---

**समभागं** रोचनाकुङ्कुमयोः प्रकृतत्वात् ताभ्यां समानभागम् । **चिन्तयत्ययमि**त्यत्रेदंशब्दः साधकविषयः ।। १६-१८ ।।

**विमूढहृदया** विवेकशून्यहृदया । **हठाकृष्टिः** मन्त्रपावकमहाज्वालाकवलीकृतत्वाद् गलेपातिकाकर्ष[19]मित्यर्थः ।। १८-२० ।।

---

रोचनाकुङ्कुमाभ्यामित्यादि तिलकं कारयेदित्यन्तेन ग्रन्थेन[20] तिलकेनापि[21] वश्यसाधनमभिमतम् । रोचनाकुङ्कुमाभ्यां तु समभागं च चन्दनमिति [1]रोचनाकुङ्कुमयोर्भागद्वयम् । समभागं चन्दनमेकमेव योजयेत् ।। १६-१८ ।।

तथा पुष्पं फलं गन्धमित्यादि न क्वचित् प्रतिहन्यत इत्यन्तस्य[22] स्पष्टार्थः[23] ।।१८-२०।।

---

१. च-वाक. ख. ग. से. ब. । २. सप्तभागं-वाग. । ३. तु-से. । ४. धारयेद्-वाग. से. । ५. एतदनन्तरम्-'वल्लभः सर्वलोकस्य साधकः परमेश्वरि' इत्यधिकः पाठः-सख. ग. । ६. संस्पृशेच्चि-वाक. ख. । ७. येच्च यम्-वाक. ख. ग. से., येच्च ताम्-सख., यत्यपि-ब. सक., येत्तु यम्-सघ. । ८. अवश्यं-ब., स वश्यं याति दासवत्-वाग. ब. सघ., स वशं-से., स वश्यो दासवद्भवेत्-सक. । ९. वस्त्रं-सख. । १०. यानं-सख. । ११. गन्धं-सख. । १२. सुरेश्वरि-सक. । १३. अष्टोत्तरशतं-वाग. से. । १४. संप्रेर्यते-वाक. ख., संप्रेक्षते-ब., संप्रेषयेत्-सघ. । १५. स्त्रियः-सग. । १६. आकर्षयेत् साध्वीं-वाक. ख., आकृष्यते देवि-सक. । १७. यां-वाक. ख. । १८. सतीम्-वाक. ख., एतदनन्तरम्-"मदनोद्दामदहनदह्यमानहृदम्बुजाम् । साधकस्यानुकम्पार्थे जीवनासङ्गमार्थिनीम् ।।" इत्यधिकः श्लोकः-सख. । १९. गले वातिकर्षणमित्यर्थः-ख. ङ., गले पातिकामर्षामीत्यर्थः-ग. । २०. 'ग्रन्थेन' नास्ति-क. ग. छ. । २१. 'अपि' नास्ति-क. ग. छ. । २२. इति-ङ. ज. । २३. स्पष्टोऽर्थः-ज. ।

1. "ये तु रोचनाकुङ्कुमयोर्भागद्वयं चन्दनभागमेकमेव योजयेदिति व्याचक्षते''" (से. पृ. ११२) ।

लिखेद् रोचनयैकान्ते प्रतिमामवनीतले ।। २० ।।
सुरूपां चारुशृङ्गारवेषाभरणमण्डिताम्[1] ।
तद्भाल[2]गल[3]हृन्नाभिजन्ममण्डलयोजिताम्[4] ।। २१ ।।
जन्मनाममहाविद्यामङ्कुशेन[5] विदर्भिताम् ।
सर्वाङ्गसन्धिसंलीनमालिख्य[6] मदनाक्षरम् ।। २२ ।।

---

लिखेदित्यादि । एकान्ते पशुजन[7]दृष्टिविवर्जिते । प्रतिमां साध्यायाः । तद्भाले[8]त्यत्र तच्छब्दः प्रतिमां गृह्णाति । [1]भाल[9]शब्देनाज्ञास्थानं लक्ष्यते । जन्मशब्देन गुह्यस्थानम् । मण्डलशब्देन मूलाधारम् । जन्मनाम पितृभ्यां दत्तम् । महाविद्या मूलविद्या । अङ्कुशः क्रोङ्कारः । विदर्भिताम् । [2]विदर्भो द्व्यन्तरीकृत इति समयः । मदनाक्षरं कामबीजम् । तदाशाभिमुखः । साध्या यत्र वर्तते

लिखेदित्यारभ्य योजनानां शतादपीत्यन्तस्यायमर्थः—एकान्ते निर्जने स्थले । लिखित्वा प्रतिमां तस्या ललाटगल[10]हृदयनाभियोनिषु जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भितां लिखेत् । मातापितृभ्यां दत्तं जन्मनाम । महाविद्या मूलविद्या । अङ्कुशः क्रोङ्कारः । [3]आदावङ्कुशं ततो मूलविद्याक्षरद्वयं ततो जन्मनामाद्यम[11]क्षरं साध्यायाः । अङ्कुशं[12] पुनर्मूलविद्याक्षरद्वयं[13] ततो जन्मनामद्वितीयाक्षरम् । एवं क्रमेण साध्यनाम मूलविद्यार्ण[14]परिसमाप्तिर्यावत् तावत्[15] पुनः पुनर्[16]लिखेत् । पुनरप्यङ्कुशं दद्यात् । तदुक्तम्—[2]"विदर्भो द्व्यन्तरः प्रोक्तः" इति । मदनाक्षरं कामबीजम् । तदाशाभिमुखः साध्य-

---

१. भूषिताम्–वाग. से. सख. ग. । २. कपोल–सग. । ३. तल–वाक. ख. अ. सग. । ४. योषिताम्–वाक., एषा पङ्क्तिर्न दृश्यते–सख. । ५. शान्तर्वि–वाग. से. सख. ग. घ. । ६. नं सं–ब. । ७. 'जन' नास्ति–ग. घ. । ८. तत्फालेत्यत्र–ख. घ. ङ. । ९. फाल–ख. ङ., भावशब्देन ज्ञानं–ग. । १०. 'गल' नास्ति–ख. ङ. ज. । ११. नामाक्षरं–ङ. । १२. 'अङ्कुशं' नास्ति–ख. ङ. । १३. क्षरं ततो–ख. ङ., क्षरं साध्यायाः पुनर्मूलविद्याक्षरं ततो–ज. । १४. मूलार्ण–ङ. । १५. 'तावत्' नास्ति–क. ग. छ. । १६. भूयो भूयो–ख. ङ. ज. ।

1. केचित्तु भालपदमाज्ञाचक्रोपलक्षकं [ जन्म ]मण्डलपदं मूलाधारपरमिति वदन्तः षट्चक्रेषु विद्यां लिखेदित्याहुः......" ( से. पृ. ११३ ) ।
2. "आदौ योगो भवेदन्ते पल्लवः सम्पुटो द्वयोः । एकान्तरं तु ग्रथनं विदर्भो द्व्यन्तरीकृतः ।।" ( १।७२ ) इति कादिमताख्ये तन्त्रराजे दृश्यते ।
3. "ये त्वङ्कुशोत्तरं विद्याक्षरद्वयं ततो जन्मनामाक्षरमिति व्याचक्षते...." ( से. पृ. ११३ ) ।

**तदाशाभिमुखो[1] भूत्वा त्रिपुरीकृतविग्रहः ।**
**बध्वा[2] तु क्षोभिणीं[3] मुद्रां विद्यामष्टशतं[4] जपेत् ॥ २३ ॥**
**नियोज्य[5] दहनागारे चन्द्रसूर्यप्रभाकुले[6] ।**
**ततो विचलिता[7]पाङ्गी[8]मनङ्गशरपीडिताम् ॥ २४ ॥**
**प्रोज्ज्वल[10]न्मदनोन्मेषप्रस्फुर[11]ज्जघनस्थलीम्[12] ।**
**शक्तिचक्रोच्छल[13]द्रश्मिवलनाकवली[14]कृताम् ॥ २५ ॥**

---

तद्दिङ्मुख इत्यर्थः । **त्रिपुरीकृतविग्रहो** मन्त्रन्यस्तशरीरः । त्रिपुराभट्टारिका[15]त्मना भावितात्मविग्रह इत्यर्थः । इदमेव मुख्यं समाधानम् । इदन्तोपासनं[16] काल्पनिकम् । तदुक्तं **गीतानिष्यन्दे**—

उत्सृज्या[17]त्म[18]समाधानं ये ध्यायन्त्यन्यदेवताः[19] ।
भिक्षन्ते[20] भूरिवित्तास्ते भिक्षित्वाऽपि बभुक्षिताः ॥ इति ।

**क्षोभिणी मुद्रा** [1]वक्ष्यमाणा । **नियोज्येति** । **दहनागारे** अग्न्यागारे । **चन्द्रसूर्यप्रभाकुले** चन्द्रसूर्ययोः प्रभाभिर्व्याप्ते । अयमर्थः—[2]चन्द्रसूर्यदहनत्रिभङ्गिनि महति चक्र इति । **विचलितापाङ्गीं** कामविकारेण । **प्रोज्ज्वलदिति**[21] ।

---

दिङ्मुख इत्यर्थः[22] । संयोज्य [2]दहनागार इति मूलाधारे तां साध्यां नियोजयेदित्यर्थः । अथवा दहनागार इति चन्द्रसूर्यकलालयभूतं चक्रमेव । शक्तिचक्रोच्चलच्छक्तिवलनाकवलीकृतामिति

१. खीभूय–सघ. । २. विविच्य–सख. । ३. क्षोभिणी–से., मोक्षिणी–वाक. ख. । ४. मष्टोत्तरं–वाक. ख. । ५. संयोज्य–अ । ६. कलालये–वाक. ख. ग. से. अ., कृतालया–सक., प्रभालये–सग. । ७. विह्वलिता–वाक. ख. ब. अ. । ८. पाङ्गां–सक. ख. घ. । ९. एतदनन्तरं पङ्क्तिक्रम एवम्—दूरीकृत., आकृष्ट., वप्र., प्रोज्ज्वल., शक्ति., नवानुराग–से. । १०. प्रोच्छल–वाक. ख., प्रोच्चल–वाग. से., प्रचलो–सक. प्रोल्लस–सघ. । ११. प्रचल–वाक. ख., चल–सघ । १२. स्थलाम्–वाक. अ. ब., मण्डिताम्–सघ. । १३. च्चल–वाक. से., च्चलच्छाक्ते–वाख. ग. ब. । १४. विकली–सख. । १५. रिकाभावि–ख. ङ. । १६. इदमुपासनं–ख. ङ., इदं तदुपासनं–घ. । १७. उज्झित्वा–म. । १८. ज्य स्वयमात्मानं–चि. । १९. देवताम्–चि. । २०. भिक्षन्ति–ख. ग. घ. ङ., भिक्षित्वा–चि. । २१. 'प्रोज्ज्वलदिति' नास्ति–ख. ङ. । २२. दिति भावः–ख. ङ. ज. ।

1. तृतीये पटले ५-६ श्लोकयोर्वक्ष्यमाणेत्यर्थः ।
2. केचित्तु दहनागारशब्देन साधकस्य मूलाधारमुच्यते, तत्र योजनं साध्याया इत्याहुः । परे तु चन्द्रसूर्यकलायुक्ताग्निमण्डलं श्रीचक्रमेवेत्याहुः'' ( से. पृ. ११४ ) ।

दूरीकृतस्व[1]चा[2]रित्रभयलज्जान[3]याङ्कुशाम् ।
आकृष्टहृदयां नष्टधैर्यामु[4]ड्डीनजीविताम् ॥ २६ ॥
[5]वप्र[6]प्रासादनि[7]गडनदीयन्त्रसुरक्षिताम् ।
नवानुरागसन्धानकम्पमानहृदम्बुजाम् ॥ २७ ॥
मनोधिक[8]महा[9]मन्त्र[10]पवनापहृतांशुकाम् ।
विमूढामिव वि[11]क्षुब्धामिव श्रान्तामिव द्रुताम् ॥ २८ ॥

---

प्रोज्ज्वलता ऽतिप्रज्वलितेन, प्रकर्षेणोज्ज्वलतो (वा) मदनस्य महोन्मेषेण प्रकृष्टस्फुरज्जघनस्थ[12]लीम्। शक्तिचक्रेति। शक्तीनां चक्रं शक्तिचक्रम्, तस्मादुच्चलितानां रश्मीनां वलना वेष्टनम्, तेन कवलीकृतां [13]ग्रासीकृताम्। दूरीकृतेति। [14]चारित्रभयलज्जानया एव, अङ्कुशः अपथप्रवृत्तिनिरोधकः, स दूरीकृतः परित्यक्तो यया तामिति। आकृष्टहृदयां मन्त्रप्रभावरज्जुभिः। नष्टधैर्यां मन्त्रप्रभावाहृतगर्वत्वात्। उड्डीनजीवितां गतप्रायप्राणाम्। वप्र-प्रासादेति। [15]शिलेष्टकामृत्संचितावरणं [16]वप्रम्। प्रासादो भूभुजां स्थानम्। निगडं बन्धनम्। यन्त्रं भूगृहम्। तैः सुरक्षिता[17]म्। नवानुरागः [18]प्रथमरागः, तस्य सन्धानेन [19]कम्पमानहृदयाम्बुजाम्। अत्राभियुक्तवचनम्—

---

[1]मूलाधारस्थदेवीमहाचक्राद्दु[20]च्चलच्छक्तिवागुराकवलीकृतामित्यर्थः[21]। [22]उड्डीनजीविताम् उद्भ्रान्तजीवितामिति यावत् ॥ २०–३१ ॥

---

१. सु–सख. ग.। २. त्र्य–सख. ग.। ३. मया–सक., लया–सख. ग.। ४. उत्तीर्ण–वाक. ख.। ५. चक्र–सख., यत्र–ब.। ६. प्राकार–वाक. ख. ब. सक.ख.ग.घ.। ७. निबिड–वाक. ख. ब.। ८. भूत–सक.। ९. तन्त्र–सख.। १०. वेगेना–वाक. ख.। ११. मिवाप्लुष्टामिव स्रुताम्–वाक. ख., संक्षुब्धां विप्लुष्टामिव विद्रुताम्–ब., ब्धां कृष्टां मदनविह्वलाम्–सख., परिमूढामिव क्लिष्टां विकृष्टामिव विह्वलाम्–सग.। १२. स्थलामित्यर्थः–ग.। १३. 'ग्रासीकृताम्' नास्ति–ख. ङ.। १४. 'चारित्र' नास्ति–ख. ङ.। १५. शिलालोष्ट–ख. ङ.। १६. वप्रः–ग. घ.। १७. तामिति–ग. घ.। १८. 'प्रथमरागः' नास्ति–ख. ग. ङ.। १९. वेपमानहृदयाम्–ख. ङ.। २०. दुच्छल–क. ग.। २१. मिति यावत्–ख.। २२. 'उड्डीन····यावत्' नास्ति–ख.।

1. "शक्तिचक्रं तदीयमूलाधारम्, तस्मादुच्चलन्त्याः शक्तेः कुण्डलिन्या इति केचित्" ( से. पृ. ११५)।

लिखितामिव निस्संज्ञामिव[1] प्रमथितामिव ।
दलितामिव[2] संभ्रान्तामिवोत्त्रासमितामिव[3] ।। २९ ।।
विहस्तामिव[4] संकीर्णामिवाकुलितमानसाम्[5] ।
निलीनामिव[6] निश्चेष्टामिवान्यत्वं गतामिव ।। ३० ।।
भ्रमन्मन्त्रा[7]निलोद्धूत[8]पत्राकारां नभस्तले[9] ।
भ्रमन्तीमानयेन्नारीं योजनानां शतादपि[10] ।। ३१ ।।

---

न तथा सुखयत्येषा चेतस्त्रि[11]भुवनेशिता[12] ।
यथा परस्परानन्दी स्नेहः प्रथमरक्तयोः ।। इति ।

**मनोऽधिकेति । मनसो योऽधिको** वेगः, मनोजव इति यावत् । स **महामन्त्रपवनस्तेनापहृतांशुकाम् । विमूढाम्** अनभिव्यक्तात्मस्वभावाम् । **विक्षुब्धाम्** आविलमानसाम् । **श्रान्ताम्**[13] अप्रत्यभिज्ञातस्वरूपत्वाच्चिरं खिन्नाम् । **द्रुतां** द्रवीभूताम्[14] । **लिखितां** चित्रस्थिताम् । **निस्संज्ञां** मूर्छां गताम् । **प्रम**[15]**थितां** विलोलिताम् । **विहस्तां** परवशाम् । **संकीर्णां**[16] प्रतिपत्तिरहितां[17] विकीर्णा[18]-[19]वयवाम् । **आकुलितमानसां** प्रस्तुतविस्मृतमानसाम्[20] । **निलीनामिव निश्चेष्टामिवान्यत्वं गतामिवेति**[21] । **निलीनाम्**[22] अनुद्योगाम् । **निश्चेष्टां**[23] मृतप्रायाम् । **अन्यत्वं गता,** नेयं सा, अन्यैवेयमिति द्रष्टृभिश्चिन्त्यमानाम् । **भ्रमन्निति । भ्रमन्**[24] परिभ्रमन्, **मन्त्र** एवानिलो मन्त्रानिलः[25], तेनोद्धूतस्य[26] उत्कम्पितस्य

---

१. मति-सक. । २. "दलितामिव संलीनामिवाकुलितमानसाम् । सलिलामिव संभिन्नामिवाकुलितविग्रहाम् ।। एवं मन्त्रानिलोद्भ्रान्तपत्राकारां नभस्थले ।" इति क्रमः पाठश्च-सग., गलिता-वाग. से. । ३. वोड्डामरिता-वाख. से. ब. सख. । ४. गलिता-वाक. ख., दलिता-सख., मलिना-ब. । ५. संभिन्ना-वाक. ख. । ६. नास्त्येषा पङ्क्तिः-वाक. ख. ग. ब. अ. । ७. महा-वाग. से. सक. । ८. द्भ्रान्त-वाक. ख. अ., द्भूतयन्त्रा-वाग. से. । ९. स्थले-वाग से. सख. । १०. शतैरपि-वाग. से. । ११. चारत्रि-ग. । १२. शितुः-ख. ङ. । १३. प्रत्यभिज्ञातस्वरूपां च-ख. ङ. । १४, स्थाम्-ग. घ. । १५. अप्रम-ग. घ. । १६. विप्रतिपत्तिरहिताम्-ख. ङ. । १७. संशीर्णा-ग. घ. ङ. । १८. 'प्रतिपत्तिरहितां' नास्ति-ख. ङ. । १९. विशीर्णा ख. ग. ङ. । २०. 'प्रस्तुतविस्मृतमानसाम्' नास्ति-ख. ङ. । २१. 'इति' नास्ति-ग. । २२. नामिव-ग. । २३. निश्चेष्टा नाम मृतप्राया-ग. । २४. 'परिभ्रमन्' नास्ति-ख. ङ. । २५. 'उद्धूतपत्राकारां' इत्यधिकं-ग. । २६. 'तेन' नास्ति-घ. ।

**अथवा मातृकां सर्वां लिखित्वा चक्रबाह्यतः ।**
**धारयेद् बाहुमूले यस्त्ववध्यः[1] सर्वजन्तुषु ॥ ३२ ॥**

पत्रस्य पर्णस्याकार इव या कम्पते ताम् । अत्र[2] नभस्तल इत्यस्यायं भावः—मन्त्रपवनप्रकम्पितां[3] निरालम्बनां भ्रमन्तीमिति । **आनयेत्**, साधक इति शेषः । **योजनानां शतादपीत्यस्मिन्नर्थे मन्त्रोऽयमाथर्वणः**[4][1]—"यदि वसति[5] योजनशते नदीनां वा गतान्तरः[6]" इति ॥२०-३१ ॥

**अथवेति** निपातसमुदायोऽथशब्दार्थः प्रयोगान्तरारम्भे । अयमर्थः—[7]चक्रस्य बाह्यदेशे चक्रोपश्लिष्टमकारादिक्षकारान्तान्[8] वर्णान् विन्यस्य प्रोक्तक्रममाबध्य[9] प्रोक्तस्थाने प्रोक्तफलसिद्ध्यै धारयेदिति ॥ ३२ ॥

---

[10]अथवेत्यादि सर्वजन्तुष्वित्यन्तस्यायमर्थः—[2]भूर्जपत्रे चन्दनागुरुकर्पूरपङ्केन श्रीचक्रं लिखित्वा तस्य मध्ये[11] त्रिकोणमध्ये लिखितमूलविद्याहकारमध्येऽमुकं रक्ष[12] रक्षेति साधकनाम लिखित्वा चक्रचतुरश्रबाह्यतः[13] परिवेषक्रमेण मातृकां लिखित्वा सितसूत्रेण वेष्टयित्वा गुटिकां कृत्वा पञ्चगव्यपञ्चामृतस्नापनान्ते प्राणान् प्रतिष्ठाप्य संपूज्य मूलविद्यामष्टोत्तरशतादि स्पृशन् यथाशक्ति जपित्वा[14] शुभेऽहनि धारयेत् ।

---

१. यः सोऽवध्यः—वाख. से. ब. सक. ग., षु सोऽवध्यः—सख. । २. 'अत्र' नास्ति—ख ङ., 'अत्र····इति शेषः' नास्ति—घ. । ३. म्पिता····म्बना····तीति—ख. । ४. मन्त्रो यथा दर्पणः—ख. ङ. । ५. वसन्ती—ग. । ६. शतान्तरः—ग. घ. । ७. 'चक्रस्य' नास्ति—ख. ङ. । ८. दिष्ट—ग., रिष्ट—घ. । ९. माबाध्य—घ., कर्माबध्य—ख. ङ. । १०. 'अथवे····मर्थः' नास्ति—ग. । ११. 'मध्ये' नास्ति—ख. ङ. ज. । १२. 'रक्ष' नास्ति—क. ग. छ. । १३. इतः परम्—"प्राणप्रतिष्ठा । प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय ऋग्यजुस्सामाथर्वणानि छन्दांसि सकलजगत्सृष्टिस्थितिसंहारकारिणी परा प्राणशक्तिर्देवता आँ ह्रीँ क्रोँ बीजं स्वाहा शक्तिः प्राणप्रतिष्ठार्थे विनियोगः । रक्ताब्धिपोतारुणपद्मसंस्थां पाशाङ्कुशामिक्षुशरान् सबाणान् । शूलं कपालं दधतीं कराग्रै रक्तां त्रिणेत्रां प्रणमामि देवीम् ॥ इति । ततः" इत्यधिकः पाठः—क. ग. छ. । १४. जप्त्वा—ख. ङ. ।

1. एतद्वचनमथर्ववेदे न दृश्यते । श्रीकण्ठ्यां पठितेषु चतुष्षष्टितन्त्रेष्वेका आथर्वणसंहिता । तत्रत्यमेतद्वचनं स्यात् ।
2. "अत्र नामलेखनादीतिकर्तव्यताविस्तरो ग्रन्थविस्तरैकप्रयोजनकोऽर्थरत्नावल्यां द्रष्टव्यः" (से. पृ. ११५) ।

अत्र प्राणप्रतिष्ठाप्रकारो लिख्यते—दीर्घषट्स्वरभेदितेन मायाबीजेन कराङ्गन्यासं कृत्वा पाशाङ्कुशाभयवरोद्यतकरां रक्तालङ्कारवसनां प्राणदूतीपरिवृतां रक्तां शक्तिमात्मानं ध्यात्वा मूलाधारान्मूलशक्तिमुत्थाप्य प्रवहणनाड्या निस्सार्य साध्यवामनाड्या तस्य भ्रूमध्यं भित्वा सुषुम्नापथेन[1] हृत्कमलं[2] प्रवेशयित्वा तद्गताष्टपत्रकर्णिकायां निषण्णान् भ्रमराकृतीन् साध्यप्राणान् शक्तितन्तुप्रविद्धान्[3] स्वप्राणदूतीभिराकृष्याकृष्य गुलिकायां संस्थाप्य प्राणप्रतिष्ठामनुं जपित्वा स्वात्मशक्तिं[4] स्वात्मनि समाहरेत् । प्राणदूत्यो यथा—

मृता वैवस्वता चैव जीवहा प्राणहा तथा ।
आकृष्या ग्रथना[5] चैव[6] प्रमादा विस्फुलिङ्गिनी ॥
क्षेत्रज्ञप्रतिहारी[7] च प्राणदूत्यो[8] नव स्मृताः । (प्र० सा० ३५।१२)

आँ[9] ह्रीँ क्रोँ यं रं लं वं शं षं सं हं ळं क्षं सं हं सः[10] अमुष्य प्राणा इह प्राणाः । पुनरपि पाशादि हंसान्तम्[11] अमुष्य जीव इह स्थितः । पुनः पाशादि हंसान्तम्[11] अमुष्य सर्वेन्द्रियाणि । पुनः पाशादि हंसान्तम्[11] अमुष्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा मयि जीव इह स्थितो मयि सर्वेन्द्रियाणि मयि वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहायान्तु सुखं चिरं तिष्ठन्तु स्वाहा । प्राणप्रतिष्ठामन्त्रः । अथवा स्त्रीसाध्य[12] आत्मानं कामेश्वरं ध्यात्वैवं[13] कुर्यात् । पुंसाध्ये कामेश्वरीं[14] ध्यात्वैवं[15] कुर्यादिति । आकृष्ट्यादिषट्कर्मसु भ्रमरप्रयोगपूर्वकं[16] साध्यप्राणान् प्रतिष्ठाप्य स्पृशन् अष्टोत्तरशतादिक्रमेण यथाशक्ति जपेत् । स्वपरार्थ[17]रक्षासु सर्वत्र गुटिकां स्पृशन् भ्रमरप्रयोगं विना तत्तद्देवतासन्निधानार्थं तत्तद्देवतानामपूर्वकं प्राणप्रतिष्ठामन्त्रं यथाशक्ति जपेत् । नवनीतघृतादिष्वात्मो[18]पभोग्यवस्तुष्वाकर्षणवशीकरणविविध[19]प्रयोगेषु भ्रमरप्रयोगपूर्वकं साध्यप्राणान् प्रतिष्ठाप्य सहस्रादिक्रमेण स्पृशन् प्राणप्रतिष्ठामन्त्रं जपित्वा प्रयुञ्ज्यात् । ततोऽभीष्टसिद्धिर्भवति ॥ ३२ ॥

---

१. पदेन–ङ. ज. । २. भेदयित्वा–ख. । ३. तनुप्रविष्टान्–क., मार्गप्रविष्टान् प्राण–ख. ङ. ज. । ४. स्वस्थाने–ख. ङ. ज. । ५. ग्रसना–ख. घ. ङ. ज. । ६. पश्चात् प्रथमा–ख. ङ. ज. । ७. क्षेत्रप्रतिहतेत्येताः–ख. घ. ङ. ज., क्षेत्रजा प्रतिहारी च–छ. । ८. दूत्यश्च यादिका –मु. । ९. 'आँ ह्रीँ·······प्रतिष्ठामन्त्रः' इत्यस्य स्थाने 'आँ ह्रीँ क्रोँ इत्यादि प्राणप्रतिष्ठामन्त्रः' इत्येव पाठः–ख. ङ. ज. । १०. हंसः सोहं–ग. । ११. सोहमन्तम्–छ. । १२. ध्यत्वे–ख. ङ. ज. । १३. त्वेतत्–क. ग. ङ. छ. । १४. कामेश्वरीरूपं–क. ग. छ. । १५. ध्यायेदिति–क. ग. ङ. छ. ज. । १६. कान्–ख. ङ. ज. । १७. स्वपरमात्मा–ख. ङ. ज. । १८. 'ष्वात्मो····र्भवति' इत्यस्य स्थाने 'ष्वात्मप्रयोगवस्तुषु भक्षणवशीकरणप्रयोगः सभ्रमरसप्राणं जपं युञ्ज्यात्' इति पाठः–ज. । १९. 'विविध····र्भवति' इत्यस्य स्थाने 'प्रयोगः सभ्रमरसप्राणं जप्त्वोपयुञ्ज्यात्' इत्येव पाठः–ख. ङ. ।

तथैव[1] हि महेशानि स्वसंज्ञाक्रमयोगतः ।
चन्दनागुरुकर्पूरैरजरामरतां लभेत्[2] ।। ३३ ।।
एवं[3] देवि विधानेन रोचनागुरु[4]कुङ्कुमैः ।
लिखितं चक्र[5]योगेन यस्मिन्[6] कस्मिन्नपि स्थितम् ।। ३४ ।।
साध्यनाम स्वनाम्ना तु चक्रस्यान्तर्विदर्भितम् ।
करोति सकलान्[7] लोकानचिरात् पादवर्तिनः[8] ।। ३५ ।।

---

**तथैव** पूर्ववत् । समातृकावर्णं[9] चक्रं विलिख्य **स्वसंज्ञाक्रमयोगतः** स्वस्य साधकस्य संज्ञाक्षरमन्त्राक्षरक्रमयोगत इत्यर्थः ।। ३३ ।।

**चक्रयोगेन** चक्रविन्यासयोगेन[10] । **यस्मिन् कस्मिन्निति**[11] । देश इति पूर्यम् । **चक्रस्यान्तर्विदर्भितमित्यस्यायमर्थः**—चक्रस्य मध्ये सकामराजबीजे साध्यसाधकनामाक्षराणां यथायोगं विदर्भेण स्थितमिदं[12] चक्रमिति । **लोकान्** जनान् । **पादवर्तिनः** पादस्थानीयान्[13] ।। ३४-३५ ।।

---

तथैवेत्यारभ्य अमरतां लभेदित्यन्तस्यायमर्थः—स्वसंज्ञाक्रमयोगत इति पूर्ववच्चक्रं लिखित्वा चक्रबाह्यतो मातृकालेखनसमये प्रत्यक्षरं साधकनामाद्यक्षरान्तरितं[14] लिखेदिति विशेषः ।। ३३ ।।

एवं देवीत्यारभ्य पादवर्तिन इत्यन्तेनैतदभिप्रेतम्[15]—एवमिति पूर्ववच्चक्रलेखनमुक्तं[16] सूचितम् । अत्रायं विशेषः—मूलविद्या[17]हकाररेफयोर्मध्ये साध्यसाधकयोर्विदर्भितं नाम लिखित्वा तत्रैव कर्म[18] लिखेत् । तत्रापि साधकस्य नामाक्षरद्वयं साध्यना[19]( म ? म्नः ) एकैकमिति विशेषः । वश्यकर्मणः[20] प्रस्तुतत्वाल्लेखनद्रव्यविशेषोऽप्युक्तः । मातृकाक्षरवेष्टनं साधकनामाद्यक्षरयोगेन । ( एव ? एवं ) विदर्भविधिः । साध्यसाधकनामविलेखने सर्वत्रायमेव विधिः ।। ३४-३५ ।।

---

१. तवैव-वाख. । २. व्रजेत्-वाग. से. । ३. एतदेव-वाक. ग से. । ४. चन्दना-ब. । ५. क्रम-ब. । ६. तस्मिन्-वाक. ख. । ७. सकलं लोकम-वाक. ख. । ८. नम्-वाक. ख. । ९. बलि-घ. । १०. चक्रविद्यासंयोगेन-ग. । ११. 'इति' नास्ति-ख. ङ. । १२. 'इदं' नास्ति-ख. ग. ङ. । १३. दास-ग. घ. । १४. साध्य-ङ. । १५. मतम्-ङ. ज. । १६. लेखमुक्तं संचिन्त्य-ङ. । १७. विद्यायां-ख. ज. । १८. कनामा-ङ. ज. । १९. साध्या-ङ. । २०. वश्यस्य-ङ. ज. ।

**मध्यंगतेन बीजेन महाकामकलात्मना[१] ।**
**एकमेकमवष्टभ्य[२] साध्यनामाक्षरं प्रिये ॥ ३६ ॥**
**बहिरप्यखिलैरेव[३] वेष्टयेन्मातृकाक्षरैः ।**
**हेममध्यगतं[४] कृत्वा धारयेद् वामके भुजे ॥ ३७ ॥**
**शिखायामथवाऽस्यादौ[५] धारयेद्यत्र तत्र वा ।**
**करोति दासभूतं[६] तत्त्रैलोक्यं सचराचरम्[७] ॥ ३८ ॥**

---

**मध्यंगतेन** चक्रमध्यत्रिकोणगतेन ।[1]**महाकामकलात्मना** "बिन्दुं संकल्प्य" ( १।१८५ ) इत्युक्तस्वभावेन ईकारात्मना । **अवष्टभ्य** आत्मीकृत्य । **बहिः** चक्रात् । **हेममध्यगतं**[८] हेमपट्टमध्यगतम् । चक्रमिति शेषः । **शिखायां** चूलीतले । **अथवाऽस्यादौ धारयेद् यत्र तत्र वेति । अस्यादौ**[९] खड्गादौ । **यत्र तत्र वेति**[१०] । महानसकोशगृहादिदेश इत्यर्थः । **करोति दासभूतं तत्त्रैलोक्यं**

---

मध्यंगतेनेत्यादि चक्ररूपिणीत्यन्तेनैतदभिप्रेतम्—[1]मूलविद्यामध्यगतमहाकामराजबीजानन्तरं साध्यनामाद्यक्षरं[११] पुनः कामराजबीजं तदन्ते साध्यनामद्वितीयाक्षरम् । एवं क्रमेण यावन्नामपरिसमाप्त्यवष्टभ्य तन्महाचक्रमध्यत्रिकोणे सर्वमेतल्लिखित्वा तत्रैव त्रिकोणान्तरे[१२] मातृकया वेष्टयेत् । अत्रावष्टम्भशब्देन ग्रथनमभिप्रेतम्[१३] । यदुक्तम्—

---

१. त्मनः—सक. । २. मेव—सख. । ३. रेवं—सग., लिखेदेवं—सख. । ४. गतां—वाक. ग. । ५. वस्त्रे—वाक. ख. ग. से. ब. अ. सक. ख. ग. घ. । ६. हि—वाक. ख. ग. से. अ. ब. सक. ख. ग. घ. । ७. नास्त्येषा पङ्क्तिः—सख. । ८. 'हेममध्यगतं हेमपट्टमध्यगतम्' नास्ति—ख. ङ. । ९. 'अस्यादौ' नास्ति—ख. ङ. । १०. 'यत्र तत्र वेति' नास्ति—ख. ङ. । ११. नामाक्षरं—ख. ङ. ज. । १२. णान्तराले मातृकां वे—ख. ङ. ज. । १३. हितम्—क. ग. छ., मतम्—ख. ज. ।

1. "महाकामकलात्मकं बीजं चतुर्थस्वरस्तेन मध्यंगतेन त्रिकोणान्तर्लिखितेन साध्यनामाक्षरमेकमवष्टभ्य संपुटीकृत्य बहिश्चक्रार्धान्नवयोनिचक्राद् बहिर्मातृकाभिर्वेष्टयेदिति तु विमर्शिन्यां व्याख्यातम् । रत्नावलीकारस्तु मध्यंगतेन मूलविद्यामध्यस्थेन बीजेन कामराजकूटेन साध्यनामाक्षराणि ग्रथयित्वा त्रिकोणान्तर्विलिख्य बहिः कामकूटाद् बहिस्त्रिकोणमध्य एव मातृकाभिः साध्यनामाक्षरग्रथनरीत्यैव वेष्टयेदिति व्याचख्यौ" ( से. पृ. ११६ ) ।

**संमोहयति राजानं[1] वाजिनं दुष्टकुञ्जरम् ।**
**चौरं[2] केसरिणं सर्पं[3] परतन्त्रं[4] महाबलम् ॥ ३९ ॥**
**शत्रुं[5] वज्राशनिं शस्त्रं डाकिनीं[6] शाकिनीं तथा ।**
**भूतप्रेत[7]पिशाचांश्च धारिता चक्ररूपिणी ॥ ४० ॥**
**तेन क्रमेण[8] संदर्भ्य[9] पुराणां नाम सुन्दरि ।**
**मध्ये चतुष्पथे वापि[10] चतुर्दिक्षु निधापयेत् ॥ ४१ ॥**

---

[1]**सचराचरमि**त्यत्र तच्छब्दश्चक्रं[11] परामृशति । **परतन्त्रं** परसैन्यम् । **महाबल**मिति तन्त्रविशेषणम् । **वज्राशनि**मिति । [2]वज्रं वर्जनात्[12] । यत्र पतति तद्वर्जयतीति । तादृशी[13]मशनिमित्यर्थः । **धारिता चक्ररूपिणी**ति । देवतेति शेषः ॥ ३६–४० ॥

**तेन क्रमेण** पूर्वोक्तप्रकारेण । **सन्दर्भ्य** ग्रथयित्वा । **पुराणां** प्रसिद्धानां नगरीणाम् । **नाम**[14] संज्ञा । **मध्ये पुराणाम्** । **चतुष्पथे** रथ्याचतुष्टयसन्धौ ।

---

"ग्रथनं चाक्षरं प्रति"[3] इति । तत्रापि[15] मातृकावेष्ट[16]( ने ? नं) साधकनामाद्य[17]क्षर[18]योगेनैव[19] कार्यम् ॥ ३६–४० ॥

तेन क्रमेणेत्यादि ईश्वरीत्यन्तेनैतदभिप्रेतम्[20]—तत्रापि मध्यमबीजेन पुनर्नामा[21]-

---

१. देवेशि–सक. । २. चक्रं–वाग. । ३. सर्वं–से. । ४. परमन्त्रमहाग्रहम्–वाक. ख. ग., परचक्रं–वाग. से., परमन्त्रं–सख. ग. । ५. शत्रून्–से., शक्रं–सख., शक्ति–सग. । ६. वेतालं राक्षसं–वाक. से., शाकिनीं राक्षसीं–ब. सक. ख. ग. । ७. प्रेतभूत–सख. । ८. चक्रेण–वाक. ख. । ९. संदध्यात्–सख. । १०. चापि–से., देवि–सख. । ११. श्चक्रराजं–ग. । १२. पर्जन्यात्–ख. । १३. तादृश–ख. ङ. । १४. 'नाम संज्ञा । मध्ये पुराणाम्' नास्ति–ख. ङ. । १५. अत्रापि–ख. ज. । १६. मातृकया–ग. छ. । १७. नेऽपि–ख. ङ. ज. । १८. साध्य–क. ग. छ. । १९. क्षरं–ङ. । २०. मतम्–ङ. ज. । २१. त्रिपुरा नामा–क. ख. ग. घ. ङ. ज. ।

1. "सचराचरमित्यत्र तच्छब्दश्चक्रं परामृशतीति विमर्शिन्यामुक्तं तदयुक्तमिति" ( से. पृ. ११७ ) । अत्रेदमवधेयम्—सेतुबन्धे 'करोति दासभूतं हि' इति पाठः, ऋजुविमर्शिन्यां तु 'करोति दासभूतं तत्' इति ।
2. "वर्जयति वियोजयति प्राणैः" ( ३।११।४ ) इति निरुक्तव्याख्यायां दुर्गाचार्यः ।
3. १५० पृष्ठस्था २ संख्याका टिप्पणी द्रष्टव्या ।

**महान्[1] कोलाहलस्तत्र ततो लोकस्य जायते ।**
**योषितां च[2] विशेषेण विद्विष्टानामपी[3]श्वरि[4] ॥ ४२ ॥**
**एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ।**
**चतुःसमुद्रपर्यन्तां ज्वलन्तीं चापि चिन्तयेत्[5] ॥ ४३ ॥**
**षण्मास[6]ध्यान[7]योगेन जायते मदनोऽपरः[8] ।**
**दृष्टचैवाकर्षयेल्लोकं[9][10] दृष्टचैव कुरुते वशम्[11] ॥ ४४ ॥**
**दृष्टचा क्षोभयते नारीं[12] दृष्टचा संहरते विषम्[13] ।**

---

**चतुर्दिक्षु** पुराणां चतुराशासु । **निधापयेत्**[14] निखानयेत् । **महान्** अनल्पः । **कोलाहलः** क्षोभात्मा । **तत्र** तासु पुरीषु । **लोकस्य** जनस्य । तत्रत्यानां जनानां परस्परक्षोभो भवतीति भावः । **विद्विष्टानां** परस्परं कृतवैराणाम् ॥ ४१–४२ ॥

**एतन्मध्यगता**मित्यत्रैतच्छब्दश्चक्रराजपरामर्शकः[15]। **वनं** जलम्। **ज्वलन्तीं** चक्रप्रभाकवलितत्वात्[16] । **मदनः** कामः । **अपरो** द्वितीयः । **दृष्टचा करोति**

---

क्षरग्रथनं कार्यमिति विशेषः। अन्यन्मातृकावेष्टनादि समानमिति। सन्दर्भावष्टम्भा-वेकार्थाविति[17] ॥ ४१-४२ ॥

एतदित्यादि नाशयते क्षणादित्यन्तः स्पष्टार्थः। तत्राप्येतदिति श्रीचक्रमभिमतम् ॥ ४३-४६ ॥

---

१. महाहल्लोहलो देवि–वाक. ख., महाकोलाहलस्तत्र–सख. ग., स्तेषु–सक. । २. तु–सख., चा–सग. । ३. त्वदृष्टा–वाक. ख. ब. अ. । ४. नां महे–सक. । ५. चिन्तयेत् प्रिये–वाग. से., चिन्तयेत्ततः–ब. सक. ख. ग. । ६. षण्मासान्–वाग. से. । ७. काल–सग. । ८. नोपमः–वाक. ख. ब. अ. । ९. श्लोकद्वये सर्वत्र 'दृष्ट्वा' इति पाठः–वाग. से., दृष्ट्याकर्षयते–ब., दृष्ट्वा कर्षयते–सख., दृष्ट्वा आक–सग. । १०. लोकान्–वाग. से. सक. । ११. वशे–वाग. से. । १२. संक्षोभयेन्नारीं–वाग. से. सक. ग. । १३. दृष्ट्वैवापहरेद्विषम्–वाग. से., दृष्ट्यापहरते विषम्–ब. सक. ग., दृष्ट्वा–सख. । १४. 'निखानयेत्' नास्ति–ख. ङ. । १५. श्चक्रं परामृशति–ख. ङ. । १६. कवलीकृतत्वात्–ख. ङ. । १७. वेव कार्याविति–क, ख. ग. ङ. छ. ।

दृष्टया करोति वा[1]गीशं दृष्ट्या स[2]र्वं विमोहयेत् ।। ४५ ।।
दृष्टया करोति चावेशं दृष्टया सर्वं विमोचयेत् ।
दृष्टया [3]चातुर्थिकादींश्च [4]नाशयेदचिराज्ज्वरान् ।। ४६ ।।
एतत्प्रपूजितं रा[5]त्रौ च[6]क्रं सिन्दूरचित्रितम् ।
करोति म[7]हदाकर्षं [8]सुदूरादपि योषिताम् ।। ४७ ।।
[9]सर्वदिक्षु विदिक्ष्वेवं [10]यदा देवी [11]प्रपूज्यते ।
दिगनुक्रमयोगेन तदा सर्वं जगद्वशे ।। ४८ ।।

---

वागीशमिति । मूकमपि जनमनुग्रहदृष्टिपातेन सरस्वतीनृत्तगीत[12]रङ्गं करोतीत्यर्थः ।। ४३–४६ ।।

[13]एतदित्यादि । [1]सिन्दूरचित्रितं रात्रौ प्रपूजितं महदेतच्चक्रं सुदूरादपि योषितामाकर्षं करोतीत्यन्वयः । तदा सर्वं जगद् वशे । भवतीति शेषः ।। ४७–४८ ।।

---

एतदित्यादि सुदूरादपि योषितामित्यन्तेन [1]सिन्दूररजसा श्रीचक्रं[14] लिखित्वा तन्म[15]-(ध्य?ध्ये) त्रिकोणमध्ये (प्रथ)मं मूलवि(द्या ? द्यां) ततः संबोधनान्तं देवीनाम पुनर्लिखि[16]त्वाऽर्थादितन्मध्ये आकर्षणकर्मवत् [17]सर्वं नामादिकं लिखित्वा रात्रौ पूजयेदित्यभिमतम् ।। ४७ ।।

---

१. चावेशं–वाक. ख. ग. । २. सर्वं विमोचयेत्–वाग. से., सर्वं विमोहयेत्–ब. । ३. द्व्येकाह्नि–सग. । ४. द्विषमज्वरान्–वाग. से. सग., ज्वरान्नाशयते क्षणात्–अ. ब. सक. ख. । ५. देवि–ब. सक., चक्रं–सख. । ६. सिन्दूरेण विचित्रितम्–वाक. ख., चक्रं सिन्दूररञ्जितम्–वाग. से., निशि सिन्दूरचित्रितम्–ब. सख., चर्चितम्–सक., चक्रं सिन्दूरचर्चितम्–सग. । ७. स महाकर्षं–सग. । ८. दूरस्थायाश्च योषितः–सख., सुदूरादेव–सग. । ९. सदा–वाग. अ. से. ब. सग., एतद्–सक. । १०. यथा देवि–वाक. ख., यदा देवी–सख. । ११. जयेत्–सग. । १२. 'गीत' नास्ति–ग. घ. । १३. एतदिति–ख. घ. ङ. । १४. इतः परम्–'द्रव्यं हरिद्रादि तेन चक्रं' इत्यधिकः पाठः–क. ग. छ., ५८ श्लोकस्थमेतद्व्याख्यानमनवधानादत्र स्थापितम् । १५. 'तन्मध्ये '' र्थादि' नास्ति ख. ङ. ज. । १६. र्धादित–क. ख. ग. घ. ङ. ज. । १७. सर्वनामादि–क. ग. छ. ।

1. "तेन हरिद्रादिना विलिख्य सिन्दूरं पूरयेदिति व्याख्यानमनादेयम्" ( से. पृ. ११८ ) ।

**भूर्जपत्रे विलिख्यैतन्नवे निर्विवरोदरे ।**[1]
**रोचनागुरुकाश्मीरैर्मध्ये संदर्भयेत् पुरम् ।। ४९ ।।**[2]
**विपुलं देशमथवा विषयं मण्डलं तदा ।**[3][4]
**स्वनामसहितं कृत्वा यदि भूमौ निधापयेत् ।। ५० ।।**[5]
**धारयेदथवा हस्ते कण्ठे वा भुजमूलतः ।**[6][7][8]
**शिखायामथवा वस्त्रे यत्र यत्र स्थितं च वा ।। ५१ ।।**[9][10]
**चक्रमेतन्महाभागे पुरक्षोभणमुत्तमम् ।**[11][12]

---

**भूर्जे**ति । **एतत्** चक्रम् । **नवे** नूतने । **निर्विवरोदरे** अच्छिद्रे । **काश्मीरं** कुङ्कुमम् । **मध्ये** चक्रस्य । **संदर्भयेत् पुर**मिति । पुरादीनां नामाक्षराणि यथा संदर्भितानि ग्रथितानि भवन्ति तथेति । **स्वनामसहितं** साधकसंज्ञाक्षर-संयुक्तम् । अयमर्थः—चक्रराजमध्ये[13] त्रिकोणोदरलिखित[14]कामराजबीज[15]गर्भ[16]-गृहे पुरादीनां नामाक्षराणि साधकनामाक्षरैः[17] संदर्भितानि लिखेदिति । **पुरक्षोभणं** पुराणां[18] क्षोभणमित्यर्थः ।। ४९-५२ ।।

---

सर्वेत्यादि जगद्वश इत्यन्तेन श्रीचक्रमध्ये साध्यसाधकयोर्नाम वशीकरणवल्लिखित्वा पूर्वादिक्रमेणैवाभिमुखः[19] पूजयेत् । अत्र[20] साध्यनाम[1] दिङ्नामैवेति[21] सूचितम् ।। ४८ ।।

भूर्जपत्र इत्यादि उत्तममित्यन्तेनैतदभिप्रेतम्[22]—श्रीचक्रमध्ये त्रिकोणमध्यलिखित-विद्यारेफहकारमध्ये पुरादिना(म) साधकनामाक्षरग्रथनयोगेन लिखित्वा कर्मं लिखेदिति यावत् ।। ४९-५२ ।।

---

१. समालिख्य रोचनागुरुकुङ्कुमैः–वाक. ख. अ. ब., त्रेषु संलिख्य–सग. । २. संदर्भयेत्तस्य मध्ये नगरं वाथवा पुरम्–वाक. ख. सक. ग. । ३. विपुलं–सक. । ४. च वा–वाक. ख., तथा–वाग. से. ब. सक. । ५. दर्भितं–वाक. ख. । ६. द्वालके–सक. । ७. केयूरे वा शिखाग्रके–सक. । ८. बाहु–वाग. से. सग. । ९. बाहुमूलेऽ–सक. । १०. वा रोचयेन्मनः–सक. । ११. देवि–सख. ग. । १२. हेतुकम्–सख. ग. । १३. मध्य–ख. घ. ङ. । १४. विलसित–ख ङ., 'लिखित' नास्ति–ग. । १५. 'बीज' नास्ति–ख. ङ. । १६. 'गर्भ' नास्ति–घ. । १७. साधकानां नामा–ग. । १८. 'पुराणां क्षोभणमित्यर्थः' नास्ति–ख. ङ. । १९. क्रमेण पूर्वाभि–ङ, क्रमेणाभि–ज. । २०. तत्र–ङ. ज. । २१. नामादिना–ख. ङ. ज. । २२. मतम्–क. ग. छ. ।

1. "अत्र दिङ्नामैव साध्यनामेत्याहुः" (से. पृ. ११८) ।

अर्कक्षीरं कुङ्कुमं च धत्तूरकरसं[1] तथा ॥ ५२ ॥
रोचनालक्तकं लाक्षारसं मृगमदोत्कटम्[2] ।
एकीकृत्य[3] चक्रमेतल्लिख्यते[4] यस्य संज्ञया[5] ॥ ५३ ॥
तस्य चोरग्रहव्याधिरिपुसिंहाहिवारिजम्[6][7][8] ।
यक्षराक्षसवेतालभूतप्रेताशुभात्मनाम्[9] ॥ ५४ ॥
लूतावृश्चिककीटानां कामलाशीतिकोद्भवम्[10] ।
भयं न विद्यते[11] तस्य[12] परमन्त्रा[13]भिचारजम्[14] ॥ ५५ ॥

---

अर्कक्षीरमित्यादि । धत्तूरकरसम् उन्मत्तपुष्परसम् । अलक्तकलाक्षयोरवान्तरभेदो द्रष्टव्यः ।[15] मृगमदोत्कटम् । मृगमदः कस्तूरिका, तयोत्कटम् उद्रिक्तम् । संज्ञया नाम्ना । ग्रहः सूर्यादिः । व्याधिः आध्यात्मिकादिदुःखत्रयात्मा । वारिजं जलनिमित्तजं भयम् । यक्षराक्षसवेतालभूतप्रेताशुभात्मनामिति । यक्षादिप्रेतान्तानां[16] पञ्चानामन्येषामशुभात्मनामपीत्यर्थः । लूतेत्यादि[17] । लूतादिकीटान्तानां त्रयाणां संबन्धि भयम्, कामलोद्भवं भयं शीतिकोद्भवं भयं चेत्यर्थः[18] । तस्य साधकस्य । परमन्त्राभिचारजं भयमित्यस्यायमर्थः—परेषां

---

अर्कक्षीरेत्यादि सर्वथेत्यन्तप्रयोगे रक्षाकर्मवन्नामकर्म[19] लिखेत् ॥ ५२-५६ ॥

---

१. कुसुमं-सख. । २. त्तमम्-ब. । ३. कृत्वा-से. ब. सक. ख. । ४. क्रमेणैत-ब. । ५. खितं-सक. । ६. विष-सख., विप्र-सग. । ७. हिंसानिवारणम्-सक., हिंसाभिचारजम्-सग । ८. वाजिजम्-वाख. से., वाजिनाम्-वाक. ग. । ९. भूतौघशाकिनीदुष्टचेतसाम्-वाक. ख., भूतप्रेतपिशाचजम्-वाग. से., हिंसाभिचारजम्-सख. । १०. लूतादिगर्दभज्वाला तथा शीतलिकोद्भवम्-वाक. ख., ज्वालागर्दभलूतादि-ब. सग., लूतागर्दभविस्फोटज्वाला-सक., भूतादिडामरोद्भूतं-सख. । ११. पीडयते-सक. । १२. वश्यं-सक. । १३. तन्त्रा-सग. । १४. कम्-वाक. ख., रिकम्-ब. । १५. 'मृगमदोत्कटम्' नास्ति-ख. ङ. । १६. अनेकेषामशु-ख. ङ. । १७. लूतादीति-घ., नास्ति-ख. ङ. । १८. 'शीतिकोद्भवं भयं' नास्ति-ख. ङ. । १९. कर्मवल्लिखेत्-ङ. ज., कर्मलेखनम्-क. ग. छ. ।

**नित्यसन्धारणा[१]च्चापि[२] कालमृत्युयमादयः ।**
**न शक्ता हिंसितुं सम्यग् रोमै[३]कमपि सर्वदा[४] ॥ ५६ ॥**
**अथवा[५] मध्यगां[६] देवीं त्रिकोणोदरगां[७] तथा ।**
**अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमाङ्कि[८]ताम् ॥ ५७ ॥**
**कुर्या[९]द्यस्तु च सप्ताहाद् दा[१०]सवत् किङ्करो भवेत् ।**

---

शत्रूणां[११] संबन्धि मन्त्रसाधिताभिचारजं भयमिति[१२]। [१३]**नित्यसंधारणात्** चक्रराजस्य[१४] ॥ ५२–५६ ॥

**अथवेति** । **मध्यगां** महाचक्र[१५]मध्यशक्तिमध्यस्थानगताम् । **देवीं** मन्त्ररूपिणीम् । [1]**त्रिकोणोदरगां**[१६] कोणत्रयोदरगताम् । [2]**तथा** यथा[१७] मध्ये तथा[१८] कोणत्रयेष्वपीत्यर्थः[१९] । **अधस्ताद्** बीजचतुष्टयाधःस्थाने । **नामसंयुक्तां** साध्यसाधककर्माक्षरसंयुक्ताम्[२०] । अयमर्थः—प्रथममुक्तद्रव्यैर्महाचक्रं विन्यस्य मध्यशक्तिस्थानमध्यभागे श्रीकामराजं विलिख्य कोणत्रये[२१] तदेव बीजं निष्पाद्य तद्बीजचतुष्टयाधस्ताच्छब्दलक्षितान्तःप्रदेशे

---

अथवा मध्यगामित्यादि किङ्करो भवेदित्यन्तस्यायमर्थः—श्री[२२]चक्रत्रिकोणमध्ये श्रीत्रिपुरसुन्दरीरूपं[२३] विलिख्य कोणत्रयलिखितमूलविद्याहकारमध्ये पूर्ववत् साधकस्य[२४] साध्यस्य देव्या नाम संबोधनपूर्वकं लिखित्वा कर्म लिखेदित्यर्थः ॥ ५७–५८ ॥

---

१. नित्यं–से. सख. । २. द्विवि–वाग. से. ब. । ३. वालै–सक. । ४. सर्वथा–वाग. अ. से. ब. सक. ख. ग. । ५. अथ मध्यगतां–ब. । ६. मध्यगो–वाग. से. । ७. भयगां–वाक. ख. ग. से. ब. अ., भयतस्तथा–सख. । ८. न्विताम्–सख. । ९. निवापयेच्च–वाग. से. ब. सक.ख.ग. । १०. दर्वाग् वै–सक. । ११. 'शत्रूणां' नास्ति–ख. ङ. । १२. रजातं–ग. घ. । १३. मित्यर्थः–घ. । १४. चक्रस्य–ख. ङ. । १५. शक्तिमध्यचक्र–ख. ङ. । १६. 'त्रिकोणोदरगां' नास्ति–ख. ङ. । १७. 'यथा' नास्ति–ग. घ. । १८. 'तथा' नास्ति–ग. घ. । १९. ष्वित्यर्थः–ग. घ. । २०. सहिताम्–ख. ङ. । २१. त्रयेऽपि–ख. ङ. । २२. 'श्री' नास्ति–क. ग. छ. । २३. देवीरूपं–ख. ङ. ज. । २४. साधकसाध्यनाम देवीनाम–ख. ङ. ज. ।

1. "त्रिकोणोदरगामिति क्वाचित्कः पाठः" ( से. पृ. ११९ ) ।
2. "त्रिकोणस्य कोणत्रये मध्ये चेति चतुर्वारं विद्यां विलिख्य तदधः स्थानचतुष्के साध्यनामापि पुनः पुनर्लिखेदिति व्याचक्षते । कामकूटं चतुर्वारं लिखेदित्यपि केचित्" (से. पृ. ११९) ।

**पीतद्रव्येण[1] वालिख्य[2] धारयेदुज्जिघृक्षताम्[3][1] ।। ५८ ।।**
**नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणात् ।**
**महानील[4]रसेनापि नाम संयोज्य पूर्ववत् ।। ५९ ।।**
**दक्षिणाभिमुखो वह्नौ दग्ध्वा तं मारयेत्[5] क्षणात्[6] ।**

---

अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ।
अन्तराग्निश्रियोः कर्म साधकांशे समालिखेत् ।।
( प्र० सा० १०।५५–५६ )

इति स्थित्या साध्यसाधक[7]कर्माक्षराणि लिखित्वा सप्राणप्रतिष्ठं यथोक्तमाराध्योक्तस्थाने निधापयेदुक्तफलसिद्धय इति । **दासवत् किङ्करो भवेत्** । साध्य इति शेषः ।। ५७–५८ ।।

**पीतद्रव्येण** हरिद्रादिना । **उज्जिघृक्षताम्** उद्ग्रहणिकां चिकीर्षूणाम् । **नाम्ना** संज्ञया । अयमर्थः––विवदिषूणां प्रयोगकरणे प्रतिविवदिषोर्नाम्ना सहितं चक्रं विलिख्य तान् विवदिषून् तच्चक्रं धारयेदिति । अत्राभियुक्तवचनम्––

स्तम्भे काल[8]निभं प्रोक्तं मारणे चासितं तथा ।
सुसितं शान्तिकर्मादौ[9] वश्ये रक्तं समन्ततः ।। इति ।

---

पीतद्रव्येत्यारभ्य मूको भवति तत्क्षणादित्यन्तस्यायमर्थः—[10]पीतद्रव्यं हरिद्रादि, तेन चक्रं लिखित्वा तन्मध्ये त्रिकोणमध्ये प्रथमं मूलविद्या ततः संबोधनान्तं देवीनाम पुनरमुकस्य वाचं स्तम्भयेति, अन्तेऽपि मूलविद्येत्येवं लिखेत् ।। ५८–५९ ।।

[11]महानीलीरसेनेत्यादि मारयतेऽचिरादित्यन्तेनैतदभिप्रेतम्—तस्य महाचक्रस्य मध्ये पूर्ववन्मूलविद्यां लिखित्वा ततो देवीनाम संबोधनान्तं लिखित्वाऽमुकं मारय[12] मारयेति [13]लिखेदित्यर्थः ।। ५९–६० ।।

---

१. अङ्कितां लिखितां नित्यं–वाग. से. । २. संलिख्य–ब. सख. । ३. धारयेदिन्द्रदिग्गताम्–वाक. ख., धारणात्रयमुत्तमम्–सघ. । ४. नीली–वाग. से. अ. सक. ग. । ५. मारयते–वाख. से. ब अ. सक. ख. ग. । ६. ऽचिरात्–अ. सक. ग., रिपून्–ब । ७. 'साधक' नास्ति–ख. । ८. ताल–ख. घ. ङ. । ९. कादौ च–ग. घ. । १०. 'पीत''''लिखेत्' नास्ति–क ग. छ., अत्रत्यानि कानिचन पदानि ४७ श्लोकव्याख्यायां लिखितानि । ११. 'महानीली' नास्ति–क. ग. छ. । १२. 'मारय' नास्ति–ङ. ज. । १३. चालि–ख. ङ. ज. ।

1. "क्वचिदिन्द्रदिङ्मुख इति मूलपाठः" ( से. पृ. ११९ ) ।

**महिषाश्वपुरीषाभ्यां गोमूत्रेणाङ्कितं लिखेत् ।। ६० ।।**
**नामारनालमध्यस्थं विद्विष्टः सर्वजन्तुषु ।**
**युक्त्वा रोचनया नाम काकपक्षेण संलिखेत् ।। ६१ ।।**

---

**मूको** प्राप्तवाङ्निरोधः । **तत्क्षणात्** प्रयोगकालाविलम्बितमेव ।। ५८–५९ ।।

**महानीलरसेन** महानीलपङ्केन । इदमेवास्याभिधानम् । तत्तद्देश-भाषाया नामान्तरं श्रोतव्यम् । **नाम** साध्यस्य । **पूर्ववत्** वाक्स्तम्भचक्र-क्रमवत् । **दग्ध्वा** नीलपटादौ लिखितम्[1] । **मारयेत्** [2](मारये)त्याख्यातपद-द्वयोपेतं प्रतिष्ठितप्राणं तच्चक्रं वह्नौ दग्ध्वा साध्यं मारयेदित्यर्थः ।।५९-६०।।

[3]**महिषाश्वपुरीषाभ्या**मित्यनेन चक्रनिर्माणद्रव्यमुच्यते । **गोमूत्रेण** सेचनकेन । **अङ्कितं** [4]विद्वेष(म?य)युगाक्षरैः । **नाम** साध्यस्य संज्ञाक्षरम् । **आरनालमध्यस्थं** काञ्जिकमध्यस्थम् । कुर्यादिति शेषः ।। ६०–६१ ।।

---

महिषाश्वेत्यादि विद्विष्टः सर्वजन्तुष्वित्यन्तेनैतदभिप्रेतम्—विद्वेषणं यथा महाचक्र-मध्ये त्रिकोणमध्ये मूलविद्याङ्कितं साध्यसाधकयोर्नाम कर्मसहितं लिखेत् । प्रथमं मूल-विद्या पुनरमुकामुकयोर्विद्वेषणं कुरु कुर्विति लिखित्वा ततो मूलविद्या पुनरपि नाम पूर्ववत् । पुनरपि मूलविद्या । एवमङ्कितं निरोधितं लिखेदिति यावत् । [3]महिषाश्वपुरीषादि-गोमूत्रैरिति सहजवैरिजीवयोः पुरीषमूत्रैर्विद्वेषणयन्त्रं लिखेदित्यर्थः ।। ६०–६१ ।।

---

१. षादिगोमूत्रैर्नाम टङ्कितम्–अ. सक. ख. ग. । २. त्रेण समङ्कितम्–वाक. ख. । ३. क्षिप्त्वा–वाक. ख. सग. । ४. वानल–सग., बालस्य–सख. । ५. युक्तं–अ. सक. ख. ग. । ६. पक्षस्य मध्यगम्–वाक. ख. अ. ब. । ७. भाषया–ग. घ. । ८. 'क्रम' नास्ति–ख. ङ. । ९. 'पद' नास्ति–ग. घ. । १०. 'काञ्जिकमध्यस्थम्' नास्ति–ग. । ११. 'महा' नास्ति–ङ. । १२. अथवा–ख. ज. । १३. 'कुरु' नास्ति–ङ. ज. । १४. पुनः–ङ. ज. । १५. 'मूल' नास्ति–क. ग. छ. । १६. एवं ट–क. ग. छ. । १७. 'महिषा.... लिखेदित्यर्थः' नास्ति–ग. ।

1. नीलपटादौ लिखितं दग्ध्वेत्यर्थः ।
2. मारय मारय इत्येवमाख्यातपदद्वयोपेतमित्यर्थः ।
3. "महिषाश्वेति तु मिथो वैरस्य गोव्याघ्रादेरुपलक्षणमित्यन्ये । पुरीषद्वयमेव लेखनद्रव्ये । गोमूत्रेण तु चक्रस्य सेचनमात्रमित्यपि केचित्" ( से. पृ. १२० ) ।
4. विद्वेषय विद्वेषय इत्येवं युगाक्षरैरित्यर्थः ।

**नीलकर्पटके[1] सम्यङ्नीलसूत्रेण वेष्टयेत् ।**
**लम्बमानं तदाकाशे[2] उच्चाटनकरं परम्[3] ॥ ६२ ॥**
**दुग्धलाक्षारोचनादिमहानीलरसादिभिः[4][5] ।**
**लिखित्वा धारयेद्[6] देवि चातुर्वर्ण्यं वशं नयेत्[7] ॥ ६३ ॥**

---

**युक्त्वा** । उच्चाटनयुगेन[1] योजयित्वेति यावत् । **नाम** साध्यस्य । **काकपक्षेण** लेखन्या । **नीलकर्पटके** कृष्णपटे । **वेष्टयेत्[8]** बध्नीयात् । **तत्** चक्रम् ॥ ६१-६२ ॥

**दुग्धेति** । **दुग्धं** क्षीरम् । **चातुर्वर्ण्यं** जातिचतुष्टयम् । [2]द्रव्यचतुष्टयेन [9]वर्णचतुष्टयं वशीकुर्यादिति तात्पर्यम् ॥ ६३ ॥

---

[10]युक्त्वा रोचनयेत्यादि उच्चाटनकरं परमित्यन्तस्यायमर्थः—गोरोचनया काकपक्षेण[11] [12]नीलकर्पटकस्य मध्ये चक्रं विलिख्य[13] तन्मध्ये आदौ साध्यनाम द्वितीयान्तं लिखित्वा[14] उच्चाटय उच्चाटयेति कर्मपदान्ते मूलविद्यां लिखेदिति यावत् ॥ ६१–६२ ॥

दुग्धलाक्षेत्यादि चातुर्वर्ण्यं वशं भवेदित्यन्तस्यायमर्थः—लाक्षाशब्देन ज(तुरु?तू)च्यते । [15]अत्र चक्रनामादिलेखनं वशीकरणकर्मवज्ज्ञातव्यम् ॥ ६३ ॥

---

१. एतन्नीलीपटे–सख. ग. । २. तदा कार्यं–सक., हृदाकाशे–सख. । ३. परमुच्चाटनं भवेत्–वाग. से., उच्चाटयति तत्क्षणात्–सक. । ४. नाभिर्म–से. ब. सख. ग. । ५. नीलीरसेन च–वाग से. सख. ग., नीली–ब. सक. । ६. च्चक्रं–वाग. से. । ७. भवेत्–अ. से. ब. सख., भवेद्वशम्–सग. । ८. 'वेष्टयेत् बध्नीयात्' नास्ति–ख. ङ. । ९. 'वर्णचतुष्टयं' नास्ति–ख. ङ. । १०. 'युक्त्वा····यावत्' नास्ति–ग. । ११. पक्षस्य–ख. ङ. ज. । १२. 'नीलकर्पटकस्य' नास्ति–ख. ङ. ज. । १३. लिखित्वा–ख. ङ. ज. । १४. त्वात्र–ख. ङ., त्वात्रोच्चाटयेति–ज. । १५. अत्रापि–ङ. ज., इतः परम्–'नाम्ना विना ध्यानेनैव' इत्यधिकः पाठः–क. ग. । स चाप्रासङ्गिक इव, ७१ श्लोकस्थ-नाम्नेति-पदव्याख्यायां स्थापयितुमर्हः ।

1. उच्चाटय उच्चाटय इत्येवमुच्चाटनयुगेनेत्यर्थः ।
2. "एतेन चत्वारि द्रव्याणि चतुर्णां वर्णानां वशीकरणे यथासंख्यमन्वियन्तीति विमर्शिनीकारोक्तिर्निरस्ता" ( से. पृ. १२० ) ।

**एतेनैव[1] विधानेन जलमध्ये यदा[2] क्षिपेत् ।**
**सौभाग्यमतुलं[3] तस्य[4] स्नानपानादिना[5] भवेत् ॥ ६४ ॥**

---

**एतेनैवेति । एतेन** अनन्तरोक्तविधिना । **जलमध्ये** वारिधान्याम् । **क्षिपेत्** । चक्रमिति शेषः । **तस्य** साधकस्य । **आदि**शब्देन मुखसेचनं लक्ष्यते । अत्रेदं[6] सूचितम्—दीक्षाशब्दितनैमित्तिकाद्यभिषेकसमये[1] चक्रं कनकपट्टे विलिख्य भूत(प्र?ल)स्थितमहाचक्रमध्यस्थितस्य सकूर्चासनस्य सनवरत्नस्य वासोयुगावृतमुखस्याश्वत्थादिस्त(म्ब?ब)कालङ्कृतस्यान्तर्निहितकूर्चस्याभिषेक-[7] कुम्भस्योदरे प्रक्षिप्य[8] सेचनक्रियानन्तरं कुम्भादिभिः सह तत्कनकयन्त्रं प्राणदात्रे गुरवे सदक्षिणं दद्यात् साधक इति । अत्रा**भियुक्तोक्तिः**—

अभिषिच्य[9] यन्त्रकलशं गुरवे प्रददातु संयतमतिः सुमतिः ।
दुरितापनोदविधये द्युतये यशसे श्रियै च मतिसंयतये ॥
( प्र० सा० २१।५२ )

अभिषिच्य पुनः शिष्यं कुम्भादीन् गुरुराहरेत् ।
( प्र० सा० ३१।२४ )

प्राणप्रदानकर्त्रे न च कार्यं वित्तशाठ्यममलधिया ॥ इत्यादि ॥६४॥
( प्र० सा० २५।१९ )

---

एवमेवेत्यादि न संशय इत्यन्तस्या[10]त्मरक्षाकमंवन्नामलेखनम्, चक्रलेखनं तु दुग्ध-लाक्षादिभिरेव कार्यमित्यर्थः ॥ ६४ ॥

---

१. एतदेव-वाक. ख., एवमेव-अ. सग., एतद्देवि-सक. । २. विनिक्षिपेत्—वाख. से. ब. सक. ख., यदि क्षिपेत्—सग. । ३. मुत्तमं-ब. । ४. लोके-सख. देवि-सग. । ५. पानान्न संशयः-वाक. ख. अ. । ६. 'अत्रेदं''''इत्यादि' नास्ति-ख. ङ. । ७. युगलावृताश्वत्था—ग. । ८. विलिख्य—घ. । ९. 'अभिषिच्य' इत्येष श्लोको नास्ति—ग. । १०. स्यायमर्थ आत्म—ख. ङ. ज. ।

1. "यत्तु विमर्शिन्यामुक्तं दीक्षाभिषेकसमये कनकपट्टचक्रं कुम्भे निक्षेप्यम् । अभिषेकोत्तरं च तच्चक्रं गुरवे देयमित्ययमर्थोऽनेन लब्ध इति, तत्तन्त्रान्तरे न दृष्टम्" ( से. पृ. १२१ ) ।

**एतन्मध्यगतां[1] देवि[2] नगरीं[3] वा[4] वराङ्गनाम् ।**
**सप्ताहात् क्षोभयेत् सत्यं[5] ज्वलमानां विचिन्तिताम्[6] ।।६५।।**
**महापातकयुक्तात्मा यदि देवि[7] प्रपूजयेत् ।**
**शमीदूर्वाङ्कुराश्वत्थपल्लवैरथवाऽर्कजैः[8] ।। ६६ ।।**
**मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ।**
**लिखित्वा पीतवर्णं[9] तु[10] चक्रमेतद्यदाऽर्चयेत्[11] ।। ६७ ।।**

---

**एतदित्यादि** । **देवी**त्यामन्त्रणम् । **एत**च्चक्र**मध्यगतां** मध्यभागस्थितां शक्त्युदरविलिखितमध्यबीजमध्यगताम् । **ज्वलमानां** मन्त्रपावकशिखया । **विचिन्तितां** तामुक्तकालं[12] ध्याताम् ।। ६५ ।।

**महापातकेति** । अत्रापि **दे**[13]**वी**त्यामन्त्रणे । **महापातकयुक्तात्मा** महद्भिः पातकैर्युक्तोऽहमिति[14] मन्यमानः । **प्रपूजयेत्** । चक्रमिति शेषः । **शमीति** । **पल्लवशब्दः** शम्यादिभिश्चतुर्भिः संबद्धचते । **अर्कजैः** अर्कपल्लवैः । [1]पुष्पस्याप्युपलक्षणमेतत् । **कलुषम्** एनः । **सप्तजन्मकृत**मिति प्राचीनानन्तकोटिजन्म-[15]कृतपापोपलक्षणम् । **नरः** साधकः ।। ६६–६७ ।।

---

एतदित्यारभ्य विचिन्त्य तामित्यन्तः स्पष्टार्थः । [16]एतदित्यत्रापि चक्रमुच्यते । अत्र नाम्ना विना ध्यानेनैव साधनमभिप्रेतम् ।। ६५ ।।

[17]महापातकेत्यादि नर इत्यन्तः सर्वपापप्रायश्चित्तप्रदर्शकः स्पष्टार्थः ।। ६६–६७ ।।

---

१. अथवैतद्गतां–सख. । २. देवीं–वाग. से. सख. । ३. नागरीं–वाग. से. सख. ग. । ४. वा सुरा–वाग. से., चातुराङ्गनाम्–सख. । ५. सम्यग्–सक., सद्यः–सख. । ६. न्त्य ताम्–वाक. ख. अ., न्तयन्–सक., न्तयेत्–सग. । ७. देवीं–वाग. से. सख. ग. । ८. सहा–वाख. से. । ९. वर्णेन–वाग. से. । १०. च–ब. सख. । ११. चक्रमध्ये तथा–सक. । १२. काल–ख. घ. ङ. । १३. णम्–ख. ग. ङ. । १४. क्तमिति–ख. ङ. । १५. 'कोटि' नास्ति–ख. ङ. । १६. 'एत····प्रेतम्' नास्ति–ख. ङ. । १७. 'महा····स्पष्टार्थः' नास्ति–ख. ङ. ।

1. "अर्कजैरिति तु तत्पुष्पस्याप्युपलक्षणमिति वदन्ति" ( से. पृ. १२१ ) ।

**पूर्वाशाभिमुखो भूत्वा स्तम्भयेत् सर्ववादिनः ।**
**सिन्दूररेणुलिखितं[1] पूजयेदुत्तरामुखः ।। ६८ ।।**
**यदा[2] तदाऽस्य[3] वशगो लोको भवति सर्वदा[4] ।**
**गैरिकेणैतदालिख्य[5] पूजयेत् पश्चिमामुखः ।। ६९ ।।**
**स[6] च सर्वाङ्गनाकर्षवश्यक्षोभकरो भवेत् ।**
**दक्षिणाभिमुखो भूत्वा कृष्णवर्णं[7] यदाऽर्चयेत्[8] ।। ७० ।।**
**यस्य नाम्ना तस्य नित्यं मन्त्रहानिस्तु[9] जायते ।**

---

**पीतवर्णं** तालहरिद्रादिभिः । **सिन्दूररेणुलिखितम्** । चक्रमित्यध्याहार्यम् । **गैरिकेण** धातुना । **एतत्** चक्रम् । यः साधकः । **कृष्णवर्णम्** । **यस्य** साध्यस्य[10] । **नाम्ना** संज्ञया । **तस्य** साध्यस्य[11] । **तद्वद्** यथा[12] दिङ्मुखः साधयति ।

---

लिखित्वेत्यादि वादिन इत्यन्तस्यायमर्थः—हरिद्रोन्मत्तहरितालपङ्केन श्रीचक्रं लिखित्वा तन्मध्यकोणे वादिनाम[13] आद्यन्तमूलविद्यारोधितं पूर्ववल्लिखित्वा पूजयेदिति यावत् । सिन्दूरेत्यादि भवति सर्वदेत्यन्तः[14] सर्ववश्यप्रयोगवन्नामलेखनादिसहितो ज्ञातव्यः । चक्रमित्यारभ्य क्षोभकरो भवेदित्याकर्षणवन्नामादिसहितो ज्ञातव्यः । दक्षिण इत्यादि जायत इत्यन्तस्यायमर्थः[15]—महानोलीरसादिना चक्रं लिखित्वा तन्मध्ये श्रीमूलविद्यान्तेऽमुकस्य मन्त्रहानिं कुरु[16] कुर्विति लिखित्वा[17] पूजयेदित्यर्थः । तद्वदित्यादि कारकमित्यन्त-

---

१. रेणाप्युल्लिखितं—से., रेणापि—ब., रेणाथ—सक., रलेख—सख. । २. यदि तद्दास्य—सग. । ३. सु—सक. । ४. सर्वथा—अ. से. ब. सग. । ५. चक्रं गैरिकमालिख्य—वाक. ख., गैरिकेण तदालिख्य—से. । ६. सोऽपि—वाख. से., यतः—सग., योऽसौ—ब., तदा—सक. । ७. कृष्णं चक्रे समर्चयेत्—वाग. से. । ८. सम—सक. ख. । ९. सस्य—सख. । १०. साधकस्य—ख. ङ. । ११. साधकस्य—ग. । १२. यथा महादिङ्—ग. घ. । १३. 'वादिनाम' नास्ति—ख.ङ.ज. । १४. त्यन्तं पूर्वं—ख. ङ. ज. । १५. इतः परम्—'नीलीरसादि द्रव्यं हरिद्रादि तेन चक्रं लिखित्वा तन्मध्यत्रिकोणमध्ये मं मूलविद्या, ततः संबोधनान्तं देवीनाम पुनरमुकस्य वाचं स्तम्भय स्तम्भयेति, अन्ते मूलविद्या इत्येवं लिखेत् । महानीली····रमुकस्य वाचं स्तम्भय स्तम्भयेति, अन्ते मूलविद्या इत्येवं लिखेत्' इत्यधिकः पाठः—क., स चात्रानावश्यकः, पूर्वं स्तम्भनप्रकरणे ५८श्लोकव्याख्यायामस्य पाठस्य विद्यमानत्वात् । १६. 'कुरु' नास्ति—ङ. ज. । १७, आलिख्य—क. ख. छ., आरभ्य—ङ. ज. ।

**तद्वद् दिगन्तरालेषु पूजितं[1] परमेश्वरि[2] ।। ७१ ।।**
**स्तम्भविद्वेषणव्याधिशत्रूच्चाटनकारकम् ।**
**रोचनालिखितं देवि दुग्धमध्ये वशङ्करम्[4] ।। ७२ ।।**
**[ क्षिप्तं[3] गोमूत्रमध्ये वा शत्रूच्चाटनकारकम् ।**
**तक्रमध्यगतं चक्रं विद्वेषणकरं परम् ।। ]**
**ज्वलज्ज्वलनमध्यस्थं सर्वशत्रुविनाशनम्[5] ।**
**अथवा देवदेवेशि यदेकान्ते चतुष्पथम् ।। ७३ ।।**
**तत्समीपे लिखेच्चक्रं सिन्दूरेण महाप्रभम् ।**
**[6]सर्वबाह्यत आरभ्य यावन्मध्यं[7] महेश्वरि ।। ७४ ।।**

---

**दिगन्तरालेषु** आग्नेयादिषु । **पूजितं** चक्रम् । **दुग्धमध्ये** क्षीरमध्ये । **ज्वलनो** वह्निः ।। ६७-७३ ।।

**एकान्ते** विजने । **तत्समीप** इत्यत्र तच्छब्दश्चतुष्पथं लक्षयति[8] । **महाप्रभम्** अत्युज्ज्वलम् । **सर्वबाह्यत** इत्यस्यायमर्थः—पूज्येऽस्मिन् महति चक्रे [1]यद्यदणिमादिसिद्ध्यादीनां[9] महात्रिपुरसुन्दर्यन्तानां देवतानां[10] पूजास्थानमस्ति,

स्यायमर्थः—[1]ईशानादिवायव्यान्तं विदिङ्मुखस्तत्तद्द्रव्यैस्तत्तत्कर्मवन्नामसहितं चक्रं पूजयेदित्यर्थः । रोचनालिखितमित्यादि । अत्रापि वशीकरणकर्मवत् सर्वं नामादि । क्षिप्तमित्यादेरुच्चाटनकर्मवत् सर्वम् । (चक्र?तक्र)मध्यगतमित्यादेर्विद्वेषणकर्मवन्नामादिलेखनम् । ज्वलज्ज्वलनमित्यादेर्मारणकर्मवत् सर्वं लोहपट्टे समुत्कीर्य त्रिकटुकचित्रमूलविषादिपङ्केनालिप्याधोमुखमग्नौ निक्षिपेदिति यावत् ।। ६७-७३ ।।

अथवेत्यारभ्य खेचरो भवेदित्यन्तस्यायमर्थः—[2]चक्रचतुरस्रमारभ्य त्रिकोणमध्यपर्यन्तं प्रतिदैवतमासनस्थानेष्वकारादिक्षकारान्तं वागुराकारं[11] यथा भवति तथा लिखे-

---

१. तां–ब. । २. रीम्–ब. । ३. एष श्लोकोऽधिकः–वाक. ख. ग. से. सक. । ४. इतः परम्–"तैलमध्यगतं चक्रं विद्वेषणकरं परम् । तक्रमध्यगतं चापि विद्वेषणकरं भवेत् ।।" इति सेतुबन्धे । ५. थे–सख. ग. । ६. सर्वं–ब. । ७. सुरे–सक. ख. । ८. सूचयति–ख. ङ. । ९. मादिशक्तिसि–ख. ङ., मादिमहासि–ग. । १०. 'देवतानां' नास्ति–ख. ङ. । ११. वाग्भवं कामराजं–ख. ङ. ज. ।

1. "तेन पूर्वोत्तरापरदक्षिणक्रमस्य पूर्वं क्लृप्तत्वादीशानाद्याग्नेयान्तः क्रम इति कल्पना परास्ता । ईशानादिवायव्यान्तः क्रम इति रत्नावलीकारस्य तु महान् प्रमादः" (से. पृ. १२२) ।
2. अग्निमायाः स्थाने स्वाभिमुखाग्रं कोणं कृत्वेशानाग्नेयाभिमुख्येन द्वे वामदक्षिणरेखे विभाव्य

**अकारादिक्षकारान्तां मातृकां तत्र[1] विन्यसेत्[2] ।**
**पूजयेद् रात्रिसमये कुलाचारक्रमेण यः ।। ७५ ।।**
**तत्क्षणात्[3] स[4] महेशानि[5] साधकः खेचरो भवेत् ।**

---

[6]तत्र तत्राकारादिक्षकारान्तां मातृकामकथादित्रिरेखा[7]त्मना मध्यस्थहक्षेण च त्रिकोणरूपकुलासनात्मना विन्यस्य पूजयेदिति । ननु देवताः कुत्र निवसन्ति[8] ? मन्त्रेष्विति ब्रूमः । **यच्छ्रुतिः**—"क्व स्थः क्व वः सद्यो हव्यं वक्ष्याम इति छन्दःस्वित्यब्रुवन् । गायत्र्यां त्रिष्टुभि जगत्यामिति । तस्माच्छन्दस्सु सद्ध्रूच आदित्येभ्य आङ्गीरसीः प्रजा हव्यं वहन्ति" ( तै० ब्रा० २।२।३।७ ) इति । आह च—[1]"मणिवन्मन्त्रमालम्ब्य प्रभावन्मन्त्रदेवताः" इति । **रात्रिसमये** अर्धयामिन्याम् । **य[9]दागमः**—"पूजोदितार्धयामिन्यां पितृवेश्मादिशायिनाम्" इति । **कुलाचारक्रमेण** महासमयमहानुष्ठानमार्गे[10]ण ।। ७३–७६ ।।

---

दित्येतत् । [11]अयमर्थः—प्रति[12]दैवतमासनं [13]कुलासनवाग्भवं कृत्वेति मन्तव्यम् । तदुक्तं श्रीसिद्धनाथपादैः—

बीजं गुह्ये न्यसेदाद्यमकथादित्रिपङ्क्तिगम्[14] ।
शेषं बीजद्वयं कन्दमित्येतत्कौलमासनम् ।। इति ।

[15]अत्र बीजद्वयमिति क्षकारहकाराविति [16]भावः ।। ७३-७६ ।।

---

१. नात्र–ब. । २. तु–सक. ख. । ३. ततः क्षणात्–सक., ततश्चक्रं–सख. । ४. सा–सग. । ५. महादेवि–सग. । ६. 'तत्र' नास्ति–ख. ङ. । ७. रेखात्मक–ख. ङ. । ८. सन्तीति–ख. ङ. । ९. यथा–ख. । १०. र्गेणेत्यन्वयः–ख. ङ. । ११. 'अयमर्थः' नास्ति–क. ग. छ । १२. देवता–ख. ङ. ज. । १३. 'कुलासनवाग्भवं' नास्ति–क. ग. छ. । १४. क्तिशः–क. ग. छ. । १५. 'अत्र बीजद्वयमिति' नास्ति–क. ग. छ. । १६. यावत्–क. ग छ. ।

मध्यबिन्दोरुपरि यथा तिर्यग्रेखा पतति तथा पूर्वरेखां विभाज्य तासां स्थानेऽकथादिषोडश-षोडशमातृका विलिख्य कोणत्रये हळक्षाँल्लिखेदिति केचित् । अणिमाद्यखिलदेवतानामासन-स्थाने प्रत्येकं वागुराकारेण सर्वमातृकाः पुनर्लेख्या इत्यन्ये" (से. पृ. १२२) ।

1. "मन्त्रं मणिवदालम्ब्य प्रभावन्मन्त्रदेवताम् । जपध्यानादिकं कुर्यान्न ताटस्थ्येन कुत्रचित् ।।" इत्येवं क्षेमराजेन स्वच्छन्दोद्योते (भा. १, प. २, पृ. ७८) उद्धृतः श्लोकः ।

पूजयित्वा[1] महेशानि[2] तद्वदेकतरो[3] गिरौ ।। ७६ ।।
अजरामरतां सम्यग्[4] लभते नात्र संशयः ।
महाभूतदिने वापि[5] श्मशाने यदि पूजयेत् ।। ७७ ।।
पूर्ववन्निशि देवेशि साधकः स्थिरमानसः ।
पादुकाखड्गवेतालसिद्धद्रव्य[6]महोदयाः ।। ७८ ।।

---

**तद्वत्** खेचरताप्राप्त्याराधनक्रमवत्[7] । [1]**एकतरः** असहायः । **गिरौ** पर्वते । ।। ७६ ।।

**महाभूतदिने** [2]कृष्णचतुर्दश्याम् । **स्थिरमानसः** निर्विचिकित्सः । **पादुका**[8] पादुकासिद्धिः, सा च वह्निसलिलादिषु यात्रा । [3]इदं तु लेपादिना विना मन्त्रसिद्ध्यैवेत्यर्थः । **खड्गः** खड्गसिद्धिः । सा च स्वयंप्रहर्तृता । **वेतालो** वेतालसिद्धिः । सा च पिशाचादि[9]परिकरवत्ता । **सिद्धद्रव्यम्** अप्रयत्नसम्पन्न-पायसापूपादिसिद्धिः[10] । **महोदयः** अणिमादिविभूतिविशेषः । **अञ्जनम्** अञ्जन[11]-सिद्धिः । **विवरं** बिलद्वार[12]लोकान्तरसिद्धिः । **चेटी** दासीसिद्धिः । **यक्षो** भोग-योग्यविशिष्टालङ्कारभूषितदिव्यपुरन्ध्रीसिद्धिः । **दूरगतिः** दूराध्वगमनम् । [13]अयमर्थः—चित्सारपरमार्थाया देवतायाः सर्वंगतत्वात् साधकोत्तमस्य

---

पूजयित्वेत्यादि स्पष्टार्थः । प्रयोगस्त्वयमेव । स्थाने[14] विशेष इति विशेषः ।।७६-७७।।
महाभूतदिनमिति [2]कृष्णाङ्गारचतुर्दशी । सिद्धद्रव्यं[15] रसायनादि । मनश्शिला स्पर्श[16]-

---

१. पूजयेद्रात्रिसमये-सक. । २. महादेवि–वाक. ख. सख. । ३. तरौ–वाग. से. सक. ख. ग. । ४. सत्यं–वाग. से. । ५. चापि–सख. ग. । ६. क्रव्यमनःशिलाः–वाक. ग., द्रव्यं मनःशिला–अ । ७. 'क्रमवत्' नास्ति–ख. ङ. । ८. 'पादुका' नास्ति–ग घ. । ९. पिशाचपरि–ख. ङ. । १०. सिद्धिदम्–घ. । ११. सा च निधिसिद्धिः–ग. । १२. वियद्द्वारं–ग. । १३. 'अयमर्थः' नास्ति–ख. ङ । १४. स्थानतिथिविशेष एव विशेषः–ख. ङ., स्थानविशेष-तिथिविशेष-ज. । १५. द्रव्यमिति–ख. ङ ज. । १६. स्वर्ण–ख. ।

1. "एकतर इति पाठं स्वीकृत्यासहाय इति व्याख्यानमर्णवादितन्त्रान्तरविरुद्धम्" (से. पृ. १२३) ।
2. महाभूतदिनं चतुर्दशी । साऽपि कृष्णैवेति केचित् । साऽपि भौमयुक्तैवेत्यपरे" (से. पृ. १२३) ।
3. सामान्ये नपुंसकम् । इदं पूर्वोक्तवाक्यप्रतिपाद्यं पादुकासिद्धिजन्यं वह्निसलिलादिषु यात्रारूपं प्रयोजनमत्र लेपादिना विना मन्त्रसिद्धिमात्रेणैव फलतीति यावत् ।

**अञ्जनं विवरं[1] चेटी[2] यक्षी[3] दूरगतिस्तथा ।**

**यत्किञ्चित्सिद्धिसन्तानं[4] विद्यते[5] भुवनत्रये ।। ७९ ।।**

**तत्सर्वमेव सहसा साधयेत् साधकोत्तमः ।**

इति श्रीनित्याषोडशिकार्णवे द्वितीयः पटलः ।।

—:०:—

---

देवतात्मत्वेन विश्रान्तेर्यस्मिन् देशे गमनसंकल्पः समुन्मिषितस्तस्य दे(व?श)स्य सदैव पुरःस्थितत्वादुचितैवोक्तिरिति ।

मायूरपित्तकृक[6]वाकुवसेन्द्रकोपकारञ्जबीजतुष[7]गुग्गुलिकां कटिस्थाम् ।
हेमावृतां वहति यः स तु योजनानां सद्यः शतं व्रजति पक्षिपतिर्दिवीव ।।

इत्यभियुक्तोक्त्या गुलिकादिसिद्ध्या[8] दूराध्वगमनम्, इह[9] तु विद्यासिद्ध्या । **सिद्धिसन्तानं** सिद्धिनिचयः । **सहसा** "सम्यक्सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन" इति स्थित्या यद्यन्मनसा संकल्पयेत् तत्तत्सर्वमभि[10]सन्ध्यव्यवधानेन[11] संपादयेदिति शिवम् ।। ७७–७९½ ।।

एवमृजुविमर्शिन्यां नित्याषोडशिकार्णवे ।
शिवानन्दपरामृष्टो[12] द्वितीयः पटलो गतः ।।

—:०:—

---

शिला । चेटी दासीजनः[13] ।। ७७–७९½ ।।

इति श्रीविद्यानन्द[14]विरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां
प्रयोगविधि[15]र्द्वितीयः पटलः ।।

—:०:—

---

१. चिम्बुकं–सख. । २. चैव–वाक. ख. । ३. चेटकं यक्षिणीं तथा–वाक. ख., चेटकं चैव यक्षिणीम्–सक., चेटिकां–सग. । ४. द्धसमयं–सक., सिद्धनिचयो–सख. ग., निचयं–वाक. ख. । ५. वर्तते–सक. । ६. कृकलास–ख. । ७. तुषतोयकर्लि–ग. घ. । ८. 'गुलिकादिसिद्ध्या' नास्ति–ख. । ९. 'इह तु····सिद्धिनिचयः' नास्ति–ख. । १०. मपि–ख. ङ. । ११. सानेन–ग. । १२ मृष्टं द्वितीयं पटलं गतम्–ख. ङ. । १३. इतः परम्–'इति प्रयोगविधिः' इत्यधिकः पाठः–क. ग. छ. । १४. नन्दनाथ–ख. ङ. ज. । १५. 'प्रयोगविधिः' नास्ति–ख. ङ. ज. ।

# अथ तृतीयः पटलः

**देव्युवाच**

**भगवंस्त्रिपुरामुद्राः सूचिता न प्रकाशिताः ।**
**कथं विरचनं तासां क्रियते वद शङ्कर ॥ १ ॥**

**ईश्वर उवाच**

**शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।**
**याभिर्विरचिताभिस्तु संमुखा[2] त्रिपुरा भवेत् ॥ २ ॥**

---

एवमनल्पप्रयोगशरीरं द्वितीयं पटलं व्याख्यायेदानीमष्टाविंशतिसूत्र[3]-सन्दर्भस्य देवतासान्निध्यकरमुद्राविन्यासप्रतिपादकस्य तृतीयस्य[4] पटलस्य [5]व्याख्या लिख्यते—श्रीदे[6]व्युवा[7]चेत्यादि । त्रिपुरामुद्राः त्रिपुराम्बासम्बन्धिन्यो मुद्राः । मुद्रानाम काश्चन शक्तयः । [8]उक्तं च—

> मोचयन्ति ग्रहादिभ्यः पाशौघं[9] द्रावयन्ति च ।
> मोचनं द्रावणं यस्मान्मुद्रास्ताः शक्तयो[10] मताः ॥ इति ।

[11]**अभियुक्तोक्तिरपि—**

> द्रावणात् पाशजालस्य तत्परस्य च मोचनात्[12] ।
> मुद्रापीठमिति प्रोक्तं कामरूपं नमाम्यहम् ॥ (सं. प.) इति ।

---

अथ तृतीये[13] पटले सर्वानुवादि टिप्पणं लिख्यते । श्रीदेव्युवाचेत्यादि भवेदित्यन्तस्य[14] स्पष्टोऽर्थः ॥ १-२ ॥

---

१. भैरव-सक., शङ्कर-सघ. । २. खी-सक. घ., सान्निध्यं त्रैपुरं-सग. । ३. सूत्रस्य-ख. । ४. 'तृतीयस्य पटलस्य' नास्ति-ख. । ५. विवृतिरुच्यते-ख. । ६. भगवन्नित्यादि-ख. । ७. त्रिपुरायाः-ग. घ. । ८. 'उक्तं च' नास्ति-ख. ङ. । ९. पाशौघान्-चि. । १०. शक्तयः स्मृताः-ख. ङ., परिकीर्तिताः-चि. । ११. अभियुक्तैरपि-ख. घ. । १२. मोदनात्-ग. घ. । १३. यप-क. ग. ङ. छ. । १४. त्यन्तः स्पष्टार्थः-ङ. ज. ।

**परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।**
**अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ ३ ॥**
**कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।**
**त्रिखण्डैषा महामुद्रा त्रिपुराह्वानकर्मणि ॥ ४ ॥**

**सूचिताः** ''संक्षोभ''(१।१८४)इत्यनेन । **विरचनं** बन्धः । **तासां** मुद्राणाम् । **याभिः** मुद्राभिः । **संमुखा त्रिपुरा भवेदित्यस्यायमर्थः**—मुद्राविरचने कृते साधकं प्रसन्नदृशा पश्यतीति ॥ १–२ ॥

**परिवर्त्ये**तिद्वयं त्रिखण्डामुद्राप्रतिपादनपरम् । **परिवर्त्य** परस्परं क्षिप्ताङ्गुली कृत्वा । **स्पृष्टौ** इतराङ्गुलिभ्योऽविविक्तौ । [1]**समौ** अन्योन्यम् । **अनामान्तर्गते** [2]अनामाभ्यामन्तर्गते । **कुटिलाकृती** कुटिलाकारे । **त्रिपुराह्वानकर्मणि**, प्रयोक्तव्येति शेषः । अयमर्थः—प्रथममात्मीयौ हस्तौ परिवर्त्याङ्गुष्ठौ परस्परश्लिष्टौ कृत्वाऽनन्तरं समोच्छ्रितमध्यमाङ्गुलिद्वयोभयपार्श्वे व्यत्यासेनान्तर्गतानामिके तर्जन्यौ कुटिलाकारे विधाय पुनः कनिष्ठिके समे निजस्थाने नियुञ्ज्यादितीयमावाहनमुद्रा त्रिखण्डाख्या ॥ ३–४ ॥

परिवर्त्य कराविति । हस्तावन्योन्यं यथा स्पृष्टाङ्गुली भवतस्तथा कृत्वेत्यर्थः । अङ्गुष्ठौ कारयेत् समाविति । उभयकरज्येष्ठाङ्गुलिद्वयं समं कुर्यादिति । परस्परस्पृष्टौ दण्डाकारौ यथा भवतस्तथा कर्तव्यमिति यावत् । अनामान्तर्गते कृत्वेति । उभयकरानामाङ्गुलिद्वयमधः कुर्यादिति यावत् । कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरीति । कनिष्ठिकाङ्गुली पूर्वं यथा स्थिते तथैव कुर्यात्, न त्वन्तर्गते इति यावत् । तर्जन्यौ कुटिलाकृती इति । तर्जनीद्वयं कुटिलाकृती कुर्यात् । अप्रतिषिद्धमनुमतमिति न्यायेन मध्यमाङ्गुलिद्वयं यथास्थितमेव कुर्यात्, न त्वन्तर्गतमिति । त्रिखण्डेयं महामुद्रा त्रिपुराह्वानकर्मणीति । इयं रचिता मुद्रा त्रिखण्डासंज्ञा त्रिपुराह्वानकर्मणि नियुक्तेत्यर्थः ॥ ३–४ ॥

१. स्पृष्टा–वाग. से. ब., कृत्वा–सघ. । २. सुरे–सग. । ३. ण्डेयं–वाग. अ. से. ब. सक. ग. घ. । ४. ध्यान–सग. घ. । ५. स्पष्टौ–ख. ग. घ. । ६. 'अन्योन्यम्' नास्ति–घ. । ७. श्लिष्टौ समौ स्पष्टौ कृत्वा–ख. ङ., स्पृष्टौ–घ. । ८. निसर्ग–ङ. । ९. कृत्वेति–ख. ङ. ज. । १०. 'इति यावत्' नास्ति–ग. । ११. द्वयं मिथः–ख. । १२. 'यावत्' नास्ति–ङ ज. । १३. स्थितं तथा–ख. ङ, 'एव' नास्ति–ज. । १४. संज्ञिता–ख. ङ. ज. ।

1. अन्योन्यं समावित्यर्थः । आवश्यकपदपूरणात्मिकैषा व्याख्यानशैली स्थलान्तरेष्वप्यवलोक्यते ।
2. ''अनामान्तर्गते इत्यत्र बहुव्रीहिः । अनामाभ्यामन्तर्गते इत्यपि केचित्'' ( से. पृ. १२५ ) ।

मध्यमे[1] मध्यगे कृत्वा कनिष्ठा[2]ऽङ्गुष्ठरोपिते[3] ।
तर्जन्यौ दण्डवत् कृत्वा[4] मध्यमोपर्यनामिके[5] ।। ५ ।।
एषा तु[6] प्रथमा मुद्रा सर्वसंक्षोभकारिणी[7] ।
एतस्या एव मुद्राया मध्यमे सरले यदा[8] ।। ६ ।।

---

[9]**मध्यमे मध्यगे कृत्वेति** । **मध्यमे** मध्यमाङ्गुली । **मध्यगे** मध्यस्थानं गते, [1]यथास्थानस्थिते कृत्वेत्यर्थः । **कनिष्ठाङ्गुष्ठरोपिते** । [10]इदमनामिके इत्यस्य विशेषणम् । कनिष्ठिकाङ्गुष्ठ[11]चतुष्टयरोपिते इत्यर्थः । **दण्डवत्कृत्वा** दण्डाकारेणाभिप्रसार्य । **मध्यमोपरि** मध्यमयोरुपरि । **प्रथमा** दर्शनीयासु मुद्रासु मध्ये । त्रिखण्डा[12]मुद्रा पूर्वोक्ता त्रिपुराह्वानकर्मणि विनियुक्ता । अयमर्थः—प्रथममुत्तानौ हस्तौ विधाय [13]तर्जन्यौ दण्डवदितराङ्गुलिभ्यो [14]विश्लिष्टं प्रसार्य कनिष्ठाङ्गुष्ठरोपिते अनामिके परस्परा[15]श्लिष्टे यथास्थानस्थितमध्यमोपरि कुर्यादितीयं प्रथमा संक्षोभिणी मुद्रा ।। ५–६ ।।

---

मध्यमे मध्यगे कृत्वेत्यारभ्य सर्वसंक्षोभकारिणीत्यन्त[16]स्य व्याख्या लिख्यते—मध्यमे मध्यगे कृत्वेति मध्यमाङ्गुलिद्वयं मध्यगं[17] कृत्वा, मध्यस्थितं करोतीति यावत् । मध्यमोपर्यनामिके इति [18]कनिष्ठाङ्गुष्ठरोपिते अनामिके मध्यमाङ्गुल्योरुपरि कारयेत् । तर्जन्यौ दण्डवत् कुर्यात् । एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणीति । रचितैषा मुद्राणां प्रथमा सर्वसंक्षोभकारिणीति संज्ञा ।। ५–६ ।।

---

१. मा–वाक. ख., गा–वाग. । २. कनिष्ठे–वाक. ख. । ३. गोपिते–ब. । ४. कुर्यात्–अ । ५. मिका–वाक. ग. । ६. संक्षोभिणी–सक. । ७. रिका–ब. । ८. यदि–वाख. से. । ९. 'मध्यमे मध्यगे कृत्वेति' नास्ति–ख. ङ. । १०. 'इद'''रोपिते इत्यर्थः' नास्ति–ग. । ११. 'चतुष्टय' नास्ति–ख.ग.ङ. । १२. 'मुद्रा' नास्ति–ख. ग. ङ. । १३. 'तर्जन्यौ' नास्ति–ख । १४. विशिष्टं–ङ. । १५. श्लिष्ट–ग. घ. । १६. स्यायमर्थः–ख. ङ. ज. । १७. मध्यगे कृत्वेति यावत्–ख. ङ. ज. । १८. कनिष्ठाङ्गुष्ठयोरपि अ–ख. ङ. ज. ।

1. "प्राञ्चस्तु मध्यमे मध्यगे एव न तु स्थानान्तरगते कुर्यात् । निजस्थान एव ते वसत इति यावत् । कनिष्ठाङ्गुष्ठरोपिते इत्यनामिकाविशेषणम् । तर्जन्यौ मध्यमोपरि दण्डवत् कुर्यादिति व्याचक्षते" ( से. पृ. १२५–१२६ ) ।

**क्रियेते[1] परमेशानि सर्वविद्राविणी[2] स्मृता ।**
**मध्यमातर्जनीभ्यां तु[3] कनिष्ठानामिके समे ।। ७ ।।**
**अङ्कुशाकाररूपाभ्यां मध्यगे[4] परमेश्वरि ।**
**इयमाकर्षिणी[5] मुद्रा त्रैलोक्याकर्षकारिणी[6] ।। ८ ।।**

---

**एतस्या एवेति** । **एतस्याः** संक्षोभिण्याः । **मध्यमे** मध्यमाङ्गुली । **सरले**[7] स्पष्टे, त्यक्तकुसृतिकौटिल्ये इत्यर्थः[8] । अयं प्रकारः—संक्षोभिण्या मुद्रायाः[9] स्थिताया[10] मध्यमाङ्गुल्यौ यदि सरले स्यातां पूर्वस्यां[11] मुद्रायां तर्जन्याविव यदा स्थिते इयं मुद्रा द्वितीया सर्वविद्राविणीति ।। ६–७ ।।

**मध्यमातर्जनीभ्यामिति** । **मध्यगे** मध्यमाङ्गुलिद्वयगते । कर्तव्ये इति शेषः । **अङ्कुशाकाररूपाभ्याम्** अङ्कुशाकाराकृतिभ्याम् । अयमर्थः—अङ्कुशाकाररूपाभ्यां मध्यमातर्जनीभ्यां सह समे[12] कनिष्ठाङ्गुष्ठरोपिते अनामिके मध्यगे कर्तव्ये । इतीयं[13] तृतीया आर्काषिणी मुद्रा ।।७–८ ।।

---

एतस्या इत्यारभ्य सर्वविद्राविणोत्यन्तस्यायमर्थः—एतस्याः सर्वसंक्षोभिणीमुद्राया मध्यमाङ्गुली सरले कुर्याद् यदा तदा सर्वविद्राविण्याख्या द्वितीया सा मुद्रा भवति ।। ६–७ ।।

मध्यमातर्जनीभ्यामित्यारभ्य इयमाकर्षिणी मुद्रेत्यन्तस्यायमर्थः—मध्यमातर्जनीभ्यामङ्कुशाकारं[14] कृताभ्यां मध्यगे[15] मध्यस्थिते कनिष्ठानामिके कनिष्ठिके चानामिके च कनिष्ठानामिके ते समे कुर्यात् । कोऽर्थः ? [1]"एतस्या एव मुद्रायाः" ( ३।६ ) इत्येतदत्रापि संबद्धयते । अतः कनिष्ठानामिकाङ्गुलिचतुष्टयं पूर्वमुद्राया मध्यगं मध्यमातर्जनीभ्यां समं कुर्यात्, एकीकुर्यादित्यर्थः । एषा आकर्षणी मुद्रा तृतीयेति[16] ।। ७–८ ।।

---

१. क्रियते चेन्महेशानि–वाख. से., क्रियते–सग. । २. णीति च–ब., णी तदा–वाग. से. सक. घ. । ३. च–सघ. । ४. मध्यमे–वाग. से. ब. सग. । ५. इयं सा–सक. । ६. र्षणो स्मृता–ब., र्षणी तथा–सग., र्षणी परा–सघ. । ७. 'स्पष्टे' नास्ति–घ. । ८. 'इत्यर्थः' नास्ति–घ. । ९. संक्षोभमुद्रायाः–घ., भिण्यां मुद्रायां–ख. ङ. । १०. स्थितायां–ख. ङ. । ११. पूर्वस्या मुद्राया–ख. ङ. । १२. 'समे' नास्ति–ख. ङ. । १३. इयं–ख. ङ. । १४. कारेण–ख. ङ. । १५. मध्मम–ग., मध्यममध्यगस्थिते–छ. । १६. तृतीया मुद्रेति यावत्–ख. ङ. ज. ।

1. "अन्ये त्वेतस्या एव मुद्राया इत्यनुवर्त्य कनिष्ठानामिके मुद्रामध्यगे मध्यमातर्जनीभ्यां समे च कार्ये इति योजयन्ति" ( से. पृ. १२६ ) ।

**पुटाकारौ[1] करौ कृत्वा तर्जन्यावङ्कुशाकृती ।**
**परिवर्त्य[2] क्रमेणैव मध्यमे[3] तदधोगते ॥ ९ ॥**
**क्रमेण देवि तेनैव कनिष्ठानामिके[4] अपि ।**
**संयोज्य निबिडाः सर्वा अङ्गुष्ठावग्रदेशतः ॥१०॥**
**मुद्रेयं परमेशानि सर्ववशकरी स्मृता[5] ।**

---

**पुटाकाराविति** सार्धद्वयमावेश[6]मुद्राप्रतिपादनपरम् । **पुटाकारौ** श्लिष्टौ । **अङ्कुशाकृती** अङ्कुशाकाररूपे । **तदधोगते** तर्जन्योरधोगते । **संयोज्य** संश्लेष्य[7] । **निबिडा** दृढाः । कार्या[8] इति शेषः । **सर्वा** अङ्गुलयः । **अग्रदेशतः** अग्रदेशे । अयमर्थः—प्रथमं निजौ हस्तौ पुटाकारौ विधाय तर्जन्यावङ्कुशाकृती कृत्वा[9] तर्जन्यधोगते मध्यमे मध्यमाङ्गुली परस्परतः परिवर्त्य तेनैव क्रमेण कनिष्ठानामिके परस्परतः संयोज्य [1]दृढाः[10] कृत्वा पुनर्ज्येष्ठाङ्गुलिद्वयमङ्कुशाकृती तर्जन्यग्रे स्थापयेदितीयमावेशकरी चतुर्थी मुद्रा । हस्तयोः पुटाकारकरणं [2]पराङ्मुखेनेति[11] सम्प्रदायः ॥ ९–११ ॥

---

पुटाकारौ करावित्यारभ्य सर्ववशकरीत्यन्तस्यायमर्थः—पुटाकारौ करौ कृत्वेति पराङ्मुखेन करौ[12] पुटाकारौ कुर्यात् । तथा तर्जन्यावङ्कुशाकृती अङ्कुशाकारेण कुर्यात् । तथा तर्जन्यधोगते मध्यमाङ्गुली[13] परिवर्तक्रमेणैव कुर्यात्[14] । हे देवि ! तेनैव कनिष्ठानामाङ्गुलिचतुष्टयं कुर्यात् । निबिडं दृढं च यथा भवति तथा कुर्यात् । अङ्गुष्ठावग्रदेशत इति । अङ्गुष्ठौ ज्येष्ठाङ्गुलिद्वयं मुद्राया अग्रदेशे[15] स्थितं कुर्यादिति यावत् । हे महेशानि ! इयं मुद्रा सर्ववशकरी स्मृता । चतुर्थी मुद्रेति यावत् ॥ ९–११ ॥

---

१. स्फुटा–वाक. ख. ग. । २. वर्त–वाक. ख. अ., वृत्ति–सक. । ३. मध्यगे–वाक. ख. ग. से. । ४. कादयः–वाक. ख., काद्वयम्–ब. सक., केऽपि वा–सग । ५. मता–सक., तथा–सग. । ६. 'आवेश' नास्ति–ख. ङ. । ७. संश्लेषयित्वा–ङ. । ८. कुर्यादिति–ख. ङ. । ९. 'तर्जन्यावङ्कुशाकृती कृत्वा' नास्ति–ग. । १०. दृढां–ख. ङ., सुदृढाः–घ. । ११. प्राङ्–ख. ङ. । १२. 'करौ' नास्ति–क. ग. छ. । १३. मध्यमे अ–ख. ङ. ज. । १४. 'कुर्यात् । हे देवि तेनैव' नास्ति–ख. ङ. ज. । १५. देशस्थितौ–ख. ङ. ज. ।

1. मूलस्थस्य 'निबिडाः' इत्यस्य पदस्यार्थः 'दृढाः' इति ।
2. "तेन सम्प्रदायादेव पराङ्मुखत्वलाभ इत्युक्तमपास्तम्" ( से. पृ. १२७ ) ।

**संमुखौ तु करौ कृत्वा मध्यममामध्यगेऽनुजे ।। ११ ।।**
**अनामिके तु[1] सरले तद्वहिस्तर्जनीद्वयम्[2] ।**
**दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।। १२ ।।**
**मुद्रैषोन्मादिनी[3] नाम्ना क्लेदिनी सर्वयोषिताम्[4] ।**
**अस्यास्त्वनामिकायुग्ममधः कृत्वाऽङ्कुशाकृती ।। १३ ।।**

---

**संमुखा**वितिद्वयमुन्मादिनीमुद्रापरम् । **मध्यमामध्यगे** मध्यमाङ्गुल्यो-र्मध्यस्थानं गते । **अनुजे** कनिष्ठिके । **तद्वहि**रनामिकयोर्बहिः । **मध्यमानख-देशगौ** मध्यमाङ्गुल्योर्नखस्थानं गतौ । अयमर्थः—प्रथमं स्व[5]संमुखौ हस्तौ संयोज्य [6]अनुजे मध्यमामध्यगे कृत्वा कनिष्ठाङ्गुलिद्वयं व्यत्यस्य मध्यमाङ्गुलिद्वयं [7]मध्यमपर्वस्थितं विधाय कनिष्ठिकयोरग्रं मध्यमाभ्यां संपुटच मध्यमानखा-ग्रेऽङ्गुष्ठद्वयं संयोज्य सरलाकारानामाद्वयबाह्ये तर्जनीद्वयं कुर्यादितीयमुन्मा-दिनी पञ्चमी मुद्रा ।। ११-१३ ।।

**अस्यास्त्वि**[8]त्यर्धं पद्यं महाङ्कुशामुद्राप्रतिपादनपरम् । **अस्या** उन्मादन-मुद्रायाः । **अधः कृत्वा** अन्तर्मुखीकृत्य । **अङ्कुशाकृती** अङ्कुशाकाररूपे **तेनैव**

---

संमुखौ तु करौ कृत्वेत्यारभ्य क्लेदिनी सर्वयोषितामित्यन्तस्यायमर्थः—संमुखौ तु करौ कृत्वेति । करौ परस्परमभिमुखौ कृत्वा । मध्यमामध्यगेऽनुजे । अनुजे कनिष्ठिकाङ्गुली ते व्यत्ययेन मध्यमाङ्गुल्योर्मध्ये कृत्वेत्यर्थः । अनामिके तु सरले इति । अनामिके अना-माङ्गुलिद्वयम् । सरले दण्डाकारे । कुर्यादिति [9]यावत् । तद्वहिस्तर्जनीद्वयमिति । तयोर[10]ना-मिकाङ्गुल्योर्बहिस्तदाधारतया तर्जनीद्वयं योजये[11]दित्यर्थः । दण्डाकारौ ततोऽङ्गुष्ठाविति । ततोऽनन्तरमङ्गुष्ठयुगलं दण्डाकारं कृत्वेत्यर्थः । मध्यमानखदेशगाविति । मध्यमाङ्गुल्यो-र्नखदेशेऽङ्गुष्ठयुगलाग्रं कर्तव्यमिति यावत् । इयं मुद्रा नाम्नोन्मादिनी सर्वयोषितां क्लेदिनीति । द्रावकमिति यावत् । इयं पञ्चमी ।। ११–१३ ।।

[12]अस्यास्त्वनामिकायुग्ममधः कृत्वेति । अस्या उन्मादिनीमुद्रायास्त्वनामिकायुग्ममधः

---

१. तत्रा–वाक. ग. । २. गा–वाक. ग. । ३. नाम–वाख. से. । ४. ति–वाक. ख. ग. से. । ५. 'स्व' नास्ति–ख. ङ. । ६. 'अनुजे मध्यमामध्यगे कृत्वा' नास्ति–घ. । ७. मध्यपर्व–घ. । ८. स्त्वित्यर्ध–घ. । ९. 'यावत्' नास्ति–ख. ङ. ज. । १०. रनामाङ्गु–क. ग. ङ. छ. । ११. दिति–ख. ङ. । १२. 'अस्याः····युग्मम्' नास्ति–ख. ।

**तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ।**
**इयं महाङ्कुशा[1] मुद्रा[2] सर्वकार्यार्थसाधकी[3] ।। १४ ।।**
**सव्यं दक्षिणदेशे[4] तु दक्षिणं सव्यदेशतः[5] ।**
**बाहुं[6] कृत्वा महेशानि[7] हस्तौ संपरिवर्त्य च ।। १५ ।।**
**कनिष्ठानामिके देवि युक्त्वा[8] तेन क्रमेण तु[9] ।**
**तर्जनीभ्यां समाक्रान्ते[10] सर्वोर्ध्वमपि[11] मध्यमे ।। १६ ।।**

---

**क्रमेण**[12] अन्तर्मुखीकरणक्रमेण । अयमर्थः—अनन्तरोक्ताया उन्मादनमुद्रायाः स्थिताया अनामिकायुगलमन्तर्मुखीकरणक्रमेण निवेश्याङ्कुशाकाररूपे तर्जन्यावपि तेनैव क्रमेणान्तर्नियोजयेदितीयं[13] महाङ्कुशाख्या मुद्रा षष्ठी[14] ।। १३-१४ ।।

त्रिभिः[15] खेचरीमुद्रामाह—**सव्यमिति** । **सव्यं** वामम् । **बाहुमिति** सम्बन्धः । **दक्षिणं**[16] दक्षिणं बाहुम् । **संपरिवर्त्य** इतरेतरतः । **कनिष्ठानामिके**

---

कृत्वा, अन्तः कृत्वेत्यर्थः । अङ्कुशाकृती तर्जन्यावपि तेनैव क्रमेण विनियोजयेदिति । तेनैव क्रमेणाङ्कुशाकाररूपतया[17] तर्जन्यावन्तः प्रवेशयेदित्यर्थः[18] । इयं महाङ्कुशा मुद्रा सर्वकार्यार्थ[19]साधकीति । इयं रचिता मुद्रा महाङ्कुशसंज्ञा[20] सकलपुरुषार्थसाधनीत्यर्थः । एषा तु षष्ठी मुद्रा ।। १३-१४ ।।

सव्यं दक्षिणदेशे तु दक्षिणं सव्यदेशतो बाहू[21] कृत्वा महेशानीति । हे महेशानि[22] ! [1]सव्यं वामबाहुं दक्षिणबाहोरधो योजयेत् । दक्षिणं दक्षिणबाहुं[23] सव्यबाहोरुपरि कृत्वेति यावत् ।

---

१. विद्या–वाक. ख. । २. कामार्थ–वाक. ख. । ३. धिनी–से., धनी–सक. ध. । ४. देशं–वाक. ख., हस्ते–वाग. से. । ५. हस्ततः–वाग. से. । ६. बाहू–वाग. अ. से. । ७. महादेवि–वाक. ख. ग. । ८. क्तेऽनेन–सक. । ९. च–अ. ब. सक. । १०. युक्ते–सघ. । ११. पर्यपि–सक. । १२. 'अन्तर्मुखीकरणक्रमेण' नास्ति–ख. ङ. । १३. न्तर्निवेशये–ग. घ. । १४. षष्ठी मुद्रा–ग. घ. । १५. त्रिभिरेव–ख. ङ. । १६. 'दक्षिणं' नास्ति–ख. ङ. । १७. शरूप–क. ग. छ. । १८. दिति–ख. ङ. ज. । १९. 'सर्व····षष्ठी मुद्रा' नास्ति–ख. ङ. । २०. संज्ञाकृतिर्या-न्या–क. ग. । २१. बाहुं–ख. ङ. छ. । २२. 'हे महेशानि' नास्ति–क. ग. छ. । २३. दक्ष–ग. ।

1. "वामबाहुं दक्षिणबाहोरधो योजयेदित्यर्थरत्नावलीव्याख्यानं त्वर्णवविरोधादुपेक्ष्यम् । यदपि तर्जनीभ्यां मध्यमे समाक्रान्ते सर्वार्ध्वे कुर्यात्, अङ्गुष्ठौ तु सरलौ मध्यमाङ्गुलीभ्यां संस्पृष्टौ दण्डवत् कुर्यादिति·······" ( से. पृ. १२८ ) ।

**अङ्गुष्ठौ तु महेशानि कारयेत् सरलावपि ।**
**इयं सा खेचरी नाम्ना[1] मुद्रा[2] सर्वोत्तमा प्रिये ।। १७ ।।**
**रचितेयं[3] महादेवि[4] सर्वतेजोपहारिणी ।**
**बद्धयैवैतया देवि दृश्यते साधकोत्तमः ।। १८ ।।**

---

कनिष्ठे चानामिके च । **तेन[5] क्रमेण** परिवर्तनक्रमेण[6] । **समाक्रान्ते**[7] [1]ऊर्ध्वोन्मुख-मध्यमाङ्गुलिद्वयोभयभागतः[8] । **सरलौ** [2]प्राग्वत् । **सर्वोत्तमा** सर्वासां[9] मुद्राणां मध्ये । अयमर्थः—प्रथमं सव्यं बाहुं दक्षिणदेशे दक्षिणं बाहुं सव्यदेशे कृत्वा पुनर्हस्तौ परस्परतः[10] संपरिवर्त्य ततः कनिष्ठाद्वयमनामिकाद्वयं च[11] परि-वर्तनक्रमेण संयोज्य पुनस्तर्जनीभ्यामुभयभागतः[12] समाक्रान्ते मध्यमाङ्गुली सर्वोर्ध्वतः समुन्नमय्याङ्गुष्ठौ परस्परश्लिष्टौ कुर्यादितीयं खेचर्याख्या सप्तमो मुद्रा ।। १५-१७ ।।

अध्यर्धचतुर्भिः खेचरीस्तुतिमाह—**रचितेयमिति । इयं मुद्रा । सर्व-तेजोऽपहारिणी** सर्वेषां तेजांस्यपहरतीति । **बद्धया** रचितया । **एतया** मुद्रया ।

---

हस्तौ संपरिवर्त्य चेति । परस्पराङ्गुलिविवरपरिक्षिप्तान्योन्याङ्गुली हस्तौ[13] कार्यौ । कनिष्ठा-नामिके देवि युक्त्वा तेन क्रमेण चेति । कनिष्ठानामिकाङ्गुलिचतुष्टयं तेन क्रमेण युक्त्वेति यावत् । तर्जनोभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे इति । सर्वोर्ध्वं तर्जनीभ्यां समाक्रान्तं मध्यमाङ्गुलिद्वयं कुर्यादिति[14] । अङ्गुष्ठौ तु महेशानि कारयेत् सरलावपीति । अङ्गुष्ठौ सरलौ मध्यमाद्यङ्गुलीभिः[15] संश्लिष्टौ परस्परं श्लिष्टौ दण्डवत् कुर्यादिति यावत्[16] । इयं सा खेचरी नाम्ना मुद्रा सर्वोत्तमा प्रिये इति । इयं मुद्रा नाम्ना खेचरी सर्वोत्तमेत्यर्थः । इयं[17] सप्तमी

---

१. नाम–वाख. से. सग., मुद्रा–सग. । २. नाम्ना–सग. । ३. तैव–वाक. ख. ग. ब. । ४. महेशानि–सघ. । ५. तेनैव–घ. । ६. 'परिवर्तनक्रमेण' नास्ति–ख. ङ. । ७. 'समाक्रान्ते' नास्ति–घ. । ८. भयागतः–ख. ङ. । ९. सर्व–ख. ङ. । १०. इतरेतरतः–घ. । ११. 'च' नास्ति–ख. ग. ङ. । १२. पुनस्ताभ्यां–ख. । १३ 'हस्तौ' नास्ति–ङ. ज. । १४. 'इति' नास्ति–ख. ङ. ज. । १५. भिः परिवर्त्य क्रमेण संस्पृष्टौ–क. ग. छ. । १६. 'यावत्' नास्ति–ग. । १७. रचितेयं मुद्रा सप्तमी–ख. ङ. ज. ।

1. ऊर्ध्वोन्मुखमध्यमाङ्गुलिद्वयोभयभागतः समाक्रान्ते इति योजना ।
2. प्राग्वदिति । अत्र—"सरले स्पष्टे, त्यक्तकुसृतिकौटिल्ये" ( पृ० १७७, प. ६ ) इत्यस्य परामर्शः ।

**योगिनीसर्ववृन्दैस्तु ज्वलत्प्राकारसन्निभः ।**
**डाकिनीराकिणीवृन्दैर्लाकिनीकाकिनीगणैः ॥ १९ ॥**
**साकिनीहाकिनीभिस्तु ध्यातेयं परमेश्वरि ।**
**एतया ज्ञातया देवि योगिनीनां भवेत् प्रियः ॥ २० ॥**

---

**योगिनीसर्ववृन्दैः** सर्वयोगिनीवृन्दैरित्यर्थः । **ज्वलत्प्राकारसन्निभः** अग्निप्राकारवत् परैरधृष्यो भवतीत्यर्थः । **डाकिनीत्यादिना** [1]षट्चक्रषडूर्मिषट्कोशाधिष्ठात्रीभिः डरलकसहदेवीभिर्द्वादशार्धदेवताभिर्ध्यातोऽसौ साधक इत्याह । **एतया** मुद्रया । **ज्ञातया** अवधृतया, न त्वनुष्ठितयेत्यर्थः । **योगि-**

---

मुद्रा । रचिता बद्धा चेत्यत्र कररचनं रचना । तद्बाह्यपूजायाम् । बन्धस्त्वान्तरः । तेनान्तःखेचरी [2]तदु(क्ता?क्त्या) सूचिता—

चिबुकं योजयित्वा तु षोडशस्वरमण्डले ।
चन्द्रसूर्याग्निरोधेन मूलशक्तिनिकुञ्चनात् ॥
रसनामन्तरा कृत्वा अनच्के धारयेन्मनः ।
एषा सा खेचरी मुद्रा उन्मनात्वं प्रयच्छति ॥ इति ।

---

१. सर्वयोगिनि–वाक. ख. अ. । २. पावक–वाक. ख. ग. से. । ३. शाकिनीडाकिनी–वाक. ख. । ४. राकिणीलाकिनी–वाक. ख. । ५. काकिनी–वाक. ख., हाकिनीकाकिनी–ब. सक. । ६. श्च–सक. । ७. गौरि–ब. सग. । ८. प्रियो भवेत्–सक. । ९. 'सर्वयोगिनीवृन्दैरित्यर्थः' नास्ति–ग. । १०. सडरलकह–ख. ङ. । ११. देवीभिर्ध्या–ख. घ. ङ. । १२. चेत्यर्थः–क. ग. छ. । १३. करचरणं तद्बाह्य–क. ग. । १४. 'तदुक्ता' नास्ति–ख. ज. । १५. बिन्दुं सं–ख. ङ. । १६. सोमसूर्यनिरो–क. ग. छ. । १७. अव्यक्ते–क. ग. छ., उरस्कं–ज. । १८. उन्मनत्वप्रदायिनी–क. ग. छ. ।

1. षट्चक्रेत्यादि । षट्चक्राणि प्रसिद्धानि । "बुभुक्षा च पिपासा च शोकमोहौ जरामृती । षडूर्मयः प्राणबुद्धिदेहधर्मेषु संस्थिताः ॥" ( प्र० सा० २।१८ ) इति षडूर्मयः । "ऊर्मिर्नाम आर्त्युत्पादकोऽवस्थाविशेषः" ( शा. ति. व्या. १।४६ ) इति च राघवभट्टः । "मज्जास्थिस्नायवः शुक्राद् रक्तात् त्वङ्मांसशोणितम् । इति षाट्कौशिकं नाम देहे भवति देहिनाम् ॥" ( प्र. सा. २।१९ ) इति च कोशषट्कम् ।

2. तदुक्त्येति । "रचितेयम्" ( ३।१८ ) इति, "बद्धयैवैतया" ( ३।१८ ) इति च रचनबन्धनयोः पृथगुक्त्याऽन्तःखेचरी सूचितेति भावः ।

**यतः[1] समयमुद्रेयं सर्वासां[2] परिकीर्तिता ।**
**प्रयतोऽप्रयतो वापि शुचौ देशे[3]ऽथवाऽशुचौ[4] ॥ २१ ॥**
**उच्छिष्टो वा शुचिर्भूत्वा भुञ्जानो मैथुने रतः ।**
**मुद्राया[5] मध्यमाङ्गुल्यौ[6] परिवर्त्य क्रमेण तु ॥ २२ ॥**

---

**नीनां** (ब्रह्मा ? ब्राह्म्या)द्युल्लसितानां सर्वासां शक्तीनाम् । **प्रियो** वल्लभः, स्पृहणीय इत्यर्थः । किमिति सर्वासां प्रियो भवतीत्याह—**यत** इति । **समयमुद्रा** समस्तयोगिनीचक्रसन्निधिकरणपटीयसी मुद्रेति भावः । **प्रयतः** शुद्धः । **अप्रयतः** इतरः । **शुचौ** मेध्ये । **अशुचौ** इतरस्मिन् । अस्या एव मुद्रायाः संबन्धनं ''खेचर्या शक्तिचक्रं तु क्षमस्वेति विसर्जयेत्'' ( १।१८९ ) इत्यनेन सूचितम् ॥ १८-२२ ॥

संहारमुद्रास्वरूपमाह—**मुद्राया मध्यमेति** । अयमर्थः—खेचर्याख्याया मुद्राया अनन्तररचितायाः संबन्धिन्यौ[7] मध्यमाङ्गुली कनिष्ठिकानामिकाक्रम-[8]

---

ज्ञानसारेऽप्युक्तम्[9]—

बिन्दुकण्ठसमायोगात् प्रविकास्य शिरोऽम्बुजम् ।
चन्द्रसूर्याग्निरोधेन मूलशक्तिं निकुञ्च्य च ॥
रौद्रीं कुञ्चिकयोद्घाट्य द्विरष्टकमलोदरे ।
रसनामन्तरा कृत्वा नासाग्रे रोपयेद् दृशौ ॥
यवमात्रं त्रिकोणं तु मीलनोन्मीलनात्मकम् ।
लिहन्[10] स्वरसनाग्रेण पिबन्नमरवारुणीम्[11] ॥
सदा समरसीभूतं मनः शून्ये निवेशयेत् ।
एषा सा खेचरी मुद्रा उन्मनात्वप्रदायिनी ॥ इति ॥१५-२२॥

मुद्राया मध्यमाङ्गुल्यौ परिवर्त्य क्रमेण त्विति । अस्याः खेचरीमुद्राया मध्यमे[12] अङ्गुल्यौ परिवर्तिते यथा भवतस्यथा कृत्वेत्यर्थः । पार्थिवे स्थानके युक्त्वेति । तामेवंविधां

---

१. अतः—वाक. ख. । २. सर्वोपरि च—ब., सर्वाशापरिवर्तिका—सग. । ३. वा यदि वा—सघ. । ४. इतः परम्—'उत्थितो वोपविष्टो वा चङ्क्रमन् निश्चलोऽथवा' इत्येषा पङ्क्तिः ऋ. सघ. विहाय सर्वत्र दृश्यते । ५. मुद्रया—सक. ग. । ६. मध्यमे—ब. सग. । ७. सम्बन्धिन्यो—ग. घ. । ८. क्रमादि—ख. । ९. 'ज्ञान····यिनी ॥ इति' नास्ति—क. ग. छ. । १०. लिहेच्च—ङ. । ११. न् कमल—ङ । १२. मध्यमाङ्गुली—ख. ङ. ज. ।

**पार्थिवे[१] स्थानके युक्त्वा सद्यः खेचरतां व्रजेत्[२] ।**

---

वदितरेतरतः परिवर्त्य तर्जन्यङ्गुष्ठचतुष्टयं पूर्ववत् स्थापयित्वा पूजितमहाचक्र[३]पार्थिवभाग[४]पश्चिमद्वारप्रदेशे पञ्चाङ्गनमस्कारपूर्वि[५]कामिमां संहारमुद्रां संयोज्य समाराधितं शक्ति[६]चक्रं चिद्रसतया विलीनं परिभाव्य खे बोधगगने चरतीति चिन्तयेत् स्वस्यापि तत्सिद्धय[७] इति ।

अत्रेदं महद्रहस्यमस्ति—त्रिविधा खेचरी[1] । अङ्गुलिविरचनात्मा[८] काचिदुक्ता । [2]बोधगगनचारिता[९] काचित् फलात्मा[१०] न व्याख्यानार्हा[११] । अन्या

---

मूर्ध्नि संयुक्तां मुद्रां [1]महाचक्रभू[१२]स्थाने संयोज्येत्यर्थः । अन्तर्मुद्रापक्षेऽयमर्थः[१३]—मुद्रायाः कुण्डलिन्याश्चन्द्रसूर्यात्मिके द्वे[१४] अङ्गुली, ते मध्यमे मध्यमनाड्यां परिवर्त्य[१५] प्रविलाप्य, पार्थिवस्थानरूपके शिरसि ते[१६] कृत्वेत्यर्थः ॥ २२-२३ ॥

---

१. पार्थिवं स्थानकं—वाक. ख., पार्थिवस्थानके—सग. । २. लभेत्—वाख. ब. । ३. 'चक्र····शक्ति' नास्ति—घ. । ४. 'पार्थिवभाग' नास्ति—ख. ङ. । ५. पूर्वक—ग. ध. । ६. 'शक्ति' नास्ति—ख. ङ. । ७. तत्प्रसिद्धय—ग. । ८ त्मिका—ख. ङ. । ९. विरता—घ. । १०. पलात्मा—ख. ङ. । ११. व्याख्यार्हा—ख. ङ., व्याख्याता—घ. । १२. 'भू' नास्ति—क. ग. छ. । १३. 'अन्त····मर्थः' नास्ति—क. ग. छ. । १४. त्मकभावाङ्गुली ते—ख. ङ. ज. । १५. परितप्य—ख. ङ. ज. । १६. तां—ख. ङ. ज. ।

1. "पार्थिवस्थानं नाम मूर्धस्थितमहाबिन्दुस्थानमित्याहुः । यत्तु प्राचां टीकासु खेचरीत्रैविध्यमिह वर्ण्यते, तत्तदनुसारेण मुद्राया इति श्लोकोऽपि योज्यते, तत्प्रकृतानुपयोगान्नोक्तमस्माभिः" ( से. पृ. १२९ ) ।

2. "खे बोधगगने चरतीति खेचरी मुद्रा····। कीदृशी खेचरी ? शिवस्य चिन्नाथस्यावस्थातुः संबन्धिनी अवस्था, स्वानन्दोच्छलत्तारूपा । न तु "बद्ध्वा पद्मासनं····" इत्येवं संस्थानविशेषानुसरणरूपा, अपि तु····"पराम् । गतिमेत्यर्थभावेन कुलमार्गेण नित्यशः ।। चरते सर्वजन्तूनां खेचरी नाम सा स्मृता ।" इति श्रीतन्त्रसद्भावनिरूपितपरसंवित्तिस्वरूपा ।" ( शि. वि. पृ. ५७–५८ ) इति क्षेमराजः ।

काचिद्योगात्मा संस्थानविशेषानुसरणरूपा[१] सद्यस्तत्प्राप्तिसाधनी। साति-रहस्यभूता विलिख्यते—

चिबुकं योजयित्वा तु षोडशस्वरमण्डले।
चन्द्रसूर्यनिरोधेन मूलशक्तिनिकुञ्चनात्॥
रसनामन्तरा कृत्वा अनच्के[२] धारयेन्मनः।
एषा सा[३] खेचरी ध्याता[४] उन्मनात्वं प्रयच्छति॥ इति।

अन्यत्रापि—

[५]त्रिबुकण्ठसमायोगात् प्रविकास्य शिरोऽम्बुजम्।
चन्द्रसूर्यनिरोधेन मूलशक्तिं निकुञ्च्य च॥
रौद्रीं कुञ्चिकयोद्घाटच[६] द्विरष्टकमलोदरे।
रसनामन्तरा कृत्वा नासाग्रे रोपयेद् दृशम्[७]॥
यवमात्रत्रिकोणं तु मीलनोन्मीलनात्मकम्[८]।
लिहन् स्वरसनाग्रेण पिबन्नमरवारुणीम्॥
सदा समरसीभूतं मनः शून्ये निवेशयेत्।
एषा सा खेचरी मुद्रा उन्मनात्वप्रदायिनी॥ (ज्ञा० सा०) इति।

श्रीतन्त्रसद्भावेऽपि—

बद्ध्वा पद्मासनं योगी नाभावक्षेश्वरं न्यसेत्।
दण्डाकारं तु तत्तावन्नयेद् यावत् [1]कखत्रयम्[९]॥
निगृह्य तत्र तत्तूर्णं प्रेरयेत् खत्रयेण तु।
एतां बद्ध्वा महायोगी खे गतिं प्रतिपद्यते॥ इति।

---

१. षाचरण–ख. ङ.। २. अनन्ते–घ.। ३. च–ख.। ४. ख्याता–ग. घ.। ५. 'बिन्दुकण्ठ' इत्यर्थरत्नावल्यनुगुणः पाठः। ६. योत्पाटच–घ.। ७. रूपयेद् दृशौ–ग.। ८. निमीलोन्मील–ख. ङ.। ९. खग–ख. ङ.।

1. कखत्रयमिति। "के शिरसि खत्रयं शक्ति-व्यापिनी-समनारूपमाकाशत्रयं भ्रूबिन्दोः प्रभृति यावद् ब्रह्मरन्ध्रं संस्थितम्। तत्र तन्मनोऽवष्टभ्य खत्रयेणोर्ध्वगमनाय प्रेरयेत्" (शि. वि. टि., पृ. ५८)। इमौ श्लोकौ मालिनीविजयोत्तरेऽपि (७।१५–१७) दृश्येते।

**परिवर्त्य करौ स्पृष्टावर्धचन्द्राकृती प्रिये ॥ २३ ॥**
**तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः ।**
**अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ॥ २४ ॥**
**तथैव कुटिले योज्ये सर्वाधस्तादनामिके ।**
**बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्तिनी ॥ २५ ॥**

---

तथा च श्रुतिः—"अन्तरेण तालुके य एष स्तन इवावलम्बते सेन्द्र-योनिः" ( तै० उ० १।६।१ ) इति ॥ २२-२३ ॥

**परिवर्त्येति** । **अर्धचन्द्राकृती** अर्धचन्द्राकारं यथा तथेति । **तर्जन्यङ्गुष्ठ-युगलं** तर्जनीयुगलमङ्गुष्ठयुगलं च । **कनिष्ठावष्टब्धे** [1]कनिष्ठाभ्यामवष्टब्धे । **मध्यमे** मध्यमाङ्गुली । **कुटिले** व्यत्यस्ते । **सर्वाधस्तात्** तर्जन्यङ्गुष्ठयुगल-कनिष्ठामध्यमानाम् । **सर्वसिद्धिप्रवर्तिनी** सर्वासामणिमादिसिद्धीनाम् । अय-

---

परिवर्त्येत्यादि । अन्योन्याङ्गुलिविवरपरिक्षिप्ताङ्गुली करौ कृत्वेति । अर्धचन्द्रेत्यादि । तर्जनीयुग्ममङ्गुष्ठयुग्मं च । युगपद् एककालमेव । अर्धचन्द्राकृति अर्धचन्द्राकारवत्, कुर्यादित्यर्थः । अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेदिति । [1]अर्धचन्द्राकृतिरूपतया स्थित-तर्जन्यङ्गुष्ठयुगले अधोदेशावस्थितमध्यमाङ्गुलिकनिष्ठाङ्गुलिद्वयावष्टब्धे कुर्यात् । मध्यमाङ्गुल्योर्मध्ये कनिष्ठाङ्गुलिद्वयं धारयेदित्यर्थः । तथैव कुटिले योज्ये सर्वाधस्तादनामिके

---

१. स्पष्टा–वाक. ख. ब. । २. कृति–वाग. से., कृतिः–सग. । ३. युगले–सक. । ४. भावयेत्–वाक. ग. अ. । ५. बुधः–सक. । ६. छिके बद्धे–सक. । ७. योज्य–वाक. ख. ग. । ८. र्तकी–वाक. ग. अ. ब. सग. । ९. 'तथा····इति' नास्ति–ग. घ. । १०. 'अर्धचन्द्राकृती' नास्ति–ख. ङ. । ११. सर्वासां मणिमन्त्रादीनाम्–ङ. । १२. अर्धचन्द्रवत् कु–क. ग. छ. । १३. चन्द्ररूप–क. ग. छ. । १४. ला सा देशे स्थित–ख. ङ., लाधोदेशे स्थित–ज. । १५. 'कनिष्ठाङ्गुलि' नास्ति–क. ग. छ. । १६. साध–ख. ङ. ज. ।

1. "केचित्तु कनिष्ठिकाभ्यामवष्टब्धे मध्यमे अधो विनियोजयेदिति वदन्तस्तर्जनीमध्यमयोः सन्धौ कनिष्ठिकाप्रवेशनं मन्यन्ते । परे तु मध्यमावष्टब्धे कनिष्ठिके इति व्याचक्षाणाः कनिष्ठावष्टब्धपदे बहुव्रीहिं मन्यमाना मध्यमाद्वयेनाकुञ्चितेन कनिष्ठिकायुगलं गर्भीकुर्यादिति मेनिरे" ( से. पृ. १३० ) ।

**मध्यमे कुटिलाकारतर्जन्युपरिसंस्थिते[1] ।**
**अनामिकामध्यगते[2] तथैव हि कनिष्ठिके ।। २६ ।।**
**सर्वा एकत्र संयोज्या[3] अङ्गुष्ठपरिपीडिताः ।**
**एषा तु प्रथमा मुद्रा योनिमुद्रेति संस्मृता[4] ।। २७ ।।**

---

मर्थः—प्रथममात्मीयौ करौ परिवर्त्य तर्जन्यङ्गुष्ठयुगलमर्धचन्द्राकृति कृत्वा तदधः कनिष्ठावष्टब्धे मध्यमाङ्गुली विनियुज्य सर्वाधस्तादनामिके व्यत्यस्य विनियोजयेदितीयमष्टमी बीजमुद्रा ।। २३–२५ ।।

**मध्यमे** इत्यादिपद्यद्वयं योनिमुद्राप्रतिपादनपरम्[5] । **मध्यमे** मध्यमाङ्गुली । **कुटिलाकारतर्जन्युपरिसंस्थिते** कुटिलाकारयोस्तर्जन्योरुपरि संस्थिते[6] । अना-

---

इति । तथैव परिवर्तनक्रमेणैव[7] । अनामिके सर्वाधस्तादीषत्कुटिले योज्ये इत्यर्थः । बीजमुद्रेयमचि-[8] रात् सर्वसिद्धिप्रवर्तकीति[9] । इयमुद्धृता नाम्ना[10] बीजमुद्रा सर्वसिद्धिप्रवर्तकी[11] । अष्टमी[12] मुद्रेत्यर्थः ।। २३-२५ ।।

मध्यमे कुटिले कृत्वा तर्जन्युपरिसंस्थिते इत्यादेरयमर्थः—कुटिलीकृतमध्यमाङ्गुलि-द्वयमादौ तर्जन्योरुपरि कृत्वा तद्व्यत्यस्तानामिकाद्वयमध्यगते च कुर्यात् । कनिष्ठिके च तथा नियोजयेत् । अनामिकामध्यगते च यथा भवतस्तथा कुर्यादित्यर्थः । अन्यत्[13] सुगमम् । एषा तु प्रथमा मुद्रा योनिमुद्रेति या स्थितेति । एषा समस्तमुद्राणां प्रथमा दर्शनीये-त्यर्थः । नन्वेतदसङ्गतम्, तथा हि—"एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी" (३।६) इत्यत्र सर्वसंक्षोभणीमुद्रायाः[14] प्राथम्यमूचिवान्[15] शिवः[16] । इदानीं योनिमुद्रायाः प्राथम्य-मभिदधाति[17] । तेनैव पूर्वापरविरोधान्न[18] निर्णय इति । अत्रोच्यते—विभक्तविषयत्वान्न

---

१. कुटिले कृत्वा–वाक. ग. अ. ब. सक. ग. । २ मिके–ब. सक. । ३. ज्य–सग. घ. । ४. या स्थिता–वाग. अ. से. सग. घ., या स्मृता–ब. । ५. 'प्रतिपादन' नास्ति–ग. घ. । ६. 'कुटिला····संस्थिते' नास्ति–ख. ङ. । ७. णैव स्थिते–ख. ङ. ज. । ८. मुदिता–क. ग. छ. । ९. तिनीति–क. ग. छ. । १०. 'नाम्ना बीज' नास्ति–ख. ङ. ज. । ११. तिनी–क. ग. छ. । १२ 'अष्टमी मुद्रेत्यर्थः' नास्ति–ख. ङ. ज. । १३. 'अन्यत्····येत्यर्थः' नास्ति–ख. ङ. । १४. भकारिण्याः–ङ. ज. । १५. म्यं सूचित–क. ख. ग. । १६. 'शिवः' नास्ति–ङ. । १७. मुप–ग. । १८. न्नैष–ख. ङ. ज. ।

**एता मुद्रा महेशानि त्रिपुराया मयोदिताः ।**
**पूजाकाले[1] प्रयोक्तव्या यथानुक्रमयोगतः ।। २८ ।।**

इति श्रीनित्याषोडशिकार्णवे तृतीयः पटलः ।।

—:o:—

**मिकामध्यगते** व्यत्यस्तयोरनामिकयोर्मध्यगते । **कनिष्ठिके** कनिष्ठाङ्गुली । **सर्वा** अङ्गुलयः । **एकत्र** एकस्यां व्यक्तौ । **अङ्गुष्ठपरिपीडिता** अङ्गुष्ठाभ्यां परिपीडिताः[2] । अयमर्थः—आदौ वक्राकारतर्जनीद्वयोपरिसंस्थितं[3] मध्यमाङ्गुलिद्वयं विरच्य पुनः परस्परं व्यत्यस्ततर्जनीमध्यमान्तर्विवरगतानामाद्वयोपरिगतं च कृत्वाऽनन्तरं तथा स्थितं मध्यमाङ्गुलिद्वयमध्यगतं कनिष्ठाद्वयं[4] विधाय पश्चादङ्गुष्ठद्वयं कनिष्ठाङ्गुलिद्वयाग्रप्रदेशे विदध्यादितीयं योनिमुद्रा नवमी ।। २६–२७ ।।

**एषा त्विति** । तुर्विशेषे । नवम्यपीयं[5] मुद्रा **प्रथमा** [1]उत्कृष्टा, योन्युद्भूतत्वात् सर्वासां मुद्राणाम् । अत्रा**भियुक्तवचनम्**[6]—

एका चैव[7] महामुद्रा योनिमुद्रात्वमागता ।
तया विभक्त[8] आत्मा तु संक्षोभादिप्रभेदतः ।।(सं०प०) इति ।

---

दोषः । तथाहि—[1]बाह्यपूजायां[9] सर्वसंक्षोभणीमुद्रायाः[10] प्राथम्यमभिमतं परमेश्वरेण । अन्तर्यजनवेलायां श्रीमहायोनिमुद्रायाः प्राथम्यमिति[11] न विरोध इति सिद्धम् । मुद्रा च द्विविधा बाह्याभ्यन्तरभेदेन । तत्र बाह्या कराभ्यां बन्धनीया नित्याषोडशिकार्णवे समुद्धृतबीजैरित्यर्थः[12] । तत्तद्बीजानि च लिख्यन्ते—द्रामिति सर्वसंक्षोभण्याः[13], द्रीमिति सर्व-

१. नास्त्येषा पङ्क्तिः–ब. । २. 'परि' नास्ति–ख. घ. ङ. । ३. 'वक्रा····पुन.' नास्ति–ख. ङ. । ४. द्वयं–ग. । ५. नवमीयं–ख. ङ. । ६. अभियुक्तवचः–ख. ङ. । ७. एषा–ख. ङ. । ८. विभक्तमात्मानं–ख. । ९. बाह्ययागे–ख. ङ. ज. । १०. भण्याः–ङ. ज. । ११. म्यमभिहितं–क. ग. छ. । १२. ता तत्तद्बी–ख. ङ. ज. । १३. भणीबीजम्–ङ. ज. ।

1. "तत्र प्रथमा प्रथमकीर्तनीया, सर्वोत्तमत्वादित्यर्थ इति केचित् । परे तु बहि(र्यो ? र्या)गे सर्वसंक्षोभिणीमुद्रायाः प्राथम्यमन्त(यो ? र्या)गे तु योनिमुद्राया एवेति व्यवस्थाप्रदर्शनार्थमित्याहुः····। अथवा—"एका चैषा महामुद्रा योनिमुद्रात्वमागता । तया विभक्तः स्वात्मा तु

**एताः** क्षोभिण्याद्याः । **त्रिपुरायाः** भगवत्या मातुः संबन्धिन्यः । **मया** चिद्रूपेणात्मना । **उदिता** विमर्शपदवीं प्रापिताः । **यथानुक्रमयोगत**[1] उद्दिष्ट-क्रमयोगतः । इति शिवम् ॥ २८ ॥

एवमृजुविमर्शिन्यां नित्याषोडशिकार्णवे ।
शिवानन्दपरामृष्टस्तृतीयः[2] पटलो गतः ॥

—:०:—

विद्राविण्याः[3], क्लीमिति सर्वाकर्षिण्याः[4], ब्लूमिति सर्वावेशकारिण्याः[5], सः इति सर्वोन्मादिन्याः[6], क्रोमिति सर्वाङ्कुशायाः[7], ह्स्फ्रोमिति[8] खेचर्याः[9], ह्सौमिति बीजमुद्रायाः[10], ऐमिति योनिमुद्रायाः[11] । एवमन्तर्यजनवेलायां द्रामिति[12] क्रमाद् बीजक्रमः ॥ २६–२८ ॥

इति[13] श्रीविद्यानन्द[14]विरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां
मुद्राप्रदर्शनस्तृतीयः[15] पटलः ॥

—:०:—

१. 'यथानुक्रमयोगतः' नास्ति–ख. ङ. । २. मृष्टं तृतीयं पटलं गतम्–ख. ग. ङ. । ३. विणीबीजम्–ङ. ज. । ४. णीबीजम्–ङ. ज. । ५. णीबीजम्–ङ. ज. । ६. नीबीजम्–ङ. ज. । ७. सर्वमहाङ्कुशाबीजम्–ङ. ज. । ८. 'इति' नास्ति–क. ख. ङ. । ९. सर्वखेचरीबाजम्–ज. । १०. सर्वबीजमुद्राबीजम्–ज. । ११. द्राबीजम्–ज. । १२. क्रमाद् द्रामिति–ख. ङ. ज. । १३. 'वामकेश्वरशास्त्रे' इत्यधिकः पाठः–ज. । १४. नन्दनाथ–ख. ङ. छ. । १५. 'मुद्राप्रदर्शनः' नास्ति–ख. ङ. ज. ।

संक्षोभादिप्रभेदतः ॥'' इत्यभियुक्तोक्त्या स्वेतरमुद्राजनकत्वात् प्राथम्यमित्यप्याहुः'' (से. पृ. २३१)।

# अथ चतुर्थः पटलः

श्रीदेव्युवाच

भगवन् सर्वमाख्यातं मुद्राणां ज्ञानमुत्तमम् ।
[1]वदेदानीं महादेव्या[1] एकैकाक्षरसाधनम् ।। १ ।।
महाज्ञानं[2] प्रभावं च व्याप्तिस्थानं[3] भवं लयम् ।
स्थूलसूक्ष्मविभेदेन[4] शरीरे परमेश्वर ।। २ ।।

---

एवं पूजाङ्गभूतमुद्रादशकप्रतिपादनपरं तृतीयं पटलं[5] विमृश्य मूलविद्याङ्गभूतबीजत्रयव्याप्त्यादिप्रकाशनपटीयस्येकसप्ततिसूत्रग्रथिते[6][7] तुरीये[8] पटले विमर्शनीयानि[9] पदानि विमृश्यन्ते[10]—श्रीदेवीत्यादि । सर्वं रचनाप्रकारकालिविशेषानुक्रमविषयम् । उत्तमं[11] पुरुषार्थप्रदत्वात् । महादेव्या मन्त्ररूपिण्या जगन्मातुस्त्रिपुराभट्टारिकायाः परविमर्शशरीरिण्या वरेण्यायाः[12] । एकैकाक्षर-

---

अथ चतुर्थे पटले टिप्पणं लिख्यते । भगवन् सर्वमाख्यातमित्यादि । सर्वमित्यन्तर्बहिर्मुद्रारचन[13]बन्धनप्रकारद्वयमिति भावः । रचनं बाह्यम्, बन्धनमान्तरम् । ज्ञानमिति तदुभयगोचरं[14] ज्ञानम् । वदेत्यादि । इदानीं मूलविद्याया[15] देव्या एकैकाक्षरसाधनम् एकैकबीजसाधनं[16] वदेत्यर्थः । महाज्ञानप्रभावमित्यादि[17] । महच्च तज्ज्ञानं चेति महाज्ञानम्, तच्च

---

१. देव—ब. सख. । २. ज्ञान—अ. वाक. ख. । ३. व्याप्ति स्थानोद्भवं—वाक. ख., व्याप्तिस्थानोद्भवं—सक., व्याप्तिस्थानभवं—सघ., व्याप्ति—वाग. से. । ४. विभागेन—वाक. ख. । ५. यपटलं—ख. ङ. । ६. व्याख्या—ग. । ७. 'सूत्र' नास्ति—ख. ङ. । ८. तुर्ये—ख. ङ. । ९. प्रकाश—ख. ङ. । १०. प्रका—ख. ङ. । ११. 'उत्तमं' नास्ति—ख. ङ. । १२. 'परविमर्शशरीरिण्या वरेण्यायाः' नास्ति—ख. घ. ङ. । १३. 'रचन' नास्ति—ख. ङ. ज. । १४. तदुभयमेव—क. ग. छ. । १५. मूलदेव्या—ख. ङ. ज. । १६. 'एकैकबीजसाधनं' नास्ति—क. ग. छ. । १७. मिति—ख. ङ. ज. ।

1. अत्रोपस्थापिता एकादश प्रश्नास्तेषां समाधानप्रकाराश्च सेतुबन्धे द्रष्टव्याः । एकैकाक्षरसाधनमित्यत्र कूटत्रयाभिप्रायेण प्रश्नत्रयम् ।

साधनम् एकैकमक्षराणां[1] त्रयाणां साधनम् । **महाज्ञानं** महादेव्याः स्वरूपविषयम् । **प्रभावं** सामर्थ्यम् । व्याप्तिस्थानं व्याप्तिपदम् । **भवम्** उल्लासम् । लयं विश्रान्तिम् । **स्थूलसूक्ष्मविभेदेन** । स्थूलं[2] वैखर्यात्मना, सूक्ष्मं[3] मध्यमापश्यन्तीभ्याम् ॥ १–२ ॥

---

तस्य प्रभावश्च विमर्शरूपः, तम् । किमुक्तं भवति—[1]प्रकाशविमर्शरूपौ शिवशक्तिवर्णावकारहकारोपलक्षितौ[4] महाज्ञानतत्प्रभावावुपदिश्येते[5] इति भावः । व्याप्तिस्थानमिति । तदुभयं शक्तिशिवरूपमेकादशं पश्यन्तीरूपं[6] तन्मध्यमावैखरीरूपाणामक्षराणां[7] व्याप्तिस्थानमाश्रयस्थानम्[8], तदाश्रित्य तत्प्रवर्तनात् । भवमिति । भवत्यस्मादिति । अस्मात्[9] पश्यन्तीरूपादक्षरसन्दर्भात्तदुत्तरप्रकारद्वयाक्षरसन्दर्भस्योत्पत्तिरिति[10] भावः[11] । लयमिति । लीयतेऽस्मिन्निति लयः । मध्यमावैखरीरूपं तदुभयमस्मिन्नेव पश्यन्तीरूपे(ण?)[12] लीयत इति भावः[13] । स्थूलसूक्ष्मविभेदेनेति[14] । स्थूलं च सूक्ष्मं च स्थूलसूक्ष्मम् । किमुक्तं भवति? पश्यन्तीकार्यरूपं वैखरीमध्यमाद्वयं स्थूलसूक्ष्मम् । तत्र मध्यमा सूक्ष्मं रूपम्, वैखरी स्थूलं रूपमिति[15] भावः । तदुभयकारणं पश्यन्तीरूपं परमित्यर्थात् सिद्धम् । एवं[16] परसूक्ष्मस्थूलभेदेन शरीरे वर्णक्रमः संव्यवस्थित इति [2]प्रागीषत् सूचितं त्वया[17] । तदिदानीं प्रकटीकुरु हे परमेश्वर ! इति यावत् ॥ १–२ ॥

---

१. एकैकाक्ष–ख. ङ. । २. स्थूला–ङ. । ३. सूक्ष्मा–घ. । ४. रूपा–क. ग. छ. । ५. द्वचप–ख., दुप–ङ. । ६. रूपेण–क. ग. छ. । ७. 'अक्षराणां' नास्ति–क. ग. छ. । ८. 'आश्रयस्थानम्' नास्ति–क. ग. छ. । ९. तस्मात्–ङ. ज. । १०. द्वयार्ण–ख. ङ. ज. । ११. 'भावः' नास्ति–ग. छ. । १२. पश्यन्त्या रूपेण–क. ग., पश्यन्तीवाग्रसने–ख. ङ. ज. । १३. 'भावः' नास्ति–क. ग. । १४. इतः पूर्वम्–'लयमपि' इत्यधिकः–क. ग. ज., लयितमपि–ङ. । स चानावश्यकः । १५. 'रूप' नास्ति–क. छ. । १६. एष–ख. ङ. ज । १७. तस्त्वया–ख. ङ. ज. ।

1. 'केचित्तु महाज्ञानं प्रकाशः । प्रभावो विमर्शः । व्याप्तिस्तयोः सामरस्यम् । स्थानं परा वाक् । भवः पश्यन्ती । लयो मध्यमा । स्थूलशरीरं वैखरीति व्याचक्षते । तत्र मूलं मृग्यम्'' ( से. पृ. १३३ ) ।

2. अत्र द्वादशसूत्रव्याख्याने निष्कौलसम्प्रदायानुसारिण्यां व्याख्यायां वर्णक्रमदर्शनपक्षव्याख्यानं ( पृ० ३५–३७ ) द्रष्टव्यम् ।

**ईश्वर उवाच**

**शृणु देवि महाज्ञानं सर्वज्ञानोत्तमं[1] परम्[2] ।**
**येनानुष्ठितमात्रेण[3] भवाब्धौ[4] न निमज्जति ।। ३ ।।**

**शृण्वित्यादि । महाज्ञानं** संसारक्लेशहरत्वात् । **सर्वज्ञानोत्तमं** सर्वेषां ज्ञानानामुत्तमम्, अनुभवारूढत्वात् । **अनुष्ठितमात्रेण** अनुसंहितमात्रेण[5] । **न निमज्जति** व्यवहरन्नपि संसारक्लेशं नानुभवति । जीवन्मुक्तत्वादित्यर्थः ।

**अत्राभियुक्तवचनम्—**

संसार एव निवसन् जनो व्यवहरन्नपि ।
न बन्धनं[6] तथाप्नोति पद्मपत्रे[7] पयो यथा ।। इति ।

**ईश्वरप्रत्यभिज्ञायामपि[8]—**

सर्वो ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ।। (४।१।१२) इति ।

**श्रीपरमार्थसारेऽपि—**

भिन्नाज्ञानग्रन्थिर्गतसन्देहः पराकृतभ्रान्तिः ।
प्रक्षीणपुण्यपापो विग्रहयोगेऽप्यसौ मुक्तः ।।
अग्न्यभिदग्धं बीजं यथा प्ररोहासमर्थतामेति ।
ज्ञानाग्निदग्धमेवं[9] कर्म न जन्मप्रदं भवति ।।(६१-६२) इति ।।३।।

---

शृणु देवीत्यादि । महाज्ञानं परमप्रकाशविमर्शरूपस्य[10] वर्णक्रमादिभूतपश्यन्ती-[11][12]मयस्य शिवस्य स्वरूपज्ञानमिति भावः । सर्वज्ञानोत्तममिति[13] । सर्वेषां तत्त्वज्ञानानां मध्ये एतदेवोत्तमं संसारमोचकत्वादिति । येनेत्यादि । येनानुष्ठितमात्रेण भवाब्धौ संसारसागरे न निमज्जति न निपततीति यावत् ।। ३ ।।

---

१. त्तरं-वाक. ख. । २. प्रिये-ब. । ३. त्रेऽपि-सख. । ४. विमुह्यति-सख. ।
५. 'अनुसंहितमात्रेण' नास्ति-ख. ङ. । ६. स त्वन्धः कथ-ख. ङ., बन्धन कथ-ग. ।
७. पद्मे पत्रे-घ. । ८. 'ईश्वर····भवति ।। इति' नास्ति-ख. घ. ङ. । ९. ज्ञानानलेन दग्धं-ग. ।
१०. परप्र-ख. ङ. ज. । ११. इतः पूर्वम्-'वर्णक्रमस्य' इत्यधिकः पाठः-ख. ङ. ज. ।
१२. द्यन्तभूत-ख. ङ. ज. । १३. 'सर्व····यावत्' नास्ति-ख. ङ. ज. ।

**त्रिपुरा[१] परमा[२] शक्तिराद्या[३] जातादितः प्रिये ।**
**स्थूलसूक्ष्मविभेदेन[४] त्रैलोक्योत्पत्तिमातृका ॥ ४ ॥**

---

**परमा** । पारम्यं सर्वोत्कृष्टत्वम् । **शक्तिः**[५] सर्वधारिका मायालक्षणा विमोहिनी । **आद्या** प्रथमोन्मेषरूपा । **जाता** व्यक्ति गता । [1]**आदितः** । महाप्रकाशरूपा[६]ऽनुत्तरशिवात्मनः स्वरूपभूता विमर्शशक्ति(:) बी(जोच्छूना[७]-? जादुच्छूना)दिव महास्फुरत्तात्माऽनुभवैकगम्या स्पन्दशक्तिरुज्जृम्भितेत्यर्थः । **स्थूलसूक्ष्मविभेदेन** । **स्थूलं** कलातत्त्वभुवनाभिधेयरूपार्थत्रिकम्, **सूक्ष्मं** वर्णपद-

---

त्रिपुरा परमेत्यादि । त्रिभ्यः पुरा[८] त्रिपुरा । त्रिबिन्दुत्रितत्त्वेभ्यः पुरा पूर्वं[९] स्थितेति भावः । कोऽभिप्रायः ? त्रिवृत्करणात् प्रागियं केवलमाकाशाकारपरमकाम्य-रूपात्तत्कामान्तरस्थितेति भावः । सा परमा विश्वोत्तीर्णा । शक्तिरिति सामर्थ्यम् । तस्याद्यशिवस्यान्तर्गतविमर्शरूपेति भावः । आद्येति । त्रिपुरा वर्णानामादिभूता कारण-रूपा सेयमकारहकारकामकलापर्यायप्रकाशविमर्शरूपाऽपीति यावत् । जातादितः[1] प्रिये ! इति । अभिव्यक्ताद् हकारात्मकाच्छिवात् । कोऽभिप्रायः ? इच्छादिचतुष्कला-

[2]**परमा शक्तिरिति** सामानाधिकरण्याद्[११] बीजापूरवदकारात्मनः शिवात् कारणात् तथैकरसविमर्शात्मकहकारापरपर्यायकामकलारूपेण[१२] या जाता परिणता । अयं भावः—वामादि-चतुष्कलासंपिण्डितरूपादकारादङ्कुररूपेणेत्यादि चतुष्कलासमष्टिरूपिणी[१३] केवलहकारात्मकी शक्तिः प्रकाशादुल्लसन्ती या जातेति यावत् । **स्थूलसूक्ष्मविभेदेन त्रैलोक्योत्पत्तिमातृकेति** ।

---

१. प्रथमा—सख. । २. देवि—ब. । ३. ज्ञाना—वाग. से., जातेह सा—ब., जाता हि सा—सख. । ४. विभागेन—वाक. ख. । ५. 'सर्वाधारत्वात्' इत्येव पाठः—ख.ङ. । ६. पादनु—घ. । ७. च्छून्यादिवन्म—ग., च्छूनादि महा—ङ. । ८. पुरा इति—ग. । ९. 'कोऽभि''''स्थितेति भावः' नास्ति—ग. । १०. काम—क. । ११. नन्दकारिण्यात्—ङ. । १२. तदैक—ङ. ज. । १३. रूपिणा—ख. ।

1. "आदित इत्यस्य सर्वादिभूताद् ब्रह्मणः सकाशादित्यर्थ इति तु केचित् । ज्ञानेच्छाक्रियात्मक-शक्तित्रितयस्याद्या तत्समष्टिरूपशान्तात्मिकेत्यर्थ इत्यन्ये ।''''केचित्तु त्रैलोक्यं विद्याकूटत्रयं तदुत्पादिका मातृका स्थूलसूक्ष्मभेदेन वैखरीमध्यमादिभेदेन द्विविधा ज्ञानादितो हकाररूप-शिवाज्जातेत्यर्थ इत्याहुः" ( से. पृ. १३४ ) ।

2. त्रिपुरा परमेत्यादितो ग्रन्थसमाप्तिपर्यन्तं ख.ङ.ज.संज्ञिकासु मद्रपुरीमातृकास्वन्यविध एव पाठ उपलभ्यते । सोऽत्र सूक्ष्माक्षरेषु स्थाप्यते ।

मन्त्राभिधानरूपशब्दत्रिकम्, **तयोर्विभेदेन**,[1] तत्तद्रूपेणेत्यर्थः । अथवा[2] **स्थूलं** कार्यं पृथिव्यापस्तेजो वायुर्नभ इति । **सूक्ष्मम्** एषामेव रूपम् गन्धो रसो रूपं स्पर्शः शब्द इति । **त्रैलोक्योत्पत्तिमातृका** । कर्तृकरणकर्मव्युत्पत्त्या लोक-लोकनलोक्यात्मा प्रपञ्चः षट्त्रिंशत्तत्त्वसमुदायः । त्रिलोक एव **त्रैलोक्यम्** । तस्योत्पत्तौ[3] समुदये **मातृ**भूता कारणभूता ॥ ४ ॥

समष्टिरूपिणी त्रैलोक्योत्पत्तिकारिणी केवलहकारात्मिका शक्तिराद्या वामादिचतुष्कलासंपिण्डितरूपिणी आदितो वस्तुरूपादङ्कुररूपेण व्यक्तिं गतेति भावः । स्थूलसूक्ष्मविभेदेन त्रैलोक्योत्पत्तिमातृकेत्यस्यायं भावः—अकारहकारौ वर्णक्रमस्याद्यन्तौ । तत्समष्टिसमरसभावेन रुद्रसंख्यपरमामृतमयं पश्यन्तीरूपं परमिति सुसिद्धवत् कृत्वा तदुत्तरयोर्मध्यमावैखर्योः सूक्ष्मस्थूलतां व्यपदिश्यैवं परसूक्ष्मस्थूलवर्णाङ्कुरा[4] आद्यशक्तिरेव सप्तषष्टिवर्णरूपिणी त्रैलोक्योत्पत्तिकारिणी मातृका । लोक्यतेऽनेनेति लोकस्त्रैलोक्यम् । धामत्रितयस्योत्पत्तिर्मातृकाचक्रादिति तथोच्यते । एवं सप्तषष्टिवर्णरूपिणी त्रिधामजननी जातेति संबन्धः । अथवा रसाधारस्थवर्णकदम्बकं त्रिबीजसम्बन्धि[5] त्रिधा विभक्तं कुर्यात् । अथवा वैखरीरूपं वाग्भवबीजम्, मध्यमारूपं कामराजम्, पश्यन्तीरूपं शक्तिबीजमिति । एवं त्रिबीजात्मकः प्रकाश एव त्रैलोक्यमित्यर्थः । तस्योत्पत्तिकारिणी मातृकेति यावत् । अनेन शरीराभ्यन्तरे भङ्ग्या उपासनाप्रकारोऽपि दर्शितः ॥ ४ ॥

अत्र लोकशब्द आलोकपर्यायः । प्रकाशपर्याय इत्यर्थः । अकारहकारयोश्चतुष्कलाश्रयावयवाद् व्यष्ट्या सामरस्ये तत्त्रिविधप्रकाशपर्यायालोकवत् पश्यन्तीरूपसूक्ष्मतया परमिति सिद्धवत्कृत्वा पुनर्मध्यमावैखर्योः सूक्ष्मस्थूलभावात्[6] परसूक्ष्मस्थूलाकारं त्रिधा भिन्नं शिवशक्तिलोकनं शिवशक्त्यभिन्नं तथा चाव्यक्तैकादशाक्षरानन्तरसमयं पश्यन्तीवाग्रूपं[7] नवनादात्म सूक्ष्मवर्णमध्यमावाग्रूपं सप्तचत्वारिंशद्व्यक्तिलिपिविप्रकीर्णं वैखरीवाग्रूपमितीदं त्रिधा लोकनमित्येव त्रयस्त्रिलोकत्रिप्रकारास्तेषां समुदायस्त्रैलोक्यम्, तस्योत्पत्तौ मातृका कारणभूता शिवशक्तिरित्यर्थः । त्रिवृत्करणवृन्दमेवेदमपि ज्ञातव्यम् । अन्यच्च रसाधारबीजं[8] पश्यन्तीरूपं चेत्यपि शरीरान्तर्वर्णचक्रं त्रिबीजवत् प्रकाशवत् स्यात् । एवं वर्णक्रमस्य शरीरान्तरुपासनाप्रकारो दर्शितः ॥४॥

---

१. तयोर्मिथुनयोर्भेदेन—ख. ङ. । २. 'अथवा····शब्द इति' नास्ति—ख. ङ. । ३. अस्यो—ग. । ४. 'मातृका····स्योत्पत्तिः' नास्ति—छ. । ५. संबन्धि यत्—क. ग. । ६. स्थूलरूपा—ख. ङ. । ७. 'नव····वाग्रूपं' नास्ति—ख. । ८. साधार—ख. ।

**कवलीकृतनिःशेषतत्त्वग्रामस्वरूपिणो[1] ।**
**अस्यां[2] परिणतायां तु न कश्चित् पर इष्यते ॥ ५ ॥**

---

**कवलीकृतेति । कवलीकृतो** ग्रासीकृतः, **निःशेषो** निरवशेषः, **तत्त्वग्राम**स्तत्त्वानां समुदायः । तानि च शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकलाविद्यारागकालनियतिपुरुषप्रकृतिमनोबुद्ध्यहङ्कार[3]श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्नि[4]सलिलभूमयः । अयमर्थः—बीजावस्थायामङ्कुरकाण्डपत्रपुष्पफलादिवच्छक्त्यवस्थायामन्तः सदा-

---

कवलीकृतनिःशेषेत्यादि । अशुद्ध-शुद्धाशुद्ध-शुद्धात्मना त्रिविधतत्त्वानि वाच्यभूतानि । तस्य वाचकत्वाभेदेन त्रिवृत्कृतो वर्णक्रमः स्थित इति कृत्वा सा मातृका तथोच्यते । तथात्वमपि प्रकाशात्मनस्तत्त्वसमूहस्य विमर्शात्मना वाचकत्वेन सदाऽविभागात् । तस्यामित्यादि । परिणतायां विकासभाव[5]मागतायाम् । कोऽर्थः ? परमप्रकाशरूपा या चिच्छक्तिः सैव वाच्यवाचकभेदेन वर्णतत्त्वरूपेण विभक्ता संकुचितेव कुलाभिमानिनी स्थिता । सैव पुनर्वर्णतत्त्वषड्भेदसंभेदन[6]द्वारेण षडध्वं प्रविलापयन्ती नामगुणरूपजातिलक्षणातीतपरमप्रकाशभूमिका[7]माढौकते यदा, तदा विकासदशां गता परिणता भवतीति भावः । तदुक्तं संकेतपद्धत्याम्—

"संकोचः परमा शक्तिर्विकासः परमः शिवः" इति ।

**कवलीकृते**त्यादि । शुद्धमिश्राशुद्धात्मना त्रिवृत्कृतस्य तत्त्वसमुदायस्य वाच्यरूपस्य **वाचकत्वेन** कवलीकृतस्त्रिवृत्कृतो वर्णक्रम इति । **कवलीकृतो** ग्रासीकृतः । **निःशेषतत्त्वग्रामस्वरूपिणी** सा विमर्शशक्तिर्मातृका च जायत इति । **तस्यामि**त्यादि । परिणतायां विकासभावं गतायाम् । कोऽर्थः ? परमप्रकाशरूपा या चिच्छक्तिः सैव तत्त्ववर्णस्वरूपवाच्यवाचकभावेन विभक्ता संकुचितेव कुलाभिमानिनी स्थिता । पुनरपि विभक्तानुग्रहभाववर्णतत्त्वषड्भेदनिर्भेदनक्रमेण षडध्वं विलापयन्ती नामगुणरूपजातिलक्षणातीता परप्रकाशभूमिकामाढौकते यदा, तदा विकाशदशां गता परिणता । उक्तं च—

"संकोचः परमा शक्तिर्विकासः परमः शिवः" इति ।

---

१. ज्ञान–ब. सख. । २. तस्यां–वाक. ख. ग. से. ब. अ. । ३. प्रकृत्यहङ्कार–ख. ङ. । ४. वाय्वग्नि–ख. ङ. । ५. 'भाव' नास्ति–छ. । ६. 'संभेदन' नास्ति–छ. ७. 'परमप्रकाशभूमिका' नास्ति–छ. ।

त्मना वर्तते कार्यरूपः प्रपञ्च इति । **अस्यामिति । अस्यां** विमर्शाख्यायां शक्तौ । **परिणतायां** विकासभावमापन्नायाम् । **परो**[1] विमर्शपदवीव्यतिरिक्तोऽ-[2]विमृष्टरूपः । अयं भावः—विमर्शाख्यायामस्यां शक्तौ[3] षडध्वस्फारमयषट्-त्रिंशत्तत्त्वगर्भमहाहन्तापरामर्शमहाविभूतिरूप[4]प्रपञ्चात्मना[5] महाविकासभाव-मापन्नायामेतत्स्थितिव्यतिरिक्तः कश्चिदस्तीति वादो[6]ऽयमनुपपन्न इति । अय-मर्थस्तुना द्योत्यते । [7]किञ्चावभासस्य शिवस्य विमर्श एव स्वभावः । तदुक्तं **महागुरुभिः**—

> स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
> [8]प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ।। इति ।। ५ ।।
> ( ई० प्र० १।५।११ )

---

न कश्चित् पर इत्यादेरयं भावः—तदेवंलक्षणविमर्शशक्त्यात्मक एव परमेश्वरो न कदाचिदपि शक्तिस्वरूपं व्यभिचरति । यदि व्यभिचरतीत्युच्यते, तर्हि न स परमेश्वरः, जडत्वापातात् । तस्माच्छक्त्यात्मक एव परमेश्वरो नान्य इति सिद्धम् । तदुक्तम्—

> [1]"शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः" ( स० म० ) इति ।

अन्यच्च—

> शक्तिश्च शक्तिमद्रूपाद्व्यतिरेकं न वाञ्छति ।
> तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव ।। ( बो० प० ३ ) इति ।। ५ ।।

**पर** ( इत्यादेः ) अयं भावः—विमर्शश[9]क्त्यात्मक एव परमेश्वरो न कदाचिदपि पदार्थात्मतां व्यभिचरति । [2]फलभेदारोपितभेदः पदार्थात्मा शक्तिरिति प्रसिद्धः । यदस्या व्यभिचरति निस्सारो न परमेश्वरः, जडत्वापातात् । तस्माच्छक्त्यात्मक एव परमेश्वरो नान्य इति प्रसिद्धम् । तदुक्तम्—

> "शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः" ( स० म० ) इति ।।५।।

---

१. परः शिवो–घ. । २. क्तो वि ग., क्तो विप्रकर्ष–ख. ङ. । ३. 'शक्तौ' नास्ति–ख. ग. ङ. । ४. 'रूप' नास्ति–घ. । ५. 'भाव' नास्ति–ख. ग. ङ. । ६. दोऽप्यनु–ख. ग. ङ. । ७. 'किञ्चा....इति' नास्ति–ख. ङ. । ८. प्रकाशाख्योऽपरः कोऽपि–ग. । ९. भारती–ख. ङ., जारः–ज. ।

1. "श्रीसर्वमङ्गलायामपि—शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते । शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ॥" ( पृ. ८९ ) इति शिवसूत्रविमर्शिन्याम् ।
2. "यदाहुः—फलभेदारोपितभेदः पदार्थात्मा शक्तिः" ( म. प., पृ. ७४ ) इति ।

**परो[1] हि शक्तिरहितः शक्तः कर्तुं न किञ्चन ।**
**शक्तस्तु परमेशानि शक्त्या युक्तो यदा भवेत् ।। ६ ।।**

---

शक्तिरहितः परोऽस्तीत्यस्मिन् पक्षे दूषणमाह—**परो** हीति । **परः** परमेशः । हिर्हेतौ । **शक्तिरहितः** शक्त्या वैभवेन रहितः । **शक्तः कर्तुं न किञ्चने**त्यस्यायमर्थः[2]—सृष्टयादिषु कर्मसु मध्ये न किञ्चिदपि कर्म सम्पादयितुं शक्नोति, असमर्थत्वादिति । शक्तिवैधुर्यपक्षे त्वकर्तृतामुक्त्वा शक्तिमत्पक्षे कर्तृतामाह[3]—**शक्तस्त्वति**[4] । **शक्त्या** विमर्शाख्यया स्वाभाविक्या संविदा, **युक्तः** संमिलितः, समरसीभूत इत्यर्थः । तदुक्तम्[5]—"शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः" ( स० म० ) इति । **पञ्चदशिकायामपि**—

> शक्तिश्च[6] शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति ।
> तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव[7] ।।(बो०प० ३) इति[8] ।

---

परो हि शक्तिरहितः शक्तः कर्तुं न किञ्चन इति । शक्त्या[9] ( अर्थः ? युक्तः ) शिवो नान्य इति प्रतिज्ञातं परमेश्वरेण । इदानीं हेतूपन्यासेन[10] तमर्थं समर्थयति । परः परमेश्वरः । शक्तिरहितः शक्त्या रहितश्चेत् । किञ्चन स्वल्पमपि । कर्तुं न शक्तः । अशक्तत्वादिति यावत् । कोऽर्थः ? शक्तिशक्तिमतोर्भेदाभ्युपगमपक्षेऽनीश्वरं जगदापद्येत, तन्नियमनसामर्थ्याभावादिति । शक्तस्तु परमेशानि शक्त्या युक्तो यदा भवेदित्यस्यायमर्थः—यदा पुनः स परमेश्वरः शक्त्यात्मको[11]ऽभ्युपगम्यते, तदाऽसौ सर्वंजगद्रचनासमर्थो भवति ।। ६ ।।

**परो हीत्यादि** शक्त्यात्मकत्वहेतूपन्यासेन **समर्थयति** । **परः** परमेश्वरः । **शक्तिरहितः** शक्तिहीनश्चेत् । **न किञ्चन** न स्वल्पमपि **कर्तुं शक्तः** । शक्तिरहितत्वादिति यावत् । शक्ति-शक्तिमतोः शक्तीश्वरयोर्भेदाभ्युपगमे जगदनीश्वरत्वमापाद्यते, तस्य नियमनसामर्थ्याभावात्[12] । **शक्तस्त्वित्यादि** । यदा शक्त्यात्मक एव शिव इत्यभ्युपगम्यते, तदा हि शक्तः सर्वजगन्निर्माणादिसमर्थो भवति ।। ६ ।।

---

१. परश्च–ब. । २. यमभिप्रायः–ख. ङ. । ३. कर्तृत्व–ख., कर्तृकता–ग. । ४. इतः परम्–'शक्तः स्थितिशक्त्या युक्तः' इत्यधिकः–ग. । ५ 'पञ्चदशिकायामपि' नास्ति–ख. घ. ङ. । ६. शक्तिस्तु–ग. । ७. दाहक–ख.ग.ङ. । ८. इति च–घ.ङ. । ९. शक्त्यर्थः–छ. । १०. नेम–छ. । ११. युक्तो–छ. । १२. समय–ङ. ।

**शक्त्या विना शिवे सूक्ष्मे नाम[1] धाम न विद्यते ।**

**ज्ञातेनापि महेशानि शर्म[2] कर्म न किञ्चन ।। ७ ।।**

**ध्यानावष्टम्भकाले तु न रतिर्न मनः[3]स्थितिः ।**

---

**शिवसूत्रेऽपि**—"स्वशक्तिप्रचयो विश्वम्"(३।३०)इति । **श्रीविज्ञानभैरवेऽपि**[4]—

शक्तिशक्तिमतोर्यस्मादभेदः[5] सर्वदा स्थितः ।

अतस्तद्धर्मधर्मित्वात् परा शक्तिः परात्मनः ।।

न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते । (१८-१९) इति च ।।६।।

शक्तिमत्परमेश[6]व्यतिरिक्तपक्षे शिवादीनामभिधानाभिधेयसिद्धिश्च न संभवतीत्याह—**शक्त्येति** । **शक्त्या विना** शक्तिसंमिलितव्यतिरेक[7]पक्षे । **शिवे** परमश्रेयोरूपिणि । **सूक्ष्मे** अतिक्रान्तचक्षुरादिसंविद्देवीप्रसरमार्गे । **नाम** शिवमहेशमहेश्वरशङ्करपरमेश्वरमहादेवमृडमहेशानेशाद्यभिधानव्यवहार इत्यर्थः ।

---

इदानीं शक्त्या रहितः शिव इत्यस्य बहुदोषदुष्टत्वं दर्शयति—शक्त्या विनेत्यादिना । शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यत इति । शक्त्या विना शक्तिरहिते विमर्शरहिते शिवे । सूक्ष्मे दुर्विज्ञेये । नाम धाम न विद्यते । नाम ईश्वरः शिव इत्यादि । धाम प्रकाशो ज्ञानम् । कोऽर्थः ? शक्तिरहितः शिव इत्यस्मिन् पक्षे शिव ईश्वर इत्यादिनामभि[8]रनिर्देश्यो भवेत् । तथा शक्तिरहितः शिव इत्यभ्युपगम[9]पक्षेऽप्रकाशात्मत्वेन[10] शिवस्य जडत्वमापद्येत । तस्मादुभयदोषं परिहर्तुमिच्छता महाविमर्शपरः शक्त्यात्मकः परम-

**शक्त्या विनेत्यादि** । अधुना शक्तिराहित्ये सत्यस्य बहुदोषदुष्टत्वं दर्शयति-**शक्त्या विना** । शक्तिर्विमर्शस्वातन्त्र्यम्, तद्रहिते **शिवे** । **सूक्ष्मे** दुर्विज्ञेये शून्ये । **नाम धाम न विद्यते** । शिवः शङ्करः स्थाणुरीश्वरः स्रष्टेत्यादिभिर्नामभिरनिर्देश्यो भवेत्[11] । धाम[12] प्रकाशो बोधो ज्ञानमिति परस्परपर्याया एकार्थाः । तथापि शक्तिपर्यायविमर्शराहित्ये प्रकाशस्य प्रत्यवमर्शकाभावादप्रकाशात्मकत्वेन शिवस्यान्धतमस्त्वापत्तिः । तदुक्तम्—"वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिका ।।" ( वा० प० १।१२४ ) इति । तस्माद्

---

१. धाम नाम–सख. । २. कर्म शर्म–वाक. ख. ग. । ३. मतिः–वाक.ख.ब. । इतोऽग्रे—"न शिवः शक्तिरहितो न शक्तिः शिववर्जिता । उभौ वलितसंयोगौ मूर्त्येका परमेश्वरि ।।" इत्येषोऽधिकः श्लोको दृश्यते–सख. । ४. पुनरन्यत्र–ख. ङ. । ५. र्यद्वदभेदः–ग. । ६. मेश्वर–घ. । ७. रेकत्व–ग. । ८. नामनिर्देशो न–छ. । ९. गमन–छ. । १०. श्यत्वेन–ग., शत्वेन–छ. । ११. भवति–ङ. । १२. नाम–ख. ।

धाम स्थानप्रकाशानुभवोन्मेषोद्यन्तृतादिसिद्धिरित्यर्थः[1]। परिस्फुरत्तात्म[2] शाक्तं तेज इति यावत्। किञ्च, एवमयमित्येवंरूपेण कश्चिद् वस्तुविशेषो ज्ञातो[3] भवति। स त्वस्य[4] स्वभावः। स तद्विशिष्टः सदा भवति। सैव शक्तिरिति वयं मन्यामहे। तदभावे तस्य ज्ञातत्वं न संभवति[5]। तत् तिष्ठतु। ज्ञातत्व-

---

प्रकाशः शिव इत्यवश्यमभ्युपगन्तव्यम्। अन्यथा नास्तिकाग्रे परब्रह्मवादिपक्षव[6]न्निरीश्वरं जगदापद्येत। ज्ञातेनापि महेशानि कर्म शर्म न किञ्चनेति। ज्ञातेनापि। कथञ्चिज्ज्ञातेनापि। कर्म शर्म न किञ्चन स्वल्पमपि न संभवतीत्यर्थः। अयं भावः—शक्तिरहिते शिवे ज्ञातेऽपि न कश्चित् पुरुषार्थो लभ्यते। तथाहि—शक्तिरहितत्वान्न कर्मवान् शिवः। कर्मेत्युद्भवस्थितिसंहारतिरोभावानुग्रहकरणम्। शर्म प्रकाशविमर्शात्मक-

दोषद्वयविनिर्मुक्तो महाविमर्शात्मकः परप्रकाशः शिव इत्यर्थः। ज्ञानेनापीति। कथञ्चिदाभासते ज्ञाना[7]दिति। तेनार्थक्रियाकारिशक्तिरहितेन शिवेनास्य ज्ञातुः शर्म कर्म न किञ्चन। कोऽर्थः? निःश्रेयसपदप्राप्तियोग्यतामाविर्भावयन्त्यः प्रवृत्तयः कर्म। तदुद्दीपिनी मनोनिर्वृतिरिति शर्म[8]। तदुभयसङ्कल्पोऽपि शक्तिशून्यवेत्तुः[9] सर्वथा नैव संभवति। उक्तं च—"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" (श्लो० वा०, पृ० ६५३) इति। शक्तिराहित्ये ज्ञातादपि

---

१. 'इत्यर्थः' नास्ति—घ.। २. 'परि····यावत्' नास्ति—ख. ङ.। ३. विज्ञातो—ग.। ४. 'स····भवति' नास्ति—ख. ङ.। ५. इतः परम्—"ननु किमिदं शक्तिस्वरूपम्? किं चैतन्यमात्रम्, किं वा चैतन्यविषयत्वम्, किं वा बुद्ध्याद्यन्यतमत्वम्, उत तदितरत्वम्, किं वा सामर्थ्यमात्रमिति? नाद्यः सद्यो विकल्पोऽवकल्पते, चितः केनचन पदार्थे(न) संमिश्रितत्वस्य मिश्रैरनाश्रितत्वात्। (न द्वितीयः), चैत्यत्वे नित्यपिपासा सत्या नित्यतया कर्तव्येतरतयातिमद्वार्तापदं परं पदमिति स्यात् (?)। नापि तृतीयः कृतीन्द्रमतीड्यः, प्राचीनकल्पितप्रापितदोषस्य समुन्मेषात्, बुद्धेरपि बोधविषयतया तद्वियुक्तेरप्ययुक्तत्वात्। तुरीयेऽपि सूरीन्द्रोरीकृता कृशकृतान्तता न सिद्धयति, बोधबोध्यत्वयोरन्यतरत्वस्य वक्त(व्या?व्यत्वा)त् तत्तायां मुक्ता कृतान्तता। पञ्चमेऽपि सञ्चयतापञ्चकः, तस्य तु भावभावत्वादिति (?) एतत्सर्वमप्यर्वाचीनपर्वपर्वतनिवृत्तम्, न तु सुपर्वतानुस्यूतमतीनामपूर्वम्, परपदस्य केवलस्य वाङ्मनोऽपदतया संज्ञामात्रेण सिद्धेः, केवलायाश्रितो लक्षकत्वाद् विकल्पकल्पस्यापदत्वाच्च। उक्तं च श्रीमदुन्मत्तभैरवेण—

सर्वनामानि नित्यायाः सत्यानन्दघनात्मनः।
एकात्मनो लक्षकाणि लक्ष्या सा साक्षिणी चितिः॥ इति।

अतोऽस्मन्मतस्य सम्मतः सम्मितत्वादपि स्वीकार्यकार्यवर्याणामिति (?)।" इत्यधिकः पाठः—ग.। ६. पक्षे च निरी—घ.छ.। ७. 'ज्ञाना····कोऽर्थः?' नास्ति—ख.ङ.। ८. कर्म—ङ. ज.। ९. श्वेत्—ज.।

पक्षेऽपि[१] शिवस्य[२] प्रयोजनाभावं दर्शयति—**ज्ञातेनापीति**[३]। **ज्ञातेन** ज्ञा(त?न)-कर्मीभूतेनापि। अर्थसामर्थ्यात् कथि(त:?तेऽपि) **महेशानी**त्यामन्त्रणं शक्ति-व्याक्षिपरामर्शसूचकम्। अशक्तः शिव[४] इत्येतत्पक्षोपन्यासोऽपि[५] तद्विकासो-[६]पन्यासेनेति तात्पर्यम्। **शर्म** शिवशक्तिसामरस्यात्म परिपूर्णाहंपरामर्श-स्थितिलक्षणमकृत्रिमं सुखम्। **कर्म** [1]आभासनरक्तिविमर्शनबीजावस्थापन-तद्विलापनात्मकम्। **ध्यानेति**। **ध्यानं** समाधेरप्युपलक्षणम्। अयमर्थः—अशक्तः शिव इत्यङ्गीकृतौ ध्यानसमाधानवेलायां[७] महानन्दोदधिनिमग्नानां[८]

शक्तिशिवसामरस्यपराहंभावानन्दात्मना स्थितिः। तदुभयमपि शक्त्या विना शिवे[९] न संभवतीत्यर्थः। अतः शक्त्यात्मक एव शिवः। शक्तिरपि शिवात्मकस्वभावैवेति[१०] सिद्धम्। ध्यानावष्टम्भकाले तु न रतिर्न मनःस्थितिरिति। अस्यार्थः[११]—ध्यानकालेऽपि शक्त्यभावादुभयं[१२] न संभाव्यते। अथवा संकुचितसमस्तरूपायाः परमानन्दप्रकाशलक्षण-परमशिवसामरस्यमुपनीताया परविकासदशामापन्नायाः परायाः शक्तेरनुसन्धान-वेलायां न रतिः। स्वरसपरमानन्दविभवव्यतिरिक्ततुच्छबुद्बुदप्रायविषयाभिलाषो रतिः। साऽस्मिन्न संभवति[१३]। न मनःस्थितिरिति। अस्य समस्तदुःखहेतुसंकल्पविकल्पा-

तस्माद् ग्रहीतुमसमर्थत्वान्न कस्यापि पुरुषार्थलाभ इत्यर्थः। न **किञ्चन**। अशक्त्यात्मकः शिवोऽप्य-कर्मशर्मवान्। पञ्चकृत्यकरणं **कर्म**। प्रकाशविमर्शात्मकशिवशक्तिसामरस्यपराहंभावानन्दा-त्मनाऽवस्थितिः **शर्म**। तदुभयमपि शक्त्या विना निस्सारतया शिवस्यापि नैव संभवतीति। अतः शक्त्यात्मक एव शिवः, शक्तिरपि शिवात्मकस्वभावैवेति सिद्धम्। "शक्तिश्च शक्तिमद्रूपा-द्व्यतिरेकं न वाञ्छति। तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव॥" (बो॰ प॰ ३) इति। **ध्यानावष्टम्भेति**। संकुचितविश्वरूपायाः परमानन्दप्रकाशलक्षणपरमशिवसामरस्यमुन्नीतायाः परविकासदशामापन्नायाः[१४] परायाः शक्तेरनुसन्धानवेलायां **न रतिः**, स्वरसपरमा-

१. 'अपि' नास्ति—ख. ङ.। २. परशिवस्य—ख. ङ.। ३. 'ज्ञातेनापीति' नास्ति—ख. ङ.। ४. जीव—घ.। ५. सेऽपि—ग.। ६. कासेनेति—ख. ङ.। ७. समाधि—ख. ङ.। ८. 'नि' नास्ति—ख. ङ.। ९. 'शिवे' नास्ति—छ.। १०. भावा चेति—छ.। ११. अस्यायमर्थः—छ.। १२. भयमपि—छ.। १३. 'तदिदानीं' इत्यधिकं—क. छ.। १४. शायामापन्नायां—ङ.।

1. "आभासन-रक्ति-विमर्शन-बीजावस्थापन-विलापनतस्तानि" (११) इति प्रत्यभिज्ञाहृदयसूत्रमत्र स्मरणीयम्।

**प्रविश्य परमार्गान्तः[1] सूक्ष्माकारस्वरूपिणी[2] ।। ८ ।।**
**कवलीकृतनिश्शेषा[3] बीजाङ्कुरतया[4] स्थिता ।**

महायोगिनां विश्वैकात्म्यात्मशिवशक्तिसामरस्यमहाह्लदरमणं[5] तत्र मनसः स्थिरीकरणं च न भवतीति ।। ७–८ ।।

एवं प्रसङ्गागतं[6] शक्तिमच्छिवपक्षोपन्यासं[7] निगमय्य प्रकृतामेव त्रिपुराशक्तिमन्तःसौषुम्नमार्गानुप्रवेशमुखेन पुनरपि प्रपञ्चयति—**प्रविश्येत्यादि** । **परमार्गान्तः परस्य** शिवस्य प्रापकसुषुम्नामार्गान्तः । [1]न त्विन्द्रियप्रसरेदन्ता-[8]स्पदमनसोऽपि परमशक्तिशिवसामरस्यानुसन्धानवेलायां न पृथगवस्थानमिति यावत् । एतदेव महाज्ञानशब्देनोक्तमिति भावः ॥ ७-८ ॥

प्रविश्य परमार्गं तु सूक्ष्माकारस्वरूपिणो । कवलीकृतनिश्शेषबीजाद्याङ्कुरतां गतेत्यस्य व्याख्या—प्रविश्य परमार्गमिति[9] पञ्चशक्तिरूपमयनात्मकं[10] संकोचरूपं सृष्टिमार्गं प्रविश्य सूक्ष्माकारस्वरूपिणी विमर्शशक्तिरिति भावः । तदुक्तं संकेतपद्धत्याम्—

अनिकेता (त्र?ख्य) चिद्व्योम्नः[11] सृजन्ती(ति?) पञ्च(क?कं) स्वयम् ।
शक्तिस्तुर्यात्मभेदेन[12] लयमेत्यनिकेतने ॥ इति ।

कवलीकृतानि ग्रासीकृतानि निश्शेषबीजानि वस्तुतत्त्वरूपाणि येन संभव(ति?न्ति), कवलीकृतनिश्शेषबीजस्य परमबिन्दुरूपस्य शिवस्य आद्याङ्कुरतां प्रथमाङ्कुर-नन्दविभवव्यतिरिक्तकर्मप्रायविषयाभिलाषो **रतिः**, साऽस्मिन्न भवति । **न मनःस्थिति**रिति । समस्तदुःखसङ्कल्पविकल्पस्पन्दस्य मनसोऽपि परमशिवशक्तिसामरस्यानुभवस्थाय्यावरणेन[13] न पृथगवस्थानम् । एतावद् विज्ञानशब्देनोक्तमिति भावः ॥ ७-८ ॥

**प्रविश्य परमार्गं तु सूक्ष्माकारस्वरूपिणीति** । इतः पूर्वं चतुर्वह्निरूपप्राणापरपर्यायोऽप्यूर्ध्वगम( त्वाहो?वाहो) विकासात्मकः प्रकृतस्तस्माद्भिन्नः **परमार्गः** । पञ्चशक्तिस्वरूपा-[14]

१. गं तु–अ. ब. सक ख. । २. काश–सख. । ३. शेष–वाक. ख. ग. से. । ४. द्याङ्कुरतां गता–अ., अङ्कुरतां गता–वाक. ख. सक. । ५. महाभ्रमणं–ख. ङ., महाह्लदक्षण–घ. । ६. प्रसङ्गतः–ख. ङ. । ७. वोपन्यासं–ख. । ८. तद्वदिन्द्रियप्रसरेदन्ताभूमिः–ख. ङ., न त्विन्द्रियप्रसरे तदन्ता भूमिः–ग., तत्त्विन्द्रियप्रसरेऽन्तभूमि–घ. । ९. इतः परम्—"प्रकृति प्रकृते संहारक्रमश्चतुर्वह्निरूपः प्राणापरपर्यायवायोरूर्ध्ववायोर्विकासः । अस्मात् परमार्ग" इत्यधिकः पाठः–क. । १०. मया–क. ग. । ११. तविद्योम्नः–क. ग., विद्योसः–छ. । १२. शक्तिसूर्या–छ. । १३. भाव–ख. ङ. । १४. स्वरूपो–ख. ङ. ।

1. मातृकात्रयपाठाधारेण परिकल्पित एष पाठो मूले स्थापितः ।

**वामा[१] शिवा[२] ततो ज्येष्ठा शृङ्गाटाकारतां[३] गता ॥९॥**
**रौद्री[४] तु परमेशानि जगद्ग्रसन[५]रूपिणी ।**

भू(मिः?मौ) । **सूक्ष्माकारस्वरूपिणी** स्वरूपज्योतीरूपा विभागात्मगुणीभूत-प्राणपश्यन्त्या[६]कारस्वरूपिणी । **कवलीकृतनिश्शेषा** यया निश्शेषं विषयजातं कवलीकृतं ग्रासीकृतं[७] सा कवलीकृतनिश्शेषा । **बीजाङ्कुरतया स्थिता । बीजं** कारणम्, **अङ्कुरं** कार्यम्, एवमवस्थाद्वयेन शब्दितेत्यर्थः । तदुक्तं **श्रीरहस्य-गुरुप्रवरेण—**

अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।
कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥ (स्प०का० १४) इति ॥८-९॥

कुलस्थानगतमूलाधारादकुलस्थानगतपरमशिवं प्रत्युल्लसन्तीयं महा-शक्तिः परावागात्मना विश्ववैचित्र्यमवविभासयिषुरेवंविधां संज्ञां लभत

---

भावं सा प्रकृता विमर्शशक्तिर्यतः प्राप्नोतीति यावत् । कोऽभिप्रायः ? [1]वामादिपञ्चक-मिति इच्छादिपञ्चकं ग्रसित्वा समरसभावेन स्थितो यो बिन्दुरनामरूपात्मा स बीजम्, तदन्तर्विमर्शरूपेण स्थिता या शक्तिः, सा स्वेच्छावशाद् बीजोच्छूनदशायां निर्गता, तस्मात् सा मृणालतन्तुरूपा प्रथमरेखा, प्रथमाङ्कुर इत्यर्थः । बीजाङ्कुरतया स्थितेति पाठे सर्वमेतत् समानम् ॥ ८-९ ॥

वामा शिवा तथा ज्येष्ठा जगदङ्कुरतां गता । रौद्री तु परमेशानि जगद्ग्रसनरूपिणीत्ये-तस्य (व्याख्या)—वामा शिवा । बीजस्य प्रथमाङ्कुररूपेण स्थिता या शक्तिर्विमर्शशक्तिः, पन्नात्मनः संकोचभावेनाधोमुखागमवाहस्तत्त्ववर्णादिषडध्वसृष्टिमार्गः । तत्र समस्ता(यो?ध्वो)प-संहारेण स्वस्वरूपपरमविकासमात्मसात्कुर्वती निरतिशयाखण्डपरमप्रकाशविमर्शानन्दपरोल्ला-सैकरसा शैवी शक्तिर्या सदोदिता, तया निजेच्छया क्वचित् समुन्मेषसमये स्वतः स्फुरन्त्याऽऽद्य-प्रभया बालार्ककोटिभागैकभागवत्सूक्ष्म(त?)या[८] मृणालैकतन्तुनिभया गर्भीकृतसमस्तसंसार-मपि तदुत्तरकारितत्त्वतेजोऽवसितं बिन्दुरूपं शिवप्रकाशसूक्ष्ममकाराख्यं बीजमनुबन्धन्त्याऽर्धचन्द्रा-कारया [2]वक्ष्यमाणवामादिशक्त्याधारभूतया कन्दाख्याम्बिकाशक्त्या भूयते सूक्ष्माकारस्वरूपिणी-त्युच्यते । **कवलीकृतनिश्शेषबीजाद्यङ्कुरतां गतेति** ॥ ८-९ ॥

---

१. शिवा—वाग. से. सक. ख. । २. तथा—अ. से. सक. ख. । ३. जगदङ्कुरतां—अ. । ४. रौद्रिका—सख. । ५. भक्षण—सख. । ६. प्राणवन्त्या—घ. । ७. 'ग्रासीकृतं' नास्ति—ख. ङ. । ८. सूक्ष्मा तया—ज. ।

1. वामादिपञ्चकमिच्छादिपञ्चकं चात्रैव ३५ तमे पृष्ठे निरूपितं द्रष्टव्यम् ।
2. वामाद्याः शक्तयोऽनुपदमेवोक्ताः ।

इत्याह—**वामे**त्यादि[1]। **वामा** तत्त्वानि वमतीति। अत्राभियुक्तवचनम्—

वान्तं ययाऽनिशं सर्वं महदादिप्रभेदकम्।
कटाहादिशिवान्तं यत्तद्ग्रासादीश्वरीं[२] नुमः॥ इति।

अथवा संसारप्रत्यनीकभूता शक्तिः[1]। **शिखा** तेजोरूपिणी, विश्वग्रसनशीला संविदित्यर्थः। **ज्येष्ठा** विश्वोदय[३]प्रसरभूमिः। **शृङ्गाटाकारतां गते**त्यस्यायमर्थः—इयमेव प्रकृता[४] चिच्छक्तिः स्थितिसंहृतिसृष्टिकरी [2]त्रिकोणात्मतां

---

साग्रभागेन कुटिलीभूय बिन्दुदक्षिणेन ईशानान्तं गता सा रेखा वामाशक्तिरूपा। तथा ज्येष्ठेति। बिन्द्वीशानगता रेखा पुनः कुटिलीभूय बिन्दुपश्चिममाग्नेयं गता ज्येष्ठा। पुनर्वामेन बिन्द्वग्रप्रथमाङ्कुरमिलिता यदा तदा रौद्रीशक्तिरूपा भवतीत्यर्थः। इत्थं गता सा विमर्शशक्तिः प्रथमाङ्कुररूपैव शृङ्गाटाकारा भवति। [2]शृङ्गाटं त्रिकोणं भवति।

तदनु प्रागुक्ता स्वान्तःकृतवामेच्छादित्रिशक्ति[५]तत्त्वमन्त्रबीजमुख्यसर्वसूक्ष्मभाव[६]समरसीभावेन प्रकाशमानादनामरूपादकारस्य[७] सूक्ष्माकाराद् बिन्दुरूपा निजेच्छासमासादितसमुन्मेषादुच्छूनदशायां तदन्तर्व्याप्ता विमर्शशक्तिसमबिन्दुस्फुटनमग्रभागस्थं परमागं सृष्टिमार्गद्वारनिर्गमनकाले प्रविश्य कुटिलाग्रतेजोंऽशेन यदाऽङ्कुरिता तदा वामा नाम शिखा। **तथा ज्येष्ठे**त्यादि।

---

१. इतः परम्—"वामा संसारिणां विमोहिनी शक्तिः। शिखा प्रकाशात्मिका संवित्। ज्येष्ठा सुप्रबुद्धानां शिवमयी शक्तिः। शृङ्गाटाकारतां गता। इयमेव प्रकृता महती चिच्छक्तिः स्थितिसं(ग?हृ)तिसृष्टिकरी त्रिकोणात्मतां गता रौद्री बुभुत्सूनां द्रावयित्री रौद्री शक्तिः। तदुक्तं श्रीतन्त्रालोके—

वामा संसारिणामीशा प्रभुशक्तिर्विधायिनी।
ज्येष्ठा तु सुप्रबुद्धानां बुभुत्सूनां च रौद्रिका॥
वामा संसारवमना ज्येष्ठा शिवमयी यतः।
द्रावयित्री रुजां रौद्री रोद्ध्री चाखिलकर्मणाम्॥ (६।५६–५७) इति।

इत्यधिकः पाठः—ग.। २. दीश्वरं—ख. घ. ङ.। ३. प्रसव—ख. ङ.। ४. प्रकृता प्रकृतिर्महती—ग., प्रकृता प्रकृतौ महती—घ.। ५. 'त्रिशक्ति' नास्ति—ङ.। ६. भाग—ज.। ७. पादरस्य—ख. ङ.।

1. वामेति पूरणीयम्।
2. "यत्तु शृङ्गाटपदेन त्रिकोणं व्यपदिश्यते तत्राप्येषैव व्युत्पत्तिः" (से. पृ. १३९)।

गतेति । **रौद्री**त्यादिकः प्रकृताया एव शक्तेर्विशेषद्योतकः । **रौद्री** । जगतश्चित्पदे निरोधनाद् द्रावणाद्रुद्रः, तद्विभूतिमयी रौद्री चितिशक्तिः । **परेशानी**त्यामन्त्रणं महाविभूतिमयत्वं[1] संविदः स्वानुभवसिद्धमिति[2] श्रोतृजनं प्रतिबोधयति । **जगद्ग्रसनरूपिणी** । सृष्टयादिक्रमात्मकमपि जगद् ग्रसित्वा सर्वं स्वात्मतया आद्या शक्तिः[3] प्रकाशयतीति भावः ।। ९-१० ।।

---

एतदभिप्रेतं शास्त्रादौ "यदेकादशमाधारम्" (१।६) इत्यत्र सूचितम् । इहानुक्तमिहापेक्षितं [1]श्रीदीपकाचार्येण श्रीत्रिपुरसुन्दरीदण्डके सूचितम्—"झटिति ( यदि ) सर्वंशून्यान्तर्भूमौ निजेच्छासमुन्मेषसमयं समासाद्य बालाग्रकोट्यंशरूपा विगर्भीकृताशेषसंसारबीजाऽनुबध्नासि कन्दं त(था?दा)[4] त्वमम्बिका गीयसे । तदनु परिजनित[5]कुटिलाग्रतेजोऽङ्कुरा जननि वामेति संस्तूयसे । (ततः) बद्धसुस्पष्टरेखा शिखा ज्येष्ठेति संभाव्यसे । सैव[6] शृङ्गाटाकारतामागता तदा[7] रौद्रीति विख्याप्यसे ।।" ( २४ )[8] (इति) । अस्यार्थः—सर्वं समस्तं वर्णतत्त्वोपसंहारेण झटिति सर्वंशून्यविकासबीजाभावं गता विमर्शरूपिणी शक्तिर्निजेच्छावशाद् बीजसमुच्छूनदशायां बालाग्रभागस्य कोटिभागीकृतस्य एकभागसमानसूक्ष्मरूपाऽन्तःकृतसमस्तवर्णतत्त्वस्वरूपिणी उपरि समुद्धूयमानशृङ्गाटरूपत्रिशक्तीनामादौ प्रमासनतया[9] त्वधोमुखार्धचन्द्राकारेण[10] स्थिता अम्बिकाशक्तिरूपा कन्दमिति गीयसे । तदनु परिजनितेति । तदनु अर्धचन्द्रेति स्थितताया बिन्दुरू(पी?पं) बीजम्, तस्मात् परिजनितप्रथमाङ्कुररूपं रेखाग्रभागे कुटिलीभूय बीजदक्षिणेनेशानपर्यन्तं व्याप्य स्थिता तेजोऽङ्कुररूपा वामेति संस्तूयसे । बद्धसुस्पष्ट-

बिन्दोर्दक्षिणभागे प्रसृतायास्तस्या वामायाः शिखरमूले[11] वक्रीभूता या तिर्यग्दीर्घा या सा ज्येष्ठा नाम । सा तु पुनर्वक्रारम्भभावेन प्रसृता प्रथमाङ्कुरमिलिता यदा स्यात् तदा **रौद्री** नाम । एवं सा विमर्शशक्तिरूपेण **शृङ्गाटाकारतां गता** । **शृङ्गाटं** त्रिकोणमित्यर्थः । एवमभिप्रेत्य "यदेकादशमाधारबीजम्" (१।६) इति सूचितम् । इह लक्ष्यमाणमेव

---

१. समयत्वं-ख. ङ. । २. स्वभावतः-ख. ङ. । ३. 'आद्या शक्तिः' नास्ति-ख. ग. ङ. । ४ तदा-त्रि. द. । ५. शिवा-छ. । ६. 'सैव' नास्ति-छ., तत्र-त्रि. द. । ७. 'तदा' नास्ति-त्रि. द. । ८. बीजभावं -क. ग. । ९. प्रेमा-छ. । १०. मूर्द्धार्द्ध-छ. । ११. रस्य मूले वशीभूता या तिर्य-ख. ङ. ।

1. "दीपकाचार्यास्तु—स्वाग्रमारभ्येशानाग्नेयान्तं प्रसृते रेखे वामाज्येष्ठे । बिन्दोः पूर्वस्यां तिर्यग्रेखा रौद्री । एतत्त्रितयसमष्टिरम्बिका शृङ्गाटाकारतां त्रिकोणाकारतां गतेति व्याचक्षते" (से. पृ. १३९) ।

**एषा[१] सा परमा शक्तिरेकैव परमेश्वरी ॥ १० ॥**

**त्रिपुरा त्रिविधा[२] देवी[३] ब्रह्मविष्ण्वीशरूपिणी ।**

**एषा सा परमा शक्तिरेकैव परमेश्वरी**त्यनेनैवंविशिष्टामसामान्यवैभवां संविदं स्वात्मतया प्रत्यभिज्ञापयति महादेशिकः शिवः । **परमा शक्तिरिति** रेखेति । तदनु भूयोऽपि कुटिलीभूय बिन्दुपश्चिमेनाग्नेयदिशं गता सुस्पष्टरेखा सा ज्येष्ठेति संगीयसे । सैव भूयोऽपि कुटिलीभूय प्रथमाङ्कुरेण मिलिता रौद्रीति विख्याप्यसे[४] । एवं त्रिशक्तिरूपेण शृङ्गाटं त्रिकोणं लिख्यत इति भावः । अतो व्यष्टि-समष्ट्यात्मना व्यवस्थितपञ्चकारणरूपबिन्दुमाविश्य गुप्तरूपेण वर्तते वर्णादिभूतो ह्यकारः परमशिवः प्रकाशस्वभाव इति भावः । तदुक्तं[५] [1]श्रीसिद्धनाथपादैः—

> अनच्कं[६] यत्परं ज्योतिः सर्वप्राणिहृदि स्थितम् ।
> इच्छा कुण्डलिनी तस्य तेजो नादसमुद्भवः ॥
> इच्छानादसमायोगाद् रौद्री शक्तिरजायत ।
> आसामाधाररूपेण चन्द्रबिम्बार्धमम्बिका[७] ॥
> क्रमात् कुलोदयो व्याप्तिः कुलौघश्चायमुच्यते । इति ।

जगद्ग्रसनरूपिणीति । इत्थमकुलशृङ्गाटाकारतां गता विमर्शशक्तिर्या समस्ताध्व[८]-प्रविलापनहेतुः परमप्रकाशभैरवाभिन्ना सा जगद्ग्रसनरूपिणी भवति । तदुक्तं श्रीमते—[2] "संवर्तामण्डलान्ते[९] क्रमपदनिहितानन्दशक्तिः सुभीमा" इति । संवर्त-योनिमण्डलं मध्यस्थलमिति यावत् ॥ ९–१० ॥

[१०]**श्रीदीपकाचार्येणा**पि स्पष्टमेव "झटिति (यत् ?)" इत्यादिग्रन्थेनायमर्थः स्तोत्रीकृतः । "अनच्कं यत्परं ज्योतिः" इत्यादि "कुलौघश्चायमुच्यते" इत्यन्तेन ग्रन्थेन [1]**श्रीकुलरत्नशास्त्रेणा**[११]-नूदितः । **जगद्ग्रसनरूपिणी**त्यादि । गर्भीकृताशेषजगद्बीजरूपिणी ॥ ९–१० ॥

---

१. एवं–वाक. ख. ब. सक. ख. । २. परमा–ब. । ३. देवि–वाग. से. ब., शक्तिः–सख. । ४. ख्याप्यसे–क. ग. । ५. एतदुक्तं–क. छ. । ६. अलक्तं–क. छ. । ७. बिन्द्वर्ध–छ. । ८. स्तौघ–छ. । ९. र्तग्निमण्डलान्ते–क. ग., संवर्ता श्रीमण्डली ते–छ. । १०. 'श्री' नास्ति–ख. । ११. रत्नकुल–ङ. ।

1. कुलरत्नशास्त्रमेतत् सिद्धनाथकृतिरित्याभ्यामुद्धरणाभ्यां ज्ञायते ।
2. कलिकातास्थ-एशियाटिकसोसाइटीसंस्थायास्तन्त्रग्रन्थविवरणसूच्यां (भा. ८, ख. १, पृ. १) कुब्जिकामतग्रन्थविवरणे तस्य मङ्गलाचरणश्लोकत्वेनोपलभ्यत एष श्लोकखण्डः । नेपाल-राजकीयवीरपुस्तकालयसूच्यामपि (भा. ४. पृ. ५८, ६०, ६२) तथैव । अत्रत्य एव पाठोऽत्र मूले स्थापितः ।

विमर्शरूपा आत्मवदेवाहमित्यवच्छिन्नत्वेन भासमाना, न त्विदन्तयेत्यर्थः। **त्रिपुरा** [1]प्राग् व्याख्याता । **त्रिविधा**[1] त्रिप्रकारा[2] । कथं त्रिपुरात्वमित्याह[3]—

एषा सा परमा शक्तिरित्यादि । इत्थमकारे बिन्दुरूपे पञ्चावयवरूपिणी स्थिता या विमर्शशक्तिः, सा[4] पुनस्तस्यैव बिन्दुरूपस्य द्वितीयाङ्कुररूपिणी विभज्यते यदा, तदा सैषा विमर्शशक्तिः स्वावयवचतुष्टयं कूर्माङ्गवत् संकुचितं कृत्वा गुप्तरूपेण ईकाराख्यं कामकलाक्षरं प्रविविक्षुः (सा ?) परमा शक्तिरेकविधैव सती बीजोच्छूनदशायां ज्ञानक्रियेच्छारूपत्रयबिन्दुरूपे वाह्यमा[5]( णा?ना ) त्रैविध्यं गता त्रिपुरा । अथवा तत्रैव परिवर्तमाना बीजस्य द्वितीयाङ्कुरभावं गता सपरार्धरूपिणी भूत्वा पुनरधोमुखी भूत्वा आभ्रूमण्डलं स्पन्दमाना[6] सा चन्द्रमण्डलं प्रविश्य सृष्टिचक्रत्रिकं प्राप्य इच्छा-शक्तिरूपिणी ( शक्ति )बीजमयी शिवतत्त्वव्यापिका ब्रह्मकारणसृष्टि[7]पालयित्री[8] स्थिता । पुनरिच्छावशात्तदधः स्पन्दमाना ह्याविश्य हृदयं सूर्यमण्डलं व्याप्य वर्त-माना क्रियाशक्तिरूपिणी कामराजबीजमयी विद्यातत्त्वव्यापिका स्थितित्रितयमण्डलं कुर्वंती[9] विष्णुकारणपालयित्री स्थिता । सैव पुनरिच्छावशान्मूलमण्डलं व्याप्य वर्तमाना संहारचक्रत्रितयमण्डलं कुर्वंती[9] ज्ञानशक्तिरूपा वाग्भव( बीजमयी आत्म-

**परमा** । सा विमर्शशक्तिरेकैव व्यष्टिसमष्ट्यात्मना पञ्चसूक्ष्म[10]भेदाभिन्नवर्णक्रमादिभूतं प्रकाशस्वभावं परशिवरूपमकाराख्यबिन्दुमाविश्य परमार्गपर्यायसृष्टिमार्गोन्मुखी भूत्वा स्वीया-वयवचतुष्टयं कूर्मवदात्मनि संकोच्य कामकलारूपमीकाराक्षरमात्मसात्कृत्य निजेच्छया ज्ञान-क्रियेच्छारूपबिन्दुत्रयात्मनापि त्रेधा विभज्य[11] मायाबीजस्य द्वितीयाङ्कुरायमाणा सपरार्धरूपिणी पुनरधोमुखी स्पन्दन्ती निजेच्छया च[12] सृष्टिचक्रमूर्तिना भ्रूबिलबिन्दुमण्डलाभिमानिनीच्छाशक्ति-बीजशिवतत्त्वराजसब्रह्मकारणसृष्टिरूपिणी पुनरधस्तादाहृतसूर्यमण्डलव्यापिनी स्थितिचक्रेणेति[13] प्रक्रियाशक्तिकामराजबीजविद्यातत्त्वसात्त्विकविष्णुकारणपालयित्री सैव पुनरामूलमधोऽ-

---

१. 'त्रिविधा त्रिप्रकारा' नास्ति—ख. ङ. । २. त्रिप्रकारत्व—ख. ङ. । ३. मित्यत आह—ख. ङ. । ४. 'सा····विमर्शशक्तिः' नास्ति—ग. । ५. बाह्यगणात्—छ. । ६. स्पर्ध—ग. । ७. 'सृष्टि' नास्ति—छ. । ८. रूपिणी—क. ग. । ९. कुर्वन्ती—छ. । १०. सूक्ष्मा—ख. ज. । ११. विभज्यमाना—ख. ङ. । १२. 'च' नास्ति—ज. । १३. चक्रनेत्रक्रिया—ख. ङ. ।

1. त्रिपुरानिर्वचनं पृ. ३३, प. ८–१२ द्रष्टव्यम् । "पुरशब्दः शरीरार्थः । त्रीणि पुराणि यस्याः सेति विग्रहः" (पृ. १४०) इति तु सेतुबन्धे ।

**ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥ ११ ॥**

**त्रैलोक्यं[1] संसृजत्[2]येषा त्रिपुरा[3] परिकीर्त्यते ।**

---

**ब्रह्मविष्णवीशरूपिणी** । शक्तित्रयावष्टम्भेन [1]ब्राह्मयाद्या[4] मातरः । **ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिकेति** । **ज्ञानशक्ति**[5]**रवभासनात्मिका** । **क्रियाशक्तिरुल्लेखनरूपा** । **इच्छाशक्ति**[6]**र्विच्छेदनावभासनस्वातन्त्र्यात्मा मायालक्षणा**

---

तत्त्वव्यापिका रुद्रकारणसंहारयित्री स्थिता । एवं शक्तित्रय )बीजत्रयगुणत्रयादिभिस्त्रिवृत्करणरचनाचतुरा[7] तथा त्रिविधा त्रिप्रकारा समस्ताध्वव्यापिनी त्रिपुरेत्युच्यत इति भावः ॥

ज्ञानशक्तिरित्यादि त्रिपुरा परिकीर्त्यत इत्यन्तस्यायं भावः—इच्छादिशक्तित्रितयस्यैव व्यापृतत्वं न चतुर्थकलायाः शान्ताख्यायाः, तस्याः कन्दरूपत्वात् । त्रिशक्तीनां बीजसाम्यमत्रैवेत्यवस्थात्रयमस्ति । तत उद्रेकावस्थायां सृष्ट्यादित्रितयकर्तृत्वं त्रिपुरामूर्तिवैचित्र्यात्, साम्यावस्थायां तिरोभावकर्तृत्वमीश्वरमूर्त्या, बीजाद्य(म?)नुग्रहकर्तृत्वं सदाशिवमूर्त्या । इत्थं कृत्वा पञ्चकर्तृत्वं शक्तीनामवस्थाभेदवशात् । उद्रेकस्त्वे[8]कैकशक्त्याधिक्यम् । तद्यथा—यदेच्छाशक्तेराधिक्यं गुणभूतत्वं क्रियाज्ञानशक्त्योस्तदा

ग्निमण्डलमाकुर्वती संहारचक्रवर्तिनी ज्ञानश[9]क्तिवाग्भवबीजात्मतत्त्वतामसरुद्रकारणसंहारिणी-त्येवं त्रिशक्तित्रिचक्रत्रिधामत्रिबीजत्रितत्त्वत्रिगुणत्रिकोणादिभेदत्रयाविर्भावेण त्रिवृत्करण[10]-रचनावैचित्रीचतुरा[11] त्रैविध्येन समस्ताध्वव्यापिनी त्रिपुरेत्युच्यते ।

**ज्ञानशक्ति**रित्यादि । अत्र संसृजतिक्रियान्तस्पष्टोपा[12](न्तश्री?त्तत्रि)शक्तिसाध्य-सृष्ट्यादिकर्मत्रयसंसर्गं त्रिजगद्विषयं **त्रिपुरा त्रिविधा** देव्येकैव करोतीत्यत इच्छादिशक्तीनां तिसृणामेव (विद्यातत्त्वं ? व्यापृतत्वं) न तु तुरीयकलायाः शान्ताख्यायाः[13], तस्या अम्बिकायाः (रूप ?) कन्द(र्प?)रूपत्वात् । अन्यच्च, तिसृणामपीच्छादिशक्तीनां बीजसाम्य(मुद्रेकमिति । अस्या ? मत्रैवेत्यवस्था)स्तिस्रो विद्यन्ते । तदिच्छाक्रियाज्ञानशक्तीनामेकैकस्यामेवोद्रे-

---

१. क्यमसृजद्यस्मात्–सख. । २. त्यस्मात्–वाक. ख. अ. । ३. तिता–वाक. ख. । ४. 'ब्राह्मयाद्या····त्मिकेति' नास्ति–ग. । ५. ब्रह्माद्यात्मता ज्ञानशक्तिः–ग. घ. । ६. 'विच्छेदनावभासनस्वातन्त्र्यात्मा' नास्ति–ख. ङ. । ७. तुरतया–क. ग. । ८. द्रुद्रेकत्वैकैक–छ. । ९. क्तीच्छा–ज. । १०. कारण–ख. ज. । ११. स्तार्थ–ख. ङ. । १२. क्रियार्थ–ख. । १३. ख्यायामस्या–ज. ।

1. ब्राह्मयाद्या ब्राह्मी-वैष्णवी-ईश्वरीति तिस्रो मातरः ।

समवायिनी शक्तिः[१]। शक्तित्रयं **श्रीमालिनीविजये** व्याख्यातम्। तदुत्तरत्र[1] वक्ष्यामः। **त्रैलोक्यं संसृजत्येषा त्रिपुरा परिकीर्त्यते**[२] इत्यस्यायमर्थः[३]—इत्थं तत्तत्क्रियावैचित्र्यविशेषेणा[४]हन्ताभिधाना चैषा[५] विमर्शाख्या शक्तिर्ग्राहक-

ब्रह्ममूर्तिमास्थायाध्वभेदं सृजति सा विमर्शरूपिणी शक्तिः। यदा तु क्रियाशक्तेराधिक्यं ज्ञानेच्छाशक्त्योर्गुणभूतत्वं तदा विष्णुमूर्तिमास्थायाध्वभेदं पालयति। यदा पुनर्ज्ञानशक्तेराधिक्यं क्रियेच्छाशक्त्योर्गुणभूतत्वं तदा रुद्रमूर्तिमास्थायाध्वभेदं प्रविलापयति। अध्वरूपाणि षट्प्रकाराणि वर्णपदमन्त्रकलातत्त्वभुवनाख्यानि। तानि च शब्दार्थात्मकानि। वर्णपदमन्त्राणि शब्दात्मकानि। कलातत्त्वभुवनान्यर्थात्मकानि। तानि च कार्यकारणभावेन स्थितानि। तत्र स्थूलं कार्यं सूक्ष्मं कारणम्। वर्णान्युक्तान्येव सप्तषष्टिप्रकाराणि। पदानि च वर्णसंयोगजान्येकाशीत्यादीनि[६]। मन्त्राणि च पदजानि द्वादशश्लोक्यादि। [2]शुद्धपञ्चकम्, मायाकालकलानियतिविद्यारागपुरुषाख्यानि शुद्धाशुद्धसप्तकम्, प्रकृतिगर्वबुद्धिमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायुगुह्य-

काख्यमाधिक्यं तदुद्रिक्तशक्तिव्यतिरिक्तयोः शक्त्योर्द्वयोरप्यतुल्यभावं[७] च भजतां ब्रह्मविष्णुरुद्राणां तथा[८] तेषां साम्यबीजदशाजुषोरीश्वरसदाशिवयोश्च मूर्तिमती सा विमर्शशक्तिरेकैव स्वेच्छया षडध्वनां सृष्टिस्थितिलय(वि?तिरो)धानानुग्रहैः पञ्चकृत्यैः क्रीडति। तेऽप्यध्वानः षट्त्रिंशत्तत्त्वानि तथा भुवनानि चतुर्विंशत्यधिके द्वे शते। तथा च कला अपि तत्तद्भुवनान्तःस्फुरन्त्यस्तथाख्यास्तावत्य एवेति रूपाध्वानस्त्रयः। अथ वर्णाः पञ्चाशत्। अनन्तपदव्यापकानि सुप्तिङन्तौपाधिसंकोचितानि पदान्येकाशीतिरेव। तथा[८] गर्भीकृतासंख्यातमन्त्रवत् सप्तकोटिमहामन्त्रा व्यापकाः साङ्गब्रह्मशिवाख्या[९] मन्त्रा एकादशेति नामाध्वानोऽपि त्रयः। तत्र भुवना(ध्वनि स ? ध्वनः) तत्त्वाध्वनि, (स च ? तस्य)[१०] वर्णाध्वनीत्युत्तरोत्तरव्यापकाध्वनि पूर्वपूर्वव्याप्याध्वान्तर्भावो ग्रन्थविस्तारभीत्याऽत्रानुक्तोऽपि गुरुतः शास्त्रतश्च यथावद्विज्ञेयः। तस्मात्

१. 'शक्तिः' नास्ति–ख. ङ.। २. इति–घ.। ३. मभिप्रायः–ख. ङ.। ४. विषयग्रहणग्राह्यात्मकत्रैलोक्यं–ख. ङ.। ५. धानैषा–ग.। ६. शीतिपदानि–छ.। ७. रन्य–ख. ज.। ८. तदा–ङ.। ९. ख्यम–ङ.। १०. इतः परम्—'तद्वन्मन्त्राध्वनि पदाध्वनि' इत्यधिकः पाठः–ज.।

1, उत्तरत्र ४।२४ श्लोकस्थदीपरूपिणीमितिपदस्य व्याख्यानावसरे।

2. अत्र कलाध्वनो निरूपणं न कृतम्, अनुपदमेव वर्णेषु कलानां प्रविलापनं तु दृश्यते। शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या चेति शुद्धानां तत्त्वानां पञ्चकम्। शुद्धाशुद्धानां तत्त्वानां

ग्रहणग्राह्यात्म[१] त्रैलोक्यं संसृजतीति यस्मात्, तस्मात्[२] त्रिपुरेति कीर्त्यत इति ॥ १०-१२ ॥

---

शब्दस्पर्शरूपरसगन्धाकाशवायुज्वलनसलिलधराख्यान्यशुद्धरूपाणि चतुर्विंशतिसंख्यानि । भुवनानि [1]चतुर्दशादिशतान्तानि चतुर्विंशतिः । तत्र कार्यरूपं मन्त्रभुवनद्वयं तत्कारणभूतेन पदतत्त्वद्वयेन प्रविलापयेत्[३] । पदतत्त्वद्वयमपि स्वकारणवर्ण(तत्त्वा ? कला)त्मनि संहरेत् । तौ च कलावर्णात्मानौ वाच्यवाचकभावेन स्थिताविति कृत्वा वाच्यं कलाध्वानं वाचके वर्णाध्वनि कारणे संहरेत् । तत्र क्षादिटान्तात्मनि चतुर्विंश(तिषु?-तौ) निवृत्तिकलामन्तर्भावयेत् । ञादिघान्तसप्तके(षु ?) प्रतिष्ठाम् । गादिका(न्त?-न्तेषु) त्रिषु विद्याम् । दीर्घस्वराष्टकेषु शान्तिम् । [2]ह्रस्वा(द्य?)ष्टकेषु शान्त्यतीतकलामन्तर्भावयेत् । एवं वर्णा(न्तमध्व?ध्वनि) पञ्चकलाध्व(नि?नः) संहारप्रकारः । एवं पञ्चाध्वनामपि व्याप्यव्यापकभावेन स्थितानां वर्णक्रमान्तर्गतत्वमस्तीति वर्णक्रमस्व(स्व?स्वा)न्तराध्वपरमकारणयोस्तत्त्ववर्णाध्वनोः "आक्षकष्ठाप्रधाना[४] मालाशार्णः[५] सदाशिवः" इत्युक्तयुक्त्या (कष्ठा?क्षिति[६])तत्त्व(क्रम?क्ष)वर्णादिप्रधानतत्त्व(ट)वर्णान्तं चतुर्विंशते-(रूर्ध्व?रशुद्ध)तत्त्वानां वर्णानाम्, तथा[७] पुरुषतत्त्व(ज्ञ?ञ)वर्णादिमायादितत्त्व(स?घ)-वर्णान्तं सप्तानां (शुद्धा)शुद्धतत्त्वानाम्, तथा शुद्धविद्यातत्त्व(भ?ग)वर्णादिसदाशिवतत्त्व-(ग?क)वर्णान्तं त्रयाणां[८] शुद्धतत्त्वानां वर्णानाम्, तथा शक्तितत्त्वस्य शुद्धस्यैकस्य विसर्जनीयादाकारान्तस्य दीर्घाष्टकस्य, तथा[९] शिवतत्त्वस्य शुद्धस्यैकस्यानुस्वाराद्यकारान्तस्य ह्रस्वाष्टकस्य चेत्येवं वाच्यवाचकप्रकाशसामरस्यं वह्निदाहिकैक्यमिव स्वातन्त्र्येण प्रतिपन्नं प्रतिपद्य सर्वाध्वभिः सामान्यरूपं तदा सर्वप्रकाशैक्यप्रत्यवमर्शकवर्णाध्वनां वैशेषिकं च पञ्चकलाना-मैकात्म्यमवगन्तव्यम्[१०] । यथा[११] कटपयादिभिः[१२] स्वशून्यनन्तैः(?) संख्यावर्णैर्बद्धवाक्यैः श्लोक्यते—

---

१. ग्राह्यात्मा—ग. । २. 'तस्मात्' नास्ति-ख. ग. ङ. । ३. प्रविलाप्य-छ. । ४. कष्टा—ङ. । ५. मालाका—ख., मालोका—ङ । ६. कष्ठाकष्ठा—ख. ङ. । ७. तदा—ख. । ८. त्रयाणां त्रयाणां—ख. ङ. । ९. सदा—ख. । १०. मेकैकात्म्य—ङ. । ११. यदा—ख. । १२. दिभिश्च शून्यविनन्तैः—ज. ।

सप्तकम् । अशुद्धरूपाणि च चतुर्विंशतितत्त्वानीति संकलनया षट्त्रिंशत्तत्त्वानि । प्रकृति-बुद्धिगर्व····इति तु सांख्यदर्शनसंमतः क्रमः, त्रिपुरादर्शने तु नादृतः सः ।

1. 'भुवनानि चतुर्विंशत्यधिके द्वे शते' इति मद्रपुरीमातृकासु स्थितः पाठः शोभनः शुद्धश्च ।

2. ह्रस्वस्वराष्टकेष्वित्यर्थः ।

रूपिणी चिच्छक्तिरपि वैखर्यादित्रिभेदेन त्रितत्त्वगामिनीति सैव धामसंवित्स्वरूपेणैव पररूपिणी स्थिता[1] सर्वतत्त्वरूपिणी त्रिवृत्करणात् पूर्वमेकविधेव चानुसन्धेया। सा च विमर्शशक्तिरिच्छात्मना कलाचतुष्टयं कूर्माङ्गवत् संकोचयित्वा पञ्चकारणरूपेऽकुल-बिन्दौ[2] श्रृङ्गाटात्मनि वर्तमाना श्रृङ्गाटं तत्कन्दाभिमानिकलाचतुष्टयं ग्रसित्वा केवले बिन्दौ विशेषबीजात्मनाऽन्तःसारविमर्शरूपेण स्थिता त्रिपुरा परिकीर्त्यत इत्यभिप्रायः। एतदुक्तं संकेतपद्धत्याम्—

मूर्तिवैचित्र्यविभवादिच्छायाः प्रविकस्वरम्।
अध्वभेदं सृजत्युच्चैर्व्याप्यव्यापकभेदितम्[3]॥
यज्ञो जनस्य यच्चारकमित्युक्तसंख्यया[4]।
अङ्गान् तत्त्वपुरेशार्णपदमन्त्राध्ववनां परे॥
उपान्त्यांशारुरु[5] क्षेमो गिरीपुत्रः[6] खनीरिति।
मध्यमाशाः[7] सनिः सूत्रं सेनानीरः खनीरिति॥
अंशांशानदयालीनं कायं रक्तमितीरिते[8]।
रक्तं मया त्वया योगानमित्युदितमांशगाः[9]॥
निवृत्त्यादिभिराश्लिष्टाः कलाभिः पञ्चभिः क्रमात्।
सामान्यपञ्चिकारेयं..................शिशोर्विवक्ष्यते॥
न्यासाः पञ्च कला वर्णैर्विंशतया चतुरूर्ध्वया।
सप्तभिस्त्रिभिरष्टाभिर्दीर्घैर्ह्रस्वैस्तथाऽष्टभिः॥
प्राङ्निवृत्तिः प्रतिष्ठा च विद्या शान्तिश्च पञ्चमी।
शान्त्यतीतेति कवयः कल्पयन्ति कलाः क्रमात्॥

एवं स्वव्यतिरिक्तानां सर्वेषामध्वनां स्वस्वकारणप्रवेशद्वारेण वर्णक्रमान्तर्भावो भवतीति सर्वाध्व-सक्तया स्फुरद्वर्णक्रमरूपिणी स्थिता च विमर्शशक्तिरपि वैखर्यादित्रिभेदेन त्रितत्त्वगामिनी सैव धामसंवित्स्वरूपेण परारूपिणी स्थिता सर्वतत्त्वस्वरूपिणी पुनस्त्रिवृत्करणात् पूर्वमेकविधै-वानुसन्धेया। सा च विमर्शशक्तिरिच्छादिस्वकलाचतुष्टयं कूर्माङ्गवत् संकोच्य पञ्चकारण-रूपाऽकुलबिन्दौ श्रृङ्गाटात्मनि वर्तमाना पुनः श्रृङ्गाटतत्कन्दाभिमानिनी कलाचतुष्टयं ग्रसित्वा केवलबिन्दौ निश्शेषबीजात्मन्यन्तस्सारविमर्शरूपे स्थितेति त्रिवृत्कारणतया पुराभवत्वात् त्रिपुरा परिकीर्त्यते। तदुक्तम्—

---

१. 'स्थिता सर्वतत्त्वरूपिणी' नास्ति–छ.। २. 'श्रृङ्गाटा....बिन्दौ' नास्ति–ग.। ३. भेदनम्–छ। ४. यच्छूर....कमि–ख., यदरक–ज.। ५. रुरु–ज.। ६. पुत्रं–ङ.। ७, 'मध्यमाशाः' अत्रैव जमातृकाऽत्रसिता। ८, तीरते–ङ.। ९. गताः–ङ.।

**यदोल्लसति शृङ्गाटपीठात् कुटिलरूपिणी ॥ १२ ॥**

**शिवार्कमण्डलं भित्वा[1] द्रावयन्तीन्दुमण्डलम् ।**

**तदुद्भवामृतस्यन्दपरमानन्दनन्दिता[2] ॥ १३ ॥**

---

**यदेति** । **उल्लसति** मध्य[3]चारमार्गेण ऊर्ध्वं स्फुरति[4] । **शृङ्गाटपीठाद्** मूलाधारगत[5]चतुर्दलपद्ममध्यत्रिकोणकुल[6]स्थानात् । **कुटिलरूपिणी** इदन्ताप्रसरोन्मुखी । सृष्टिमार्गं स्वाभाविकं विहाय गुरूक्तयुक्त्या संहारमार्गं प्रति यदोल्लसतीत्यभिप्रायः । **शिवार्कमण्डलं भित्वेति** । मूलाधारादितत्तदाधारगतकमलोदरनिर्भेदनक्रमेण[7] ब्रह्मस्थानगत[8]हंसात्मशिवाधिष्ठाना[9]र्कोपलक्षित[10]प्रकाशभुवं प्राप्येत्यर्थः । **द्रावयन्तीन्दुमण्डलमिति** । महाप्रकाशशिवसंमेलनसमुज्जृम्भितं महानन्दलक्षणं चन्द्रमण्डलं द्रावयन्तीत्यर्थः । **तदिति**[11] ।

स्थूलो व्याप्यो व्यापकोऽन्यो भुवनादिः कलान्तगः ।
एवमन्यत्[12] समस्तं तज्ज्ञानशक्तिविपाकयुक् ॥
रौद्रीरूपं समुल्लास्य निखिलं गम्यते यदि । इति ॥ १०-१२ ॥

यदोल्लसतीत्यादि तेन मार्गेण सन्तुष्टेत्यन्तस्यायमर्थः—यदा यस्मिन् काले । उल्लसति ऊर्ध्वं लसति स्फुरति, संहारमार्गं प्राप्य स्फुरतीत्यर्थः । शृङ्गाटपीठादिति । अकुलबिन्दोरिदं लक्षणमुक्तम् । तल्लक्षणलक्षितं तदेव शृङ्गाटं त्रिकोणकुलशक्तेरासन-

मूर्तिवैचित्र्यविभवादिच्छायाः प्रविकस्वरम् ।
अध्वभेदं सृजत्युच्चैर्व्याप्यव्यापकभेदितम् ॥
स्थूलो व्याप्यो व्यापकोऽन्यो भुवनादिः कलान्तगः ।
एवमन्यत् समस्तं तज्ज्ञानशक्तिविपाकयुक् ॥
रौद्रीरूपं समुल्लास्य निखिलं गम्यते यया[13] । इति ॥ १०-१२ ॥

**यदोल्लसतीत्यादि सन्तुष्टेत्यन्तम्** । यदा उल्लसति ऊर्ध्वं स्फुरति संहारायोर्ध्वं ज्वलयति । **शृङ्गाटपीठात्** अकुलस्थाने यदा कन्दबिन्दुशृङ्गाटपीठमाविर्भूतम्, तदा जातात् कुलशक्तेरप्यासनभूता(त्) त्रिकोण(ात्) । **कुटिलरूपिणी** संकुचितरूपिण्यपि शिवा उपाधिलय-

---

१. भ्राम-सख. । २. मदिरा-वाक. ख. । ३. मध्या-ग. ङ. । ४. संस्फुरति-ख. ङ. ।
५. 'गत' नास्ति-ख. ङ. । ६. 'कुल' नास्ति-ख. घ. ङ. । ७. दक्र-ख. घ. ङ. ।
८. ब्रह्मरन्ध्रगतशिवा-ग. । ९. हृसा-ख. । १०. नमर्को-घ. । ११. 'तदिति' नास्ति-ख. ङ. ।
१२. एवमन्यतमस्तत्त्वक्रियाज्ञानविपाकयुक्-छ. । १३. मया-ङ ।

**कुलयोषित् कुलं त्यक्त्वा परं पुरुषमेति सा ।**
**निर्लक्षणं[१] निर्गुणं च कुलरूपविवर्जितम् ।। १४ ।।**

अयमर्थः—महासामरस्यमहानन्दानुभवरूपामृतस्यन्दात्[२]मपरमानन्देन नन्दिता परिपूर्णेति । पारिपूर्ण्यमाकाङ्क्षणीयराहित्यम् । तदुक्तं **श्रीरहस्यगुरुभिः**—

[३]आकाङ्क्षणीयमपरं येन नाथ न विद्यते ।
तव तेनाद्वितीयस्य युक्तं यत्परिपूर्णता ।। (शि०स्तो० ५।१७) इति ।

व्याख्यातसामरस्यविषयेऽभियुक्तोक्तिः—

[1]मूलाधारात् स्फुरिततडिदाभा प्रभा सूक्ष्मरूपो-
द्गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ।
सौषुम्नाध्वाचरणनिपुणा सा सवित्राऽनुबद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयेत् सार्धसोमात् ।। [४]इति ।
( प्र० सा० १०।७ )

**कुलेति** । [५]अतिस्पृहणीयत्वात् सर्वजनागोचरत्वाच्च **कुलयोषिद्** देहप्रमातुःमिति भावः । तस्मात् त्रिकोणपीठादूर्ध्वं गच्छत्यकुलबिन्दुरूपपरपुरुषसमागमेच्छया यदा, तदा तामेव शक्तित्रयबीजत्रयतत्त्व[६]त्रयत्रिवृत्कृतसर्वाध्वप्रविलापनेन विकासभूमिमुपगूहत इति यावत् । निर्लक्षणमित्याद्यकुलबिन्दुरूपस्य शिवस्य स्वरूपकथनम् । [७]भावे निरावरणमहाप्रकाशधर्मिणी सा शक्तिर्हृदि स्थितं कामराजमर्कमण्डलं तेजःकणमिवान्तर्निधाय त्रिवृत्कृतं सर्वं विलापयन्ती उद्गच्छन्ती **कुलयोषित्** कुलकुण्डलिनीशक्तिरकुलगतं सम्यगमृतमण्डलं द्रावयन्ती तत्र स्रवद्दिव्यामृतपानाविर्भूतपरानन्दसमृद्धा स्वजन्मगृहमपि विस्मृत्वाऽकुलबिन्दुरूपं **परपुरुषा**ख्यं शिवम्, **निर्लक्षणं** स्वतः प्राप्यभूमिहीनम्, **निर्गुणं** मायिनम्, **कुलरूपविवर्जितम्** आभिजात्यजन्मसौन्दर्यरहितमनादिनिधनम्, अभ्येत्य स्वच्छन्दं **रमते**[८] । यथा कुलयोषिदभिजाता सुन्दरी काचित् स्वं मनोहारिणमुत्कुष्टं स्वयंवृतं पतिमुद्वास्य[९] स्वसमान्निवर्तितल(क्ता?क्षणा)न्तरं निरतिशयगुणास्पदमाभिजात्येन वर्जितं तमाश्लिष्य स्वजन्मगृह-

१. निर्लक्षं निर्गुणं नित्यं–सख. । २. मृतस्य चिदात्मपरमा–ग. घ. । ३. एषा पङ्क्तिर्नास्ति–ख. ङ. । ४. 'इति' नास्ति–ख. घ. । ५. 'अति' नास्ति–ख. ङ. । ६. 'त्रय' नास्ति–क. ग. । ७. निरूपण–ख. । ८. यदा–ख. । ९. स्वप्ना–ङ ।

1. मूलाधारादिति । "अधिष्ठानमेव मूलाधारः । प्रभा कुण्डलिनीमस्तकम् । मस्तकमपि परब्रह्मैव । तदेव ब्रह्म संविद्रूपिण्या प्रकृत्या सह सार्धसोमो रविश्च मायित्वात्" इति प्रपञ्चसार-

पत्नी, आगमभाषया कुलेश्वरी देहाभिमानिनी संविदित्यर्थः । **कुलं त्यक्त्वा** । षट्त्रिंशत्तत्त्वसमुदायरूपं[1] शरीरं[2] कुलम्, तदभिमानं विसृज्य । देहप्रमातृतां त्यक्त्वेत्यर्थः । **परम्** अन्यमुत्कृष्टं[3] चाकुलस्थानवर्तिनम् । **पुरुषं** पूर्णं पुंस्त्वयुक्तं[4] चाकृत्रिमप्रमातारम् । **एति** गच्छति । काचित् कुलाङ्गना चिरकालं[5] कस्यचिद् गृहिणी भूत्वा गुप्ता वर्तमाना सती देशिकाख्यकटकावलम्बनेन तत्प्रदर्शित[6]-मार्गानुसारेण महाभोगप्रदं परं पुरुषं गूढाचारेणाभिसरतीति ध्वन्योऽर्थः[1] । सेति प्राक्परिशीलिता । किंविशिष्टं परं पुरुषमिति ? तदाह—**निर्लक्षणम्** । निर्गतानि लक्षणानि यस्मात्तम्[7] । **निर्गुणं** निर्गता गुणा यस्मात्तम् । **कुलरूपविवर्जितं** कुलेन रूपेण च विवर्जितम् । अत्र **महाकवयः**—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥ इति ।
( कु० सं० ५।७२ )

---

१. दय–ख. । २. 'शरीरं' नास्ति–ख. ङ. । ३. 'उत्कृष्टं चा' नास्ति–ख. ङ. । ४. 'पुंस्त्वयुक्तं च' नास्ति–ख. ङ. । ५. कस्यचिच्चिरकालं–ख.ङ. । ६. तत्सम्प्रदायद–ख. ङ. । ७. इतः परम्–"तथाविधम्, अलक्ष्यमिति भावः । स्वयंप्रकाशमिति च । ननु तस्य कथं शक्तिसंमितत्वम् ? लक्ष्यस्य वस्तुनो लक्ष्यान्तरमेलनं दृष्टम्, सम्बन्धासम्भवाच्चेति । नैतदस्ति दूषणम् । किमेतत् केवलदशामाश्रित्योच्यते, किं वा व्यावहारिकीमिति । प्रथमे तु सिद्धसाधनता । द्वितीये भूषणमेव, शक्तेस्तादृशसामर्थ्यस्य समर्थितत्वात् ती(र्ण?र्थ)कारैरिति । किञ्च" इत्यधिकः पाठो दृश्यते–ग. ।

विवरणे । "स्वमूलाधारादारभ्य मस्तकं मस्तकोपलक्षितद्वादशान्तपर्यन्तम् उद्गच्छन्ती विद्युत्स्फुटनवत् परिस्फुरिततडिदाभा बिसतन्तुवत् सूक्ष्मरूपा अणुतरा अणोः सकाशादणीयसी आदित्यादितेजसां मूलभूता कारणभूता वेणुरन्ध्रस्थदीपवत् सुषुम्णारन्ध्रमध्यसंचरणनिपुणा या प्रभा कुण्डलिन्याख्या सा द्वादशान्तस्थकल्पार्कमण्डलमालिखन्ती ध्याता सोमसहिताद् रवेर्द्वादशान्तस्थितसवित्रात्मकसहस्रदलयुक्तपद्मकर्णिकागतचन्द्रमण्डलावेधेन सद्यस्तदानीमेवामृतधारां स्रावयेत्" इति प्रपञ्चसारसंबन्धदीपिकायाम् ।

1. "इह ग्रन्थे मूलाधारपीठस्थत्रिकोणगा कुलकुण्डलिनी सूक्ष्मरूपेण सुषुम्णामार्गान्तः प्रविश्यानाहतमण्डलस्थं रविं भित्वा सहस्रारस्थेन्दुमण्डलं विद्राव्याकुलकुण्डलिन्या संगता तदुत्थामृतधाराभिराप्यायिता परावृत्य स्वस्थानमायातीत्यप्यर्थ उत्तरतन्त्रे वक्ष्यमाणः श्लेषेणोक्तः" ( से. प. १४१ ) ।

**ततः स्वच्छन्दरूपा तु परिभ्रम्य[1] जगत् पुनः[2] ।**
**तेन[3] चारेण संतुष्टा पुनरेकाकिनी सती ॥ १५ ॥**

[4]अत्र रहस्यं च—"स वेत्ति वेद्यं न च तस्यास्ति वेत्ता" ( श्वे० उ० ३।१९ ) इति, "निष्कलं निष्क्रियम्" ( श्वे० उ० ६।१९ ) इत्यादि च ।

**तत** इति । **स्वच्छन्दरूपा** महदवष्टम्भेन निर्यन्त्रणप्रचारा । **जगत्** चिदम्बरमवलम्ब्य तद्रूपतया स्फुरत् । **तेन चारेण** यथा[6] संहारक्रमेण पूर्वमूर्ध्वं गता । **पुनः** सृष्टिक्रमेण तेन चारेणेत्यर्थः । **सन्तुष्टा** परमानन्दमयी प्रीतिमती[7] ।

अन्यत् सुगमम् । पुनरेकाकिनी सतीत्यादि व्यक्तिमागतेत्यन्तस्यायमर्थः—एवं संहारक्रमेणोपभोगसन्तुष्टा पुनः स्वेच्छावशात् सृष्टिमार्गं प्रविश्योक्तसमयेन[8] कुलपुरुषमुपगूहन्तं[9] प्रलोभयन्तीव[10] स्थिता विमर्शशक्तिर्गमागम(मैव[11] ? मेन) रमत इति यावत् । एकाकिनीति । यदेवं परपुरुषसमागमं स्वातन्त्र्यवशात् समाचरति, तदा तत्कर्माण्युपादानसहकारिकारणनिरपेक्षतयैव समाचरति । कोऽभिप्रायः ? य(दे ? दै)वं गमागमेन जगच्चित्रविरचनविलापनकारिणी, तदा स्वातिरेकेण तदुपकरणकारणभिन्नास्ति, तदुपादानसहकारिकारणस्वातन्त्र्यं व्यतिरिक्तं नापेक्षत इति भावः । तदुक्तं सूत्रद्वयेन—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" ( प्र० हृ० १ ), "स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" ( प्र० हृ० २ ) । तथा [1]ऋजुविमर्शिन्यामप्युक्तम्—

मुपेक्ष्य तेन सह स्वेच्छया क्रीडति तथैवेत्यर्थः । **तेन मार्गेणे**त्यादि । तेन मार्गेण (सामरस्यानुभवसन्तोषा ? संहारक्रमेणोपभोगसन्तुष्टा) **पुनरेकाकिनी** पुनरुपाधिधूननेन **परमशिवसमरसीभावा**दद्वैतरूपिणी तदा पुनरेकाकारे मूलशृङ्गाटे एकाकिनी परमानन्दरूपिणी सती प्रागुपहितत्वादव्यक्तापि गमागमाभ्यां नादप्रकाशविमर्शरूपेण भक्तानां **व्यक्तिमागता** स्वेच्छया प्रसीदतीत्यर्थः । एकाकिनीशब्देन शक्तिप्राधान्यमभिव्यनक्ति परमेश्वर इति भावः । "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" ( प्र० हृ० १ ), "स्वेच्छया स्वभित्तौ[12] विश्वमुन्मीलयति" ( प्र० हृ० २ ) इति । अन्यत्रापि—

१. भ्राम्य–वाग. से. सक. । २. त्रयम्–सख. । ३. तेनाचारेण–वाग. से. सक., विनाचारेण–सख., तेन मार्गेण–अ.ब. । ४ 'अत्र''''तत इति' नास्ति–ख. ङ. । ५. महाव–ख. ङ. । ६. यदा–ख., यया–घ. । ७. प्रीतिमिता–ग. । ८. समस्तमनेन–क. छ. । ९. मुपगृह्य तं–ग. छ. । १०. च–छ. । ११. मेव–छ. । १२. स्वाभिव्यक्ता–ख., ह्यभिव्यक्ता–ङ ।

1. प्रस्तुतायामृजुविमर्शिन्यां न दृश्यते वचनमेतत् ।

**रमते स्वयमव्यक्ता[१] त्रिपुरा व्यक्तिमागता[२] ।**
**तत्त्वत्रयविनिर्दिष्टा[३] वर्णशक्तित्रयात्मिका[४] ।। १६ ।।**

**एकाकिनी** अद्वितीया । **सती**[५] महास्फुरत्तारूपा । **रमते स्वयमिति** । अद्वया-[६]नन्दमयीं महाहन्तात्मिकां स्वसंविदमनुभवतीत्यर्थः । **अव्यक्ता** विश्वोत्तीर्णा भानैकशरीरिणी । **व्यक्तिमागता** विश्वात्मना प्रकाशमाना । अथवा **अव्यक्ता** पश्यन्तीवाक्प्रधानेन रूपेण, **व्यक्तिमागता**[७] मध्यमादिवाक्प्रधानेन रूपेण ।

---

[८]जगच्चित्रं समालिख्य स्वात्मतूलिकयात्मनि ।
स्वयमेव तदालोक्य[९] प्रीणाति जगदीश्वरी ।। इति ।

अव्यक्ता व्यक्तिमागतेति । इत्थं सा ( सदा ? शक्तिरा)शिवमाकीटमेकप्रकारेण गमागमं वितन्वती उच्छ्वासनिःश्वासलक्षिताप्यदीक्षितात्मभिर्मलमयैः कर्मवृतैः पशुभिः क्षुद्रकर्मरतैः ( न ) ज्ञायते यस्मात्, तस्माददीक्षितात्मनां देशिकपदोपसर्पणविमुखानां[१०] समलाशयानामव्यक्तेति भावः । तदितरेषां कल्याणदेशिककटाक्षस(व्य ?)मुत्थ-

जगच्चित्रं समालिख्य स्वात्मतूलिकयात्मनि ।
स्वयमेव तदालोक्य प्रीणाति परमेश्वरः[1] ।। इति ।

[११]किञ्च, अव्यक्ता···व्यक्तिमागतेत्यस्यायमभिप्रायः—विश्वात्मरूपिणी शक्तिराशिवमाकीटमुच्छ्वास-निःश्वासलक्षणं गमागमं वितन्वती देशिकरहितानां क्षुद्रकर्मनिरतानां पशूनां मलकर्ममायाख्य-

---

१. सेय—वाक. ख. । २. ख्याति—वाग. से., विकृति—सक. । ३. ष्ट—सक । ४. वेधक्रिया—सख. । ५. 'सती' इत्यतः परम्—"उक्तं च—एकाकिनी काचन शक्तिरेषा योषात्मना सा विदुषा निषेव्या । वेषं विशेषाद्यमुकं जुषाणा या तां निषेवे त्रिपुरात्मभावाम् ।। इति" इत्यधिकः पाठ—ग. । ६. 'अद्वया····तीत्यर्थः' इत्यस्य स्थाने "रमणं नाम स्वात्म(नीत्वोषं? नि तोषं) जुषति । अयं भावः—अम्बरशम्बरपुरस्सराडम्बराकारा धारानिराकं(?)रविकार-परता(?) सती परा शक्तिररसपरिदर्शितदर्शनविधुरा(?) विद्योतमाना द्वयाद्वयानन्दमयीं महा-हन्तात्मिकां संविदमनुभवतीति (भावः?) । अन्यत्र च—मातॄणां या मातृभूताद्यभूता भूतानां या हेतुभूतात्मभूता । भूताधीशा भूतिभूषात्मयोषा सा ते भूयाद् भूतये भूतये च ।। इति" इति पाठः—ग. । ७. 'व्यक्ति····रूपेण' नास्ति—ख. ङ. । ८. 'जगच्चित्रं····श्वरी ।। इति' नास्ति—ग. । ९. समा—छ. । १०. देशिकेश—क. ग. । ११. किञ्चन—ख. ।

1. 'जगदीश्वरी' इत्येव प्रकरणानुकूलः पाठः । योगिनीहृदयदीपिकायां ( पृ ६४ ) 'भगवान् शिवः' इति पाठो दृश्यते ।

**वागीश्वरी ज्ञानशक्तिर्वाग्भवे[1] मोक्षरूपिणी ।**
**कामराजे[2] कामकला कामरूपा[3] क्रियात्मिका ।। १७ ।।**
**शक्तिबीजे[4] परा शक्तिरिच्छैव शिवरूपिणी[5] ।**

---

**तत्त्वत्रयविनिर्दिष्टा** । आत्मविद्याशिवाख्यं तत्त्वत्रयम्, तद्रूपतया शब्दिता । **वर्णशक्तित्रयात्मिका** वर्णत्रयात्मिका[6] शक्तित्रयात्मिका च ।। १२-१६ ।।

अमुमेवार्थं विवेचयति—**वागिति** । **वागीश्वरी** वाग्भवाधिष्ठात्री[7] । **ज्ञानशक्तिः**, विद्याप्रवर्तकत्वात्[8] । **वाग्भवे** बीजे । **मोक्षरूपिणी** विद्यारूपतयाऽमृतत्वप्रकाशिका । यद्रहस्यम्—"विद्ययाऽमृतमश्नुते" ( ई० उ० ११ ) इति[9] ।

---

ज्ञानाग्निनिर्दग्धसमस्तमलानाममलाशयानां जीवतामेव[10] शिवत्वमुपगतानां चेतस्यनवरतमभिव्यक्तिमागतेति भावः । तत्त्वत्रयविनिर्दिष्टेत्यादि त्रयात्मिकेत्यन्तस्य त्रिपुरायास्त्रिभेदकारणं त्रितत्त्वत्रिवर्णत्रिशक्तिभेदमित्युक्तमर्थं पुनरुपसंहारेऽप्यनुस्मरतीति भावः ॥ १२-१६ ॥

पाशजालावृतत्वादज्ञाताऽप्यव्यक्ता(ऽपि) कल्याणदेशिककटाक्षोद्यज्ज्ञाना(दि?ग्नि)दग्धपाशानां भक्तिशालिनां जीवतामेव शिवभावमापन्नानां चेतस्यनारतमभिव्यक्तत्वाद् **व्यक्तिमागते**त्युक्तमिति । **तत्त्वत्रयविनिर्दिष्टे**त्यादि । त्रिपुरायास्त्रैविध्यशक्त्यादिवद्भावपरिणतितात्पर्यमुपसंहारेऽप्यनुस्मारयति ॥ १२-१६ ॥

---

१. ग्भवा—वाक. ख. ब. । २. राजा—वाक. ख. ब. । ३. रूपे—सख । ४. बीजा—वाक. ख. । ५. विष—वाक. ख. ब. । ६. 'वर्ण····त्मिका च' नास्ति—ख. ङ. । ७. इतः परम्—"श्रुतिश्च—प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ।।" ( ऋ. ६।६१।४ ) इत्यधिकः पाठः—ग. । ८. इतः परम्—"चत्वारि वाक्" (ऋ. १।१६४।४५) इति च । किञ्च" इत्यधिकः पाठः—ग. । ९. इतः परम्—"श्रीमदुन्मत्तभैरवगुरुणापि—'सुरुचं गीडारामु च महिमोचितजनिजरावरुजमस्यै । वद संसिद्ध्यै बुद्ध्यै वाचं याचामहे महेशस्य ।।' इति । या हि संसृतिभीतिपरीशां त्रिविधेन विद्वद्भिराशास्या । यद्रहस्यम्—'सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु' ( ऋ. ८।१००।११ ) इति, 'वर्धन्तु त्वा सुष्टुतयो गिरो मे' ( ऋ. ७।९९।७ ), 'यूयं पात स्वस्तिभिः सदा नः' ( ऋ. ७।१।२० ) इति च । 'वाचं यजन्ते जनितापमुक्त्यै युक्त्यै च मुक्त्यै भुवि वावदूकाः' इति च । अन्यत्र च—'तदस्ततन्द्रैरनिशं सरस्वती जनैरुपास्या भुवि कीर्तिमिच्छुभिः' इति च । 'ये नाद्रियन्ते गिरमारभन्तो जीवन्त एते नितरां म्रियन्ते' इति च" इत्यधिकः पाठः—ग. । १०. जीवाना—छ. ।

**एवं देवी[1] त्र्यक्षरा[2] तु महात्रिपुरसुन्दरी ॥ १८ ॥**
**पारम्पर्येण[3] विज्ञाता भवबन्धविमोक्षणी[4] ।**

---

**कामकला** कामराजबीजसारभूता । **कामरूपा** महाचमत्काररूपा । **क्रियात्मिका** क्रियाशक्तिरूपा । **परा[5]** व्यापिका । **इच्छा[6]** इच्छाशक्तिः । **शिवरूपिणी** [7]परमशिवरूपिणी । परमशिवसामरस्यस्व[8]रूपिणीत्यर्थः ॥ १७–१८ ॥

[9]**एवमिति** । अस्यायमर्थः—एवं सामर्थ्ययुक्ता त्रिवर्णात्मिका त्रिपुरसुन्दरीति । एवंविशिष्टेयं त्रैपुरी वि[10]द्या सत्सम्प्रदायविज्ञाता कार्यकरीत्याह—

---

वागीश्वरी त्यारभ्य इच्छैव शिवरूपिणीत्यन्तेन यस्मिन् स्थाने यदक्षरं या शक्तिर्यत्तत्त्वं तद्विभागं दर्शयतीति भावः ॥ १७–१८ ॥

एवमित्यादि विमोक्षणीत्यन्तस्य—भेदेऽप्येवमुक्तप्रकारेणास्यास्त्रिपुरसुन्दरीविद्याया अक्षरत्रयोत्पत्तिरुक्ता। अक्षरत्रयस्यापि त्रिवृत्कृतसर्वाध्वव्यापकत्वमस्तीति भावः। पारम्पर्येण विज्ञातेति। शिवादिगुर्वन्तपादुकाक्रमेण सह विज्ञायते यदा, तदेयं त्रिपुरसुन्दरी विद्या पुरुषार्थसाधिका भवति। अन्यच्च भवबन्धविमोक्षणी जायते। भवबन्धः, तस्मादेनं साधकं मोचयति परमानन्दलक्षणपरमशिवसमरसीभावं प्रयच्छतीति भावः।

**वागीश्वरी**त्यादि **इच्छैव शिवरूपिणी**त्यन्तम् । यस्मिन् बीजे या तदीया शक्तिर्यत्तत्त्वं [11]यत्फलं तद्विभागं दर्शयति । आद्यबीजे **मोक्षो** जाड्यमोक्षः, वागीश्वरत्वं फलम् । **कामकला** कामेश्वरी बीजेशा । कामरूपं कन्दर्पसौभाग्यं मध्यबीजफलम् । परा शक्तिरमृतेश्वरी । विषमोक्षस्तृतीयबीजफलम् ॥ १७–१८ ॥

एवं त्रिबीजत्रैविध्यादप्यागमोक्ता महात्रिपुरसुन्दरीति नामार्थप्रशंसा । **पारम्पर्येण** शिवादिगुर्वन्तपादुकाक्रमेण सह सम्यग् ज्ञाता चेत् संसारबन्धं मोचयति । परमानन्दलक्षणे परमशिवे समरसीभावं प्रयच्छतीति भावः ।

---

१. देवि–ब. सक. । २. री–वाग. से. । ३. षु–सख. । ४. चिनी–वाक. ख., चनो–वाग. से., विनाशिनी–सख. । ५. 'परा' नास्ति–ख. ङ. । ६. 'इच्छा' नास्ति–ख. ग. । ७. 'परमशिवरूपिणी' नास्ति–ख. ग. घ. । ८. 'स्व' नास्ति–ख. ङ. । ९. 'एवमिति । अस्यायमर्थः' नास्ति–ख. ङ. । १०. इतः परम्—"उक्तं च 'चतुष्षष्टिकला माया यदाधारा हि शेरते। यन्त्रे मन्त्राणि सर्वाणि सैषा त्रिपुरसुन्दरी ॥' इति" इत्यधिकः पाठः–ग. । ११. 'यत्फलं' नास्ति–ङ. ।

पारमिति । **पारम्पर्येण** शिवादिस्वदेशिकपर्यन्तगुरुपारम्पर्येण । पारम्पर्यं तु त्रिप्रकारम्—दिव्यसिद्ध[1]मानवभेदेन । इह विद्यायां सन्तानद्वयमस्ति—कामराजसन्तानो लोपामुद्रासन्तान इति । विद्यायाः सकीलनिष्कीलभेदेन सन्तानद्वयायतिः[2] । तयोः कामराजसन्तानः सकीलविद्यानुबन्धी विच्छिन्नश्च । [3]विच्छेदो नाम पारम्पर्यवियोगः । इतरो निष्कीलविद्यानुबन्धी लोपामुद्राऽगस्त्यादिपरिगृहीतत्वादविच्छिन्नश्च । तत्र दिव्यौघः सप्तभिर्गुरुभिर्मुद्रितः, [4]सिद्धौघश्चतुर्भिः । मानवौघस्त्वपर्यन्तो[5]ऽप्यृजुविमर्शिनीकर्त्रवधि महागुरुभिरष्टभिः स्थापितः ।

[6]तत्र दिव्य[7]क्रमो लिख्यते—मध्यत्र्यश्रमध्य[8]स्थानगतोड्याणपीठस्थितसमस्तविद्याभिधेयमहात्रिपुरसुन्दरीदेवीविमृष्टरूपो महाप्रकाशरूपः परमानन्द-

---

[1]पारम्पर्यं तु द्विप्रकारम[3]स्ति—एकं कामराजसन्तानम्, अपरं लोपामुद्रासम्प्रदायम् । सकीलनिष्कीलभेदेन प्रकारद्वयमाश्रित्य समुपास्यते साधकोत्तमैः । तदिदानीं [2]चतुः(षष्टि?)पीठभेदेन लिख्यते । आदौ प्रकाशविमर्शसारनिर्विशेषबिन्दुलक्षणः परमानन्दानुभव एव[10] परमो गुरुः । स पुनर्निर्विशेष[11]बिन्द्वात्मा[12] स्वेच्छावशात् प्रकाशविमर्शशक्तिशिवात्मनात्मानं विभज्योड्याणपीठे कृते युगे कामेश्वरकामेश्वरीसंज्ञया[13]

[3]पारम्पर्यं तु कामराजलोपामुद्रादिकं नानाविधं प्रवर्तते । तत्रादौ तावत् प्रकाशविमर्श[14]सारनिर्विशेषबिन्दुलक्षणः परमानन्द एवानुभूतिगम्यः परमो गरीयान् शिवः । पुनरोजापूकपीठानां कृतादियुगानुसारि[15]णामाद्ये गु(णो?णौ)लिनादसाधारणनादतया समस्तायाः श्रीमूलविद्यायास्तदन्येषु त्रिषु ज्येष्ठमध्यकनि(ष्ठा?ष्ठौ)लि(?त्र)यप्रवर्तकपृथक्त्रिनादात्मकतया

---

१. सैद्ध–ग. घ. । २. द्वयागतिः–ग. । ३. 'विच्छेदो····वियोगः' नास्ति–ख. ङ. । ४. 'सिद्धौघश्चतुर्भिः' नास्ति–ख. ङ. । ५. 'अपि' नास्ति–ख. ग. ङ. । ६. 'तत्र' नास्ति–ख. ङ. । ७. क्रमेणालिख्यते–ग. । ८. 'स्थानग' नास्ति–ख. ङ. । ९. मिति–छ. । १०. 'एव' नास्ति–ग. छ. । ११. षात्मा–ग. । १२. बीजात्मा–क. ग. छ. । अत्र ज्ञानदीपविमर्शिनीस्थः पाठो मूले स्थापितः । १३. संज्ञा–ग. छ. । १४. हेतु–ङ. । १५. सारेणा–ख. ।

1. पारम्पर्यप्रदर्शकोऽत्रत्यः सर्वोऽपि ग्रन्थो ज्ञानदीपविमर्शिन्यामपि दृश्यते ।
2. 'चतुष्पीठभेदेन' इत्येव पाठो दृश्यते ज्ञानदीपविमर्शिन्याम् ।
3. "अत्र प्राञ्चष्टीकाकारा विंशतेः श्लोकानां व्याख्यामतीव विस्तृत्य यथेच्छमेव स्वातन्त्र्येण वर्णयन्तोऽत्रत्यपारम्पर्यपदेन लोपामुद्रासन्तानकामराजसन्तानदिव्यसिद्धमानवौघतद्भेदादिकं बहु

लक्षणः परमशिव एव प्रथमो गुरुः । अस्य गुरोः श्रीचर्यानाथ इति संज्ञा । स च स्वाभिन्नायै विमर्शाख्यायै स्वशक्त्यै कृतादौ प्रथममुपदिदेश । अत्राभियुक्तवचनम्—"त्र्यश्रान्तरौड्[1]पीठस्था महा[2]त्रिपुरसुन्दरी" ( सं० प० ) इत्यादि,

अदृष्टविग्रहा स्वान्तरुदिता परमा कला ।
अस्वराकारता[3]माप्ता[4] त्र्यश्रसङ्केतमध्यगा ॥ (सं० प०) इति,
एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
तस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ॥ (सं०प०) इति च ।

---

[5]स्थितश्चर्यानाथरूपी ह्यस्यास्त्रिपुरसुन्दर्या मन्त्रविद्यामुद्राख्यत्रि[6]तयप्रकाशकत्वेन गुरु[7]ताराज्ञास्वरूपी तुरीयविद्याभिमानी आज्ञासंकेतप्रवर्तकः परमशिवः स्वाभेदेन स्थितायै स्वशक्त्यै कामेश्वर्यै प्रथममुपदिदेश । तदुक्तं संकेतपद्धत्याम्—

त्र्यस्रान्तरौड्पीठस्था महात्रिपुरसुन्दरी ।
शाक्तस्फारसमाविष्टो यो ह्येतामुच्चरेन्नरः ॥
सोऽचिराल्लभते सिद्धिं वाक्काम[8]विषसंज्ञिताम् ।
छिन्ना रुद्धाश्च ये मन्त्राः कीलिता मूर्च्छिताश्च ये ॥
सिद्ध्यन्ति तेऽचिरात्तस्य शक्तिविस्फारबृंहिताः ।
मुद्रा विद्याश्च मन्त्राश्च (यन्त्र?यत्र[9]) यन्त्राणि संस्थिताः ॥

व्यक्तीनामपि शक्तिकामराजवाग्भवबीजानामधिदेवतान्तरपरिणामात्मकचर्याड्डीशषष्ठ[10]मित्रप्रकाशनामभिश्चतस्रो गुरुमूर्तयो जाताः । इति प्रकाशान्तपदम् ( ? ) । ततः प्रागुन्मिषितं महादिव्यगुरुपञ्चकं दिव्यौघः । काम एवान्तः ? स एव विनष्टसन्तानं पुनः प्रवर्तयतीति तन्नामाङ्कितं स्वसन्तानमवगन्तव्यम् । तदुपरि समयादिविमलान्तं नादपञ्चकं सिद्धौघः । ततः परमागमोक्ताऽव(ति?नि)सन्त[11]तिर्मानवौघः । इति कामराजगुरुसन्ततिः । श्रीलोपामुद्रासन्ततिर्हृदि स्थापिता नात्र लिखिता । इति पारम्पर्यनिर्णयः ।

---

१. त्र्यश्राग्रोड्याण–चि. त्र्यश्रान्तरोड्याण–ख. ङ. । २. कामराजशरीरिणी–चि. । ३. अपरा–घ. । ४. तां प्राप्ता–ख. ङ., तां प्राप्य–चि. । ५. 'स्थित····राज्ञा' नास्ति–ग. छ. । ६. त्रिवृत्करण–ज्ञा. । ७. गुरुज्ञा–क. । ८. संज्ञकाम्–ज्ञा. । ९. यन्त्रं–क. ग. । १० षष्ठि–ख. । ११. सन्तानि–ङ. ।

विस्तृत्य लिखन्तः स्वोत्प्रेक्षितार्थ ईदृशपरम्परायात इति वदन्ति । तत्सर्वं प्रामाणिकमप्यक्षरस्वारस्यानाक्रान्तत्वान्मूलानुपयुक्तत्वाद् ग्रन्थगौरवभयाच्चोपेक्षितमस्माभिः" (से. पृ. १४२) ।

मध्यत्र्यश्राग्रकोणगतकामरूपपीठस्थितवाग्भवबीजाभिधेयकामेश्वरी - देवीविमृष्टरूपश्रीमदोड्डुनाथदेवस्त्रेतागुरुः । अत्राभियुक्तवचनम्—"त्र्यश्राग्र- कोणगा या सा कामेशी कामपीठगा" ( सं० प० ) इत्यादि ।

[1]मध्यत्र्यश्रदक्षिणकोणगतजालन्धरपीठस्थितकामराज[2]बीजाभिधेयवज्रे - श्वरीदेवीविमृष्टरूपश्रीषष्ठ[3]नाथदेवो द्वापरगुरुः । अत्राभियुक्तवचनम्—"त्र्यश्र- दक्षिणकोणस्था वज्रेशी जालपीठगा" ( सं० प० ) इत्यादि ।

---

तमहं पीठराजेशमोङ्काराख्यं नमाम्यहम् ।
वाक्कामविषमोक्षाणामालयं सर्वसिद्धिदम् ॥
[4]श्रीपीठं राजदुष्प्रेक्ष्यं तमहं शरणं श्रये ।
अज्ञानतिमिरध्वंसादाज्ञास्फारप्रदर्शनात् ॥
आज्ञापीठमिति प्रोक्तमोड्डुपीठं नमाम्यहम् ।

[5]अनेनौड्डुपीठभेदेन स्थितं चर्यानन्दशक्तिरूपमन्त्रविद्यामुद्राप्रकाशकं तुरीय- विद्यास्व[6]रूपमाद्य[7]मिथुनमिति यावत् । अथ पुनस्तस्य [8]चर्यानाथरूपस्य परमशिवभट्टा- रकस्याज्ञापीठे स्थित्वा कृताधिकारं कुर्वतो विमर्शरूपिणी शक्तिः कामेश्वरी । सा पुनः पूजकत्रिपीठभेदेन ओषमित्राख्या(न्) शक्तिकाम[9]राजवाग्भवाधिदैवतान् मन्त्रविद्या- (मुद्रा)गुरून् त्रेताद्वापरकलिष्वधिकारपुरुषान् चित्प्राणविषयज्येष्ठमध्यमबालाख्यान् [10]त्रीन् सिद्धान् सुपरीक्ष्य तेषु प्रकाशयामास मन्त्रविद्या[11]मुद्रागुरूनिति । एतत्त्रितयं संकेतपद्धत्यां यथोक्तमवलोक्य शोधितं[12] कुर्यात् । यद्यथा—

[13]त्र्यश्रस्योत्तरकोणस्था भगेशी पूर्णपीठगा ।
कामादिनवसंकेतयन्त्रमन्त्रविधौ स्थिता ॥
नवसिद्धिप्रदा या सा मन्त्रपीठकृतास्पदा ।
अणिमादिमहामोक्षपर्यन्तघटनोद्यता ॥

---

१. 'मध्यत्र्यस्र''''इत्यादि' नास्ति–घ. । २. राजाभि–ख. ङ. । ३. षष्ठि–ख. । ४. 'श्रीपीठं''''र्शनात् ॥' नास्ति–ग. । ५. 'अनेनो''''''''कामरूपं नमाम्यहम् ॥' नास्ति–ग. । ६. 'स्व' नास्ति–छ. । ७. आसाद्य–छ. । ८. 'चर्यानाथरूपस्य परम' नास्ति–छ. । ९. 'राज' नास्ति–क. । १०. 'त्रीन्' नास्ति–छ. । ११. 'मुद्रा' नास्ति–छ. । १२. शोधनं–क. । १३. अस्योत्तरवि–क. छ. ।

मध्यत्र्यश्रोत्तरकोणगतपूर्णगिरिपीठस्थितशक्तिबीजाभिधेयभगमालिनी - देव्यविमृष्टरूपश्रीमित्रेशनाथदेवः कलिगुरुः । अत्राभियुक्तवचनम्—"त्र्यश्रस्योत्तरपीठस्था[1] भगेशी पूर्णपीठगा" ( सं० प० ) इत्यादि ।

द्वादशान्तादिताल्वन्तं जगदाह्लादकं परम् ।
पुनः कन्दादिताल्वन्तं[2] शक्तिबीजं[3] समुद्धरेत् ॥
पूर्णपीठे स्थिता याज्ञा विषनिर्नाशिनी परा ।
यैर्मनाक् स्मर्यते तेषामजरामरता सदा ॥
मननत्राणधर्मोऽसौ[4] मन्त्रो यः परिकीर्तितः ।
अस्याधारो मन्त्रपीठः पूर्णाख्यो जयतादजः[5] ॥

इत्याद्यस्य[6] ज्येष्ठस्याधिकारः ।

त्र्यस्रदक्षिणकोणस्था वज्रेशी जालपीठगा ।
नवविद्याख्यसंकेतस्फारसिद्धिप्रदायिका ॥
करशुद्धौ देहरक्षात्मासने चक्रशासने ।
मन्त्राधारे तथा साध्यावाहने तु सुपूजिता ॥
त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरभैरवी ॥
विद्यासंकेतमेतत्तु गुरुपूर्वत्वमागतम् ।
श्रीमद्दीपकसन्तानसन्तत्या दर्शितं नुमः ॥
गुदमेढ्रनाभिचक्रहृद्[7]गलभ्रूविभेदितम् ।
तरुणारुणसंकाशं कामराजं समुद्धरेत् ॥

इति षष्ठनाथस्य मध्यमस्याधिकारः ।

त्र्यस्राग्रकोणगा या सा कामेशी कामपीठगा ।
मुद्रादशकसंकेतदशसिद्धिप्रदायिका ॥
एका चैव महामुद्रा योनिमुद्रात्वमागता ।
तया विभक्तः स्वात्मा तु संक्षोभादिप्रभेदतः ॥

---

१. कोणस्था–चि. । २. कण्ठा–छ. । ३. शक्त्यन्तं तु–क. छ. । ४. धर्माऽसौ–क. । ५. द्रुजः–क., द्रजः–छ. । ६. इत्योड्डाख्यस्य ज्येष्ठाधि–क. छ. । ७. हृत्कण्ठ–छ. ।

मित्रेशदेवः कलियुगादौ भगवतीं लोपामुद्रां भगवन्तमगस्त्यं च महा-तपःपुञ्जमिथुनमनुगृहीतवान्। एतत्सप्तकं दिव्यौघसंज्ञम्।

शक्तिगर्भात् प्रोच्छलन्तं हृद्ग्रन्थि[1]प्रविभेदकम्।
देदीप्यमानं जिह्वाग्रे वाग्भवं तु समुद्धरेत्॥
कामपीठे स्थिता बाला कामतत्त्वप्रबोधिका।
स्मरणाद् देशिकान्द्राणां वाग्विलासप्रदायिका॥
द्रावणात् पाशजालस्य तत्परस्य च मोदनात्।
मुद्रापीठमिति प्रोक्तं कामरूपं नमाम्यहम्॥

एष बा[2]लस्य मि[3]त्रस्याधिकारः। त्रिसिद्धा ओलित्र[4]याभिमानिन इति। तदुक्तं संकेतपद्धत्याम्—

कन्दाग्रकोणात् प्रोच्चैर्या स्फुरन्ती सततोदिता।
कामेशीं सर्वगां नित्यां गुरुरूपां नमामि ताम्॥
ज्येष्ठमध्यमबालाख्यान् चित्प्राणविषयात्मकान्।
ओषमित्रीशसंज्ञेयान् नौम्यहं सिद्धपुङ्गवान्॥ इति।

अत्रौड्डादिसिद्धानां नामाद्याक्षरग्रहणम्। यथा—ओ इत्यनेन ओड्डस्य ग्रहणम्। ष इत्यनेन षष्ठस्य। मित्रीश इति सम्पूर्णस्य ग्रहणम्। ऋकारेण ऋषिरिति ग्रहणम्। षकारेण षष्ठ इति। षष्ठमित्रयोर्लौकिके वैदिके एकप्रकारेण नामग्रहणं कृतम्। श्रीमदोड्डस्य कौले ओड्डु इत्येव प्रसिद्धम्। लोके ऋषिरिति श्रीमत्क्रोधमुनिभट्टारक इति श्रीमद्दुर्वासस एवाभिधानम्। तदिदं त्रितयं कादिभेदे ओलित्रितयनिरूपणे ओलि-गायत्र्यां स्पष्टं ज्ञायते। तद्यथा—ओड्डुनाथाय विद्महे श्रीदुर्वाससे धीमहि। तन्नः कौलिः प्रचोदयात्॥ तथा—षष्ठनाथाय विद्महे [5]श्रीकुमाराय धीमहि। तन्नो लक्ष्मीः प्रचोदयात्॥ मित्रनाथाय विद्महे श्रीकण्ठाय च धीमहि। तन्नः कुब्जिः प्रचोदयात्॥ श्रीदुर्वासःसुब्रह्मण्यमहादेवा लौकिके। एतेषां पूजानाम गुरुमुखादेवावगन्तव्यम्, न पुनः पुस्तके लेख्यम्। एते व्यापिनीसमनोन्मन्यपरपर्यायाः शृङ्गाटत्रिरेखाभिमानिन-स्तत्र सन्निहिताः। चतुर्थमिथुनरूपं कामेश्वरकामेश्वरीरूपं प्रकाशविमर्शमयं शृङ्गाट-मध्यस्थबिन्दुरूपं बीजोच्छू[6]नविभक्तबिन्दुभागाकारमाश्रित्य स्थितं श्रीचर्यानाथ-

१. तद्ग्रन्थि—छ.। २. बालमित्रस्या—क. ग. ज्ञा.। ३. मन्त्र—ग.। ४. त्रयाधिकार—क. ग. छ.। ५. 'श्रीकुमाराय······विद्महे' नास्ति—ग. छ.। ६. त्थन—क. ग.।

[१]सिद्धक्रमो लिख्यते—लोपामुद्राऽगस्त्याभ्यां कङ्कालताप[२]साचार्योऽनुगृहीतः। तेन धर्माचार्यो लघु(नुति)कर्ताऽनुगृहीतः। तेन मुक्तकेशिनी नाम योगिन्यनुगृहीता। तयाऽस्मद्गोत्रमहत्तरः प्रसिद्धब[३]ह्वपादानो भोजदेवदृष्टचमत्कारो महादेशिकप्रवरः श्रीमान् दीपकाचार्यो दण्डककर्ताऽनु[४]गृहीतः। एतच्चतुष्टयं सिद्धौघसंज्ञम्। अत्राभियुक्तवचनम्—

दि(व्[५]याः?व्यं) सिद्धत्रयं पूर्वं दम्पती च ततः क्रमात्।
लोपामुद्रा तथाऽगस्त्यस्ताभ्यां कङ्कालतापसः॥
तेन धर्मश्च कृपया धर्मेण च महात्मना।
मुक्तकेशी ततस्तेन दीक्षिता मन्त्रनायिका॥
तया दी[६]पकनाथश्च दीपकेन महात्मना। (सं० प०) इत्यादि।

मानवक्रमो लिख्यते—दीपकाचार्यस्यौरसः पुत्रः सङ्केतपुञ्जप्रकाश[७]को जिष्णुदेवस्तेनानुगृहीतः। तेन कटा[८]क्षीकृतो मातृगुप्तदेवः प्रभाकरगुरुः। तेना[९]-

तच्छक्तिमिथुनमिति भावः। [१०]एवं शृङ्गाटस्य त्रिरेखामयत्रिबीजमध्यस्थतुरीयविद्यास्वरूपमिति। पञ्चकारणरूपपरमकामात्मके गुप्ताद्यस्वरूपे सर्वमेतद्व्यवस्थितमिति सुनिपुणमतिभिरवगन्तव्यमिति भावः। एतत्पञ्चकं दिव्यौघः। एतेषां गुप्तनामग्रहणं यथा प्रकादिमस आद्यग्रहणाज्ज्ञातव्यम्। ततः परं कलियुगगुरुणा मित्रीशेन मिथुनमनुगृहीतं तल्लोपामुद्रागस्त्यात्मकम्। तत्पूजानाम सपर्या[११]नामाद्यग्रहणं गुरुमुखाज्ज्ञातव्यम्। ताभ्यामनुगृहीतः कङ्कालतापसः, तेन धर्माचार्यः, धर्माचार्येण मुक्तकेशिनी नाम योगिनी, तया श्रीदीपकाचार्यः। एतत्षट्कं सिद्धौघः। [1][१२]कदंविकैर्मम आद्यग्रहणाद् गुप्तनाम। तदनु जिष्णुदेव-मातृगुप्तदेव-तेजोदेव-मनोजदेव-कल्याणदेव-रत्नदेव-श्रीवासुदेवाख्याः सप्तकं मानवौघाः। [१३]किंविशकमप[१४]श्चैराद्यग्रहणाद् गुप्तनाम। इत्थं सर्वेषां पूजानाम गुरुमुखाज्ज्ञातव्यम्।

१. 'सिद्धक्रमो लिख्यते' नास्ति–ख. ङ.। २. तापना–ख.। ३. बहुपादो नाम–ङ। ४. 'अनुगृहीतः' नास्ति–ख.। ५. देव्याः–ग. घ. ङ.। ६. दीपकलानाथः–ख। ७. प्रकाशो–ख. ङ.। ८. कटाक्षितो–ख. ङ.। ९. 'तेनावलोकितस्तेजोदेवः' नास्ति–घ.। १०. 'एवं……स्वरूपमिति' नास्ति–ग.। ११. र्याभ्यामाद्य–क. ग.। १२. दिविकर्मर्म–क., दिविकैमम–छ., प्रप्रादिविक्रमै–ज्ञा.। १३. कि–ग., विंशिकमपरत्वाद्य–ज्ञा.। १४. षष्ठै–क.।

1. अत्रत्येषु पाठनिर्णयेषु परम्पराप्राप्तविद्योपदेशा एव प्रभवः।

वलोकितस्तेजोदेवः । तेनेक्षितो[1] मनोजदेवः । तेन दृष्टः कल्याणदेवः । तेन संभावितः[2] श्रीरत्नदेवः । तेनाङ्गीकृतः[3] श्रीवासुदेवमहामुनिः[4] । तेन पुत्रीकृत ऋजुविमर्शिनीकर्ता शिवानन्दमहायोगी । एतदष्टकं मानवौघसंज्ञम् । सर्वेषां[5] पूजानाम पूज्यवक्त्रात् श्रोतव्यम् । पारम्पर्यक्रमोऽपि पारम्पर्यक्रमायातः[6] । सर्वथा समर्चनीया महागुरवः । अनादरणे[7] तु महान् दोषः । तदुक्तं[8] भगवता **व्यासमुनिना—**

ऋतस्य दातारमनुत्तरस्य[9] निधिं निधीनां[10] चतुरन्वयानाम् ।
ये नाद्रियन्ते गुरुमर्चनीयं पापान्[11] लोकांस्ते व्रजन्त्यप्रतिष्ठान् ।। इति,
( म० भा० १।७६।६४ )

पिता[12] माता तथैवाग्निर्गुरुरात्मा च पञ्चमः ।
यस्यैते पूजिताः पार्थ तस्य लोकावुभौ जितौ ।। इति च ।
( म० भा० ३।१५९।२४ )

**अभियुक्तवचोऽपि[13]—**

लोकसाधारणैर्धर्मैर्नावमान्यो गुरुः शिवः ।
चतुश्चरणसाधर्म्यादटव्यां मृगराडिव ।। इति[14] ।

---

[1]कामराजसन्तानेऽपि दिव्यपञ्चकं समानमेवेति तत्र तत्र स्पष्टम् । ततः पप-कौकुकागनाश्रीसंज्ञान्[15] दिव्यान्[16] सर्वान् संपूज्य, ससगपिमगणविधिसंज्ञान् सिद्धान् संपूज्य, नतुसुखदिविसंज्ञान्[17] मानवगुरून् संपूजयेत् । यथा दीपकसन्ताने श्रीमती लोपामुद्राऽगस्त्यपत्नी प्रधानभूता; विनष्टसन्तानं पुनरुत्थाप्य प्रवर्तयतीति कृत्वा सा

---

१. मातृगुप्तदेवः–ग. । २. 'सं' नास्ति–ख. ङ. । ३. तेनाङ्गीकृतस्तेजोदेवः श्रीवासु–घ. । ४. 'महा' नास्ति–ख. ङ. । ५. एतत्सर्वं श्रीगुरुवक्त्रादवगन्तव्यम्–घ. । ६. म्पर्यादाहृतः–ख. ङ. । ७. अनादरेण–ख. घ. ङ. । ८. एतदुक्तं–ख. ङ. । ९. त्तमस्य–मु. । १०. नामपि लब्धविद्याः–मु । ११. पापाः खलास्ते व्रजन्त्यप्रतिष्ठाम्–घ. । १२. 'पिता····इति च' नास्ति–ख. ङ. । १३. अत्राभियुक्तवचनोऽपि–ख. ङ. । १४. 'इति' नास्ति–ख. ङ. । १५. भा–ग., मा–छ. । १६. 'दिव्यान्' नास्ति–ग., देवान्–क. । १७. देवी–ग. ।

1. नास्त्येषोऽनुच्छेदो ज्ञानदीपविमर्शिन्याम् ।

(य[1]?अ)त्रानुक्तं यद्यपि[2] गुरुपङ्क्तिसमाराधनस्थानम्, तथाप्येतद्विद्या-विषये शास्त्रान्तरोक्तं स्थानमादर्तव्यम् । तथा चाभियुक्तोक्तिः[3]—"प्राङ्मध्य-योन्योः पुनरन्तराले संपूजयेत् प्राग् गुरुपादपङ्क्तिम्" ( प्र० सा० ९।१४ ) इत्यादि । एवमङ्गविद्योद्धारस्तदाराधनं[4] तत्स्थानं[5] च । तदुक्तं **श्रोलक्षणसारे**[6]–

जातवेदसि भूतेशे यातुधाने समीरणे ।
देवीमौलौ[7] चतुर्दिक्षु क्रमाद् हृदादिकं[8] यजेत् ।। इति ।

"ततः कामेश्वरी नित्या" ( १।२६ ) इत्यादिनित्यानां[9] प्रसक्तेस्तदर्चा[10] कथिता । स्थानप्रकारौ सम्प्रदायतः । "तर्पणानि निवेदयेत्" ( १।१८३ ) इत्युक्त्यन्यथाऽनुपपत्त्याऽर्घ्यशुद्धिरुपदिष्टा । सा च शास्त्रान्तरादायाता । तथा **चाहुराचार्याः**—

स्वच्छन्दभैरवे तन्त्रे यद्यपीदमुदाहृतम् ।
तथापीह समानत्वात् सिद्धान्तेऽप्युपयुज्यते ।। इति[11] ।

( क० क्र० ५०१ )

यथा[12] **लक्षणसारे**[13]ऽर्घ्यशुद्धिविधानम्—

कृतमण्डलपर्यन्ते हे(तुय?तोर्य)[14]जनमारभेत् ।
पशुवेश्मोषिताशु(द्धिः?द्धि)शोधनायामृताय च ।। इत्यादि ।

"सर्वबाह्यतः"[15] ( २।७४ ) इत्येतत्कुलचक्रकल्पनसूचनम्[16] । "पूजयेद्रात्रि-समये कुलाचारक्रमेण यः" ( २।७५ ) इत्येतत्कारणोपादानबीजम् ।

---

प्रधानभूता तत्र, तथाऽत्रापि क्लीमानन्दसंज्ञः[17] कामदेवो रतिभर्ता विनष्टसन्तानं पुनः पुनः प्रवर्तयतीति तन्नामाङ्कितमिदं सन्तानम् ।

---

१. यत्रानुरक्तं–ग. घ. । २. 'यद्यपि' नास्ति–ख. ङ. । ३. 'तथा चाभियुक्तोक्तिः' नास्ति–ख. । ४. द्धारात्तदा–ख. ङ., रात्तत्तदा–ग. । ५. तत्तत्स्थानं–ख. ङ. । ६. सागरे–ग. । ७. देवमौ–ख., तव मौ–घ. । ८. हृदयाद्या यजेत् क्रमात्–ख. ङ. । ९. दिना नित्यादीनां–ग. घ. । १०. दर्चादि–ख. ङ. । ११. 'इति' नास्ति–ख. ङ. । १२. तथा–घ. ङ. । १३. लक्ष्यसारे–ग. । १४. हेतुमाचार्य आरभेत्–ङ. । १५. 'सर्व····सूचनम्' नास्ति–ख. ङ. । १६. 'कल्पन' नास्ति–ग. । १७. बा–ग. ।

**संस्मृता पापहरणी जप्ता मृत्युविनाशिनी ॥ १९ ॥**
**पूजिता दुःखदारिद्र्यव्याधिदौर्भाग्यघातकी ।**
**हुता विघ्नौघशमनी ध्याता सर्वार्थसाधकी ॥ २० ॥**

"मयाऽप्येतद्व्रतस्थेन क्रियतेऽद्यापि सुव्रते । जपस्त्रिसन्ध्यमेतस्यास्तदेतत्पद-सिद्धये ॥" (४।६९) इत्येतत्सन्ध्यानुष्ठानमूलम् । "गणेश" ( १।१ ) इति सूत्रं सूर्यार्घ्यदाननिमित्तम् । "एतेनैव" ( २।६४ ) इत्येतत् स्नानपानादि-सूचनम् । "अथवा येन" ( ४।५१ ) इत्येतन्मूलविद्याध्याननिदानम् । "एवं पूजाविधानं तु कृत्वादौ साधकोत्तमः" (१।१८३) इति पूजाविधानान्यथाऽ-नुपपत्त्या पूजारम्भकालप्राप्ततालत्रयकल्पनम् "तालत्रयं पुरा दत्त्वा सशब्दं विघ्नशान्तये" ( २७ ) इति **श्रीपरात्रिंशिको**क्तनीत्या समुदितमित्यशेष-मनवद्यम् ॥

**भवबन्धविमोचिनी** । एवं पारम्पर्येण सह विज्ञातेयमवगता त्रैपुरी विद्या शब्दतोऽधिगताऽर्थतो विज्ञाता च संसारबन्धात् साधकं मोचयतीत्यर्थः । अस्याः संसारमोचकत्वे युक्तिमाह—**संस्मृते**ति । **पापहरणी** । **पापं** पुण्यस्याप्युपलक्षणम् । परमार्थवित् पुण्यपापैर्न संस्पृश्यते । तदुक्तं

एवं पारम्पर्यक्रमं गुरुमुखेन ज्ञात्वैव य एनामभ्यस्यति चेदैहिकामुष्मिकं फल-मिति प्रकाशविमर्शसमरसानन्दलक्षणं कैवल्यमिहानुभवति भवबन्धविमोक्षणीत्युच्यते । संस्मृता पापहरिणीत्यादि ध्याता सर्वार्थसाधकीत्यन्तेन स्मरणजपपूजाहोमध्यानानां पृथक् फलं दर्शयति ॥ १८–२० ॥

एवमेनां विद्यामभ्यस्यति चेद् **भवबन्धविमोक्षणी** त्युच्यते । **संस्मृता पापहरिणी**त्यादिना जपपूजाहोमध्यानानां पृथक् पृथक् फलमर्थिनां प्रकाशयति ॥ १८–२० ॥

१. हन्त्रीयं–सख. । २. जरा–सख. । ३. दौर्भाग्य–से. ब. सक. ख. । ४. दारिद्र्य–से. ब. सक. ख. । ५. तिनी–वाग. से. सक. ख. । ६. भूत–सख. । ७. ख्याता–सख. । ८. धिका–वाग. से. सख., धनी–सक. । ९. 'गणेश''''निदानम्' नास्ति–ख. ङ. । १०. 'एवं' नास्ति–ख. ङ. । ११. 'सह' नास्ति–ख. ङ. । १२. 'संसारबन्धात्' नास्ति–ख. ङ. । १३. 'पाप''इति' नास्ति–ख.ङ. । १४. मुखात्–घ. । १५. 'य' नास्ति–क.ग. । १६. 'साधकी''''त्रितय' नास्ति–छ. । १७. 'पृथक्' नास्ति–ख. ।

**एतस्याः शृणु देवेशि बीजत्रितयसाधनम् ।**

**धवलाम्बरसंवीतो[1] धवलावासमध्यगः[2] ।। २१ ।।**

**पूजयेद् धवलैः[3] पुष्पैर्ब्रह्मचर्यरतो नरः ।**

**धवलैरेव नैवेद्यैर्दधिक्षीरौदनादिभिः ।। २२ ।।**

---

**श्रीपरमार्थसारे—**

हयमेधशतसहस्राण्यपि कुरुते ब्रह्मघातलक्षाणि ।

परमार्थविन्न पुण्यैर्न च पापैर्लिप्यते[4] विमलः ।। (७०) इति ।

।। १८–२० ।।

अस्या विद्यायास्त्रयाणां बीजानां प्रत्येकमाराधनं वक्तुमुपक्रमते—**एतस्या**[5] इति । तत्र प्रथमं वाग्भवबीजसाधनमाह—**धवलेति** । **धवलाम्बरं** शुक्लवस्त्रम् । धवलावासः सौधगृहम् । **ब्रह्मचर्यरतो** वनिताजनं वागधि[6]देवतेति मन्यमानः । अष्टाङ्गमैथुनवर्जित इत्यर्थः । उक्तं च—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।

संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।।

---

एतस्याः शृणु देवेशि बीजत्रितयसाधनमिति । चतुर्थपटलारम्भे महादेव्याः पृथक् पृथग् एकैकबीजसाधनं कथमपि पृष्टस्तत्प्रश्नस्योत्तरं दातुमिदानीमेवावसर इति कृत्वा प्रत्येकबीजसाधनप्रकारं कथयामि, तच्छृण्विति भावः । धवलाम्बरेत्यारभ्य संपूज्य परमेशानीत्यन्तेन वाग्भवबीजसाधनवेलायां[7] वेषवस्त्राभरणवासआसनपूजोपकरण-धूपगन्धपुष्पनैवेद्यमूर्तिध्यानानां श्वेतरूपता कार्या । ब्रह्मचर्येणापि भवितव्यमिति भावः । ध्यानस्य श्वेतफलत्वं सरस्वतीरूपत्वं च श्रीमद्दण्डकोक्तप्रकारेण परिकल्पनीयम् ।

**एतस्याः शृणु देवेशी**त्यादि । ''एकैकाक्षरसाधनं वद'' ( ४।१ ) इति प्रागुक्तस्योत्तरं[8] देवीस्वरूपानुभावप्रकाशपूर्वकं यदि श्रोतुस्तात्पर्याधिक्या(त्[1]सप्रयो)जनमितीदानीमवसरप्राप्ति प्रति बीजसाधनश्रुतिः श्राव्यते । **धवलाम्बरेत्यादि वागीश्वरीं परामित्यन्तं श्रीदण्डकान्तर्वसत्** ''सुस्फुट-स्फटिक[10]'' (त्रि० द० १९) इत्यादिवाक्य[9]प्रकटितस्फटिकाक्षसूत्रपुस्तकधारिकरयुगलां वाग्बीजक-

---

१. संयुक्तो–सख. । २. म्बर–वाक. ख. अ. । ३. पल्लवैः–ब. । ४. पापः स्पृश्यते–मु. । ५. अत्र–ख. ङ. । ६. धिपेति–ग. घ. । ७. वाग्रूप–क. । ८. प्रागनुक्त–ङ. । ९. 'वाक्य' नास्ति–ङ. । १०. 'क' नास्ति–ङ. ।

1. अत्राक्षरत्रयस्य त्रुटिः सर्वासु मातृकासु ।

**सङ्कल्पधवलैर्वापि यथाकामं[1] यथा लभेत् ।**

**संपूज्य परमेशानि ध्यायेद् वागीश्वरीं पराम् ।। २३ ।।**

**बीजरूपामुल्लसन्तीं ततोऽनङ्गपदावधि[2] ।**

**[3]ब्रह्मग्रन्थि विनिर्भिद्य जिह्वाग्रे दीपरूपिणीम्[4] ।। २४ ।।**

---

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । इति ।

( द० स्मृ० ७।३१–३२ )

**संकल्पधवलैर्वा**ऽपीति । धवलोपकरणवैकल्ये भावितश्वैत्यैः । **वागीश्वरीं परा**मिति । महास्फुरत्तां पूर्णाहंविमर्शरूपामनाहतलक्षणां वाचमित्यर्थः । उक्तं च—"अनाहतशीर्ष्णी वाग् जुषाणा सोमस्य तृप्यतु" (तै० सं० ३।२।५।१) इति ।। २१–२३ ।।

[5]अन्तर्मातृकोदयप्रतिपत्तिमाह—बीजेति । **बीजरूपां** वाग्भवबीजाधिष्ठानमहाशक्तिरूपाम् । **उल्लसन्तीं** ज्योतीरूपतया पश्यन्त्यादिक्रमेणोर्ध्वं

---

तद्यथा—"[6]सुस्फीतस्फटिकघटिताक्षसूत्रनक्षत्रनि[7]चयचक्रपरिवर्तनविनोदसंदर्शितनिशा[8]समयचारे सुचारे महाज्ञानमयपुस्तकं हस्तपद्मेऽत्र वामे दधत्या भवत्या स्फुटं[9] वाममार्गस्य सर्वोत्तमत्वं समुपदिश्यते" (त्रि० द० १९) इति ( सूचितम् ? ) । तत्रायं भावः—यथा मूलग्रन्थोक्तदेवीमूर्त्या भुजे वर्णे शरीरे धार्ये विशेषः । [1]द्विभुजा श्वेतवर्णा बालारूपा पुस्तकाक्षमालाधारिणी ध्येयेति भावः ।। २१–२३ ।।

रक्तकलेवरां सकलां सितसरोजासनवसनसुमनोऽनुलेपनाभरणाभिरामां सुसितादिदेवीदत्त[2]वलक्षवेषो जितेन्द्रियः साधको न्यासेनात्मसात्कृत्वा सधूपदीपनैवेद्यादिभिर्धवलैश्च मस्तके हृदि च संपूज्य देव्यात्मान्तरप्यन्तर्यागेन वक्ष्यमाणेन परां निष्कलां कुण्डलिनीं तेजोरूपां वागीश्वरीमभ्यसेदित्युपक्रमाभिप्रायः ।। २१–२३ ।।

---

१. कालं–ब., कामफलप्रदाम्–वाग. से. सक. ख. । २. चिदानन्दप्रबोधिनीम्–वाक. ख., ततः स्वाङ्गपदावधि–सख. । ३. ब्रह्मरन्ध्रं–भ. । ४. कारिणीम्–सख. । ५. 'अन्तः' नास्ति–ख. ङ. । ६. सुस्फुट–त्रि. द. । ७. 'नि' नास्ति–त्रि. द. । ८. समयाचारेषु–छ. । ९. तदा सुस्फुटं–त्रि. द. ।

1. "अत्र प्राञ्चः—द्विभुजा श्वेतवर्णा बालारूपा पुस्तकाक्षमालाधारिणी ध्येयेत्याहुः" (से. पृ. १४३) ।

2. धवलवेष इत्यर्थः । "वलक्षो धवलोऽर्जुनः" ( १।५।१३) इत्यमरः ।

स्फुरन्तीम्[१] । **अनङ्गपदावधि** । अनङ्गोऽशरीरः, अकुल[२]स्थानगतः परमशिवः । अनङ्गशब्दोऽशरीर इति रहस्यम् । तदेव **पदम्**, पद्यते ज्ञायते[३] मुमुक्षुभिरिति । तदवधि तत्पर्यन्तम् । **ब्रह्मग्रन्थि विनिर्भिद्य**त्यस्यायमर्थः—प्रथमं मूलाधारगत[४]चतुर्दलकमल[५]कर्णिकागतेच्छाज्ञानक्रियाशक्त्या[६]त्मकत्रिकोणस्थानात् तद्घटं[७] विनिर्भिद्येति । अत्र रहस्यागमसार[८]सम्प्रदायतत्त्वविदो महायोगिप्रवराः **साम्बमिश्राः**—"या सा मित्रावरुणसदनादुच्चरन्ती" (सा० प० ५) इति । अस्यार्थः साम्बपञ्चाशिकाविवृतिरचने श्रीक्षेमराजाचार्यकृते द्रष्टव्यः ।

[1]बीजरूपामित्यारभ्य चिन्तयेदित्यन्तस्यायमर्थः—एवं सकलां वागीश्वरीं संपूज्य मृणालतन्तुवत् सूक्ष्मरूपिणीमपि स्वभासाक्रान्तजगत्त्रयां शरच्चन्द्रसमुच्चयसंकाशामतुलप्रभामग्निवर्णां वाग्भवबीजरूपां मूलवलयकमलकर्णिकानिषण्णां शृङ्गाटपीठोदरमध्यस्थितनिश्शेषबीजबिन्दुस्फुटनोद्भवामृज्वीभूतां मध्यमार्गेण चक्रपञ्चकनिर्भेदेन ब्रह्मरन्ध्रं प्रविश्याकुलसहस्रारकमलकर्णिकानिषण्णचिन्मयकलाषोडशभरितपूर्णेन्दुबिम्बमध्यन्यस्तशृङ्गाटपीठोदरगतपरमगोलकब्रह्मरन्ध्रग्रन्थि विनिर्भिद्य गलत्क्षीरधारोपमसुसितसप्तषष्टिवर्णपदवाक्यरूपनिरन्तरनिबिडसुधाधारया परिप्लुतशरीरां धारया सह लम्बिकारन्ध्रपदेन तालुमूलमाविश्य जिह्वामापूर्य तदग्रेण बहिर्निपतन्तीं दीपशिखाकारां शक्तिं ध्यायन् प्रथमबीजमभ्यसेदिति[९] । प्रतिपदं च विविच्य दर्शयामः । जिह्वाग्रे ध्यायेदिति संबन्धः । कामिति वि(ष?श)ये[2] परां वागीश्वरीमिति संबध्यते ।

**बीजरूपां** वाग्बीजज्योतिर्मूर्तिम् । **उल्लसन्तीम्**[१०] उद्दीपनानन्तरं चक्रवृन्दनिर्भेदनायोर्ध्वं स्फुरन्तीम् । **ततः** प्रकृतशृङ्गाटपीठात् । **अनङ्गपदावधि** । अनङ्गवपुरनवयवो वा तस्मात् निष्कलोऽनङ्गः प्रकाशक ( स्वंतावत् ? स्वभावः ) परमशिवः, स वा पदम्, संपद्यत इति पदम् । तदेवाकुलबिन्दुरूपमवधीरितमतः प्राप्य पूर्वं नास्तीति वाग्भवोपलक्षिताया अस्या विमर्शशक्त्या इत्यर्थः । **ब्रह्मग्रन्थि** तस्य परब्रह्मतनोः शिवस्य ग्रन्थिरूपं तत्परबिन्दुं गोलकाकारम् । **विनिर्भिद्य** समरसीभावेन तादात्म्यं प्राप्य । तस्मादूर्ध्वगमावधेः शिवस्थानादाज्ञामागत्य ।

१. गच्छन्तीम्–ख. ङ. । २. रः कुल–ग. घ. । ३. 'ज्ञायते' नास्ति–ख. ङ । ४. गत' नास्ति–ख. ङ. । ५. पद्म–ग. घ. । ६. 'शक्त्या' नास्ति–ख. ङ. । ७. तद्घट्टं–ख., तद्बुद्धि–ङ. । ८. 'सार' नास्ति–ख. । ९. 'सेदिति' इत्यतः पुनरारम्भो घमातृकायाः, 'सेदिति भावार्थः' इति तत्रत्यः पाठः । १०. उत्था–ङ. ।

1. अग्रिमव्याख्यानुगुण्याय 'ध्यायेद्वागीश्वरीमित्यारभ्य' इति पाठेन भाव्यम् ।
2. विशये संशये इत्यर्थः ।

**दीपरूपिणीं** प्रकाशैकरूपिणीम् ।

[1]या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते ॥
... ... ... ... ... ... ... ... ... ...

एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती [१]झटित्यन्तर्ज्ञानशक्तिर्निगद्यते ॥
एवंभूतमिदं वस्तु भवत्विति यदा पुनः ।
[२]जाता तदैव तत्तद्वत् कुर्वन्त्यत्र क्रियोच्यते ॥
एवमेषा [३]त्रिरूपापि पुनर्भेदै[४]रनन्तताम् ।
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी ॥

परामिति निष्कलरूपिणीमिति भावः । [५]ज्योतिस्तन्तुरूपामिति यावत् । बीजरूपामिति वाग्भवबीजरूपिणीम् । तां स्मृत्योत्थापयेदित्यर्थः । उल्लसन्तीमिति । उपरिततपञ्चचक्र-भेदेन ऊर्ध्वं स्फुरन्तीमित्यर्थः । तत इति प्रकृताच्छृङ्गाटपीठादित्यभिप्रायः । अनङ्ग-पदावधीति । अनङ्गोऽङ्गरहितः । अङ्गमिति शरीरं करचरणादिलक्षितम्, तन्नास्ति यस्य परमशिवस्य प्रकाशैकस्वभावस्येति (सं[६] ? स) भवत्यनङ्गोऽशरीरः परमशिवः । स एव पद्यत इति पदम्, विश्वस्य प्रापणाद्वा पदम् । मर्यादेति भावः । [2]ब्रह्मरन्ध्रं विनिर्भिद्येति ब्रह्मणो ग्रन्थिं ब्रह्मग्रन्थिं प्रकाशैकस्वभावस्य ब्रह्मणो ग्रन्थिं गोलकाकारां **जिह्वाग्रे** विश्रान्तिस्थाने । **दीपरूपिणीं** दीपवदुज्ज्वलां चिन्तयेत् । वाग्भवरूपिण्याः शक्तेरुद-( ये मूलानां ? यो मूलाधारे ), मूलादिब्रह्मग्रन्थिपर्यन्तं व्याप्तिस्थानम्, जिह्वाग्रं विश्रान्तिस्थानम् । कोऽर्थः ? मूलाधारे कमलकर्णिकाश्रयशृङ्गाटोदरस्फु[७]रदशेषतत्त्वभूतबिन्दुस्फुटनोद्भवां वाग्भव-बीजात्मिकां वागीश्वरीं परां निष्कलां शरच्चन्द्रचन्द्रिकासन्निभामथवा दीपशिखाभासुरामृज्वीभूत-मृणालतन्तुतनीयसीमपि स्वभावसंक्रान्तनिखिलभुवनाभोगां सुषुम्नासुषिरेण पञ्च चक्राणि विदार्य उद्गत्य ब्रह्मबिलमुल्लङ्घ्य षोडशान्तगतसहस्रा[८]रारविन्दबीजकोशकाशदशानन्दसंविन्मय-

१. जगत्यत्र–मु. । २. ज्ञातं–ग., ज्ञाता–घ. ङ. । ३. द्वि–मु. । ४. रनेकताम्–मु. । ५. 'ज्योतिस्तन्तुरूपामिति यावत्' नास्ति–घ. । ६. 'संभव''''मर्यादेति' नास्ति–ग. छ. । ७. स्फुटितो–ङ. । ८. सहस्राम्बरार–ख. ।

1. तुलनीयम्—शिवसूत्रविमर्शिनी, पृ. १००–१०१ ।
2. अत्र मातृकासु 'ब्रह्मरन्ध्रम्' इत्येव पाठो दृश्यते, व्याख्यानुरोधात्तु 'ब्रह्मग्रन्थिम्' इति पाठेन भाव्यम् । "ब्रह्मग्रन्थिपदं ब्रह्मरन्ध्रपरमिति केचित् । प्राञ्चस्तु पुरश्चरणकाम्यप्रयोगयो-रसंसर्गाग्रहादिदं सर्वमेकप्रयोगत्वेन व्याचक्षते" (पृ. १४४) इति सेतुबन्धे ।

तत्र तावत्समापन्ना[1] मातृभावं विभिद्यते ।
द्विधा[2] च नवधा चैव पञ्चाशद्धा च मालिनी ॥
बीजयोन्यात्मकाद् भेदाद् द्विधा बीजं स्वरा मताः ।
कादयश्च[3] स्मृता योनिर्नवधा वर्गभेदतः[4] ॥
बीजमत्र शिवः शक्तिर्योनिरित्यभिधीयते ।
वर्गाष्टकविभेदेन माहेश्वर्यादि चाष्टकम् ॥
प्रतिवर्णविभेदेन शतार्धकिरणोज्ज्वला ।
रुद्राणां वाचकत्वेन तत्संख्यानां निवेशने ॥ (३।५-१३,१५)

इति **श्रीमालिनीविजय**निरूपितनीत्या पारमेश्वरी परा वाक् प्रसरन्ती इच्छाज्ञानक्रियाशक्ति[5]रूपतां ( श्रित्वा ) बीजयोनिवर्ग[6]वर्ग्यरूपां शिवशक्ति-माहेश्वर्यादिवाचिकामादिक्षान्तरूपां मातृकात्मतां[7] श्रित्वा [1]जिह्वाग्रान्निर्गच्छ-

शक्तिम् । तन्त्वग्रेण[8] भित्वा प्रवेशयेदिति भावः । तस्य गोलकाकार(त्व)मुक्तमुत्तरषट्के—

कदम्बगोलकाकारं तं कामं बिन्दुरूपिणम् ।

जिह्वाग्र[9] इति विश्रान्तिस्थानं सूचितम् । दीपरूपिणीमिति शक्तितन्तोः प्रभाया दीपप्रभोपमत्वं दर्शितम् । एवं वाग्भवरूपिण्याः शक्तेरुदयो मूलाधारे, मूलादिब्रह्म-रन्ध्रान्तं व्याप्तिः, विश्रान्तिस्तु जिह्वाग्रे । एवं वाग्भवबीजस्य साधनप्रकारः । ब्रह्मरन्ध्र-मिति पाठे सुगममेव[10] ॥

षोडशकलापूरितपूर्णेन्दुमण्डलान्तमुल्ला(स?स्य) कुलशृङ्गाटविष्टरोपविष्टमुपदिष्टब्रह्मग्रन्थि-संज्ञकं परामृततेजःसमृद्ध[11]कदम्बगोलकाकारं परबिन्दुं विगाह्य प्रविश्य ततः क्षीरधारावद-मृतधारामूर्त्या स्रवन्त्यां तदनुक्रान्तसप्तषष्टिवर्णक्रमनादिन्या परिप्लुतसकलकुलाधारया लम्बिका-रन्ध्रेण तालुमूलमवगाह्य जिह्वामापूर्य तदग्रेण बिन्दुभिर्निस्सरन्तीं परामृततेजोवाङ्मयीं मूलशक्त्या[12] व्यवधानेन यावत्फलोदयं ध्यायेत् । इति वाग्भवबीजसाधनम् ।

१. पन्न–घ. । २. द्विविधा–ख. ग. ङ. । ३ कादिभिश्च–मु., मुद्रितपुस्तके पङ्क्ति-व्यत्यासोऽत्र दृश्यते । ४. वादतः–ग. । ५. 'शक्ति' नास्ति–ख. ङ. वि. । ६. 'वर्ग' नास्ति–ग. । ७. कामाश्रित्य जि–ख. ङ., काक्षरतां स्थित्वा–ग. । ८. तथाऽग्रेण–क. ग. छ. । ९. 'जिह्वाग्र' नास्ति–क. ग. छ. । १०. 'एव' नास्ति–क. ग. घ. । ११. समृद्धकं–ङ. । १२. शक्ति–ङ. ।

1. जिह्वाग्रान्निर्गच्छन्तीं दीपरूपिणी, प्रकाशैकरूपिणीति यावत् । ''न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'' ( १।१२३ ) इति वाक्यपदीय-वचनमत्रोपोद्बलकम् ।

**चिन्तयेन्नष्टहृदयो ग्राम्यो मूर्खोऽतिपातकी ।**
**शठोऽपि यः पादमेकं[1] सुस्पष्टं वक्तुमक्षमः ॥ २५ ॥**
**जडो मूकोऽतिदुर्मेधा[2] गतप्रज्ञो[3] विनष्टधीः ।**
**सोऽपि संजायते वाग्मी वाचस्पतिरिवापरः ॥ २६ ॥**
**सत्पण्डित[4]घटाटोप[5]जेताऽप्रतिहतप्रभः ।**

---

(न्तीं?न्ती,तां) चिन्तयेदिति भावः । **चिन्ता** पुनः[6] पुनर्निभालनम् । **नष्टहृदयः** । [7]विश्वप्रतिष्ठास्थानत्वाच्चित्प्रकाशो हृदयम् । उक्तं च—"सर्वेषामेव जन्तूनां संविद्धृदयमुच्यते" इति । **ग्राम्यः** पशुकर्मरतः । **मूर्खः** सदसद्विवेकानभिज्ञः । **अतिपातकी** निषिद्धैकसेवी । **शठः** वञ्चकः । **जडः** अनवहितः । **मूकः** अस्फु[8]रितवाक् । **अतिदुर्मेधाः** अतिशयेन दुर्बुद्धिः[9] । **गतप्रज्ञो** गत[10]स्थिरप्रज्ञानः । **विनष्टधीः** अनुत्पन्नधीः[11] । **पण्डिताः** पण्डा सम्यक्तत्त्वदर्शिनी प्रज्ञा संजाता

---

एवं चिन्तयेन्नष्टहृदय इत्यारभ्य सर्वज्ञो देवि जायत इत्यन्तः श्लोकसमुदायो वाग्भवबीजसाधनफलवचनः स्पष्टार्थः । तत्रास्पष्टार्थानि पदानि व्याकुर्मः । नष्टहृदयः [1]नष्टधैर्यः । ग्राम्यः कामपरवशीकृतः । मूर्ख इति सदसद्विवेचनाकुशल इत्यर्थः । पातकीति स्वधर्मप्रच्युत इति भावः । शठोऽपीऽति कृत्रिमपर इत्यर्थः । जडो निश्चेष्टः, अलस इति यावत् । अतिदुर्मेधा इति । अश(ब्द?क्य)संपाद्यबुद्धिरित्यर्थः । गतप्रज्ञ इति । नैसर्गिकप्रज्ञोऽपि गुरुदेवताद्यवमाननान्नष्टप्रज्ञो भवति यस्तथाविध इत्यर्थः । विनष्टधीरिति । अधिगतार्थावधारणाकुशलबुद्धिरित्यर्थः । सत्पण्डितघटाटोपजेताऽप्रतिहतप्रभ इति । सन्तः पण्डिताः सत्पण्डितास्तेषां घटा समूहः[5], तस्य[12] आटोपोऽवलेपः, गर्व इति यावत् ।

**नष्टहृदय** इत्यादि **जायत** इत्यन्ताः फ(ले?ल)वचनाः । ( दिसंशयसाहानियमा महति प्रीयन्ते ? ) । **नष्टहृदयो** नष्टविषयधैर्यः । **ग्राम्यो** दुष्कामोपभोगाधीनः । **मूर्खः** सदसद्विवेकाकुलितः । **पातकी** स्वधर्मच्युतः । **शठः** कृत्रिमः । **जडः** अलसः । **अतिदुर्मेधा** यस्मिन् बुद्धिः संपादयितुं यत्नतोऽप्यश(क्ता?क्या) सोऽतिदुर्मेधाः । **गतप्रज्ञो** गुरुदेवताद्यवमानेन

---

१. पदं स्पष्टमक्षरं–वाग. से. सक. ख. । २. मूकोऽपि–वाक. ख., मूर्खोऽति–वाग., मूर्खोऽपि–अ. । ३. ज्ञोऽपि नष्टधीः–वाक. ख. । ४. पाण्डित्य–अ. ब.सख. । ५. समूहस्य–सख. । ६. 'पुनः' नास्ति–ख. ङ. । ७. 'विश्व……उक्तं च' नास्ति–ख. ङ. ८. अस्पष्ट–ग. । ९. दुःसंपातबुद्धिः–ख. घ. ङ. । १०. 'स्थिर' नास्ति–ख. ङ. ११. अनुपपन्न–ख. ङ. । १२. 'तस्य' नास्ति–क. ग. छ. ।

1. 'त्यक्तधैर्य इत्यन्ये'' ( से. पृ. १४४ ) ।

**सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित् ॥ २७ ॥**[1]

**वातोद्धतसमुद्रोर्मिमालातुल्यैरुपन्यसेत् ।**[2]

येषां ते पण्डिताः । **घटा** समूहः । **आटोपो** गर्वः । **अप्रतिहतप्रभ** आरम्भ-मध्यविश्रान्तिदशास्वस्खलितवक्त्रतेजा इत्यर्थः । अत्राभियुक्तवचनम्—

इति निगदितवानसौ महात्मा परिकरबन्धगृहीतवक्त्रतेजाः ।[3]
अकथयदिदमज्ञतोपशान्त्यै परमपदैकविबोधकं वसिष्ठः ॥ इति,

( यो० वा० २।२।२८ )

यत्कथ्यते हि हृदयङ्गमयोपमानयुक्त्या गिरा मधुरमुग्धपदार्थया च ।[4]
श्रोतुस्तदङ्ग हृदयं परितो विसारि[5] व्याप्नोति तैलमिव वारिणि वार्य[6] शङ्काम् ॥

( यो० वा० ३।८४।४५ ) इति च ।

**सत्तर्केति**[7] । आगययुक्त्यनुभवोपेतः **सत्तर्कः** । **सारशब्द** उत्कर्षवाची ।

---

स्वयमप्रतिहत(स्व?प्र)भावः सन्नेव तस्याटोपस्य जेता भवतीत्यर्थः । सत्तर्कपदवाक्यार्थ-शब्दालङ्कारसारविदिति । [1]सन्तस्तर्काः सत्तर्काः, सन्ति पदानि सत्पदानि, सन्ति वाक्यानि सद्वाक्यानि, सन्तोऽर्थाः सदर्थाः, सन्तश्च ते शब्दाश्चेति सच्छब्दाः, सन्तश्च तेऽलङ्काराश्चेति सदलङ्काराः । तेषां सर्वेषां सारो हृदयं तद्वेत्तीति सत्तर्कपदवाक्यार्थ-शब्दालङ्कारसारविदित्युच्यत इति समासार्थः । प्रमाणानुग्राहकः संभवासंभववचनः सत्तर्कः । ( पदानि यथोक्तलक्षणानि ) । आकाङ्क्षासन्निधियोग्यतावशा(द्विहितै?दन्वितै)-

निसर्गसिद्धाऽपि यस्य प्रज्ञा निर्मूढा स गतप्रज्ञः । **विनष्टधीः** अधिगम्यमानार्थावधारणासमर्थधीः । **घटा** समूहः । **आटोपः** अवलेपः । **अप्रहितप्रभः** अव्याहतप्रभावः । **सत्तर्क** इत्यत्र ( सत् )शब्दः प्रतिपदमलङ्कारपदान्तमनुबध्नाति । **तर्क** ऊहः, उत्प्रेक्षेति यावत् । **पदानि** यथोक्तलक्षणानि । आकाङ्क्षासन्निधियोग्यतावशादन्वितैकार्थप्रतिपादकसमुदायो **वाक्यम्** । शब्दप्रतिपाद्या **अर्थाः** । [2]जातिरू(पो?पको)पमानादयोऽ**लङ्काराः** । तेषां हृदयं सारं वेत्तीति सारवित् । ( **तर्काः** )

---

१. षट्तर्क-वाक. ख. । वाताहत-वाग. अ. से. सक., वातोद्भूतोर्मिमालाभ-भारतीभिरुपन्यसेत्-सख. । ३. निबन्धनं-ग., विदो धनं-ख. ङ. । ४. दुग्ध-ख. ङ. । ५. विसार्य-ख. ङ. । ६. वारि-ख. । ७. 'सत्तर्केति' नास्ति-ख. ङ. ।

1. "सत्पदं तर्कादिषट्के केचिदन्वियन्ति" ( से. पृ. १४५ ) ।
2. "स्वभावाख्यानमुपमा रूपकं दीपिकावृती" ( २।४ ) इति काव्यादर्शे दण्डी ।

**सुकुमारतरस्फाररीत्यलङ्कारपूर्वकैः**[1] ।। २८ ।।
**पदगुम्फैर्महाकाव्यकर्ता**[2] **देवेशि**[3] **जायते ।**
**वेदवेदाङ्गवेदान्तसिद्धान्तज्ञानपारगः**[4] ।। २९ ।।
**ज्योतिश्शास्त्रेतिहासादिमीमांसास्मृतिवाक्यवित्**[5] ।

---

**पदगुम्फैः** पदसमूहैः । **वेदः** कर्मकाण्डम् । **वेदाङ्गं** निरुक्तादि । **वेदान्तः** अध्यात्मभागः । **सिद्धान्तः** शैवशास्त्रम् । **ज्ञान**शब्दो वेदादिषु चतुर्षु संबद्ध्यते । **पारगः** काष्ठां प्राप्तः । **ज्योतिःशास्त्रम्** आर्यभटीयादिः[6] । **इतिहासादिः** भारतादिः । **मीमांसा** पूर्वा चोत्तरा च । **स्मृतिः** मन्वादिशास्त्रम् । **वाक्यानि**

---

कार्थप्रतिपादकपदसमुदायो वाक्यम् । अर्थाः शब्दप्रतिपाद्याः । अलङ्कारा [1]जात्यादयो नाटकाटविपर्यटनपटवः । वातोद्धूतसमुद्रोर्मिमालातुल्यैरुपन्यासैरप्रयत्नेन पदकम्बकरचनासमर्थ इत्यर्थः । सुकुमारतरस्फारवृत्तालङ्कारपूर्वकैरिति । सुकुमारतराश्च ते[7] स्फाराश्चेति सुकुमारतरस्फाराः । के ते? वृत्तालङ्काराः । वृत्तानि वसन्ततिलकादीनि, अलङ्कारा उपमादयः । तत्संबद्धैरित्यर्थः । सुकुमारोऽत्र ललितः । स्फारः स्फूर्तिमानिति यावत् । सिद्धान्तज्ञानपराग इति शैवागमज्ञानपारग[8] इत्यर्थः । इतिहा(सान्यु?स उ)पाख्यानानि । मीमांसा वेदार्थविचारः । स्मृतयोऽष्टादश मन्वादिप्रोक्ताः ।। २४–३३ ।।

यथावदुक्ता वैशेषिकनैयायिकादिसिद्धान्ताः । **पदानि** सुप्तिङन्तपदानि । ( यामकानि ? वाक्यानि ) व्यक्तार्थानि ( रूपाणि परमीमांसा ? पूर्वमीमांसारूपाणि ) । अर्थशब्दालङ्कारा उपमारूप(क)-दीप(क)जात्यादयोऽर्थालङ्काराः पुनरुक्तवदाभासमानानुप्रासयमकचित्रबन्धादयः शब्दालङ्काराः । इत्येतेषां सतां विशिष्टतमानां तर्कादीनां सारो हृदयं तात्पर्यं तद्वेत्तीति सारवित् । **वाताहतेत्यादि** । अयत्नेनातिसुन्दरपदकदम्बकविरचनातिशयचातुर्यं वाताहतसमुद्रोर्मिमालातुल्यम् । **सुकुमारतरस्फाररीत्यलङ्कारपूर्वकैः** । सुकुमारललितस्फारमूर्जितं तत् । ( विद्या ?-**सिद्धा**)**न्तः** शैवागमः । **इतिहास** उपाख्यानानि । **मीमांसा** न्यायेन वाक्यविचारः । **स्मृतयो**ऽष्टादश याज्ञवल्क्यादयः ।। २४–३३ ।।

---

१. वृत्तालङ्कारपूर्वकम्–वाग. से., पूर्वकैः–अ., स्फीत्यालङ्कारपूर्वकैः–सख. । २. गुल्फैः–वाक. ख. अ. । ३. नेदेऽपि–सख. । ४. वेदान्तसिद्धान्तवेदाङ्ग–वाक. ख. ग. । ५. काव्य–ब. । ६. आर्यभट्टादि–ख. ङ., सूर्यभटादि–ग. । ७. 'ते' नास्ति–क. ग. घ. । ८. शैवसिद्धान्त–क. ग. घ. ।

1. जातिः स्वभावोक्तिः । "स्वभावोक्तिश्च जातिश्च" ( २।८ ) इति काव्यादर्शे दण्डी ।

**पुराणरस[1]वादादिगारुडानेक[2]मन्त्रवित् ॥ ३० ॥**

**पातालशास्त्र[3]विज्ञानभूततन्त्रार्थतत्त्ववित् ।**

**विचित्रचित्रकर्मादिशिल्पानेकविचक्षणः ॥ ३१ ॥**

**महाव्याकरणो[4]दार[5]शब्दसंस्कृतसर्व[6]गीः ।**

**सर्वभा[7]षारुतज्ञानी[8] समस्तलिपिकर्म[9]वित् ॥ ३२ ॥**

---

गोष्ठीषु विदग्धैः प्रयुक्तानि पञ्चावयवयुक्तानि । विदितः[10] सर्वत्र । **पुराणम्** अष्टादश-संख्याकम् । **रसवाद**तन्त्रं काकचण्डेश्वरीमतादि । **आदिशब्दो** गन्धयुक्त्यादि-तन्त्रं परामृशति । **पातालशास्त्रं** बिलद्वार[11]प्रकाशकं शास्त्रम् । **विचित्रेति** । आदिशब्देन मयमतादिकं लक्ष्यते । **शिल्पा[12]नेकविचक्षण** इति गिरिस्तम्भो-दधिपानासुरभक्षणेन्द्रपदभ्रंशनादिप्रवीण इत्यर्थः । **महाव्याकरणे**त्यत्र महच्छब्देन[13] महर्षिप्रणीतं महाभाष्यादिकं लक्ष्यते । **सर्वभाषारुतज्ञानी** । सर्वेषां जन्तूनां भाषाज्ञानी रुतज्ञानी च । यथायोग्यं मनुष्याणां भाषा[14] विजानाति, पक्ष्यादीनां[15] विरुतं च जानाति । यदाह पक्षिवाक्यश्रवणप्रतिक्रिययोः कण्वं प्रति[16] **व्यासमुनिः**—

> विश्वामित्रसुतां ब्रह्मन् न्यासभूतां भरस्व वै ।
> कामक्रोधावजितवान् सखा ते कौशिकीं[17] गतः ॥
> तस्मात् पोषय तत्पुत्रीं दयावानिति तेऽब्रुवन् ।
> सर्वभूतरुतज्ञोऽहं दयावान् सर्वजन्तुषु ॥
> निर्जनेऽपि महारण्ये शकुन्तैः परिवारिताम् ।
> आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयम्[18] ॥ इति ।

( म० भा० १।७२।१४ )

---

१. वादविद्यादि–सख. । २. तन्त्र–ब. सख. । ३. सिद्धि–सख. । ४. णादौ च–सख. । ५. सर्व–सख. । ६. सर्वगः–सख. । ७. भूत–ब. । ८. ज्ञान–वाक. ख. । ९. कृत्–वाग. से. । १०. 'विदितः' नास्ति–घ. । ११. प्रवे–ख. ङ. । १२. 'शिल्पा....इत्यर्थः' नास्ति–ख. ङ. । १३. 'महच्छब्देन' नास्ति–ख. ङ. । १४. भाषामपि जा–ग. घ. । १५. दीनामपि रुतं–ग. घ. । १६. 'प्रति' नास्ति–ग. । १७. कौशिको–ख. ग. ङ. । १८. न्यवेशयम्–मु. ।

**नानाशास्त्रार्थशीक्षादिवेत्ता**[1] **भुवनविश्रुतः ।**
**सर्ववाङ्मयवेत्ता च**[2] **सर्वज्ञो देवि जायते**[3] **।। ३३ ।।**
**तथा**[4] **कामकलारूपा**[5] **मदनाङ्कुरगोचरे**[6] **।**
**उदयार्यमबिम्बाभा**[7] **समुज्ज्वलवपुः प्रिये ।। ३४ ।।**

---

**समस्तलिपिकर्मविद्** बहुभेदभिन्नाक्षरविन्यासकर्मापि[8] विजानाति । **नानेति । नानाशास्त्रं** न्यायवैशेषिकसांख्ययोगबौद्धार्हतपाशुपत[9]पञ्चरात्र[10]भरतवात्स्यायनीयादि । **शीक्षा** शिक्ष्यतेऽनयेति[11] वर्णाद्युच्चारणलक्षणम्, शिक्ष्यन्त[12] इति वा शिक्षा वर्णादयः । शिक्षैव **शीक्षा** । दैर्घ्यमागमायातम् । **भुवनविश्रुतो** लोकेषु प्रथितयशाः । **सर्वज्ञो देवि जायत** इति । ईश्वरकल्पो भवतीत्यर्थः ।। २४–३३ ।।

अथ कामराजबीजसाधनमाह—**तथेति** । [1]**तथा** यथा वाग्भवबीजसाधनमुक्तम् । **कामकलारूपा** कामराजबीजसारभूता । शक्तिरिति शेषः ।

---

तथा[13] कामकलारूपेत्यारभ्य एकैवमुभयात्मिकेत्यन्तेन श्लोकसमुदायेन कामराजबीजसाधनप्रकारमुपदिशति । तथा कामकलारूपा मदनाङ्कुरगोचर इत्यस्य यथा पूर्वं वाग्भवबीज[14]साधनावसरे वाग्भवबीजात्मना शक्तिं[15] चिन्तयेदित्युक्तम्, तथा तेनैव प्रकारेण

अनन्तरं **तथा कामकलेत्यादिग्रन्थेन** कामकलादिबीजसाधनं निगद्यते । **तथा** प्राग्वत्, वाग्भववदित्यर्थः । कोणे नित्यमविनाभावेन सन्निहितत्वात् । यद्वा मध्यमपदलोपी समासः । तरुणारुणतरणिबिम्बप्रभेति यावत् । **स्फुरद्दीपशिखाकारा** मूलबिन्दोः कुलबिन्दुपर्यन्तं दीर्घीभवन्निर्मलप्रदीपप्रभाकारा मूलशक्तिरित्यर्थः । प्रातस्तरुणसूर्यव(दि?द)तिरक्ततां त(दा?था) दीपशिखावदूर्ध्वदीप्तिमत्तां वक्तीत्यविरोधः । **बिन्दुधाराप्रवर्षिणी** सूक्ष्मतरशक्तिशिखोष्णाति-

---

१. शस्त्रार्थशिल्पादिवेदवेदाङ्ग–वाक. ख., शस्त्रास्त्रलेख्यादिवेत्ता भुवन–सख. । २. तु–ब. । ३. इतः परम्–"एवमेतन्महेशानि वाग्भवस्य तु साधनम् । ततस्तु शृणु वक्ष्यामि कामराजस्य साधनम् ॥" इत्यधिकः श्लोकः–वाग. से. सक. । ४. यदा–वाक. ख., यथा–सक. । ५. प–सख. । ६. रा–सख. । ७. तरुणारुणबिम्बार्ककिरणाभा महेश्वरि–वाक. ख., तरुणार्धेन्दुबिम्बाभा अरुणाभा महेश्वरी–ब., तरुणारुणबिम्बाभा–अ. सक., उद्यदादित्य–वाग. से., तरुणारुणखद्योत–सख. । ८. भिन्नलिपिन्यासकर्मापि जानाति–ख. ङ. । ९. 'पाशुपत' नास्ति–ख. ङ. । १०. पाञ्च–ग. । ११. शिष्यते–ख. ङ. । १२. शिष्यन्त–ख. ङ. । १३. 'तथा.... दिशति' नास्ति–घ. । १४. 'बीज' नास्ति–क. ग. छ. । १५. क्तिश्चिन्तनीयेत्यु–घ. ।

1. "अत्र प्राञ्चः सार्धैः सप्तभिः श्लोकैरेकं प्रयोगमाहुः । अन्ये तु तथेत्येकेन पदेनैव वाग्भवसाधनधर्मातिदेशं वदन्तस्तावतैव कामराजसाधनमुक्तप्रायं मन्यमाना इतरांशं सर्वमेककाम्यप्रयोगपरत्वेन योजयन्ति" (से. पृ. १४६) ।

**स्फुरद्दीपशिखाकारा[1] बिन्दुधाराप्रवर्षिणी ।**
**समस्तभुवनाभोगकवलीकृतजीविता[2] ॥ ३५ ॥**

---

**मदनाङ्कुरगोचरे । मदनाङ्कुर** इति [1]योनिवलयान्तः स्फुरन् मांसविशेषः तस्य**गोचरे** योनिस्थाने । तस्याः प्रति[3]पत्तिमाह—**उदयार्यमेति** । **उदयः** प्रकटीभावः । **अर्यमा** रविः । **समुज्ज्वलवपुः** [4]अतिदीप्तवपुः । **स्फुरद्दीपशिखाकारा** । **दीपशिखा**शब्देन ज्योतिस्तन्तुर्लक्ष्यते, तदा**कारा**[5] । **बिन्दुधाराप्रवर्षिणी** [6](द्रू?द्रु)त[7]लाक्षाबिन्दु(व)द्रक्तामृतधारावर्षिणी । **समस्तेति** । **भुवनाभोग**शब्देन प्राणिजातं लक्ष्यते । ग्रासीकृतप्राणिजीविता । सर्वं प्राणिजातं[8] काम-

---

मृणालनालान्तः [1]प्रस्फुरद्योनिवलयमदनाङ्कुरस्थाने शक्तिर्महाकामकलारूपतया महाकामराजबीजात्मना चिन्तनीयेत्यर्थः । तरुणारुणबिम्बाभा समुज्ज्वलवपुः प्रिये ! इति । उद्यदादित्यमण्डलप्रभाप्रमोषितकिरणसंहृतिरित्यर्थः । कोऽर्थः ? अति(रि?र)क्ता चिन्तनीयेति यावत् । स्फुरद्दीपशिखाकारेति । मूलाधारादुपरि पर्यस्ता स्वाधिष्ठानादारभ्य ब्रह्मरन्ध्रान्तं[6] प्रस्फुरत्सहस्रदलकमलकर्णिकापर्यन्तं दीपशिखाकारा दीपप्रभावच्चिन्तनीया । मूलशक्तिरिति यावत् । [2]तरुणारुणबिम्बाभा चिन्तनीयेत्युक्त्वा तदनन्तरमेव दीपतापसङ्गविद्रुतचित्सुधामण्डलगतकुलशृङ्गाटविगलदमृतधारां पातयन्ती भवति यदा, तदा **समस्तभुवनाभोगकवलीकृतजीविता** समस्तेषु भुवनेषु शरीरेष्वाभोगाय परिपूरणाय परिपोषणाय प्र(विष्टा?वेशा)य स्वस्वयैकया कलया प्रतिकवलीकृत[10]जीवितात्मसात्कृतचैतन्या । अपि च, **महास्व-**

---

१. ऽमृतधारा—सक. । २. का—सख. । ३. पतिभक्ति—ग. । ४. 'अतिदीप्तवपुः' नास्ति—ख. ङ. । ५. इतः परम्—"मूलाधारादुपरि स्वाधिष्ठानादिक्रमेण ब्रह्मरन्ध्रान्तं निर्मलप्रदीपदण्डाकारा सहस्रदलकमलकर्णिकावधि राजमानेत्यर्थः । बिन्दुधाराप्रवर्षिणीति । बिन्दुधारां सूक्ष्मतरशक्तिशि(वोष्णे?वौष्ण्ये)न विद्रुतचित्शुभ्रांशुमण्डलगताकुलशृङ्गाटबीजगलदमृतबिन्दुधारां पाययन्ती स्थिता" इत्यधिकः पाठः—घ. । ६. भूत—ग. घ. । ७. लाक्षाविरक्ता—ख. ङ. । ८. कालाव—ख. ङ. । ९. वि—क. ग. छ. । १०. जीवात्म—ङ. ।

1. "मदनमन्दिरान्तर्वर्तिमांसविशेषो मदनाङ्कुर इति प्राचां व्याख्यान....." (से. पृ. १४६ ) ।
2. "तेनोद्यदादित्यबिम्बमित्येकमेवोपमानं मन्यमानानां प्राचामादित्यदीपशिखयोः परस्परविरुद्धत्वादुभयतुल्यता कथमित्याक्षिप्य तत्समाधानार्थं व्यवस्थादिकल्पनमपास्तम्" (से. पृ. १४७) ।

**[1]महास्वमहिमाक्रान्तस्वस्थाऽहङ्कृतिभूमिका ।**
**क्रमेण च ततोऽनङ्गपर्यन्तं प्रोल्लसन्त्यपि ॥ ३६ ॥**
**शरीरानङ्गपर्यन्तमेकैवमुभयात्मिका ।**

---

कलावष्टब्धमित्यर्थः । महेति । अस्यायमर्थः—महता स्वमहिम्ना आक्रान्तं सर्वम्, तया आक्रान्त्या हेतुना स्वस्था सुखेन स्थिता । सर्वप्राणिनामहङ्कृतिभूमिकेति। भूमिका अवस्थितिः । एतत्पर्यन्तं कामकलाविशेषणम् । क्रमेणेति । अनङ्गपर्यन्तम् अकुलस्थानगतानङ्गाभिधेयपरमशिवावधि । प्रोल्लसन्तो मूलादकुलशिवावधि तत्तत्स्थानं निर्भिद्य प्रकर्षेणोर्ध्वं स्फुरन्तीत्यर्थः । अपि पुनरर्थे । शरीरेति । शरीरानङ्गपर्यन्तम् । पुनः प्रतिलोममार्गेण सृष्टिरूपेण

---

शिखाकाराऽप्युच्यते, अतः पूर्वापरविरोधान्न निर्णय इति । तदिह विषयभेदेन परिहर्तव्यम् । तरुणारुणबिम्बाभेति प्रभायास्त्वतिरक्ततोदाहरणम्, दीपप्रभेति दीप्तिमत्तायाम् । अतो न विरोध इति । बिन्दुधाराप्रवर्षिणीति । तत्क्षणात् क्वथितसान्द्रलाक्षाद्रवोपमां स्फुरत्स्फुलिङ्गबिन्दुधारामधःशक्तिनादेन रसन्तीमेवोर्ध्वं यान्तीं ध्यात्वेति भावः । समस्तभुवनाभोगकबलीकृतजीवितेति । स्वशक्तिकिरणपाशजालपाशितसमस्तभुवनान्तश्चारिप्राणिनिकायजीवितेत्यर्थः । महास्वमहिमाक्रान्तिध्वस्ताहङ्कृतिभूमिकेति । महास्वमहिम्नाऽहंभावलक्षणस्वात्मेश्वरविमर्शानुसन्धानमयेन [2]ध्वस्तमहत्त्वादिपरिच्छेदाभिमानहेतुकृत्रिमाहङ्कारभूमिकेत्यर्थः । क्रमेण तु ततोऽनङ्गपर्यन्तं प्रोल्लसन्त्यपीत्यन्तस्य

**महिमाक्रान्तध्वस्ताहङ्कृतिभूमिका** महास्वमहिमाक्रान्त्या सर्वात्मेश्वरपरमसामरस्यात्मकपरानन्दानुभावलक्षणापहारं भावसंव्याप्तिविनाशितेदंभावादिपरिच्छिन्नाभिमानहेतुकृत्रिमाहङ्कारभेदभूमिकाक्रमेण मूलाधारारोहक्रमेण **ततो** मूलाद् **अनङ्गपर्यन्तं** परमशिवबिन्दुपर्यन्तम्, एवमनवरतं **प्रोल्लसन्त्यपि शरीरानङ्गपर्यन्तमेकैकमुभयात्मिका** कुलबिन्दोरकुलपर्यन्तमकुलबिन्दोः कुलपर्यन्त-

---

१. कान्ति–अ. सक., क्रान्ति–वाक. ख. ग. । २. ध्वस्ता–अ. वाक. ख., ग्रस्ता–सख. । ३. तु–अ. से. ब. सक., णेति–सख. । ४. पर्यन्तात्–वाक. ख. । ५. द्युतिः–सख. । ६. मेकैक–वाक. ख. सक. । ७. सुभगार्थिका–सख. । ८. अस्यार्थः–ख.घ.ङ. । ९. न्तं कु–ग., न्तोऽकु–घ. । १०. लात् कु–घ. । ११. रेत्यु–घ. । १२. नदिन वमन्त–घ. । १३. ध्वस्ता···· त्रिणेत्र इव दृश्यत इत्यन्तः' नास्ति–ग. । १४. णोपहारं–ख. ।

1. "प्राञ्चस्तु पुरश्चरणं प्रयोगद्वयं च····इमान् श्लोकान् प्रकारान्तरेण व्याचक्षते" (से. पृ. १४८) ।
2. "ध्वस्ताहङ्कृतीति पाठेऽहङ्कृतिशब्देन तत्प्राणिनामहङ्कारा ग्राह्या न पराहन्ता" (से. पृ. १४७) ।

**ततो भवति देवेशि सर्वश्रृङ्गारमानिनाम्[1] ॥ ३७ ॥**

**रागिणां[2] साधको देवि बाधको[3] मदनाधिकः ।**

**तद्दृष्टिपथगा[4] नारी सुरी वा[5] यदि वाऽसुरी ॥ ३८ ॥**

**विद्याधरी किन्नरी वा यक्षनागाङ्गनाऽथवा[6] ।**

**प्रचण्डतरभूपालकन्यकाः[7]　सिद्धकन्यकाः[8] ॥ ३९ ॥**

---

योनिस्थानगतानङ्गशब्दवाच्यकुलपुरुषपर्यन्तमित्यर्थः । **एकैवमुभयात्मिकेति ।** एवमेका कामकलात्मा मध्यबीजाधिष्ठानभूता सृष्टिसंहारात्मना गमागममनुभवन्ती उभयात्मिका परमशक्तिरिति यावत् ॥ ३४–३७ ॥

एतत्साधकस्य फलमाह—**तत इति । सर्वश्रृङ्गारमानिनाम्** आत्मनि श्रृङ्गारं मन्यमानानां सर्वेषामित्यर्थः । **रागिणाम्** इदन्तैकात्मनाम् । **मदना-**

---

क्रमेण मूलाधाराद्यारोहा[9]वरोहणक्रमेण ब्रह्मरन्ध्रं नीता[10] सहस्रारकमलकर्णिकान्तःस्फुरिताधोमुखे कुलेतरसंज्ञाऽकुलबिन्दुरूपाऽनङ्गाख्यपरमशिवपर्यन्तमधश्शक्तिरुल्लसन्ती[11] महाकामराजबीजरूपा ध्यातव्येत्यर्थः । शरीरानङ्गपर्यन्तमित्यस्य तस्मादनङ्गशिवस्थान[12]ब्रह्मरन्ध्रादारभ्य मूलाधारभूमिकावरोहक्रमेण शरीरानङ्गपर्यन्तं कुलसंबन्धिबिन्दुरूपाऽनङ्गाख्यमूलाधारवलयनिलयपर्यन्तं पूर्ववद् ध्यायेत् । एकैवमुभयात्मिकेति । सूक्ष्मतन्तुरूपिणी चिच्छक्तिरेकैव । एवमुभयात्मना अग्नीषोमात्मना द्राव्यद्रावकभावेन[13] चिन्तनीयेति भावः । अधश्शक्तिरग्न्यात्मिका, ऊर्ध्वशक्तिः सोमात्मिकेति यावत् ॥ ३४–३७ ॥

ततो भवति देवेशि इत्यारभ्य वशगा देवि जायत इत्यन्तः श्लोकसमुदायः कामराजबीजसाधनफलवचनः स्पष्टार्थः । चलज्जलेन्दुसदृशा बालार्ककिरणारुणेत्यादि । जलमपि द्रावकद्राव्यात्मकाग्नीषोमकुलाकुलशक्तिजीवेश्वरविभागेनोभयात्मिकापि गमागमाभ्यासपरकाष्ठादृढीभूतनिरपाय[14]समरसीभावैकरसा शक्तिरेकैवेत्यर्थः ॥ ३४-३७ ॥

**ततो भवती**त्यारभ्य **देवि जायत** इत्यन्तः फल(वचन)श्लोकसमुदायः स्पष्टार्थः । **चलज्जलेन्दुसदृशे**त्यादि । जलप्रतिबिम्बितचन्द्रवच्चञ्चला । **बालार्कवदरुणा** दृष्टादृष्टसुन्दरी(रेखाभ ?-

---

१. शालिनी–सक. । २. बाणानां–सख. । ३. साधको–सख. । ४. पतनाम्ना–सख. । ५. वाऽप्यथवाऽसुरी–वाग. से. ब. सक. ख. । ६. यक्षी–बाग. से. सख. । ७. तरुणा राज–सख. । ८. का–से. ब. सक. ख. । ९. द्यारोहण–क. घ. । १०. नीत्वा–क. ग. । ११. रुल्लासयन्ती–क. घ. । १२. 'शिव''''शरीरानङ्ग' नास्ति–छ. । १३. भेदेन–क. ग. छ. । १४. निरुपाय–ङ.

**ज्वलन्मण्डलदुष्प्रेक्ष्यमदनोत्तप्तमानसाः[1] ।**

**क्लिन्नाः[4] प्रचलिताङ्गचस्तु[5] विमूढा मदविह्वलाः[6] ।। ४० ।।**

**निवेदितात्मसर्वस्वा[7] जायन्ते वशगाः[8] प्रिये ।**

**चलज्जलेन्दुसदृशी[9][10] बालार्ककिरणारुणा ।। ४१ ।।**

**चिन्तिता योषितां योनौ संमोहयति[11] तत्क्षणात् ।**

**सैव सिन्दूरवर्णाभा हृदये[12] चिन्तिता सती ।। ४२ ।।**

---

**धिको** मदनात् प्रकृष्टः । कामराजबीजसाधकदर्शने सर्वेषां पुंसां कामपारवश्यं[13] भवतीति तात्पर्यम् । **क्लिन्ना**[14] विकृतेन्द्रियाः । **विमूढा** अविविक्तचित्ताः । **मदविह्वला**[15] हर्षव्याकुलाः । **निवेदितात्मसर्वस्वा** निश्शेषेण निवेदितशरीरसर्वस्वा । **चिन्तिता** । कामकलेति शेषः । **संमोहयती**त्यस्यायमर्थः—याः साध्या मताः सर्वाः संमोहोन्मादनाभ्यामाविष्टचित्ताः[16] कृत्वा

---

प्रतिबि(म्बे?म्बिते)न्दुवदतिचञ्चला बालार्ककिरणारुणा महाकामराजबीजात्मना योषितां मदनमन्दिरमध्यं ध्यातेयं शक्तिर्दृष्टादृष्टसमस्तसाध्यसुन्दरीविक्षोभजननीत्यर्थः । सैव सिन्दूरवर्णाभेत्यारभ्य चित्ताकर्षकरी स्मृतेत्यन्तस्यायमर्थः—सैव[17] महाकामराजबीजरूपा सिन्दूरवर्णा योषितां[18] हृदये चिन्तिता सती संमोहनोन्मादना(वेशैराकृष्ट?भ्यामाविष्ट)चित्तायाः साध्याया आकर्षणकरीत्यर्थः । नियोजिताऽथवेत्यारभ्य करोति हि वशं जगदित्यन्तस्य(ायमर्थः)—अथवेति योगान्तरद्योतकः शब्दः । मूर्ध्न्यधोमुखसहस्रारकमलवलयान्तर्महाकामकलाबीजात्मनाऽति(रि?र)क्ताच्छशीतामृतबिन्दु-[19]

विक्षोभ)जननी । **संमोहः** पारवश्यम् । **उन्मादो** मदनविकारः । **ताभ्यामाविष्टचित्ताया** आकर्षणकरीत्यर्थः । **नियोजितेत्यादि** । **मूर्ध्नि** अधोमुखसहस्राराब्जमध्ये । **वर्षन्ती**

---

१. न्मदन–वाग. से. ब. सक. ख. । २. दहनो–वाग. से. ब. सक. ख. । ३. सा–अ. से. ब. सक. ख. । ४. न्ना–अ. से. ब. । ५. पाङ्गा–वाख. से. ब. अ. । ६. ला–अ. से. ब., किं वा प्रबलतारुण्यमूढा मदनविह्वला–सख., नास्त्येवैषा पङ्क्तिः–सक. । ७. तार्थ–सख. । ८. वशगा देवि जायते–वाग. अ. से. ब. सक. ख. । ९. चलद्वाले–सख. । १०. शा–अ. ब. । ११. संक्षोभ–वाक. ख. ग. से. ब. । १२. योत्तम्भिता रती–सख. । १३. ददातीति–ख. ङ. । १४. 'क्लिन्ना' नास्ति–ख. ङ. । १५. 'हर्षव्याकुला' नास्ति–ख. ङ. । १६. माकृष्ट–ख. ङ. । १७. 'सैव''''करीत्यर्थः' नास्ति–छ. । १८. 'योषितां''''वशं जग' नास्ति–घ. । १९. 'कलयक' इति पाठः–घ., अत्रैव घमातृकाऽवसिता ।

**संमोहोन्मादनाकृष्टचित्ताकर्षकरी स्मृता ।**
**नियोजिताऽथवा मूर्ध्नि वर्षन्ती रक्तबिन्दवः ।। ४३ ।।**
**धारणासम्प्रयोगेण करोति विवशं जगत् ।**
**अथान्यं संप्रवक्ष्यामि प्रयोगं भुवि दुर्लभम् ।। ४४ ।।**
**येन विज्ञातमात्रेण साधको मदनायते ।**

---

आकर्षयतीति । किमनेन क्षुद्रेण व्यष्टिवशीकरणेन, विश्ववशीकरणप्रवीणेयं कामकलेत्याह—**नियोजितेति** । [1]**मूर्ध्नि** स्वकीये । **धारणासम्प्रयोगेण** धारणाभ्यासबलेन ।। ३७–४४ ।।

**अथेति** । **अन्यं** महाफलम् । **दुर्लभं** शक्तिपातविहीनानाम् । **येन** प्रयोगेण **विज्ञातमात्रेण** गुरुमुखाल्लब्धमात्रेण, अनुष्ठानं विनेत्यर्थः । **साधकः** अधिगन्ता । **मदनायते** स्वयं कामो भवतीत्यर्थः ।।

---

भिरमृतधारावाहिनीधारणासंप्रयोगेण ध्यानेन । कोऽर्थः ? एवंभूतां परां शक्तिं चिन्तयतः साधकस्य वशे समस्तं जगद् भवतीत्यर्थः ।। ३७–४४ ।।

अथान्यं संप्रवक्ष्यामि प्रयोगं भुवि दुर्लभमिति । महाकामराजबीजसाधनप्रकारं बहुविधमुपदिश्येदानीं प्राकृतबुद्धिभिरप्राप्यमहाकामराजबीजेन प्रयोगान्तरमुपदिशति शिवः । अथान्यं संप्रवक्ष्यामीत्यारभ्य कामस्थं क्षोभयेज्जगदित्यन्तस्य श्लोकसमुदायस्यायं

रक्तामृतबिन्दुभिः रक्तामृतबिन्दुवस्तुसहिता वर्षं कुर्वती (इत्य?अति) रक्ता कामकलेत्यर्थः ।। ३७–४४ ।।

**कामस्थमित्यादि** । काममन्मथकन्दर्पमकरध्वजमोहनाख्याः पञ्च कामा मायाबीजबाणतृतीयबाणवाग्भवबाणतुरीयस्त्रीहृदयाख्यपञ्चबीजसमुद्भवाः । तैरिदं यन्त्रम् । **त्रिपुरार्णवे**ऽ-

---

१. संमूढो–ब. । २. दिता–ब. । ३. वेश–वाक. ख., विष्ट–वाग. से. अ. ब. । ४. मता–सक. । ५. वि–ब. । ६. बिन्दुभिः–वाग. से. अ. ब. सक. ख. । ७. स्वप्रयोगेण–ब., त् संप्रयोगाच्च–सख. । ८. स करोति वशं–ब. । ९. वशगं–वाग. से. सक. ख. । १०. न्यत्–ब., अन्यथा–सख. । ११. शृणु–वाग. से. । १२. दुर्लभं भुवि–सख. । १३. 'इति' नास्ति–ख.ङ. । १४. 'अन्यं' नास्ति–ख.ङ. । १५. 'अनुष्ठानं विनेत्यर्थः' नास्ति–ख.ङ. । १६. मकरध्वजकल्पो भवतीत्यर्थः–ग. । १७. 'साधकस्य' नास्ति–छ. । १८. अटती–क. । १९. बीजे बहुविधमुपदिशन्–छ. । २०. रिक्ता–ङ. ।

1. "प्राञ्चस्तु—अनेनार्धद्वयेनैकं प्रयोगं व्याचक्षाणाः स्वमूर्धन्येव स्थितां रक्तबिन्दुवर्षिणीं दृढं ध्यायेदित्याहुः" (से. पृ. १४९) ।

[1]कामस्थं काममध्यस्थं कामोदरपुटीकृतम् ।। ४५ ।।
कामेन कामयेत्[१] कामं कामं कामेषु निक्षिपेत् ।

---

श्रीकामराजयन्त्रमाह—कामस्थमिति[२] । अत्र बीजपञ्चकं वेष्टनं साध्यं कोणषट्कं चक्रं[३] च कामशब्देनोच्यते । बीजपञ्चकं तावत् ह्रीं क्लीं ऐं ब्लूं स्त्रीं इति । कामस्थं कामरूपेण ह्रींकारात्मना स्थितं यद्बीजं तत् ।

भावः—कामस्थं काममध्यस्थमित्यादिना पञ्च कामा अभिमताः । ते त्रिपुरार्णवे समुद्धृताः । तैरेवायं प्रयोगः संपाद्यत[४] इति यावत् । कोऽर्थः ? काम-मन्मथ-कन्दर्प-मकरध्वज-मोहनाख्याः पञ्च कामाः । ते मायाबीज-बाणतृतीय[2]-वाग्भव-ब्लूंकार[3]-स्त्रीहृदयाख्य-बीजपञ्चकसमुद्भवाः । एतद्बीजपञ्चकं पञ्चकामकारणत्वात् पञ्च कामा इत्युच्यते[५] । तदुक्तम्—

[4]कामं प्राणं प्रकुर्वीत मन्मथं कारयेत् तनुम् ।
कन्दर्पं मन्दिरं कृत्वा द्विधाभूतं च पार्वति ।।
मकरध्वजं न्यसेद् देवि षट्स्थानेष्वस्य[६] सुव्रते ।
मोहनाभ्यन्तरे कृत्वा वेष्टयेत् तस्य मायया ।। इति ।

व्युक्तम्—

कामं प्राणं प्रकर्तव्यं मन्मथं कारयेत्तनुम् ।
कन्दर्पं मन्दिरं कृत्वा द्विधाभूतं च पार्वति ।।
मकरध्वजं न्यसेद् देवि षट्स्थानेष्वस्य सुव्रते ।
मोहनाभ्यन्तरे कृत्वा वेष्टयेत् तस्य मायया ।। इति ।

---

१. साधयेत्—वाक. ख. । २. 'कामस्थमिति । अत्र' नास्ति—ख. ङ. । ३. 'चक्रं' नास्ति—ख. ग. ङ. । ४. संपद्यत—क. ग. । ५. इत्युच्यन्ते—क. ग. । ६. तस्य—क. छ. ।

1. "धामस्थं धाममध्यस्थं धामोदरपुटीकृतम्" (५।९४) इत्यादिना तन्त्रालोकस्थेन सार्धैकश्लोकेन तुलनीयमेतत् ।
2. 'द्रां द्रीं क्लीं ब्लूं सः' इति पञ्च बाणबीजानि सुभगोदयेऽन्यत्र च द्रष्टव्यानि । तेषु बाणबीजेषु तृतीयं बीजं 'क्लीं' इति वर्तते । तस्यैवात्र बाणतृतीयपदेन परामर्शः ।
3. वामकेश्वरीमतविवरणे ब्लंकारः समुद्धृतः (पृ. ११६-११७)। तत्रैव (पृ. ११७) कल्याणवर्मणो मते तु ब्लूंकारमेव बीजम् ।
4. 'कामयानं' इति सर्वासु मातृकासु स्थितः पाठः । सेतुबन्धस्थः पाठोऽत्र मूले स्थापितः । अस्य श्लोकद्वयस्यार्थः सेतुबन्धे द्रष्टव्यः ।

**कामेन कामितं कृत्वा कामस्थं[1] क्षोभयेद्[2] ध्रुवम् ॥ ४६ ॥**

---

**काममध्यस्थं** कामस्य क्लींकारस्य मध्ये स्थितम् । **कामोदरपुटीकृतम्** उक्तं[3] तदेतद्बीजद्वयं कामस्यैंकारात्मनः षट्कोणरूपस्योदरेण पुटीकृतम् । **कामेन कामयेत् काममिति** । अत्र द्वितीयान्तः **कामशब्दः** कर्मव्युत्पत्त्या साध्य[4]मभिदधाति । तत्साध्यं **कामेन** अन्तःस्थितेन ह्लींकारेण । **कामयेत्** वेष्टयेत् ।

---

ह्लीं क्लीं ऐं ब्लूं स्त्रीं । कामस्थं काममध्यस्थं कामोदरपुटीकृतम् । कामेन कामयेत् कामं कामं कामेषु निक्षिपेत् ॥ कामेन कामितं कृत्वा कामस्थं क्षोभयेज्जगत् । इत्यस्याय-मर्थः—कामस्थं ह्लींकारं तत् काममध्यस्थं मन्मथकामोदरे कुर्यात् । कामोदरपुटीकृतं तदुभयं काममन्मथाख्यं कामद्वयं कन्दर्पकामेन द्विधाभूतेन पुटीकुर्यादित्यर्थः । काम-मन्मथ(द्व?)योरन्तरं कन्दर्पकामेन ऐंकारेण षट्कोणाकारेण वेष्टितं कुर्यादित्यर्थः । कामेन कामयेत् काममिति । काम्यत इति काम इति कर्मव्युत्पत्त्या काम्यमानसाध्यवृन्दं कामशब्दव्यपदेश्यं भवति । साध्यरूपं तं कामं कामेन प्रथमकामेन ह्लींकारेण वेष्ट-येत् । कोऽर्थः ? प्रथमकामरेफहकारयोर्मध्ये साध्यविग्रहं चिन्तयेदित्यर्थः । काम कामेषु निक्षिपेदिति । षट्कोणेषु कामं मकरध्वजबीजं ब्लूंकारं निक्षिपेत् । षट्कोणानां कामत्वं

अत्रापि तदेव यन्त्रमुच्यते । **कामस्थं मायाबीजमध्यस्थम्** । **काममध्यस्थमिति कामो-दरपुटीकृतं कामेन कामयेत् कामं** वाग्भवद्वयेन षट्कोणमुत्पाद्य प्रागुक्तं तदन्तःस्थं कुर्यात् । **कामं कामेषु निक्षिपेत्** । समुद्रबाणं षट्कोणेषु निदध्यात् । **कामेन कामितं कृत्वा** । सुन्दरोहृदय-मूर्ध्वस्थं कृत्वा तन्मायया वेष्टयेदित्यर्थः । **कामस्थं क्षोभयेज्जगत्** । एवं कामाख्यं यन्त्रं जगत्

---

१. कामस्थः–वाक. ख. । २. ज्जगत्–वाक. ख. ब. अ. सक. ख. । इतः परम्–"एतद्धि देवदेवेशि कामराजस्य साधनम् । प्रवक्ष्यामि समासेन शक्तिबीजस्य साधनम् ॥" इत्येष श्लोकोऽ-धिकः–वाग. से., सकपुस्तके–"एतद्धि कौलिकं रूपं कामैश्वर्यप्रवर्तकम् । काममन्मथकन्द(र्पर्द-मश्च ? र्पेन्दवश्च ) मकरध्वजः ॥ कामो मया समाख्यातो मन्मथो मकरध्वजः । कन्दर्पो वाग्भवो देवि (दि ?इ)न्दुसंज्ञं चतुर्थकम् ॥ मकरध्वजेति विख्यातं स्त्रीसंज्ञं तु महेश्वरि । इति ते कथितो देवि कामपञ्चकनिर्णयः ॥ प्रवक्ष्यामि समासेन शक्तिबीजस्य साधनम् ।" एष पाठो दृश्यते, सखपुस्तके तु–"कामायनं प्रकर्तव्यं मन्मथं कारयेत्तनुम् । कन्दर्पं मन्दिरं कृत्वा द्विधाभूतं च पार्वति ॥ मकरध्वजं न्यसेदाद्यं षट्स्थाने तस्य सुव्रते । मोहनाभ्यन्तरे कृत्वा वेष्टयेत्तेन मायया ॥" इति पाठः । ३. 'उक्तं'''पुटीकृतम्' नास्ति–ख. ङ. । ४. साधक–ख. ग. ङ. ।

**कामं कामेषु निक्षिपेदिति** । कामं क्लूँकाराख्यं बीजम् । **कामेषु** षट्कोणेषु । **निक्षिपेत्** लिखेदित्यर्थः । **कामेन कामितं कृत्वेति** । **कामेन** स्त्रींकाराख्येन बीजेन । **कामितं** वेष्टितम्[2] । **कृत्वा कामस्थं क्षोभयेद् ध्रुवमिति** । **कामस्थम्**[3] एतच्चक्रमध्यस्थितं साध्यमित्यर्थः । **क्षोभयेत्,** यन्त्रमिति शेषः । एतच्चक्रं

त्रिकोणाकारत्वादिति भावः । अथवा तृतीयं काम[4]ं विद्यासं(ज्ञा?ज्ञत्वाद्) राजत्वाद्वा, मन्मथाख्यकामस्थाने तमुद्धास्य : मूलविद्यामध्यगतमहाकामराजं निक्षिपेत् । किमेव[5]मिति ? कामराजसाधनप्रकरणत्वान्निश्चीयत इत्यर्थः । कामेन कामितं[6] कृत्वेति । कामेन मोहनाख्येन स्त्रीहृदयेन कामितं कुर्यात् । कोऽर्थः ? मोहनाख्यकामोदरे एतत्सर्वं लिखित्वा [1]एतद्वहिर्मायायाऽध्युष्टवारं[2] वेष्टयेदिति यावत् । कामस्थं क्षोभयेज्जगदिति । एवं पर्यस्तकामपञ्चकस्य मध्यस्थं साध्यरूपं जगत् चिन्तयेत् । तदुपरि स्थितः साधकः कामराजबीजं साधयेदित्यभिप्रायः । [3]बाह्ये भूर्जपत्रे रोचनाकुङ्कुमकस्तूरीचन्दनादिभिर्द्रव्यै रक्षां लिखित्वा साध्यप्राणप्रतिष्ठापनं विधाय हेममध्यगतां कृत्वा पञ्चसहस्रं पञ्चकामबीजानि जपित्वा मूलविद्यां च जपित्वा शिखादिस्थानेषु यत्नतो धारयेत् । तथा (अ?आ)न्तरेऽपि[4] मूलाधारस्थाने तडित्कोटिप्रभाभास्वरमहाचक्रत्रिकोणमध्ये प्रस्फुरत्कल्पानलप्रभामेनां रक्षां चिन्तयित्वा मूर्ध्नि स्थितसहस्रारकमलान्तरस्थरक्तसुधापूरापूरित(या?यो)न्यर्ण[8]वमहाचक्रमध्यत्रिकोणमध्यरक्तामृतधारासारवर्षिणीमेतां रक्षां

क्षोभयेदित्यर्थः । साध्यं च तन्मध्ये यथावत् स्थापयेदित्यत्र ज्ञातव्यम् । तत्र मन्मथाख्या कामराजं विना श्रीमूलविद्या कामराजबीजं वा निक्षिपेत् । एवमन्यस्मिन् यन्त्रे लिखिते वा समुपदिष्टं कामराजबीजं साधयेत् । बाह्ये तु भूर्जपत्रे कस्तूरिकयैनां रक्षां विलिख्य जप्त्वा धारयेत् । इति कामराजबीजसाधनम् ॥ ४३–४६ ॥

१. 'वेष्टितम्' नास्ति–ख. ङ. । २. 'कामस्थम्' नास्ति–ख.ङ. । ३. चक्रक्रमं व्याख्याय–ख. ङ. । ४. काम–क. ग. । ५. 'किमेवमिति' नास्ति–छ. । ६. 'कामितं····हृदयेन' नास्ति–छ. । ७. गतं–छ. । ८. 'र्णव' इत्यतः 'किं बहुनो' इत्यन्तः पाठः छमातृकायां 'तेनैव प्रकारेण मूर्धस्थं' इत्यतः परं स्थापितः, एष च लेखकप्रमाद इति प्रतीयते ।

1. 'एतद्वहिः' इति सेतुबन्धस्थः ( पृ. १५० ) पाठोऽत्र स्थापितः, मातृकासु तु 'तस्यैव' इति पाठो वर्तते ।
2. "केचित्तु—एतद्वहिर्मायायाऽध्युष्टवारं वेष्टयेदिति व्याख्यन्" ( से. पृ. १५० ) ।
3. बाह्ये बाह्यपूजायामित्यर्थः ।
4. आन्तरे आन्तरपूजायामित्यर्थः ।

पदव्याख्यायां स्फुटं व्याख्यातम्[१]। (अप्ययं ? अत्रायं) विन्यासक्र(मं ? मः)—प्रथमं क्रोडीकृतसाध्यं [1]भुवनेश्वरीबीजं विन्यस्य तद्बहिः प्रसिद्धकामबीजं [२]विधाय तदनु षट्कोणं लिखित्वा [३]तत्कोणेषु ब्लं बीजं विरच्य तदनु स्त्रींकारेण

---

चिन्तयित्वा तेनामृतापूरेण मूलाधारस्थमहाचक्रान्तरुल्लसितपञ्चकाममहावह्नितप्तगात्रयष्टि साध्यमप्यभिषिञ्चेदिति भावः।

अथवा कामस्थं काममध्यस्थमित्यादेरर्थान्तरं लिख्यते। परमशिवे[४]च्छाशक्तिः कामस्तत्स्थं कामस्थमित्युच्यते। कोऽर्थः ? मूलाधारवलया(न्त?न्तः) निश्शेषबीजात्मको नित्यानन्दलक्षणो यः शिवस्तस्य[५] द्वितीयोन्मेषतया विद्युल्लताकारेण स्थिता या कुण्डलिनीशक्तिस्तस्याम(न्त?न्तः) स्थि(तिं?तं) संचिन्त्यमानं जगत् क्षोभयेत् सा शक्तिरित्यर्थः। [2]स्वाधिष्ठानचक्रमध्यान्तः प्रस्फुरद्योनिगर्भबिन्दुरूपपरमशिवस्येच्छात्मिका या [६]महामहाप्रभा शक्तिस्तस्या मध्यस्थितं काममध्यस्थमित्युच्यत इत्यर्थः। तथा मणिपूरचक्रान्तः समुद्यच्छक्तिवलयकवलीकृतं कामोदरपुटीकृतमित्युच्यते। तथा दहराकाशकुशेशयान्तः प्रस्फुरच्छक्तिकिरणवेष्टितं कामेन कामयेत् काममित्युच्यते। कामेन शक्त्या ( काम्यकामं ? ) कामं साध्यं कामयेद् वेष्टयेदिति यावत्। तदूर्ध्वं कण्ठवदनभ्रूमध्यललाटब्रह्मरन्ध्रा(ख्यासुन्दरीषु?ख्येषु) प्रस्फुरच्छक्तिरूपकामेषु कामं साध्यं निक्षिपेत् चिन्तयेदित्यर्थः। उक्तमर्थमुपसंहरति—कामेन कामितमित्यादिना। अस्यायमर्थः—किं बहुनोक्तेन, मूलाधारादिब्रह्मरन्ध्रान्तं नवाधारभूमिकासु यत्र यत्राभिरुचिस्तत्र तत्र शक्त्या काम्यमानं साध्यं कामितं कृत्वा शक्तिवलयान्तरस्थं चिन्तयेदित्यर्थः।

---

१. तम्। अप्ययं–ग., तव्यम्। यद्–घ.। २. विन्यस्य–ख. ङ.। ३. 'तत्' नास्ति–ख. ङ.। ४. च्छात्मश–क. ग.। ५. स्थिति–घ. छ.। ६. 'महा' नास्ति–छ.।

1. भुवनेश्वरीबीजं ह्रींकारम्।
2. केचित्तु—कामं साध्यं कामस्थं मूलाधारस्थं विभाव्य ततः काममध्यस्थं स्वाधिष्ठानस्थं विभाव्य पश्चात् कामोदरेण मणिपूरोदरेण पुटितं विचिन्त्य तदनु कामेनानाहतेन वेष्टितं कामयेत् चिन्तयेत्। ततः कामेषु कण्ठवदनभ्रूमध्यललाटब्रह्मरन्ध्रेषु कामं यथेच्छं साध्यं क्रमेण निक्षिप्तं विभावयेत्। इति नवसु स्थलेषु साध्यविभावनमेकः प्रयोगः। प्रयोगान्तरमाह—कामेन कामितमिति। कामेन स्वेच्छयोक्तनवकान्यतमस्थले कामितं चिन्तितं कृत्वा कामस्थं स्वेच्छाविषयं क्षोभयेदित्यर्थ इत्याहुः। परे तु—कामं ह्रींकारं मूलाधारे ब्रह्मरन्ध्रे च संचि-

वेष्टयेदितीदमत्युपह्वरम् । अस्योपह्वरताप्रतिपादनपरः [1]कामपरम्परा-शब्दः ॥ ४४–४६ ॥

---

कामस्थं क्षोभयेदिति । नवाधारे उदिता या शक्तिः, सा स्वस्मिन् स्थितं साधकार्थं जगत् क्षोभयतीत्यर्थः । एवमारोहावरोहक्रमेण नवलक्ष्येषु समभ्यसेत् । कोऽर्थः ? मूलादि-ब्रह्मरन्ध्रान्तं ब्रह्मरन्ध्रादिमूलान्तं नवाधारेषु कामं शक्तिं साध्यकवलीकृतं यथाकाम-मभ्यसेदित्यर्थः । अथवा कामो बिन्दुरूपः शिवः, उक्तनवाधारनिलयसमस्त-विश्वक्षोभकः । तेन कवलीकृतमुक्तसाध्यं चिन्तयेदित्यर्थः । अस्मिन् पक्षेऽपि ग्रन्थ-योजना पूर्ववदेव । शक्तिशिवयोः काम(स्तत्त्व?त्व)मागमान्तरसंसिद्धम् । उक्तं च शक्तेः कामरूपत्वं श्रीमतोत्तरे—

प्रे(क्ष्य?क्ष)ते कामरूपाणि तत्रस्था परमेश्वरी ।
तं [1]तत्त्वं कामसंज्ञं तु अवाप्ता परमेश्वरी ॥ इति ।

तथा शिवस्यापि कामरूपत्वमुक्तम्—

कामरूपो ह्यहं देवि ! अनङ्गो रूपवर्जितः ।
क्षोभयामि प्रजाः सर्वा नित्यं वै क्लेदयामि च ॥ इति ।

अथवा कामस्थमित्यादेः पुनरप्यर्थान्तरं[2] लिख्यते । कामः प्रथमकामो ह्लींकारः, [2]तत्रस्थं कामस्थम् । प्रथमकामबीजं ज्वलत्कालानलप्रख्यं [3]मूलाधारे ध्यात्वा तन्मध्ये

---

१. 'तं तत्त्वं····इति' नास्ति–छ. । २. तत्स्थं–क. । मूलाधारत्वात् तन्मध्ये–छ. ।

न्त्याधःस्थेन ज्वालादिभिर्दह्यमान साध्यमुपरिस्थेनामृतधाराभिः प्लाव्यमानं चिन्तयेत् । एवमेव मन्मथकन्दर्पाभ्यां दह्यमानं प्लाव्यमानं च चिन्तयेत् । सोऽयं कामस्थमित्यादि-पदत्रयस्यार्थः । कामेन कामयेत् कामम् । पूर्वोक्तबीजत्रयेण साध्यमुक्तरीत्या वशयेत् । कामं कामेषु निक्षिपेत् । मकरध्वजं षडाधारेष्वपि निक्षिप्य दहनाप्लावने कुर्यात् । मीन-केतुनाऽनाहत एव साध्यं वेष्टितं कृत्वा कामस्थविषयं क्षोभयेदित्यर्थ इति वदन्ति । तदुभयं शिष्यप्रतारणमात्रमिति मनीषिण एव जानन्तु । अन्ये तु-- कामराजकूटसाधनप्रकरणे पाठा-ल्लिङ्गादन्यत्र कामपदैः प्रकृतविद्याद्वितीयकूटमेव ग्राह्यमित्याहुः ( से. पृ. १५२ ) । अत्रत्या इमे त्रयोऽपि पक्षा अर्थरत्नावल्यां दृश्यन्ते ।

1. कामशब्दपरम्परेति यावत् ।
2. अत्र वामकेश्वरीमतविवरणे जयरथेन उद्धृत एष पूर्वाचार्यश्लोकः स्मरणीयः—
   आश्रीदीपकनाथतो ह्यगणितैरद्यापि वृत्तिः कृता
   यस्यान्यैश्च करिष्यते गुरुवरैः स्वस्वाशयौचित्यतः ।

**शक्तिबीजस्वरूपा[1] तु सृष्ट्वा[2] संहरते यदा ।**
**सृष्टिसंहारपर्यन्तं[3] शरीरे[4] परिचिन्तयेत् ।। ४७ ।।**

इदानीं तार्तीयबीजसाधनमाह—शक्तीति । **शक्तिबीजस्वरूपा** तृतीयबीजावलम्बिन्यमृताख्या परा शक्तिरित्यर्थः । **सृष्ट्वा** ब्रह्मरन्ध्रान्मूलबिलावध्य-[5]वरुह्य । **संहरते** मूलाद् ब्रह्मरन्ध्रावध्यारोहति । **सृष्टिसंहारपर्यन्तम्**[6] अकुल-

साध्यं संचिन्तयेद् दह्यमानम् । तथा तेनैव प्रकारेण मूर्धस्थसहस्रारकमलकर्णिकायां तदेव प्रथमकामराजमतिरक्ताच्छसुधाधारां वह(न्?त्) चिन्तयित्वा तयाऽमृतधारया मूलाधारस्थं साध्यं प्लुष्यमाणं प्लावयेदित्यर्थः । तथा मन्मथकन्दर्पावपि द्राव्यद्रावकभावेन मूलाधाराद्[7] ब्रह्मरन्ध्रान्तं ध्यायेदिति यावत् । एतत् कामस्थं कामोदरपुटीकृतमित्यादिपद(द्वय?त्रय)स्यार्थः । कामेन कामयेत् काममित्यस्य एवंविधं पञ्चकामबीजेन काम्यमानमभिलषितमर्थं कामयेद् इच्छेदित्यर्थः[8] । कामं कामेषु निक्षिपेदित्यस्य कामं चतुर्थं मकरध्वजं कामेषु षडाधारेषु निक्षिपेत् तद्गतं साधयेदित्यर्थः । पूर्ववदाप्लावनं च कुर्यात् । कामेन कामितं कृत्वेत्यस्य दहराकाशकुशेशयान्तः पञ्च(मं) कामं मोहनाख्यं सिन्दूरवर्णाभं संचिन्त्य काम्यमानं तेन कामेन वेष्टितं कृत्वा पूर्ववदाप्लावनं कुर्यादिति[9] यावत् । कामस्थं क्षोभयेज्जगदित्यस्य[10] एवंविधपञ्चकामबीजस्थं जगदपि साध्यं स्मृत्वा क्षोभयेत् साध(कमि?क इ)ति यावत् । इति कामराजसाधनम् । अस्याप्युदयो मूलाधारे, भ्रूमध्यान्ते व्याप्तिः, विश्रान्तिर्ब्रह्मरन्ध्रे ॥ ४४-४६ ॥

शक्तिबीजस्वरूपा तु सृष्ट्वा संहरते यदा । सृष्टिसंहारपर्यन्तं शरीरे परिचिन्तयेत् ॥

इत्ययं श्लोकः शक्तिबीजसाधनप्रदर्शकः । अस्यार्थः—मूलाधारादारभ्य ब्रह्मरन्ध्रान्तं

**शक्तिबीजस्वरूपेत्यादि । सृष्टचा** सृष्टिं **संहरते** ऊर्ध्वं गच्छति (सृष्टि ?) सृष्टचादिसंहार**पर्यन्तं** (स्थू?मू)लादिब्रह्मरन्ध्रान्तं ब्रह्मरन्ध्रादिमूलान्तं गमागमाभ्यासः कार्यः । एवं शुक्लवर्णामुभ-

१. पां-वाक. ख., पं-सख. । २. सृष्टचा संहृतिसीमया-वाक. ख., सृष्टचा संहृतिमायया-सख., दृष्टचा संहृतिरूपया-ब सक. । ३. संहाराद्वाऽथ सृष्टचन्तं-ब. । ४. शरीरं-ब. सख. । ५. न्मूलाधारस्याव-ख. ग. ङ. । ६. 'सृष्टि… शक्तिबीजयोगिनः' नास्ति-ख. ङ. । ७. शूलालवाल-क. । ८. 'इच्छेत्' नास्ति-छ. । ९. दित्यर्थः-छ. । १०. दिति । रहस्यं-छ. ।

देवि त्वच्चरणाऽब्जरेणुशरणः कामस्थमित्यादिक-
श्लोकस्यार्धयुतस्य तस्य सुकृती कोऽप्यर्थवित्तत्त्वतः ।। इति ।

ततो[1] भवति देवेशि वैनतेय इवापरः ।
नागानां दर्शनादेव जडीकरणकारकः[2] ।। ४८ ।।
देहिना[3]ममृता[4]सारधीरधाराधरोपमः ।
स्थिरकृत्रिमशङ्का[5]ख्यविषोपविषनाशकः[6] ।। ४९ ।।
दुष्टव्याधिग्रहाने[7]कडाकिनीरूपिकागणः[8] ।
भूतप्रेतपिशाचौ[9]घैस्त्रिणेत्र इव दृश्यते ।। ५० ।।

---

स्थानात्[10] कुलस्थानपर्यन्तं कुलस्थानादकुलस्थानपर्यन्तं चेत्यर्थः । **शरीरे** सुषुम्नान्तरे । **परिचिन्तयेत्**, योगीति शेषः ।। ४७ ।।

शक्तिबीजयोगिनः फलमाह—तत इत्यादि । **दर्शनं** साक्षात्कारः । **देहिनां** संसारघर्मतप्तानाम् । **अमृतासारधीरधाराधरोपमः । आसारो** वेगवद् वर्षम्, तत्कर्मणि धीरः प्रगल्भः । **धाराधरो** मेघः । **स्थिरेति** । [1]**स्थिरं**

---

शक्तिबीजस्वरूपा[11] सृष्टिसंहाररूपिणी चिन्तनीया, तथा ब्रह्मरन्ध्रादारभ्य मूलाधारान्तं शक्तिबीजस्वरूपा परा शक्तिर्दिव्यामृतकलया समस्तं जगदुत्पादयन्ती ध्यातव्या । तार्तीयबीज[12]मेकमेवोभयात्मना शुक्लरूपेणाभ्यस्य[13](तेऽ?तोऽ)चिरान्निग्रहानुग्रहप्रवीणत्वं संभवतीति यावत् ।। ४७ ।।

ततो भवति देवेशीत्यारभ्य त्रिणेत्र इव दृश्यत इत्यन्तः श्लोकसमुदायः शक्तिबीजफलसूचनः स्पष्टार्थः ।। ४८–५० ।।

यतः शक्तिबीजस्वरूपां शक्तिमूर्ध्वगमने(न?) संहाररूपिणीमागमे परमामृतरूपिणीमभ्यसतो निग्रहानुग्रहणसामर्थ्यं फलम् ।। ४७ ।।

**ततो भवतीत्यादि त्रिणेत्र इव दृश्यत** इत्यन्तस्य शक्तिबीजसाधनागमप्रभवे परां महातेजोवृष्टिमयीमवधाने[14]नागमोक्तसंख्याकालानुरूपेण फलपर्यन्तं ध्यायतोऽन्तर्बहिरर्चयतः साधकवरस्याचिरादेवाष्टगुणमैश्वर्यं संपद्यते ।। ४८–५२ ।।

---

१. यतो–वाक. ख. । २. कारणः–सख. । ३. दाहिना–वाक. ख. । ४. तस्यन्दविधौ वा बान्धवोपमः–सख. । शङ्कादि–वाग. से., शृङ्गार–ब. । ६. नाशनः–से. ब. सख. । ७. नीक–से. सख. । ८. गणैः–से. सक. ख. । ९. चादि–वाग., चाद्यैः–से. ब. सक. ख. । १०. 'कुलस्थानपर्यन्तं कुलस्थानादकुलस्थान' नास्ति–ग. । ११. 'सृष्टि····स्वरूपा' नास्ति–छ. । १२. बीजकमेवो–क. छ. । १३. स्यति, अचि–छ. । १४. 'आगम' नास्ति–ख. ।

1. "स्थिरं काकोलादि । कृत्रिमं द्रव्ययोगोद्भवम् । शङ्का मयेदं भक्षितमिति भ्रमः । तस्याप्युपद्रवकारित्वाद्विषत्वम् । नागादिविषाणि महाविषाणि । कृम्यन्तरभवान्युपविषाणि" (से. १. १५४) ।

**अथवा येन विद्येयं परिपूर्णा विचिन्त्यते ।**
**जन्ममण्डलहृत्पद्ममुखमण्डलमध्यगा[१] ॥ ५१ ॥**
**केवलैव महेशानि पद्मरागसमप्रभा ।**
**तस्याष्टगुणमैश्वर्यमचिरात् संप्रवर्तते[२] ॥ ५२ ॥**

---

स्थावरोद्भूतम् । **कृत्रिमं** संयोगजम् । जङ्गमस्याप्युपलक्षणमेतत् । **दुष्टेति** । अत्र[३] दुष्टशब्दो **व्याध्य**ादिभिः **पिशाचान्तैः**[४] सप्तभिर्गणैः संबद्धयते । **त्रिणेत्रः** त्रीणीच्छाज्ञानक्रियाख्यानि नेत्राणि यस्य सः । **दृश्यते** । साधक इत्यध्याहार्यम् ॥ ४८-५० ॥

बीजानां त्रयाणां व्यस्तोपासनमुक्त्वा सम्प्रति समस्तोपासनमाह[५]—**अथवेति** । **येन** परामर्शकेन । **परिपूर्णा** बीजत्रयसमुदायात्मा[६] विद्या । **जन्ममण्डलहृत्पद्ममुखमण्डलमध्यगेति** । समस्तोपासनेऽपि वाग्भवादिबीजत्रयेण [1]मूलादिस्थानत्रयंगतेत्यर्थः[७] । **पद्मरागसमप्रभा**मूलहृदयभ्रूबिलेषु वर्णत्रयभावनायामपि सर्वतः पद्मरागसमप्रभा विद्या । **तस्य** चिन्तकस्य । **अष्टगुणमैश्वर्यमिति** अणिमादिगुणाष्टकोपेता विभूतिः ॥ ५१-५२ ॥

---

अथवा येन विद्येयमित्यारभ्य अष्टगुणमैश्वर्यमचिरात् सप्रवर्तत इत्यन्तः श्लोकः समस्तमूलविद्यासाधनप्रकारोपदेशपरः । अस्यायमर्थः—प्रथमबीजं ज्वलत्कालानलाभं मूलाधारे ध्यात्वा तस्य[८] शिखारूपां शक्तिं केवलपद्मरागवर्णां भ्रूबिलव्याप्तां ध्यात्वा पुनस्तार्तीयं बीजं रक्तपारदसन्निभं[९] (भ्रूवि?भ्रुव)मलङ्कुर्वा(णां?णं) ध्यात्वा तस्य शिखारूपां परां शक्तिं पूर्ववत् पद्मरागवर्णां पङ्कजकर्णिकापर्यन्तं ध्यायेदित्यर्थः । अथवा निष्कीलकसम्प्रदायानुरोधेन तु बीजरूपां कुलशक्तिं केवलं पद्मरागैकवर्णामामूलमामस्तकं[१०] ध्यायेत् । तस्यैवं चिन्तयतः साधकस्याचिरादेवाष्टगुणमैश्वर्यं संपद्यत इति वाक्यार्थः ॥ ५१–५२ ॥

---

१. नाभि–वाक. ख. ग. ब. अ. । २. जायते–सक. । ३. तत्र–घ. । ४. 'पिशाचान्तैः' नास्ति–ख. ङ. । ५. सना–ग. । ६. यात्म–ख. ग. ङ. । ७. भ्रूमध्येषु–ग. । ८. इतः परम्–'शिखारूपं शक्तिमालाभिः हृदयं व्याप्तां परागप्रभां ध्यात्वा तस्य' इत्यधिकः पाठः–क. ग. । ९. पद–छ. । १०. 'आ' नास्ति–ग. ।

1. ''अत्र नाभिमण्डले वाग्भवचिन्तनोक्तिरुक्तरीत्या मूलाधारचिन्तनोक्त्या न विरुद्धयते । इदं च ऋजुविमर्शिन्यनुसारेणोक्तम् । अर्थरत्नावल्यां तु मूलेऽपि नाभिमण्डलेत्येव पाठ आदृतः ।

**मनसा संस्मरत्यस्या[1] यदि[2] नामापि साधकः ।**
**तदैव मातृचक्रस्य[3] विदितो भवति प्रिये ।। ५३ ।।**
**यदैव जपते[4] विद्यां महात्रिपुरसुन्दरीम्[5] ।**
**तदैव मातृचक्राज्ञा संक्रामत्यस्य[6] विग्रहे ।। ५४ ।।**

---

योऽस्यास्त्रिपुरसुन्दरीविद्याया नामापि मनसा स्मरति, तदैव साधको ब्राह्म्यादिशक्तिचक्रेण विदितो भवतीत्याह——**मनसेति** । यदीति यदा-वाचकः । यो वा त्रिपुरसुन्दरीं विद्यां यदा जपति, तदैवास्य जपितुर्देहे ब्राह्म्यादिशक्तिचक्राज्ञा निवसन्तीत्याह[7]——**यदैवेति** । [1]**आज्ञा** पञ्चप्रकारा[8] मन्त्रसिद्धिः । उक्तं च——

---

मनसा संस्मरत्यस्या यदि नामापि साधक इति । एवमेनां ध्यातुं जप्तुमशक्तश्चेद् भक्तिपरवशो भूत्वा महात्रिपुरसुन्दर्या नाम संस्मरन् । अपिशब्द एवकारार्थो निश्चय-वचनः । मनसा श्रीनाम[9] संस्मरेदेतावतापि पूर्वोक्तफलमश्नुते साधक इत्यर्थः । तदैव मातृचक्रस्य विदितो भवति प्रिये ! इति । श्रीनामस्मरणस्य[9,10] नैतावदेव फलम्, अन्यच्च । यदा यस्मिन् काले श्रीनामानुस्मरति साधकस्तस्मिन्नेव काले मातृचक्रस्य चतुष-ष्ट्यादेः ( योगिनीवृन्दस्य ) विदितो भवतीत्यर्थः । यदैव हि जपेद्विद्यां[11] महात्रिपुरसुन्दरी-मिति । यस्मिन् काले महात्रिपुरसुन्दरीं मूलविद्यां जपति, तदैव मातृकाचक्राज्ञा संक्रा-मत्यस्य विग्रहे । तदीयाः कला[1] एव मातृचक्रं चतुषष्ट्यादि, तदाज्ञाप्रभावः साधके

**मनसा संस्मरतीत्यादि** । एवमभ्यासतो ध्यानादिनियत्यासमर्थश्चेदपि पारवश्येन देव्या नाममन्त्रस्मरणनियत्यैवेत्थं **साधकश्चतुष्षष्ट्यादियोगिनीवृन्दस्य विदितो भवतीत्यस्य** महती

---

१. रेत्त–सक., रेद्य–सख. । २. यदा–वाक. ख. ग. से. ब. अ. । ३. काचक्रे–से., वर्गस्य–सक. । ४. हि जपेद्विद्यां–अ. सक., जप्यते विद्या–ब., तदैव हि भवेद्विद्या–सख. । ५. री–ब. सख. । ६. संक्रमस्तस्य–सक. । ७. निविश(ती?त इ)त्याह–ग. घ. । ८. पञ्चकप्रकारोऽयं–ग. । ९. 'श्री' नास्ति–ग. । १०. 'श्रीनाम····काले' नास्ति–छ. । ११. द्विद्वान्–ग. ।

ये तु कूटत्रयस्य चिन्तने रूपभेदमाहुस्ते तन्त्रान्तराविरोधेऽपि प्रकृतप्रयोगे तथात्वे माना-भावादुपेक्ष्याः" ( से. पृ. १५५ ) ।

1. "आज्ञा कलेति केचित् । मन्त्रसिद्धिरित्यन्ये । मातॄणामाज्ञा यथा लोकेष्वप्रतिहता तथाऽस्यापी-त्यपरे । तदिदमाज्ञासंक्रमणं गुरुमुखैकवेद्यं रहस्यम्" ( से. पृ. १५५-१५६ ) ।

**सर्वासां सर्वशक्तीनां[1] योगिनीनां भवेत् प्रियः ।**
**पुत्रवत् परमेशानि ध्यानादेव हि साधकः ।। ५५ ।।**

[1]स्पर्शनं चावलोकश्च संभाषा बिन्दुदर्शनम् ।
स्वयमावेशनं चैव मन्त्राणां पञ्चलक्षणम् ।। (उ०ष०) इति ।

**ध्यानाद्** मूलदेवताभि[2]ध्यानात् । **यदा तु परमेशानी**त्यस्यायमर्थः—[3]अणिमादिसिद्धिचक्रादिकामेश्वर्या[4]द्यावरणान्तं[5] मूलदेवतां यः प्रसादयति, तस्य संक्राम[6]तीत्यर्थः । अथवा मातृचक्रमिति वर्णाभिमानिनीनां श्रीचक्राधिवासिनीनां सामर्थ्यं साधकस्य भवतीत्यर्थः । सर्वासां सर्वशक्तीनां सामर्थ्यं[7] साधकस्य भवतीत्यर्थः । सर्वासां सर्वशक्तीनां योगिनीनां भवेत् प्रिय इति । सकललोकवर्तिनीनां कामचारिणीनां हृद्यो योग्यता प्रवर्तते । ततोऽप्यनुष्ठानचातुर्यसामग्री सिद्ध्यति । **यदैव हि जपे**दित्यादि । **श्रीमहात्रिपुरसुन्दरी**श्रीमूलविद्यामातृकाभावः । **चतुष्षष्टिर्यतः कोटयो योगिनीना**मित्यादिवदिह भूतेषु

१. संस्थानां—वाक. ख. ग. से. । २. दिघ्या—ग. घ. । ३. अणिमासिद्धिचक्रावरणादि-कामे—ख. ग. ङ. । ४. र्याव—ग. । ५. णान्त—घ. । ६. संक्रमयती—क. ग. । ७. 'सामर्थ्यं' नास्ति—छ. ।

1. स्पर्शनमिति । स्पर्शनं नाम मन्त्रेण सह साधकस्य संबन्धः । तस्यापि चिह्नं कम्पनम् । तच्च हृदि पूर्वं जायते । अवलोकश्चेति । मन्त्रो यदि साधकमवलोकयति तदेवा(व)लोकनम् । तस्यापि चिह्नं धूननम् । तदपि कण्ठे भवति । संभाषा चेति । मन्त्रो यदि साधकं भाषते तत्संभाषणम् । तस्य चिह्नं स्तोभः । सा चास्य स्वयं''''समस्तविद्यामन्त्रपरिकल्पनम् । बिन्दुदर्शनमिति । बिन्दुशब्देन मन्त्रस्यात्मा विवक्षितः । मन्त्रो यदि साधकस्यात्मानं दर्शयति तद्बिन्दुदर्शनम् । तच्च भ्रूमध्ये भवति । तच्चिह्नमणिमादिगुणावाप्तिः । स्वयमावेशनमिति । मन्त्रो यदि साधकमावेशयति तत्स्वयमावेशनम्''''तस्यापि चिह्नं देहस्योत्पतनम् । उक्तं च श्रीमते—

स्पर्शनं हृदि संस्थस्तु आलोकः कण्ठदेशतः ।
तालुस्थाने तु संभाषा दर्शनं बिन्दुमध्यतः ।।
स्वयमावेशनं देवि कुब्जि र(न्ध्र?न्ध्रे) न संशयः ।
स्पर्शने कम्पनं ज्ञेयमालोके धूननं भवेत् ।।
संभाषे तु भवेत् क्षोभः शास्त्रार्थश्चैव मन्यते ।
दर्शने तु गुणावाप्तिरणिमादि गुणाष्टकम् ।।
स्वयमावेशनं देवि उत्तमे नात्र संशयः ।

इत्युत्तरषट्कविवरणे श्लोकस्यास्य व्याख्यानं दृश्यते ।

**यदा तु परमेशानि परिपूर्णां[1] प्रपूजयेत् ।**
**प्रयच्छन्ति[2] तदैवास्य[3] खेचरीसिद्धिमुत्तमाम्[4] ॥ ५६ ॥**
**चतुष्षष्टिर्यतः कोटचो योगिनीनां महौजसाम् ।**
**चक्रमेतत् समाश्रित्य संस्थिता वीरवन्दिते ॥ ५७ ॥**
**आदौ[5] संबन्धिनि[6] पदे[7] मध्ये बीजाष्टकं बहिः ।**
**कलां[8] ध्यात्वाऽङ्गनारङ्गे[9] जायतेऽनङ्गवत् प्रियः[10] ॥ ५८ ॥**

---

खेचरत्वादिसिद्धिं ब्राह्मचाद्याः प्रयच्छन्तीति । परिपूर्णचक्राराधने किमित्येवं सिद्धिरित्यत आह—**चतुष्षष्टिरिति** । योगिनीनां चतुष्षष्टिकोटचो[11]ऽपि[12] ब्राह्मचाद्यष्टशक्त्युल्लास एवेति बोद्धव्यम् ॥ ५३-५७ ॥

मध्यचक्रानुबन्धिनं कञ्चन प्रयोगं प्रकाशयति[13]—**आदाविति**[14] । [1]**आदौ** सर्वादौ[15] । **संबन्धिनि** निष्पन्ने । **पदे** स्थाने । अयमर्थः—प्रथमनिष्पन्ननव-

---

भवतीत्यर्थः । पुत्रवत् परमेशानि ध्यानादेव हि साधक इति । महाकामकलारूपमहात्रिपुर-सुन्दरीविग्रहध्यायिनं साधकं पुत्रवत् पश्यन्ति योगिन्य इत्यर्थः । यदा त्वित्यारभ्य खेचरीं सिद्धिमतुलामित्यन्तः श्लोकः पूजाफलवचनः स्पष्टार्थः । चतुष्षाष्टिरित्यारभ्य वीर-वन्दिते इत्यन्तश्चक्रप्रभावप्रतिपादनपरः स्पष्टार्थ ॥ ५३–५७ ॥

आदौ सबन्धिनीत्यादि । प्रथमच(क्रे?क्र)संबन्धिनि[16] मध्यपदे मध्यत्रिकोणे । मूल-विद्यामध्यगतमहाकामकलां ध्यात्वा बहिरष्टकोणेषु वशिन्यादिबीजाष्टकं सान्द्रलाक्षा-भुवनेषु च स्थितानां सर्वयोगिनीनामपि महाकामकलारूपदेवीविग्रहं ध्यायन् पुत्रवत् प्रियः संभा-वनीयो भवति । **यदा त्वित्यादि** । परिपूर्णचक्रनित्यपूजाफलत्वेन खेचरीसिद्धिं परमानन्दप्रकाशा-नुभवात्मिकी देवी ददाति । **चतुष्षष्टिरित्यादि** चक्रप्रभावप्रतिपादनम् ॥ ५३–५७ ॥

**आदौ संबन्धिनीत्यादि** । संबन्धिनि गुदाकुञ्चनया (तद्वय?तद्वायु)संचारनिरो-धादिसम्यग्बन्धवति प्रथमे पदे मूलाधारे मध्यत्रिकोणे **कला** महाकला कामराजबीजस्वरूपिणो

---

१. पूर्णं–अ. सक. । २. ति–ब. सक. ख. । ३. तदैतस्य–ब., तदा तस्य–सक. । ४. खेचर्यः–वाक. ख, खेचरीं–वाग. अ. से. । ५. आदेः–वाक. ख. । ६. ससम्बन्धि–सख. । ७. पदं–सख. । ८ कला–वाक. ख. अ., ध्यात्वाऽनङ्गाङ्गनास्वाङ्गे–सख. ९. ङ्गनानङ्गे–वाक. ख., त्वनङ्गाख्यां–ब. सक. । १०. प्रिये–वाक. ख. । ११. ष्षष्टिः–घ. । १२. 'अपि' नास्ति–ख. ङ. । १३. कारयति–ख. ङ. । १४. 'आदाविति' नास्ति–ख. ङ. । १५. 'सर्वादौ' नास्ति–ख. ङ. । १६. संबन्धिमध्य–छ. ।

1. "तथापि वृद्धैरन्यथा व्याख्यातम्" ( से. पृ. १५६ ) ।

**करशुद्ध्यादिविद्यानामेकैकं परमेश्वरि ।**
**रुद्रयामलतन्त्रे तु[1] कर्म प्रोक्तं मया[2] पुरा ॥ ५९ ॥**
**मादनैर्मदनो भूत्वा पाशाङ्कुशधनुश्शरैः ।**
**क्षोभयेत् स्वर्गभू[3]लोकपातालतलयोषितः ॥ ६० ॥**

---

योनिचक्र इति । **मध्य** इति[4] । तत्रापि[5] मध्यत्र्यश्रे "अथात" ( १।५९ ) इत्यादिक्रमेणापीदमेवादिस्थान[6]म्, महादेवतासमाराधनस्थानत्वात् । **बीजाष्टकं** वशिन्याद्यष्ट[7]बीजम् । बहिः[8] कोणेष्वष्टस्वित्यर्थः । **कलां** कामराजसारभूतां[9] "बिन्दुं संकल्प्य" ( १।१८५ ) इति परामृष्टाम् । **अङ्गनारङ्गे** अङ्गनायाः साध्यया योनिस्थाने । क्रीडद्भिः पुंभि[10]र्यत्र रज्यते स रङ्गः । **प्रियः** सुभगः । इदमस्य हृदयम्—नवयोनिचक्रमध्यत्र्यश्रे श्रीकामकलां तद्बहिरष्टकोणे बीजाष्टकं परिभाव्य ज्वलदग्निनिभमिदं[11] चक्रं साध्यसुदृग्योनिसुषिरे चिन्तयेदिति ॥ ५८ ॥

**करशुद्ध्यादिविद्यानां** पूर्वोक्तानां विद्यानां[12] मध्ये एकैकस्या इत्यर्थः । **कर्म** विनियोगप्रयोग[13]सामर्थ्य[14]व्याप्त्यादि । **पुरा** तत्रैव शास्त्र इत्यर्थः ॥ ५९ ॥

---

द्रवोपमं संचिन्तयेत् । एतत्सर्वमङ्गनाया वराङ्गे योनौ ध्यात्वाऽनङ्गवद् भवति साधकः ॥ ५८ ॥

करशुद्ध्यादीत्यारभ्य कर्म प्रोक्तं मया पुरेत्यन्तः श्लोकः स्पष्टार्थः ॥ ५९ ॥

**मादनैर्मदनो** भूत्वेत्यारभ्य सिद्धविद्याधरानपीत्यन्तस्यायमर्थः—कुलपुरुषः पाशाङ्कुशधनुश्शरैरात्मानं कामेश्वरं ध्यात्वा स्त्रियः साधयेत्[15] । यदा पुरुषाणां विक्षोभं[16]

बहिरष्टकोणेषु वशिन्यादिवाग्देवताबीजाष्टकं लाक्षाद्रवोपमं चिन्तयेद् यदि साधकोऽङ्गनारङ्गे सुन्दरीणामास्थानेऽनङ्गवत् कामवत् सुभगो जायते । यद्वा **आदौ संबन्धिनी**ति प्रथमचक्रसंबन्धिनि **पदे** मध्यपदे कला । शेषं प्राग्वत् । आहोस्विदादौ प्रथमबीजसंबन्धिनि **पदे** एकादशस्वरमयत्रिकोणे स्फुरन्महाकामकलातुरीयकामबीजं **मध्ये** ध्यात्वा । शेषं प्राग्वत् । अङ्गनारङ्गे अङ्गनायोनौ सर्वं चिन्तनीयमिति **केचित्** । सर्वथाऽत्रान्तश्चक्रेणैव प्रयोगसिद्धिः स्थेया ॥ ५८ ॥

**करशुद्धीत्यारभ्य कर्म प्रोक्तं मया पु**रेत्यन्तः स्पष्टार्थः ॥ ५९ ॥

---

१. षु–ब. सख. । २. पुरा ममा–ब. । ३. भूर्लोक–से. ब. । ४. 'इति' नास्ति–ख. ङ. । ५. अत्रापि–ख. ङ. । ६. 'स्थान' नास्ति–ख. । ७. द्यष्टक–ख. घ. ङ. । ८. 'बहिः' नास्ति–ख. ङ. । ९ रूपां–घ. । १०. 'पुंभिः' नास्ति–घ. । ११. 'इदं' नास्ति–ख. ङ. । १२. बीजानां ख.ङ. । १३. प्रदान–ख., नास्ति–ग. । १४. सामर्थ्ये–ग. । १५. साधयतु–छ. । १६. क्षोभं–क. ।

**तथैव शाक्तैर्देवेशि त्रिपुरीकृतविग्रहः ।**
**साधयेद्[1] देवगन्धर्वसिद्ध[2]विद्याधरानपि ॥ ६१ ॥**
**तत्र शाक्ता[3] महावज्रप्रस्तार[4]जनिताः शराः ।**
**मादनास्त्रा[5]दिपरतः सर्वाधस्ता[6]न्नियोजि[7]ताः ॥ ६२ ॥**

---

इदानीं संवननकर्मण्यायुध[8]भेदेन विशेषमाह । संवननं तु द्विप्रकारम्—पुरुषपुरन्ध्री[9]भेदेन । तत्र प्रथमं पुरन्ध्रीसंवनने गुणविधिमाह—**मादनै**रिति । **मादनैः** मदनसंबन्धिभिः । **पाशाङ्कुशधनुश्शरैः** । आयुधैरित्य[10]ध्याहार्यम् । **क्षोभयेद्** वशीकुर्यादित्यर्थः । सम्प्रति[11] पुरुषवशीकरणे गुणविधिमाह—**तथैवेति । शाक्तैः** शक्तिसंबन्धिभिः । पाशाङ्कुशधनुश्शरैरिति शेषः । **त्रिपुरीकृतविग्रहः** त्रिपुरारूपतया भावितशरीरः । **साधयेद्** वशीकुर्यादित्यर्थः ॥ ६०–६१ ॥

के शाक्ताः शराः के मादनाः शरा इति तदाह—**तत्रे**[12]ति । **तत्र** रुद्रयामलतन्त्रे, **शाक्ताः** शरा इति संबन्धः । **महावज्रप्रस्तारजनिताः** । मन्त्रोद्धारार्थं [1]**महावज्रप्रस्तार**संज्ञकं तत्र[13] चक्रं[14] मया संपादितमस्ति[15] । तस्मा-

---

वाञ्छति साधकस्तदा शाक्तैः पाशाङ्कुशधनुश्शरैर्महाकामकलारूपश्रीमहात्रिपुरसुन्दरीविग्रहमात्मानं ध्यायेदित्यर्थः ॥ ६०–६१ ॥

तत्र शाक्ता महावज्रप्रस्तारजनिताः शरा इत्य(स्याः ?स्यायमर्थः)—शाक्ताः शरा वज्रप्रस्तारोद्भूताः । यां रां लां वां सां इति । मादनास्त्रादिपरत इत्यादिना(स्त्रा?स्त्र)स्यादावन्ते च योज्याः । सर्वाधस्ताच्च चापादीनामादौ च योजयितव्या इत्यर्थः ॥ ६२ ॥

**मादनैर्मदनो भूत्वेति** । योषिद्व(य?श्य)प्रयोगे पौरुषैः पाशाङ्कुशधनुश्शरैः सहितमात्मानं कामेश्वर ध्यात्वा प्रमदाः, तथा शाक्तैः पाशाङ्कुशैरन्विता कामेश्वरी परमेश्वरी भूत्वा पुङ्गवान् स्वाभिमतप्रयोगेण साधयेत् । पुरतः पूज्या इत्यर्थः ॥ ६०–६२ ॥

---

१. तु सिद्ध–से. । २. देव–वाग. से. । ३. शक्तिमहारुद्र–सख. । ४. प्रस्तारे–वाग. से., प्रस्ताव–सख. । ५. मादनास्त्वादि–वाक. ख. ग. से., मदनास्त्रादिपुरतः–सक., मादनास्त्रादिपरतः–अ. सख. । ६. धस्थाः–वाक. ख. । ७. जयेत्–सक. । ८. स्वायुध–ख. ङ., कर्माण्यायुधान्युपाय–ग. । ९. पुपुर–ख. ङ. । १०. 'आयुधै' नास्ति–ख. ङ. । ११. 'सम्प्रति····वशीकुर्यादित्यर्थः' नास्ति–ख. ङ. । १२. तन्त्रेति । तन्त्रे–ख. ङ. । १३. तन्त्रं–ख. ङ. । १४. 'चक्रं' नास्ति–ख. ङ. । १५. 'अस्ति' नास्ति–ख. ङ. ।

1. "महावज्रप्रस्तारनामा तन्त्रविशेषः" ( से. पृ. १५७ ) ।

**[१]आद्यन्तगो महापाशः पौरुषेयः प्रकीर्तितः ।**
**रुद्रशक्तिः कुण्डलाख्या माया स्त्रीपाश उच्यते ।। ६३ ।।**

**ज्जनिताः** । तस्मादुद्धृता इत्यर्थः । **मादना** मदनदेवत्याः । शरा इत्यन्वयः । **च**शब्दः समुच्चये । शाक्तमादनशरोद्धार[२]क्रममाह—**आदिपरत** इति । [३]आदिपश्चाद्भावेन । [1]आदौ शाक्ताः शराः [४]समुद्धृताः, पश्चान्मादनाः [५]शरा इत्यर्थः । ते शराः कस्मिन् समये समुद्धृता [६]इति तत्राह—**सर्वाधस्तादिति** । सर्वमन्त्रोद्धारपर्यवसानसमय इत्यर्थः । **[७]नियोजिता** इत्थं कार्यकरणे नियोजिताः । [८]पदव्याख्यया वाक्यार्थो[९]ऽपि स्फुटीकृतः । उभयेषां शराणां बीजान्यतिरहस्यान्य[१०]प्युपासकानुग्रहात् कथयामः । द्रां द्रीं क्लीं ब्लूं सः इति । यां रां लां वां सां इति ।। ६२ ।।

पुरुषपुरन्ध्रीपाश[११]द्वयबीजमत्रोद्धरति—**आद्यन्तेति** । **आद्यन्तग** [१२]आदिस्वरानन्तरगतो योवर्णः, आकार इत्यर्थः । **महापाशो** विश्ववशीकरणप्रवीणः । [2]**रुद्रशक्तिः** । अनेन हकारो लक्ष्यते । **कुण्डलाख्या** । कुण्डलशब्देन कुण्डली लक्ष्यते । तत्पुनः सरीसृपा[१३]भिधवह्निबीजं लक्षयति । [3]कुण्डलीत्याख्या

आद्यन्तगो महापाशः पौरुषेयः प्रकीर्तित इत्यस्यायमर्थः—आद्यन्तग आदिस्वरस्यान्तगः समनन्तरस्थितो द्वितीयः स्वरः कामेश्वरपाश इत्यर्थः रुद्रशक्ति कुण्डलाख्या माया स्त्रीपाश उच्यत इत्यस्यायमर्थः—[१४]कुलकुण्डलीरूपा रुद्रशक्तिर्मायाबीजरूपा कामेश्वरीपाशमन्त्रः ।। ६३ ।।

**आद्यन्तगः** प्रथमदीर्घः । कुलशक्तिः कुण्डलिनी मायेति हृल्लेखापर्यायाः ।। ६३ ।।

१. नास्त्येषा पङ्क्तिः–ब. । २. चक्र–ख. ग. ङ. । ३. 'आदि' नास्ति–ख. ङ. । ४. उद्धृताः–ख. ङ. । ५ 'शरा' नास्ति–ग. । ६. 'इति' नास्ति–ख. ङ. । ७. 'नियोजिता' नास्ति–ख. ङ. । ८. पदं व्याख्याय–ख. ङ., पदव्याख्यायाः–ग. । ९. र्थो विस्फु–ग. । १०. 'अपि' नास्ति–ख. घ. ङ. । ११. पाशवी–ख. ङ. । १२. आदिस्वरान्तगतो–ख. ङ. । १३. 'भिध' नास्ति–ख. ङ. । १४. कुण्ड–क. ।

1. "आदौ शक्तिबाणबीजान्युद्धृत्य पश्चाच्छिवबाणबीजान्युद्धृतानीत्यर्थ इति प्राञ्चो व्याचक्षते" (से. पृ. १५७ ) ।
2. "रुद्रः शिव एव शक्तिः सामर्थ्यं यस्य स हकार इति केचित्" ( से. पृ. १५७ ) ।
3. "कुण्डलाख्यशब्देन रेफो गृह्यते । माया ईकारः । तेन भुवनेश्वरीबीजमेव स्त्रीपाश इत्यर्थ इति प्राञ्चः" ( से. पृ. १५८ ) ।

**तुरीयमरुणावर्गाद्[1] द्वितीयमपि पार्वति ।**
**पुंस्त्रीकोदण्डयुगलं[2] कामोऽग्निर्व्यापकोऽङ्कुशः[3] ।। ६४ ।।**

यस्य स रेफः । **मायाशब्देन** पुनरीकारो लक्ष्यते । सामर्थ्याद्धकाररेफ-मायारूपं भुवनेश्वरीबीजम् । **स्त्रीपाश**[4] इत्यर्थः । बिन्दुरपि सामर्थ्यादितयो-र्बीजयोरायात इति बोद्धव्यम् । आं ह्रीं[5] इति ।। ६३ ।।

पुंस्त्रीकोदण्डबीजद्वयमङ्कुशबीजं[6] चोद्धरति—**तुरीयमिति** । [1]**अरुणा-वर्गस्तवर्गः** । **तुरीयबीजं** धकारः । **द्वितीयं**[7] थकारः । अनयोरपि बीजयोः सामर्थ्यप्राप्तो बिन्दुः । धं थं[8] इति । **कामः** ककारः । **अग्नी** रेफः । **व्यापक** ओकारः । अत्राप्याय(ति)तो[9]ऽनुस्वारः । क्रोमिति । **अङ्कुश** इति । [2]सामान्यवचनादमुकस्येति निर्देशाभावाद्[10] द्वयोक्तिप्रकरणाच्चायमेव मिथुन-स्याङ्कुशः ।। ६४ ।।

---

तुरीयमरुणावर्गादित्यारभ्य व्यापकोऽङ्कुश इत्यन्तश्लोकपदानां व्याख्या लिख्यते— [1]अरुणावर्गस्तवर्गस्तच्चतुर्थमक्षरं कामेश्वरं धनुस्तस्य द्वितीयं कामेश्वरीधनुः । कामः ककारः । अग्निरिति रेफः । व्यापक ओकारः[11] । एभिरक्षरैः संपाद्यमानं बीजं कामेश्वराङ्कुशं भवति । [2]एतस्यैव व्यापकाक्षर(स्य) स्थाने ओकारमुद्वास्य[11] औकारप्रक्षेपादेव बीजं कामेश्वर्यङ्कुशं भवति ।। ६४ ।।

**द्वितीयमित्यादि** । **अरुणावर्गः** पञ्चमो वाग्देवतावर्गः । **कामोऽग्निर्व्यापकः** । **कामो** विसर्गान्तः । अग्निः रेफः । **व्यापकौ** त्रयोदशचतुर्दशस्वरौ । कमाग्निना पृथग् योजितौ पौरुष-शाक्ताङ्कुशबीजौ भवतः ।। ६४ ।।

---

१. वर्गे—वाग. से. । २. स्त्रीपुंस्को—वाक. ख. । ३. कामाग्नि—वाक. ख. । ४. ह्रीं स्त्रीं पाश—ख. ङ. । ५. 'आं ह्रीं इति' नास्ति—ख. ङ. । ६. बीजद्वयं—ख. ङ. । ७. द्वितीयबीजं धकारः—ग, नास्ति—ख. ङ. । ८. दं धं—ख. ङ., यं यं—ग. । ९. यतनेऽ—ख. ङ. । १०. निर्देशाद्वा—ग. । ११. ओंकार—छ. ।

1. "वशिन्याद्यष्टकेऽरुणावर्गस्तवर्गः । तत्र चतुर्थमक्षरं धं शिवधनुः । द्वितीयं थं शक्तिधनुः । कामः ककारः । अग्नी रेफः । व्यापकस्त्रयोदशस्वरः । सम्प्रदायाद्बिन्दुश्चेत्यर्थ इति प्राञ्चः । अत्र व्यापकशब्दस्य त्रयोदशस्वरबोधकत्वे कोशो मृग्यः" ( से. पृ. १५८ ) । जयरथेनापि व्यापकपदेन ओकार एव गृहीतः ।

2. "एकमेव चेदमङ्कुशबीजं स्त्रीपुंसयोरुभयोरपि विशेषानुक्तेरिति प्रामाणिकाः, तेन षष्ठस्वर-त्रयोदशस्वरभेदेनात्रापि द्वैविध्यं वदन् विद्यानन्दनाथः किंमूलक इति विचार्यम्" (से.पृ. १५९)

**मुद्रा यास्त्रिपुरायास्तु[1] देवि सिद्धयष्टकान्विताः[2] ।**
**ता एव[3] सर्वचक्रेषु पूजाकाले प्रदर्शयेत्[4] ।। ६५ ।।**
**अतः प्रधानविद्येयं त्रिपुरा परमेश्वरि[5] ।**
**नैतस्याः[6] सदृशी काचिद् विद्या देवेशि विद्यते ।। ६६ ।।**

---

पूर्वं मुद्राप्रदर्शनमात्रं प्रसक्तम्, इदानीं मुद्राप्रदर्शने [1]गुणविधिमाह—**मुद्रा** इति । क्षोभिण्याद्याः[7] पूर्वोक्ता[8] **याः त्रिपुरायाः** संबन्धिन्यः । **सिद्धयष्टकान्विता** अणिमादिमहा[9]विभूतियुक्ताः । एवकारो भिन्नक्रमः, पूजाकाल एवेति । **सर्वचक्रेषु** त्रैलोक्यमोहनादिसर्वानन्दमयान्तेषु । **पूजाकाले प्रदर्शयेदिति** । नान्यस्मिन् काल इत्यर्थः ।। ६५ ।।

---

मुद्रा यास्त्रिपुरायास्त्वित्यारभ्य पूजाकाले प्रपूजयेदित्यन्तस्यायमर्थः—(हे) देवि ! त्रिपुराया मुद्रा या अत्रैव[10] प्रदर्शितास्ताः सृष्टिस्थितिसंहारात्मकचक्र[11]त्रितयेऽपि पूजाकाले यथानुक्रमेण सिद्धयष्टकानन्तरं प्रपूजनीया इत्यर्थः । [1]सिद्धयोऽणिमादयः, अष्टका ब्रह्माण्याद्यः ।। ६५ ।।

अतः प्रधानविद्येयं त्रिपुरा परमेश्वरीति । इयं महात्रिपुरसुन्दरी विद्या आत्मविद्यानां प्रत्यङ्गद्वयज्ञप्तिकर्तृस्वभावलक्षणस्य परमशि(वे?वस्ये)च्छात्मकत्वात् प्राधान्येन

**मुद्रा या** इत्यादि । मुद्राः प्रागुक्ता अपि स्वस्वनाममन्त्रैरणिमादिदशकब्राह्म्याद्यष्टकारणद्वयानन्तरं पूज्याः । **सर्वचक्रेषु** आह्वानविनियोजितां त्रिखण्डां विना नवमुद्रा दर्शयेदित्यर्थः । द्वयं प्रयोजयेदिति पदं सूचयति ।। ६५ ।।

**अतः प्रधानविद्येयमित्यादि । इयं** महात्रिपुरसुन्दरी साधकान्तर्महा[12]विद्याऽध्यात्मविद्यानामपि **प्रधानविद्या** भविष्यति । किञ्च, अन्तरङ्गबहिरङ्गभावेन ज्ञप्तिकर्तृस्वभाव(स्यादु?-[13]

---

१. या त्रि–ब. । २. त्मिका–सख. । ३. तथैव–सख. । ४. प्रपूजयेत्–वाक. ख. अ., षु पूजयेत्–सख. । ५. श्वरी–वाक. ख. । ६. तया–सक. । ७. ण्याद्या याः–ग. घ. । ८. 'याः' नास्ति–ख. ङ. । ९. 'महा' नास्ति–ख. ङ. । १०. 'अत्रैव' नास्ति–छ., तत्स्थाने 'मे' इति वर्तते । ११. 'चक्र' नास्ति–छ. । १२. 'महा' नास्ति–ख. । १३. स्वभास्यादु–ख. ।

1. "केचित्तु मुद्राप्रदर्शनविधिमात्रमेतदिति व्याचक्षाणा मन्त्रराहित्यसाहित्ययोरुदासीन एवायं श्लोक इति मन्यन्ते । परे तु सिद्धयोऽणिमादिदशकम् । अष्टकं ब्राह्म्याद्यष्टकम् । आभ्यामन्विता इत्यनेन तत्पूजनोत्तरकाल उच्यते । प्रपूजयेदित्येव तु पाठः । तेन कालविशिष्टमुद्रापूजाविधिरेवायमित्याहुः" ( से. पृ. १५९ ) ।

**[1]एतामेव पुराराध्य विद्यां [1]त्रिपुरभैरवीम् ।**
**त्रैलोक्यमोहनं रूपमकार्षी[2]द् भगवान् हरिः ॥ ६७ ॥**
**कामदेवोऽपि देवेशि महात्रिपुरसुन्दरीम् ।**
**समाराध्याऽभवल्लोके सर्वसौभाग्यसुन्दरः ॥ ६८ ॥**
**मयाऽ[3]प्येतद्व्रतस्थेन क्रियतेऽद्यापि सु[4]व्रते ।**
**[5]जपस्त्रिसन्ध्यमेतस्यास्तदेतत्पदसिद्धये ॥ ६९ ॥**

---

[6]प्रतिपादितक्रमेणैवंविशिष्टेयं त्रिपुरा विद्येति यतः—अत इति । **प्रधानविद्या** सर्वासां वि[7]द्यानां मध्ये । **इयं** [8]या मया [9]तव हृदयङ्गमतां नीता । **त्रिपुरा** [10]पराभट्टारिका । **परमेश्वरी**त्यामन्त्रणम् । **एतस्याः** सर्व-विद्याप्रसवभूमेरित्यर्थः ॥ ६६ ॥

नारायणकामदेवावप्येतद्विद्याबलेनैव सर्वलोकसुभगावित्याह—**एता-मिति** द्वयेन ॥ ६७–६८ ॥

---

स्वरूपभूतेत्यर्थः । सन्त्वन्या अपि विद्याः स्वरूपभूताः शिवस्य, किन्त्वियं तासा-मप्याधारभूता । अतोऽस्याः प्राधान्यमुच्यत इत्यर्थः । नैतस्याः सदृशी काचिद् विद्या देवेशि [11]विद्यत इति । यत इयं समस्तमन्त्राणां विद्यानां च प्रसवभूः परमशिवात्मचिच्छक्ति-रूपा, अत एव कारणादेतस्या महात्रिपुरसुन्दर्या विद्यायाः सदृशी अन्या काचिद्विद्या न विद्यत इति यावत् ॥ ६६ ॥

एतामेवेत्यारभ्य तदेतत्पदसिद्धय इत्यन्तश्लोकसमुदायेनास्या विद्याया दिव्यगुरु-परम्परागत(ता)मुपदिशति परमशिव इति भावः ॥ ६७–६९ ॥

स्यो)न्मेषभूतेच्छाशक्तिमयी विद्याऽन्तरङ्गतया प्रधाना भूत्वाऽन्यासाम( पि ) विद्याना-माधारभूता भवतीत्यत एव कारणाद् **एतस्याः** श्रीमहात्रिपुरसुन्दरीविद्यायाः **सदृशी** काचिदन्या विद्या **न विद्यते** ॥ ६६ ॥

एतामेवेत्यादिग्रन्थेन पारम्पर्यापेक्षां सिद्धिं सूचयति ॥ ६७–६९ ॥

---

१. त्रैलोक्यमोहनम्–वाग., त्रैलोक्यमोहिनीम्–से. ब. सख., त्रैलोक्यमोहनि–सक. । २. करोद्–सक. । ३. पि य–वाक. ख., पि च–सक. । ४. सुन्दरि–वाक. ख. ग. अ. । ५. जप्यं–वाक. ख. ग. से., जाप्यं–सक. । ६. प्रतिपदादि–ख. ङ. । ७. 'विद्यानां' नास्ति–ख. ङ. । ८. 'या' नास्ति–ख. ग. ङ. । ९. 'तव' नास्ति–ख. ङ. । १०. 'परा' नास्ति–ख. ङ. । ११. दृश्यत–छ. ।

1. "एतच्छ्लोकद्वयविवरणपर एव भगवत्पादैः सौन्दर्यलहर्यां हरिस्त्वामाराध्य प्रणतजनसौभाग्य-जननीमिति श्लोक उक्तः" ( से. पृ. १६० ) ।

**मध्यप्रपूजनाद्[१] देवि वाक्पतिर्जायतेऽपरः[२] ।**
**तथैवापरकन्दर्पो बाह्यमध्यान्तराऽर्चनात्[३] ।। ७० ।।**
**सर्वेण[४] सर्वदा सर्वदेवीयुक्तेन[५] पार्वति ।**
**साधयेत् खेचरीसिद्धिमणिमादिगुणान्विताम्[६] ।। ७१ ।।**

इति श्रीनित्याषोडशिकार्णवे चतुर्थः पटलः ।।

—:०:—

---

किमितरैर्देवैः, मयाप्येतद्भजनं सदा क्रियत इत्याह—**मयाऽपीति** । **एतद्व्रतस्थेन** एतद्विद्याभजनोपायपदवीप्रविष्टेन । **एतस्या** विद्यायाः । **तदेतत्** कर्म । किमिति क्रियत[७] इत्याह—**पदसिद्धय** इति । अयमर्थः—ईश्वराणामप्यैश्वर्यमनुष्ठानात्मना पौरुषेणैव सिद्ध्यतीति । **यच्छ्रुतिः**—"विष्णुर्वा अकामयत पुण्यश्लोकं शृण्वीय" ( तै० ब्रा० ३।१।५।७ ), "रुद्रो वा अकामयत पशुमान् स्याम्" ( तै० ब्रा० ३।१।४।४ ) इति[८], "ब्रह्मा[९] वा अकामयत ब्रह्मलोकमभिजयेयम्" ( तै० ब्रा० ३।१।५।६ ) इति ।। ६९ ।।

पूजायां चक्रविकल्पमाह—**मध्येति** द्वयेन । **मध्यप्रपूजनाद्** [1]महाचक्रमध्यत्रयश्चार्चनात्[१०] । **वाक्पतिर्जायतेऽपर** इति । अपरो[११] वाचस्पतिर्जायते ।

---

मध्यप्रपूजनादित्यारभ्य अणिमादिगुणान्वितामित्यन्तश्लोकसमुदायः [1]चक्रत्रयस्य पृथक् पृथक् फलवचनः स्पष्टार्थः ।। ७०-७१ ।।

।। इति श्रीविद्यानन्दविरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां प्रत्येकबीजसाधनविधिश्चतुर्थः[१२] पटलः ।।

**मध्यप्रपूजनादि**त्यादिना श्रीपूजाचक्रस्य तत्त्वनिर्णयित्रैकस्य पूजाफलं पृथक् पृथक् स्पष्टमेव निर्दिष्टमिति ।। ७०-७१ ।।

इति श्रीविद्यानन्दनाथविरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां चतुर्थः पटलः ।।

—:०:—

---

१. प्रथमाराधनाद्–सक. । २. जायते वाक्पतिर्नरः–वाक. ख. । ३. न्तरेऽर्च–वाक. ख., न्तपूज–वाग. से. ब., न्तमर्चयेत्–सक. । ४. सर्वेशि–सख. । ५. सर्वं–वाक. । ६. खेचरीं–से. सक. ख. । ७. त इति तत्राह–ख. घ. ङ. । ८. इति च–ग. घ. । ९. 'ब्रह्मा....जयेयमिति' नास्ति–ग. घ. । १०. चक्रस्य–घ. । ११. 'अपरः' नास्ति–ख ङ. । १२. 'विधि' नास्ति–क. ।

1. "तेन यदृजुविमर्शिन्यामुक्तं त्रिकोणबिन्दुगतदेवताचतुष्टयमात्रपूजनमेव मध्यपदेनोच्यत

पूजक इति शेषः । **बाह्यमध्यान्तरार्चनादिति** । **बाह्यशब्देनाष्टारमुच्यते** । **मध्यशब्देनान्तस्थत्र्यश्रमुच्यते** । ततस्थानान्तरार्चनादिति । अयमर्थः—अष्टारे वशिन्याद्यष्टकं मध्यत्र्यश्रे तत्तद्देवतार्चनमिति । **सर्वेण** पूर्णचक्रेण । **सर्वदा** सर्वस्मिन्नपि पूजाकाल इत्यर्थः । **सर्वदेवीयुक्तेन** अणिमादिसिद्ध्यादिमहा[1]देवतान्तशक्तिचक्रोपेतेन । **अणिमादिगुणान्विताम्** अणिमादिमहाविभूत्यष्टकोपेतामिति शिवम् ।। ७०–७१ ।।

एवमृजुविमर्शिन्यां नित्याषोडशिकार्णवे ।
शिवानन्दपरामृष्टश्चतुर्थः[2] पटलो गतः ।।

—:०:—

१. 'महा' नास्ति–ख. ङ. । २. ष्टं चतुर्थं पटलं गतम्–ख. ङ. ।

इति तन्मानाभावादनादेयम् ।''''यदपि रत्नावल्यामुक्तं षोडशाराद्यन्तर्दशारान्तविहितं चक्रं मध्यपदेनोच्यते, षोडशदलाष्टदलपद्ममात्रविनिर्मुक्तं तु बाह्यमध्यगतपदेनोच्यत इति'' ( से. पृ. १६१ ) ।

——

# अथ पञ्चमः पटलः

श्रीदेव्युवाच

सर्वमेतत्[1] त्वया प्रोक्तं[2] त्रिपुराज्ञानमुत्तमम् ।
कामतत्त्व[3]विधि[4]ज्ञानं मोक्षतत्त्व[5]पदावधि ॥ १ ॥

---

एवं [6]चतुर्थं पटलं परामृश्य त्रयस्त्रिंशत्सूत्रग्रथिते पञ्चमे पटले वि[7]मर्श-नीयानि [8]पदानि विमृश्यन्ते । त[9]च्च होमार्चनादिपरम् । तैः समाराधिता देवाः प्रसीदन्तीत्यस्मिन्नर्थे **व्यासमुनिः**—

[10]जपहोमनमस्कारैः स्तोत्रैश्च पुरुषर्षभ ।
दैवतानि प्रसादं हि भक्त्या कुर्वन्ति भारत ॥ इति ।

(म० भा० ३।१५०।२४)

**श्रीदेवीत्यादि । त्रिपुराज्ञानम् ।** त्रिपुरायाः [11]पराशक्तेः सम्बन्धि यद् ज्ञानं

---

अथ पञ्चमपटले विषमपदव्याख्या लिख्यते । सर्वमेतत् त्वया प्रोक्तं त्रिपुरा-ज्ञानमुत्तमम् । कामतत्त्वविधिज्ञानं मोक्षतत्त्वत्रयावधीति । कामस्य तत्त्वं कामतत्त्वम् । कामः परमशिवस्तस्य तत्त्वं विमर्शरूपपरमेश्वरीस्वरूपं कामकलेत्युच्यते । विधिरिति सकल-निष्कलभावेन तस्य विनियोगप्रकारः । ज्ञानं तदवगतिः । तदेव "मोक्षरूपिणी" (४।१७) इति पदेन दर्शितम् । अथवा कामतत्त्वविधिज्ञानं काम(राज)बीजसाधनम्,

**श्रीदेवी—सर्वमेतत् त्वया प्रोक्तं त्रिपुराज्ञानमुत्तमं कामतत्त्वविधिज्ञानमित्यादि । कामः** परमशिवः, तस्य **तत्त्वं** पराशक्तिस्वरूपा कामकला, **विधिरिति** सकलनिष्कलभावेन विधानं तत्साधनम्, **ज्ञानं** तदवगतिः । **मोक्षतत्त्वत्रयावधि ।** मोक्षबीजतत्त्वाख्याद् वाग्भवबीजतत्त्वाख्या-

---

१. मेव—वाक. ख., । २. ख्यातं—सक. । ३. त्त्वं विष—वाक. ख. । ४. ज्ञान—ब. । ५. तत्त्वं त्रयं तथा—वाक. ख., तत्त्वत्रयावधि—अ. ब., न्वितम्—सक., तत्त्वं तयोर्विधिः—सख. । ६. चतुर्थ—घ. । ७. परामर्शनीयानि—ग. घ. । ८. 'पदानि विमृश्यन्ते' नास्ति—ग. घ. । ९. 'तच्च····भारत ॥ इति' नास्ति—ख. ङ. । १०. बलिहोमनमस्कारैर्मन्त्रैश्च भरतर्षभ—मु. । ११. 'पराशक्तेः' नास्ति—ख. ङ. ।

**इदानीं जपहोमानां[1] विधानं वद शङ्कर।**
**येनानुष्ठितमात्रेण मन्दभाग्योऽपि सिद्ध्यति ॥ २ ॥**

तत्[2] त्रिपुराज्ञानम् । **कामतत्त्वविधिज्ञानं**[3] कामतत्त्वप्रकारानुबन्धिज्ञानम् । स[4] च शक्त्युन्मेषविशेष एव । **कामतत्त्वविषज्ञान**मिति पाठे **कामः** कामबीजम् । **तत्त्व**मित्यत्र तदा प्रकृतिभूतेनाहमित्यन्तरुल्लेखाविमर्शस्वभावं ज्ञानम्, स्वरूपे भावप्रत्ययः, तेन वाग्भवबीजं लक्ष्यते । **विष**शब्देन व्याप्तिवाचिनाऽमृतम् । तेन कामराजवाग्भवशक्तिबीजानां ज्ञानमिति यावत् । **मोक्षतत्त्वपदावधि**[5] । मोक्षस्य तत्त्वं मोक्षस्य भावः, तदेव पदं पद्यत इति, तदवधि[6] । तद्धि यदा मोक्षस्वभावे पर्यवस्यति तदा कामतत्त्वविधिज्ञानं प्रोक्तमिति पूर्वेण संबन्धः । तदुक्तं[7] **श्रीपरमार्थसारे—**

मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र ।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः ॥ ( ६० ) इति ।

**विधानं** प्रकारम् । **येन** विधानेन । **मन्दभाग्यः** अकिञ्चनः । **अपि**[8]शब्देनानेकजन्ममध्येऽप्यदृष्टलक्ष्मीवदनता सूच्यते । सिद्ध्यति परभैरवदेवतावदनेनैव देहेन समस्तविभूतिभाजनं भवति ॥ १–२ ॥

---

तेन वश्यादि(का?क)रणं वेति । मोक्षो मुक्तिः, शक्तिशिवसामरस्यप्राप्तिलक्षणम् । तदपि वाग्भवबीजसाधनेनेति "वाग्भवे[9] मोक्षरूपिणी" ( ४।१७ ) इति पदेन दर्शितं पुरस्तात् । तत्त्वत्रयावधीति । आत्मविद्याशिवतत्त्वानां त्रिबीजरूपेण व्यापकत्वमपि कथितमेवेति भावः । प्रत्येकबीजसाधने प्रयोगे[10] ॥ १–२ ॥

दारभ्य **त्रयावधि** त्रिशक्ति(त्रि)तत्त्वादित्रिवृत्कारणत्वावधि बीजावधि व्यासेन प्रतिबीजं समासेन मूलविद्यायाश्च यत्साधनं [1]प्राग् दर्शितं तत्सर्वं त्रिपुराविषयमिति । अत्र "(ना?आ)द्या" (४।४) इत्यादिना ग्रन्थेन प्रागनुक्तं देव्या जपहोमार्चाभ्यां[11] विधानं वदेति प्रार्थितम् ॥ १–२ ॥

---

१. माभ्यां–वाक. ख., माद्यं–ब. । २. 'तत् त्रिपुराज्ञानम्' नास्ति–ख. ङ. । ३. 'कामतत्त्वविधिज्ञानं' नास्ति–ख. ङ. । ४. 'स च ....मिति यावत्' नास्ति–ख. ङ. । ५. मोक्षतत्त्वं मोक्षतत्त्वस्य भावः–ख. ङ. । ६. पदम्–ख. ङ. । ७. 'तदुक्तं ....मोक्षः ॥ इति' नास्ति–ख. ङ. । ८. 'अपि ....भवति' नास्ति–ख. ङ. । ९. 'वाग्भवे ....आत्मविद्या' नास्ति–ग. । १०. प्रत्ययोगे–क. छ. । ११. मार्चना–ङ. ।

1. प्राग् दर्शितमिति । चतुर्थे पटल इति यावत् ।

ईश्वर उवाच

**श्रृणु देवि[1] प्रवक्ष्यामि त्रिपुरामन्त्रसाधनम् ।**
**जपहोमविधानं तु[2] समीहितफलप्रदम्[3] ॥ ३ ॥**
**चक्रमभ्यर्च्य विधिवत्[4] सकलं परमेश्वरि ।**
**मध्यं[5] वा केवलं[6] देवि बाह्यमध्यगतं[7] च[8] वा ॥ ४ ॥**
**तदग्रसंस्थितो[9] मन्त्री सहस्रं यदि वा जपेत् ।**
**व्रतस्थः परमेशानि ततोऽनन्तफलं लभेत्[10] ॥ ५ ॥**

---

**श्रृणु** देवीति । त्वमित्याख्यातेन संबध्यते । **सकलं** पूर्णम् । **विधिवत्**[11] प्रचोदितक्रमेण । **मध्यं वा** मध्यत्र्यश्रं वा । **केवलम्** अन्यव्यावृत्तिपरमेतत् । **बाह्यमध्यगतं च वेति** साष्टारं मध्यत्र्यश्रं वेत्यर्थः । **तदग्रसंस्थितः** चक्राग्र-

---

चक्रमभ्यर्च्य सकलं विधिवत् परमेश्वरीत्यस्य सृष्टिस्थितिलयात्मकं सकलं चक्रं विधिवद् हेतुद्वितीयस्त्रीकुसुमाद्यैः पूजयेदित्यर्थः । मध्यं वा केवलं देवीत्यस्य स[12]नवयोनि-चतुरस्रान्तं सृष्टिचक्रं संहारात्मकं मध्यचक्रं वेत्यर्थः । बाह्यमध्यगतं च वेत्यस्य नवयोनि-दशारद्वयचतुर्दशारचतुरस्रान्तं स्थितिरूपं चक्रं वेत्यर्थः । तदग्रसंस्थितो मन्त्री सहस्रं यदि वा जपेदित्यस्य सृष्टिस्थितिसंहारात्मना स्थितानां त्रिधा विभक्तानां चक्राणां मध्ये एकं चक्रं विधिवदभ्यर्च्य तदग्रसंस्थितो भूत्वा मन्त्री एतां विद्यां जपेत् पुरश्चरणकामो नरो लक्षप्रमाणं ब्रह्मचर्यादिसंयुत इति वाक्यार्थः । यदि तथा जप्तुमसमर्थस्तदा पूर्वोक्तचक्रत्रितयमध्ये एकं चक्रं विधिवत् स्त्रीप्रसूनकापिशायनाद्यैरभ्यर्च्य तस्य

**चक्रमभ्यर्च्ये**त्यादि । सृष्टिस्थितिसंहारकारि सकलवाचकवाच्ययथाविधायि नवयोनि-दशारद्वयचतुर्दशारचतुरश्रात्मकं बाह्यमध्यगतं श्रीचक्रं कुलाचारक्रमेण सपरिवारपरमेश्वरी-पूजया प्रसादाभिमुखीं कारयित्वा **तदग्रसंस्थित**स्तदभिमुखं समुपविष्टः सुभक्तो **व्रतस्थो** जितेन्द्रियो निरन्तराधिकजपाद्यनुष्ठानाशक्तः प्रतिदिनं सहस्रमात्रादप्यनूनं यावज्जीवं जपेत् । ततस्ताव-

---

१. देवेशि–सख. । २. च–ब. सक. । ३. त्रिपुरामन्त्रसाधनम्–सक. । ४. सकलं विधिवत्–अ. ब. से. सक. ख. । ५. मध्यस्थं–अ., मध्ये च–सक., मध्यमं–सख. । ६. लां देवीं–सक. । ७. गते–सक. । ८. तु–वाक. ख. ग. । ९. तदग्रे–वाक. ख. । १०. भवेत्–से. । ११. 'विधिवत्' नास्ति–ख. ङ. । १२. 'स' नास्ति–छ. ।

**ध्यात्वा वा[1] हृद्गतं चक्रं तत्रस्थां परमेश्वरीम् ।**
**पूर्वोक्तध्यानयोगेन संचिन्त्य जपमारभेत् ॥ ६ ॥**

---

भागसंस्थितः । **व्रतस्थः** इन्द्रियजयोद्यतः । यदाह—[2]"व्रतचारी सदैवैष य इन्द्रियजये रतः" इति ॥ ३–५ ॥

अथवा बाह्यचक्रपूजां परित्यज्य हृदयकमलोदरे चक्रं परिभाव्य सं[3]पूज्य जपेदित्याह—**ध्यात्वेति । पूर्वोक्तध्यानयोगेन** "ततः पद्मनिभाम्" ( १।१३० ) इत्यादिध्यान[4]योगेन ॥ ६ ॥

---

चक्र(स्य) पुरतः संस्थितो भूत्वा [1]मुद्राबन्धपूर्वकं सहस्रं जपेदिति वाक्यार्थः । व्रतस्थः परमेशानि ततोऽनन्तफलं लभेदित्यस्य राष्ट्रभ्रंशदेहपीडादिना कदाचिदपि जपह्रासं न कुर्यामिति सकलपपूर्वकं जपेद् यावज्जीवाधिकारम् । ततोऽनन्तफलं लभेदिति भावः ॥ ३–५ ॥

ध्यात्वा तु हृद्गतं चक्रं तत्रस्थां परमेश्वरीम् । पूर्वोक्तध्यानयोगेन संचिन्त्य जपमारभे[5]दित्यस्यायमर्थः—यदि कथञ्चिद् बाह्यचक्रमुद्धृत्य परमेश्वरीमाराधयितुमसमर्थः साधक एतच्चक्रं पूर्वोक्तन्यायेन हृदयकमलकुहरान्तः संचिन्त्य परमेश्वरीं सपरिवारामाकाशादि[6]क्षित्यन्तसंभवैर्गन्धादिनैवेद्यान्तैः पञ्चोपचारैः शब्दाद्यैः स्वाभाविकैरभ्यर्च्य परमामृतकलया संतर्प्य परमशिवसमरसीकृततया स्वात्मैक्यं संचिन्त्य स्वयं च कामेश्वरीरूपावर्तमुद्रानवकं निबध्य सहस्रमावर्तयेत् । मूलविद्यापुरश्चरणं कर्तुमशक्तः[7] साधकश्चेदन्तर्यजनवि[8]धिप्रवीणः सन्[9] युक्तो विधिना जपेदिति जपविधिः । अन्तर्यंजनन्मात्रनियुतेनानन्तफलमुक्त्यविरोधि सद्भक्तिपुरस्सरं स्वरसपरमानन्दप्रबोधात्मकं शिवपदं लभते ॥ ३–५ ॥

ध्यात्वेत्यादि । बाह्यार्चनान्तरार्चनेति ध्याने योगेऽनाहतप्रस्फुरत्पूजाचक्रराजसन्निहितां परदेवतां यथावदाराध्य प्रागुक्तफलाप्तये जपेत् ॥ ६ ॥

---

१. तु–अ., हृदि स्थितं–सख. । २. उक्तं च–ख. ङ. । ३. स पूजां–ख. ग. ङ. । ४. ध्यानेन–ख. । ५. दित्येत–छ. । ६. 'दिक्षित्य'''''शब्दा' नास्ति–छ. । ७. शक्तश्चेत्–क. ग. । ८. 'विधि' नास्ति–छ. । ९. सद्युक्तो–क. छ. ।

1. "केचित्तु योनिमुद्रामाबध्य यो जपो मन्त्रदोषनिरासार्थत्वेन सकृत् सहस्रसंख्याकस्तन्त्रेषु विहितो दृश्यते, स तावन्मात्र एवेह पुरश्चरणत्वेन विधीयत इत्याहुः" ( से. पृ. १६३ ) ।

**निगदेनोपांशुना वा मानसेनापि सुव्रते ।**
**पूर्वोक्तन्यास[१]संयुक्तो मुद्रा[२]संनद्धविग्रहः ।। ७ ।।**
**मुक्ताहारमयीं[३] स्फीतवैडूर्यमणिसंभवाम् ।**
**पुत्रजीवकपद्माक्षरुद्राक्षस्फटिकोद्भवाम् ।। ८ ।।**
**प्रवालपद्मरागादिरक्तचन्दननिर्मिताम् ।**
**कुङ्कुमागुरुकर्पूरमृगनाभिविभूषिताम्[४] ।। ९ ।।**
**अक्षमालां समाहृत्य त्रिपुरीकृतविग्रहः ।**
**[५]लक्षमात्रं जपेद् देवि महापापैः प्रमुच्यते ।। १० ।।**

---

जपे गुणविधिमाह—**निगदेति** । **निगदेन** व्यक्तोच्चारणेन । **उपांशुना** । विभक्तिरागमायाता । आत्मश्रवणयोग्यप्रयत्नेन । **मानसेन** स्मृतिमात्रेण । **पूर्वोक्तन्याससंयुक्तः** करशुद्ध्यादिवशिन्याद्यन्तन्याससंयुक्तः । **मुद्रासंनद्धविग्रहो** योनिमुद्राबन्धेन कवचितस्वदेहः । **पद्मरागादी**त्यत्रादिशब्देन रत्नान्तरं गृह्यते । **मृगनाभिः** कस्तूरिका । **अक्षमालाम्** । अक्षमालाशब्दस्य मुख्यार्थस्त्वादिक्षान्ता वर्णमाला । [६]अत्राभियुक्तवचनम्—

---

शीलस्य हवनमथान्तरम् । [७]तथाहि—'मूलाधारकमलान्तरुद्यत्त्रिकोणकुण्डान्तरुल्लसितचिदग्नौ मनसा स्रुचा सुषुम्नावर्त्मना पराकाशकुशेशयान्तःस्पन्दिपरमशिवसुधाज्येन मूलविद्यामुच्चरन्नाज्याहुतिं विधायानन्तरं सकलधर्माधर्मसुखदुःखाक्षवृत्तीर्जुहुयाद् [८]यथाशक्तीत्यर्थः ।। ६ ।।

मुक्ताफलामलमणीत्यारभ्य अक्षमालां समाहृत्येत्यन्तः श्लोकसमुदायोऽक्षमालासाधनप्रकारोपदेशकः स्पष्टार्थः । त्रिपुरीकृतविग्रह इत्यारभ्य जप्त्वा त्रिपुरसुन्दरीमित्यन्ताः

**निगदेने**त्यादि । कृतनिग्रहोऽन्तस्थावश्यंभाविसर्वविधिविहितसिद्धारवायोपदेशिनोऽयमर्थः । **पूर्वोक्तन्यासयोगे**नात्मकलेवरं त्रिपुरीकृत्यान्तर्बाह्ययागानुरूपेण कृतोपचारार्चननवमुद्रादर्शना-

---

१. न्याससंनद्धो—वाक. ख. सक., न्यायसंबन्धो—सख. । २. मुद्रित—सक. । ३. फलामलमणिस्फीतवैडूर्यसंभवाम्—वाग. अ. से. सख., स्फीतां वैडूर्य—ब., फलकमाणिक्यसिद्धवैडूर्यसंभवाम्—सक. । ४. विभाविताम्—वाग. से. । ५. लक्षमेक—वाग. से. सक. ख. । ६. 'अत्र.... मालिका ।। इति' नास्ति—ख. ङ. । ७. 'तथाहि.... विधायानन्तरं' नास्ति—छ. । ८ शक्त्ये—छ. ।

1. अत्र "महाशून्यालये" ( श्लो. १४९ ) इति विज्ञानभैरववचनम्, योगिनीहृदयदीपिकास्थं "धर्माधर्महविर्दीप्ते" ( पृ. २६४ ) इत्यादिकं पद्धतिवचनं चानुसन्धेयम् ।

**लक्षद्वयेन पापानि सप्तजन्मकृतान्यपि ।**

**नाशयेत् त्रिपुरा देवी साधकस्य न संशयः ॥ ११ ॥**

**जप्त्वा[1] लक्षत्रयं मन्त्री यन्त्रितो[2] मन्त्रविग्रहः ।**

**पातकं[3] नाशयेदाशु सप्तजन्म[4]सहस्रजम्[5] ॥ १२ ॥**

**जप्त्वा विद्यां चतुर्लक्षं महावागीश्वरो भवेत् ।**

---

इतीरिता सकलजगत्प्रभाविनी क्रमोत्क्रमक्रमगुणितार्ण[6]मालिका ।
अभीष्टसाधनविधये च मन्त्रिणां भवेन्मनुप्रतिपुटिताक्षमालिका ॥ इति ।
( प्र० सा० ८।२६ )

तां विहायात्र मुक्ताफलादिर्गौणार्थो गृह्यते । महामुख्यार्थस्तु का[7]रणश्वरो-**पङ्क्तिसंविन्मार्गजपविधौ** द्रष्टव्यः । तदुक्तं **श्रीमहागुरुभिः—**

मत्परं नास्ति तत्रापि जापकोऽस्मि तदैक्यतः ।
तत्त्वेन जप इत्यक्षमालया दिशसि[8] क्वचित् ॥ इति ।
( शि० स्तो० ३।१७ )

**समाहृत्य** गृहीत्वा । **यन्त्रितः** चर्यापादोक्तक्र[9]मेण संयतः । **मन्त्रविग्रहो** [10]मन्त्रन्यस्तदेहः । **जप्त्वा** जपित्वा । जपशब्दनिर्वचनेऽ**भियुक्तोक्तिः—**

मन्त्रतत्त्वाप्रमादो यः स जपो जन्मपालनात् ।
जन्म मन्त्रसतत्त्वं तत्पालनं [11]तद्विमर्शनम् ॥ इति ।

[12]असौ पारमार्थिको जपः । अत्र तु वर्णावृत्तिरूप इति विशेषः । जप-[13]**विधावभियुक्तोक्तिः—**

---

श्लोका जपसंख्यावाचकाः स्पष्टार्थाः । विधिवज्जायत इत्यारभ्य स्वच्छन्दगतिरीश्वर इत्यन्तग्रन्थो मूलविद्याफलवचनः स्पष्टार्थः ॥ ७–१७ ॥

क्षमालाग्रहणादि कृत्वा यथाकामं जपेदिति । ततो **निगदेन** निजानुभूतिव्यक्तेन, **उपांशुना** निज-श्रुतिव्यक्तेन, **मानसेन** मनोगतेन सर्वोपचारेण जपेत् । **मुक्ताफलामलमणिरिति** । निर्मलमुक्ता-मणिरिव स्थितं स्फुरितम्[14] । **लक्षमात्र**मित्यादि **गतिरीश्वर** इत्यन्तः स्पष्टार्थः ॥ ७–१७ ॥

---

१. नास्त्येष श्लोकः–सख. । २. प्रयतो–वाक.ख. । ३. कान्ता–सक. । ४. यदि–ब्र.सक. । ५. गम्–वाग. से., कम्–सक. । ६. र्णपालिका–मा. । ७. कारणेश्वर–ख. ङ., परमेश्वरि–ग. । ८. विशसि–ग्र. । ९. मार्गेण–ख. ङ. । १०. 'मन्त्रन्यस्तदेहः' नास्ति–ख. ङ. । ११. सद्वि–ख. ङ. । १२. 'असौ····च ॥ इति' नास्ति–ख. ङ. । १३. विधाने–ग. । १४. स्फुटितम्–ङ. ।

**पञ्चलक्षाच्चादरिद्रः[1] साक्षाद् वैश्रवणायते[2] ॥ १३ ॥**
**जप्त्वा षड्लक्षमेतस्या महाविद्याधरेश्वरः ।**
**जप्त्वैव[3] सप्तलक्षाणि खेचरीमेलकं[4] व्रजेत् ॥ १४ ॥**
**अष्टलक्षप्रमाणं तु[5] जप्त्वा विद्यां महेश्वरि[6] ।**
**अणिमाद्यष्टसिद्धीशो[7] जायते देवपूजितः[8] ॥ १५ ॥**
**नवलक्षप्रमाणं तु जप्त्वा त्रिपुरसुन्दरीम् ।**
**विधिवज्जायते मन्त्री[9] रुद्रमूर्तिरिवापरः ॥ १६ ॥**
**कर्ता हर्ता स्वयं गौरि[10] लोकेऽप्रतिहतप्रभः ।**
**प्रसन्नो[11] मुदितो धीरः स्वच्छन्दगतिरीश्वरः ॥ १७ ॥**

---

पद्मासनः प्राग्वदनोऽप्रलापी तन्मानसस्तर्जनिवर्जिताभिः ।
अक्षस्रजा वाऽङ्गुलिभिर्जपेत् तं नातिद्रुतं नातिविलम्बितं च ॥ इति ।
( प्र० सा० २०।३९ )

**एतस्या** विद्यायाः । **खेचरोमेलनं** योगिनीभिः सहासिका । **विधिवद्** यथाशास्त्रम् । **रुद्रमूर्तिरिवापर** इति शापानुग्रहक्षमो महायोगी भवतीति । **कर्ता** अनुग्रहविधौ श्र्यादिसंयोजनसमर्थः । **हर्ता** निग्रहविधौ श्र्यादिसंहरण[12]-प्रवीणः । **स्वयम्**[13] । सिद्धमन्त्रः साधक इत्यर्थः । सिद्धिर्नाम देवतात्मत्वेन प्रकाशमानता[14] । तदुक्तमभियुक्तैः—

सिद्धिर्नाम मनूनां[15] हि देवतानामहङ्कृतेः[16] ।
दृढत्वं तच्च ताद्रूप्यतादात्म्यामर्शनादिभिः ॥ इति ।

इयं[17] महासिद्धिः । इह हि[18] लौकिकी सिद्धिरुच्यते । **प्रसन्नः** अतिप्रसन्नः[19]

१. दृरिद्रोऽपि–वाग. से. सक.ख., क्षैर्द्दरिद्रोऽपि–ब. । २. श्रवणो भवेत्–वाग.से. सक.ख. । ३. सप्तलक्षाणि जप्त्वैवं–ब. । ४. मेलको भवेत्–वाग. से. सख., मेलनं भवेत्–सक., साधकः खेचरो भवेत्–ब. । ५. च–से., णेन–सक. । ६. तु साधकः–ब. । ७. नामीश्वरो देवि जायते–सख. । ८. दिवि पूजकः–ब., देवि पूजितः–सक. । ९ देवि–सख. । १०. देवि–ब. । ११. नित्यप्रमुदितो वीरः–वाक. ख., धीरः–सक. । १२. वरण–ख. ङ., संहरणकर्मणि–ग. । १३. सिद्धं मन्त्र–ग. । १४. मानत्वम्–ग. । १५. मन्त्राणां–ग. । १६. ताया अ–ग. घ. । १७. 'इयं····रुच्यते' नास्ति–ख. ङ. । १८. 'हि' नास्ति–ग. । १९. 'अति····कालुष्यः' नास्ति–ख. ।

**निगदेन यदा[1] जप्तं लक्षं चोपांशुना[2] कृतम् ।**

**मानसेन महेशानि कोटिजा[3]पफलं लभेत् ।। १८ ।।**

---

प्रशान्तमायाकालुष्यः । **मुदितः[4]** प्रत्यभिज्ञातशङ्करात्मस्वभावानुत्तरानन्द-चमत्कारः । **धीरः** पुनः[5] पुनर्वि[6]भावितमहेश्वरस्वरूपामर्शनतदुपनिषत्सार-संग्रहः । **स्वच्छन्दगतिः**—

योगी स्वच्छन्दयोगेन स्वच्छन्दगतिचारिणा ।

स्वच्छन्दपदवी[7]लीनः[8] स्वच्छन्दसमतां व्रजेत् ।।

( स्व० त० ७। २६० )

इत्याम्नातनीत्या विधिनिषेधागोचरनिर्यन्त्रणमहारहस्यशिवमार्गानुप्रविष्टः । **ईश्वरः** समस्तविभूतिप्रसवा[9]वनिः ।। ७–१७ ।।

**निगदेनेत्यस्यायमर्थः**—उच्चैर्भाषणेन लक्षजपस्य फलम् उपांश्वेकेन लभ्यते । उपांशुरूपस्य कोटिजपस्य फलं मानसेनैकेन लभ्यत इति । अत्रा-**भियुक्तवचनम्**—

उच्चारो मनसा स्थान[10]ध्यानवर्णप्रकल्पनात् ।

मानसो जप इत्युक्तो योगमार्गप्रवर्तकः ।।

---

निगदेनेत्यादि । वाचिकलक्षजपफलमुपांशुना जप्तं कोटिजाप्यफलमेकेन मानसेन लभ्यते[11] । वाचिकोपांशुमानसानां लक्षणं श्रीसिद्धनाथपादैरुक्तम्—

उच्चारो मनसा स्थानध्यानवर्णप्रकल्पनात् ।

मानसो जप इत्युक्तो योगमार्गप्रदर्शकः ।।

**निगदेनेत्यादि** । प्रागेव "सहस्रं यदि वा जपेत्" ( ५।५ ) इति भूतभीतानां सहस्र-संख्यानिगदादयो गृह्यन्ते[12] । अत एव **निगदेन जप्तं** सहस्रं यथा जप्तमेव[13] न नार्थत एवेत्यर्थः । **उपांशु**जप्तं सहस्र निगदं लक्षजपसमं भवति । मनसावर्तितं जपं[14] सहस्रं निगदजप-कोटिर्जायते ।। १८ ।।

---

१. तु यज्जप्तं–वाग. से., यथा जप्तं–सक., तथा जप्तं–सख. । २. समम्–वाग. से., स्मृतम्–सक. ख. । ३ जाप्यफलं भवेत्–वाग. से., जाप्य–अ., जाप्यफलं–सक. ख. । ४. मुदितः प्रमुदितः–घ. । ५. 'पुनः' नास्ति–ख. ङ. । ६. निभालित–ङ. । ७. स स्वच्छन्दपदे युक्तः–मु. । ८. लग्नः–ग. । ९. प्रसवः–ग., प्रसवावधिः–घ. । १०. ध्यानस्थान–क. ग. घ. । ११. लभते–छ. । १२. गृह्णन्ति–ङ. । १३. स्तमेव–ङ. । १४. 'जपं' नास्ति–ख. ।

**यत्र वा कुत्रचिद्देशे लिङ्गं वै पश्चिमामुखम् ।**
**स्वयम्भु[1] बाणलिङ्गं वा इतरद्वा[2]पि सुव्रते ॥ १९ ॥**
**तत्र स्थित्वा जपेल्लक्षं त्रिपुरीकृतविग्रहः ।**
**ततो भवति देवेशि त्रैलोक्यक्षोभको[3] नरः ॥ २० ॥**

---

उपांशुर्निजकर्णैकगोचरः सिद्धिदायकः ।
[4]सुस्पष्टवचनोच्चारो वाचिकः सिद्धिदायकः[5] ॥ (सि० पा०) इति ।

**अत्र मानवं वचनम्—**

विधियज्ञाज्जपो[6] यज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो[7] मानसः स्मृतः ॥(२।८५) इति ॥१८॥

[8]स्वयम्भुबाणेतरलिङ्गानां मध्येऽन्यतमलिङ्गसन्निधौ जपेदित्याह—[9]
**यत्रेति** द्वयेन । **यत्र कुत्रचिदिति** मेध्यामेध्य[10]विकल्पो न कर्तव्यइत्याह॥१९-२०॥

---

उपांशुर्निजकर्णैकगोचरः सिद्धिदायकः ।
सुस्पष्टवचनोच्चारो वाचिकः सुविशुद्धिदः[11] ॥ ( इति ) ॥ १८ ॥

यत्र वा कुत्रचिद्देशे लिङ्गं वै पश्चिमामुखम् । स्वयम्भूर्बाणलिङ्गं[12] वा इतरं वापि सुव्रते ॥ इत्यस्य ( व्याख्या लिख्यते )—[1]अस्मिन् शरीरे यत्र कुत्रचिद् मूलाधारप्रदेशे पश्चिमाभिमुखं स्वयम्भुवाचकं ज्योतिर्लिङ्गं स्फुरति तत्र स्थित्वा लक्षं जपेत् । तथाऽस्मिन् शरीरे

**यत्र कुत्रचिदित्या**दिग्रन्थार्थो बहिरन्तर्भावेन द्विविधः । अन्तस्थं मूलाधारहृदयभ्रूमध्येषु पश्चिमामु( खम?खान्यू )र्ध्वस्फुरच्छक्ति( ज्यों?ज्यो )तिर्बिन्दुलिङ्गानि स्वय( म्भु )-बाणेतराख्यानि स्युः । तत्र तत्र क्रमेण स्थित्वा तत्तल्लिङ्गमपि लक्षीकृत्य मानसं लक्षं जपेत् । बाह्येऽपि स्वयमाविर्भूतं लिङ्गम्, बाणलिङ्गाख्यं भक्त्या पूजितं नर्मदालिङ्ग

---

१. म्भूर्वा–अ. सक. । २. रं वा–अ. ब. सख. । ३. कारकः-वाग. से. सख. । ४. एषा पङ्क्तिर्न दृश्यते–ख. ग. ङ. । ५. शुद्धिमायतः–घ. । ६ पय–ग. घ. । ७. सहस्रो–ख. ग. घ. ङ. । ८. स्वयम्भुबाणामृतलिङ्गानां पश्चिमाभिमुखानां मध्ये–घ., स्वयम्भुवानां लिङ्गानां–ग. । ९. 'जपे''''जप्यं' नास्ति–ग. । १०. मेध्यदेश–घ. । ११. 'सिद्धिदायकः' इति सर्वासु मातृकासु स्थितः पाठः । अत्र ज्ञानदीपविमर्शिनीस्थः पाठः स्थापितः । १२. म्भु वा–ग., भुवं बाणलिङ्ग–छ. ।

1. ब्रह्माण्ड इव पिण्डाण्डेऽपि स्वयंभ्वादिलिङ्गान्युत्तरपटले वक्ष्यन्ते । तत्परत्वेनैतद्ग्रन्थव्याख्यानं रत्नावलीकारस्य व्यामोह एव" ( से. पृ. १६६ ) ।

**एवं जप्यं[1] यथाशक्ति कृत्वादौ साधकोत्तमः ।**
**होमं कुर्याद् दशांशेन कुसुमैर्ब्रह्मवृक्षजैः ॥ २१ ॥**
**कुसुम्भकुसुमैर्वापि त्रिमध्वक्तैर्यथाविधि ।**
**ततो भवति विद्येयं महाविघ्नौघघातकी[2] ॥ २२ ॥**
**सर्वकामप्रदा देवि भुक्तिमुक्तिफलप्रदा ।**
**योनिकुण्डे भगाङ्के[3] वा वर्तुले वार्धचन्द्रके[4] ॥ २३ ॥**

**जप्यं** जपम् । **होमं कुर्या**दिति ।

चिद्विकासेन वेद्यस्य[5] तद्विलासस्य तत्तया ।
परामर्शो महाहोमः परिपूर्णमहाफलः[6] ॥

[7]इत्यकल्पितार्चापरामर्शहोमोपनिषत् । [8]इह तु तदाप्तये गौणो होमविधिः । **दशांशेन**[9] जपाद् दशांशेन । **ब्रह्मवृक्षः** पलाशः । [10]तदुद्भवैः समित्पुष्पादिभिः । **कुसुम्भो** वह्निशिखः । **त्रिमधु** शर्करा घृतं मधु। **अघं** पापम् ॥२१-२३॥

---

यत्र कुत्रचिदाधारप्रदेशे हृदयकमलोपलक्षिते बाणवाचकं ज्योतिर्लिङ्गं समुल्लसति तत्र स्थित्वेत्यादिपूर्ववत् । तथा यस्मिन् कस्मिंश्चित्प्रदेशे आधारे भ्रूमध्ये इतराख्यं ज्योतिर्लिङ्गं तिष्ठति तत्र स्थित्वेत्यादि पूर्ववत् । अथवा[11] बाह्ये यत्र कुत्रचित् प्रदेशे स्वयम्भूलिङ्गं पश्चिमाभिमुखं तिष्ठति, तथा बाणलिङ्गं स्थापितं तिष्ठति, इतरं पर्वतलिङ्गं वा पश्चिमाभिमुखं तिष्ठति, नन्दिगणेशादिरहितस्थानमन्विष्य प्राप्य तत्र स्थित्वा लक्षं जपेदिति भावः । तदुक्तमुत्तरषट्के—

पश्चिमाभिमुखं लिङ्गं योनिस्थं परिकीर्तितम् ।
स्वयम्भूर्बाणलिङ्गं[12] वा इतरं वापि सुव्रते ॥ इति १९-२० ॥

भगाङ्क इत्यश्वत्थपत्राकृतिरिति भावः ॥ २१-२७ ॥

**बाणलिङ्गम्**, इतरस्थापितं पर्वतभवं **पश्चिमाभिमुखम्** । नन्दिकेशादिरहितं तिष्ठति चेत् तत्र स्थित्वा लक्षं जपेदिति ॥ १९-२० ॥

**होमं कुर्याद्दशांशेने**त्यारभ्य **कालमृत्युयमाविभि**रित्यन्तः श्लोकसमुदायः कुण्डलक्षणहोमद्रव्यतत्फलवाची प्रायः स्पष्टार्थः । तत्रापि **भगाङ्के** अश्वत्थपत्राकृतौ ॥ २१-२७ ॥

---

१. जपं-वाक. ख. ग. से. अ. ब., जाप्यं-सख. । २. घातिका-वाग. से., घ्नोपघातिका-सक., महाघौघविनाशिना-सख. । ३. भगाकारे-वाग. से. । ४. चन्द्रकार्धके-सख. । ५. चेत्यस्य-ग. घ. । ६. पारिपूर्ण्यफलोदयः-ग. । ७. इत्यकल्पनाच्च-ख. ङ., इत्यनित्यकल्पनाच्चा-घ. । ८. 'इह''''विधिः' नास्ति-ख. ङ. । ९. 'दशांशेन' नास्ति-ख. ङ. । १०. 'तदु'''' दिभिः' नास्ति-ख. ग. ङ. । ११. 'वा' नास्ति-छ. । १२. म्भु वा-ग. भुवं बाणलिङ्ग-छ. ।

**नवत्रिकोणकुण्डे[1] वा चतुर[2]स्रेऽष्टपत्रके[3] ।**
**योनिकुण्डे भवेद्वाग्मी भगे[4] चाकृष्टिरुत्तमा ॥ २४ ॥**
**वर्तुले च [5]भवेल्लक्ष्मीरर्धचन्द्रे [6]त्रयं लभेत्[7] ।**
**[8]नवत्रिकोणकुण्डे[9] तु खेचरत्वं [10]प्रपद्यते ॥ २५ ॥**
**[11]चतुरस्रे भवेच्छा[12]न्तिर्लक्ष्मीः पुष्टिररोगता ।**
**[13]पद्माङ्के [14]सर्वसम्पत्तिरचिरादेव[15] जायते ॥ २६ ॥**
**[16]चक्रेऽष्टकोणसुभगे समीहितफलं [17]लभेत् ।**
**मल्लिकामालती[18]जातीपुष्पै[19]राज्य[20]परिप्लुतैः ॥ २७ ॥**

---

**योनिकुण्डे** अश्वत्थदलाकारे । **भगाङ्के** मन्मथावासभूमौ[21] । **वर्तुले** वृत्ताकारे । **अर्धचन्द्रके** अर्धचन्द्राकारे । [22]**नवत्रिकोणकुण्डे** नवत्रिकोणाकारे कुण्डे । **अष्टपत्रके** अष्टदलाकारे । **आकृष्टिराकर्षणम्** । **पद्माङ्के** अष्टदलाकारकुण्डे । **चक्रेऽष्टकोणसुभग** इत्यस्यायमर्थः—अष्टभिः कोणैः सुभगे चक्रे, चक्राकारे कुण्ड इति यावत्[23] ॥ २३-२७ ॥

वाग्भवबीजमात्रसाधनेऽपि मल्लिकाजात्यादिभिः श्वेतपुष्पैः सारस्वतसिद्धये होम इत्यर्थः । [24]**मल्लिकामालती**त्यादि । अत्र विकसितैरनाघ्रातैः

---

वाग्भवबीजसाधने होमद्रव्यम्—मल्लिकामालतीत्यादि । श्वेतपुष्पैः[25] सारस्वतसिद्धये[26] होमः कार्यः । करवीरजपापुष्पाणि वश्यार्थमिति । कर्पूरादि सौभाग्यार्थम् । पुरं

वाग्भवबीजसाधनेऽपि **मल्लिका**जातिभिः श्वेतपुष्पैः सारस्वतसिद्धये होमः, **करवीरजपापुष्पाणि** वश्याय, कर्पूरादि तत्सौभाग्यसिद्धये । **पुरं** गुग्गुलुः । एतदपि वश्याय । **पलं** महासव-

---

१. चक्रे-वाक. ख., कुण्डेऽपि-सख. । २. श्रे-वाक. ख. । ३. कोणके-सख. । ४. भगाङ्के कृष्टि-वाक. ख. । ५. लभे-सख. । ६. जयं-सक., श्रियं-ब., द्वयं-सख. । ७. भवेत्-वाग. से. ब. सख. । ८. नवत्रिकोण, वर्तुल इति पङ्क्तिक्रमः-ब. । ९. कुण्डेऽपि-सक. । १०. प्रजायते-वाग. से. ब. सक. ख. । ११. रश्रे-ब. सक. । १२. न्तिः पुष्टिर्नीरोगता तथा-सक. । १३. पद्माभे-वाग. से. । १४. सिद्धिस्तु अ-सक. । १५. द्देवि-ब. । १६. अष्टकोणे तु-वाग. से. । १७ भवेत्-वाग. से. । १८. जाति-से. सक. । १९. श्चैव-सक. । २०. मधु-वाग. से. ब. सक. । २१. कूपे-ख. ग., कूटे-ङ. । २२. 'नव····चक्राकारे' नास्ति-ख. ङ. । २३. 'यावत्····होम इत्यर्थः' नास्ति-ख. ग. ङ. । २४. 'मल्लिका····येत् ॥ इति' नास्ति-ख. घ. ङ. । २५. पुष्प-छ. । २६. 'सारस्वतसिद्धये' नास्ति-क. छ. ।

[1]हुतैर्भवति वागीशो मूकोऽपि परमेश्वरि ।
करवीरजपापुष्पाण्याज्ययुक्तानि पार्वति ॥ २८ ॥
हुत्वा[2]कर्षयते मन्त्री [3]स्वर्भूपातालयोषितः ।
[4]चन्द्रकस्तूरिका[5]मिश्रं [6]हुत्वा कुङ्कुममीश्वरि ॥ २९ ॥
[7]तत्र [8]कन्दर्पसौभाग्यात् स सौभाग्याधिको भवेत् ।
[9]चम्पकं पाटलादीनि हुत्वाऽ[10]सौ श्रियमाप्नुयात् ॥ ३० ॥
श्रीखण्डमगुरुं [11]वापि [12]कर्पूरं पुर[13]संयुतम् ।
हुत्वाऽ[14]मरपुरन्ध्रीणां देवि [15]विक्षोभको [16]भवेत् ॥ ३१ ॥
हुत्वा [17]पलं त्रिमध्वक्तं कृत्वा स्मृत्वा [18]महेश्वरीम् ।
खेचरो जायते देवि गत्वा [19]नक्तं चतुष्पथे ॥ ३२ ॥

---

सुगन्धिभिरनु(ष्ठि?षि)तैः पुष्पैरिति तात्पर्यम् । उक्तं च—

मुकुलैः पतितैर्म्लानैः शीर्णैर्वा जन्तुदूषितैः ।
आघ्रातैरङ्गसंस्पृष्टैरुषितैश्चैव नार्चयेत् ॥ इति ।
( प्र० सा० ६।५३ )

[20]हुतैरित्यादि । हुतैः होमैः । **वागीशः** वाचस्पतिः । **चन्द्रकस्तूरिकामिश्रम्** । इदं कुङ्कुमस्य विशेषणम् । **चन्द्रः** कर्पूरः । **तत्र** होमे । **असौ** होता । **श्रीखण्डं** चन्दनम् । **पुरं** गुग्गुलुः । [21]**अमरपुरन्ध्रीणाम्** अप्सरसाम् । **पलं** मांसम् । काल-

---

गुग्गुलुः । एतदपि वश्यार्थे । पलं महामांसादि । दधिमधुक्षीरलाजादि कालजिद्धोमार्थम् ।

---

१. नास्त्येष श्लोकः–ब. । २. चाकर्षते–ब. । ३. खभू–वाक. ख. । ४. चन्द्रं–वाग. से., सित–सक. । ५. युक्तं–सक. । ६. कृत्वा–वाक. ख. । ७. हुत्वा–वाक. ख. । ८. ग्योल्लाससामर्थ्यवान्–वाग. से., ग्याधिकसौभाग्यभाग्–ब., ग्यं लभते साधकोत्तमः–सक. । ९. चण्यकं–वाक. ख., पाटलाजातिकुसुमैः–सक. । १०. वै–वाक. ख. ग. से. । ११. चा–से. सख. । १२. पूर–ब. । १३. मिश्रितम्–सख. । १४. पुर–वाक. ख. सक. । १५. क्षोभकरो–वाग. से. सक., क्षोभाय जायते–सख. । १६. इतः परम्–'दासोऽपि लभते सद्यो लक्षाम्भोरुहहोमतः । दुर्भगः सुभगो भूयाल्लक्षकह्लारहोमतः ॥'' एष श्लोकोऽधिको दृश्यते–वाग. से. । १७. फलत्रयं देवि त्रिमध्वक्तं–सक. । १८. श्वरि–ब. सक. ख. । १९. रात्रौ–वाग. से. सक. ख., हुत्वा–ब. । २०. 'हुतैरित्यादि' नास्ति–ख. ग. ङ. । २१. 'अमरपुरन्ध्रीणाम्' नास्ति–ख. ङ. ।

[1]तथा दधिमधुक्षीरमिश्रांल्लाजान् महेश्वरि ।
हुत्वा न बाध्यते [2]रोगैः [3]कालमृत्युयमादिभिः [4]।। ३३ ।।[5]

इति श्रीनित्याषोडशिकार्णवे पञ्चमः पटलः ।

ग्रन्थश्च परिसमाप्तः ।।

—:०:—

**मृत्युयमादिभिरिति** । [1]आदिशब्देन व्याधिर्लक्ष्यते । **कालो**ऽवच्छेदकः । **मृत्युः** मारयिता । **यम** उपरमयिता । **व्याधिः** चिन्ताकरः । शरीरोपतापलक्षणो **रोगः** । इदमस्य हृदयम्—

कालो मृत्युर्यमो व्याधिस्तत्त्वतस्त्वेक एव तु ।
वृत्त्यन्तरविशेषेण पर्यायेणाभिधीयते ।।
सर्वावच्छेदकः कालो मृत्युर्मारयिता च सः ।
यमनाद्यम एवायं व्याधिश्चिन्ताप्रदो हि सः ।।

इत्युक्तदिशा बहुविकारप्रदा एताः शरीरायासकारिण्यो विकल्पोदयभूमयोऽ-

---

होमं कुर्याद्दशांशेनेत्यारभ्य हुत्वा न बाध्यते रोगैः कालमृत्युयमादिभिरित्यन्तः श्लोकसमुदायः कुण्डलक्षणहोमद्रव्यतत्फलवचनः ।। २७–३३ ।।

।। इति श्रीविद्यानन्दविरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां
त्रिपुराजपहोमोपदेशः पञ्चमः पटलः ।।

मांसादि । **दधिमधुक्षीरमिश्रै**र्लाजैः कलहादिविजयाय । इति शुभम् ।। २७–३३ ।।

---

१. तदा—वाक. ख । २. देवि—सक. । ३. व्याधि—सक. । ४. भयादिभिः—वाक. ख. । अत्र—हुत्वा पलं, हुत्वा न, खेचरो, तथा—इति पङ्क्तिक्रमो दृश्यते—ब. । ५. इतः परमिमेऽधिका दश श्लोका दृश्यन्ते केवलं सेतुबन्ध एव—

समस्तमन्त्रकल्पोक्तैर्ध्यानहोमजपादिभिः । प्रयोगाः कथिता देवि सिद्ध्यन्त्येव न संशयः ।।
तत्तन्मन्त्राक्षरस्थाने विद्यामेतां तु विन्यसेत् । एतस्यां साधितायां तु सिद्धा स्यान्मातृका यतः ।।
गुरूपदिष्टमार्गेण मातृकाऽन्तरिता न्यसेत् । कर्तव्यं परमेशानि सर्वसिद्धिप्रदायकम् ।।
न ध्यानं मुखमुद्रादिकलानां परिकल्पनम् । ध्यानं शक्तिसमावेशात् सुमहत्सामरस्यकम् ।।
संयतेन्द्रियसंचारं प्रोच्चरेन्नादमान्तरम् । एष एव जपः प्रोक्तो न च बाह्यजपो जपः ।।
तावदग्नौ न होतव्यं तत्तत्तन्त्रोदितं यथा । यावदात्ममहावह्नौ मनःपूर्णाहुतिं हुनेत् ।।

1. "यमादिभिरित्यादिपदेन परकृत्यादिग्रहणम् । व्याधिग्रहणमिति प्राचां व्याख्याने रोगव्याध्योर्भेदश्चिन्त्यः" ( से. पृ. १७१ ) ।

वस्थाः कलयामि कतिपयकालशरीरस्थितिकृत्त्रिदशाहारन्यक्कारितमहाहन्ता-[1][2] महामृतमहोदधिनिमज्जद्देहादिप्रमातृकस्य समावेशरसास्वादनिपुणस्य[3] महा-योगिजनस्य—

जीवन्नेव विमुक्तोऽसौ यस्येयं[4] भासना[5] सदा ।
यः[6] शिवं भावयेन्नित्यं[7] न कालः कलयेच्च तम् ॥
(स्व० त० ७।२५९)

इत्याम्नातनीत्या न[8] कदाचित् संभावनाप्रत्ययविषयतां भजन्तीति शिवम्[9] ॥ २७–३३ ॥

[10]एवं प्रजल्पितं मातस्त्वद्भक्त्युद्रेकतो मया ।
समञ्जसं वेतरद्वा तत् ते सोढव्यमम्ब हे ॥
[11]प्रसृता भारतीज्योत्स्ना शिवानन्देन्दुमण्डलात् ।
कुदेशिकमहाघर्मसन्तप्तैः सेव्यतां चिरम् ॥

---

एतद्दर्पणसुस्पष्टं चतुश्शत्यागमार्थवत्[12] ।
योगीन्द्रो वामनः कुर्यात् परमं पदमश्नुते ॥

॥ इति श्रीविद्यानन्दनाथविरचिते चतुश्शतीटिप्पणेऽर्थरत्नावल्यां पञ्चमः पटलः ॥

॥ समाप्तोऽयं ग्रन्थः ॥

—:०:—

स्वसंवित् त्रिपुरा देवी लौहित्यं तद्विमर्शनम् । पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मनौ स्मृतौ ॥ शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनुः । विश्वप्रतीतिजनिकाः शक्तयश्च क्रमेण याः ॥ पूर्वपश्चिमकौ द्वारौ प्राणापानात्मकौ स्मृतौ । कालो धामानि भूतानि नव चक्राण्यनुक्रमात् ॥ करणेन्द्रियचक्रस्थां देवीं संवित्स्वरूपिणीम् । विश्वाहङ्कृतिपुष्पैस्तु पूजयेत् सर्वसिद्धये ॥ इति ।

१. कृति–ग. । २. न्तामृत–ग., न्ता मद–घ. । ३. स्वादन–ख. । ४. यस्यैषा–मु. । ५. भावना–ङ. । ६. शिवो हि भावितो नित्यं न कालः कलयेच्छिवम्–मु. । ७. कलये–ग. । ८. 'न' नास्ति–ख. ङ. । ९. 'शिवम्' नास्ति–ग. । १०. अत्रत्योऽन्तिमः श्लोकः प्रथमत्वेन स्थापितः–ख. ङ. । ११. प्रसूता–ग. । १२. माद् भवेत्–ख. ।

1. "तन्त्रराजे कालादिनवात्मकत्वस्य चक्राणामनुक्तावपि तद्व्याख्यातृभिः पञ्चत्रिंशे पटले "यन्त्राणि मन्त्राः सर्वत्र" ( ३५।१६ ) इति श्लोकव्याख्यावसरे चक्रनवकवासनामेतामेव कथयित्वा तत्संमत्यर्थं नित्याषोडशिकार्णवे प्रोक्तमिति ग्रन्थेन कालो धामानि भूतानीत्यर्धमेव

इति परमरहस्यं प्राप्तसत्सम्प्रदायं
स्फुटविवृतिविलासं प्रोन्मिषच्चक्रराजम् ।
निपुणमतिनिषेव्यं निर्गताशेषदोषं[1]
विवरणमकृतेदं श्रीशिवानन्दयोगी ॥
एकत्रिंशत्त्रिकद्वन्द्वतत्त्वात्मपरमेशितुः ।
परानुग्रहसृष्ट्यंशत्रितयं हृदयं नुमः[3] ॥
[2]एवमृजुविमर्शिन्यां नित्याषोडशिकार्णवे ।
शिवानन्दपरामृष्टः[4] पञ्चमः पटलो गतः ॥

—:o:—

१. 'निर्गता····नुमः' नास्ति–ख. ङ. । २. अस्या–ग. । ३. कोदधेः–ग. । ४. ष्टं पञ्चमं पटलं गतम्–ख. ङ. ।

लिखितम् । एवं सति यत् प्राचीनैर्विमर्शिन्यादिटीकाकारैः सर्वैरैककण्ठ्येन मूलस्थपञ्चमपटलस्य चतुस्त्रिंशता श्लोकैरेव समाप्तिं मन्यमानैरुत्तरत्र पठ्यमानान् दश श्लोकान् पुस्तकेषूपलभ्यमानान् संगतानपेक्षितानपि परित्यजद्भिः किमभिप्रेतमिति त एव प्रष्टव्याः । यदि पुनः सार्धत्रिंशदधिकचतुश्शतश्लोकघटिताया अस्याः पञ्चपटल्याः पूर्वचतुश्शतीतिसमाख्यासमर्थनार्थमिदं साहसम्, प्रथमचक्रोद्धारान्ते सार्धत्रयाणां द्वितीयचक्रोद्धाररूपाणां सप्तदशानामत्रत्यानां दशानां च श्लोकानां त्याग इत्याशयः स्यात्तदाऽप्ययुक्तमेव; अतिप्राचीनैर्मनोरमाकारैरेतत्तन्त्रीयत्वेन लिखितश्लोकाल्लिङ्गात् पुस्तकेषूपलम्भाच्च कतिपयानामप्रक्षिप्तत्वे निश्चिते सति समाख्याया एवाल्पन्यूनाधिकभावाविवक्षया गौणत्वेन निर्वोढुं युक्तत्वात्" ( से. पृ. १७५-१७६ ) ।

—:o:—

# परिशिष्टभागः

तत्र

दीपकनाथसिद्धविरचितं त्रिपुरसुन्दरीदण्डकम्

शिवानन्दमुनिविरचितः सुभगोदयः

शिवानन्दमुनिविरचिता सुभगोदयवासना

शिवानन्दमुनिविरचितं सौभाग्यहृदयस्तोत्रम्

अमृतानन्दयोगिविरचितः सौभाग्यसुधोदयः

अमृतानन्दयोगिविरचितश्चिद्विलासस्तवश्च ।

# त्रिपुरसुन्दरीदण्डकम्

## दीपकनाथसिद्धविरचितम्

जयति निजसुधाम्भस्संभवा वाग्भवश्री-
रथ सरससमुद्यत्कामतत्त्वानुभावा ।
तदनु परमधामध्यानसंलक्ष्यमोक्षा
रविशशिशिखिरूपा त्रैपुरी मन्त्रशक्तिः ॥ १ ॥

जय जय जगदेकमातर्नमश्चन्द्रचूडेन्द्रसोपेन्द्रपद्मोद्भवोष्णांशुशीतांशु-शिखिपवनयमधनदनुजेन्द्रपतिवरुणप्रमुखसकलसुरमुकुटमणिनिचयकरनिकर-परिजनितपुरविविधरुचिरुचिरकुसुमचयबुद्धिलुब्धभ्रमद्भ्रमरमालानिनादानुगत-मञ्जुशिञ्जानमञ्जीरकलकनकमयकिङ्किणीक्वाणयन्नृत्यदुद्दामनिभृतपदललित-किङ्करालङ्कृतसुचङ्क्रमणलीले सुलीले स्थलाम्भोजनिभचरणनखरत्न-कान्तिच्छलेन हरनयनहव्याशनप्रतिकृतानङ्गविजयश्रियाऽसौ भवत्या भवेनेव शरणागतः पादमूले समालीन इ(वा)लक्ष्यते सुलक्ष्यते ललितलावण्यतरुकन्दली-सुभगजङ्घालते चिल्लते ॥ २ ॥

गलितकलधौतप्रभोरु(द्य?द्यु)ते सु(द्य?द्यु)ते विद्युदुद्योतमाणि(क्क?क्य)-बन्धोज्ज्वलानर्घकाञ्चीकलापानुसंयमितसुनितम्बबिम्बस्थले सुस्थले ॥ ३ ॥

स्मरद्विरदपरिरचितनवरोमराज्यङ्कुशे निरङ्कुशे ॥ ४ ॥

दक्षिणावर्तनाभिभ्रमत्त्रिवलीतटपरिलुठितललितलावण्यरससुरतनिम्नगा-भूषितसुमध्यदेशे सुदेशे स्फुरत्तारहारावलीगगनगङ्गातरङ्गव्रजालिङ्गितो-त्तुङ्गनिबिडस्तनसौवर्णगिरिशिखरयुग्मे अयुग्मे उमे ॥ ५ ॥

मुरारिकरकम्बुरेखानुगतकण्ठपीठे सुपीठे लसत्सरलसविलासभुज-युगलपरिहसितनवकोमलमृणाले सुनाले ॥ ६ ॥

महार्हमणिवलयजमयूखचयमांस(लि?ल)करकमलनखरत्नकिरणे जितरणे सुकरणे सुशरणे ॥ ७ ॥

स्फुरत्पद्मरागेन्द्रमणिकुण्डलोल्लसितकान्तिच्छटोच्छुरितगण्डस्थलीरचित-कस्तूरिकापत्ररेखासमुद्घातसुधानाथगाण्डीवशोभे सुशोभे ॥ ८ ॥

महासिद्धगन्धर्वगणकिन्नरीतुम्बुरुप्रमुखवररचितवरविविधपदमङ्गला - नङ्गसङ्गीतसुखश्रवणसम्पूर्णकर्णे जय स्वामिनि ॥ ९ ॥

शशिशकलसुगन्धितताम्बूलपरिपूर्णमुखि सुमुखि ॥ १० ॥

बालप्रवालप्रभाधरदलोपान्तविश्रान्तदन्तद्युतिद्योतिताशोकनवपल्लवासक्त-शरदिन्दुकरनिकरसान्द्रप्रभे सुप्रभे देवि ॥ ११ ॥

विश्वकर्मा(ति?दि)निर्माणविधिसूत्रसुस्पष्टनासाग्ररेखे सुरेखे ॥ १२ ॥

कपोलतलकान्तिविभवेन न विभान्ति नश्यन्ति यान्ति धावन्ति तेजांसि च तमांसि च विमलतरतरलतरतारकानङ्गलीलाविलासोल्लसत्कर्ण-मूलान्तविश्रान्तविपुलेक्षणाक्षेपविक्षिप्तरुचिररचितनवकुन्दनीलाम्बुजप्रकरपरि - भूषिताशावकाशे सुकाशे ॥ १३ ॥

चलद्भ्रूलताविजितकन्दर्पकोदण्डभङ्गे सुभङ्गे ॥ १४ ॥

मिलन्मध्यमृगनाभिमयबिन्दुपदचन्द्रतिलकायमानेक्षणालङ्कृतार्धेन्दुरो - (चिल्ल?चिर्ल)लाटे सुललाटे ॥ १५ ॥

लसद्वंशमणिजालकान्तरितवरचलत्कुन्तलान्तानुगतकु(न्त?न्द)मालानुषक्त-भ्रमद्भ्रमरपङ्के सुपङ्के ॥ १६ ॥

वहद्बहलपरिमलमनोहारिनवमालिकामल्लिकामालतीकेतकीचम्पकेन्दीव-रोदारमन्दारमालानुसंग्रथितध(र्म?म्मि)ल्लमूर्द्धावनद्धेन्दुकरसञ्चयोऽयं गगन-तलसञ्चरोऽयं यशश्छत्ररू(पं?पः) सदा दृश्यते ते शिवे ॥ १७ ॥

यस्य मधुरस्मितज्योतिषा पूर्णहरिणाङ्कलक्ष्मीः क्षणाक्षे(प?पं) विक्षिप्यते तस्य मुखपुण्डरीकस्य कविभिः कदा कोपमा केन कस्मिन् कथं दीयते ॥ १८ ॥

[1]सुस्फुटस्फटिकघटिताक्षसूत्रनक्षत्रचयचक्रपरिवर्तनविनोदसन्दर्शितनिशा-समयचारे सुचारे महाज्ञानमयपुस्तकं हस्तपद्मेऽत्र वामे दधत्या भवत्या तदा सुस्फुटं वाममार्गस्य सर्वोत्तमत्वं समुपदिश्यते ॥ १९ ॥

---

1. अर्थरत्नावल्याम् ( पृ० २२८ ) उद्धृतमेतत् ।

दिव्यमुखसौरभे योगपर्यङ्कबद्धासने सुवदने सुरसने सुदर्शने सुमदने सुहसने सुरेशि जननि तुभ्यं नमो जय जननि तुभ्यं नमो जय जननि तुभ्यं नमः ॥ २० ॥

अ इ उ ऋ ऌ इति लघुतया तदनु दैर्घ्येण पञ्चैव योनिस्तथा वाग्भवं प्रणव औ बिन्दुरः क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह ळेति सुबद्धरुद्रात्मिकाममृतकरकिरणगणवर्षिणीं मातृकामुद्गिरन्ती हसन्ती लसन्ती वसन्ती सदा तत्र कमलवनभवनभूमौ भवन्ती भ(वं मे?वभे)दिनी भ(यं?य)भञ्जिनी सभूर्भुवः-स्वर्भुवनमू(ति?र्ति)भव्ये सुभव्ये सुकाव्ये ॥ २१ ॥

सुकृतिना येन सम्भाव्यसे तस्य जर्जरितजरसो विरजसोऽपि पुत्री-कृतार्कस्य सत्तर्कपदवाक्यागमवेदवेदाङ्गवेदान्तसिद्धान्तसौरशैवादिवैष्णव-पुराणेतिहासस्मृतिगारुडभूततन्त्रस्वरोदयज्योतिषायुर्वेदनाना( रव्य?ख्यान )-पातालशास्त्रार्थमन्त्रशिक्षादिकं विविधविद्याकुलं लिखितपदगुम्फसम्बन्धरस-सत्कान्तिसोदारभणितप्रबन्धप्रभार्थसमालङ्कृताशेषभाषामहाकाव्यलीलोदया सिद्धिरुपया(न्ति?ति) सद्योऽम्बिके ॥ २२ ॥

वाग्भवेनैकेन वाग्देवि वागीश्वरो जायते । कि(न्तु?न्नु) किल कामाक्षरेण सकृदुच्चरितेनैव तव साधको बाधको भवति भुवि सर्वश्रृङ्गारिणां तन्नयन-पथपतितनेत्रनीलोत्पला झटिति यदि सिद्धगन्धर्वगणसुन्दरीललितवरविद्या-धरो वासुरी वामरी वा महीनाथनाथाङ्गना वा ज्वलन्मदननगरशरनिकर-दलितसंक्षोभिता निग(लि?डि)तेव ज्वलितेव स्खलितेव मुषितेव संपद्यते । शक्तिबीजैकसन्ध्यायिनां योगिनां भोगिनां वैनतेयायते दाहिनाममृतमेधायते दुस्सहविषाणां निशानाथचूडायते । ध्यायते धार्यते येन बीजत्रयं तस्य नाम्नैव पशुपाशमलपञ्जरं त्रुटचति तदाज्ञया सिद्धचति च [1]गुणाष्टकं भक्तिभाजां महाभैर(वीं?वि) कवलितसकलतत्त्वात्मिके सुस्वरूपे सुरूपे परिणतशिव(ा)यां त्वयि तदा कः परः शिष्यते का क्रिया शिष्यते यदि त्वद्भक्तिहीनस्य तत्त्वस्य कार्थक्रियाकारिता तदिति तस्मिन् विधौ तस्य किं धाम कि(भा?ना)म किं

---

1. श्वेताश्वतरोपनिषच्छाङ्करभाष्ये ( १।४ ) गुणाष्टकं द्रष्टव्यम् ।

कर्म किं शर्म किं नर्म किं वर्म किं धर्म का गतिः का रतिः का मतिः किं वर्जनीयं च ।। २३ ।।

[1]झटिति यदि सर्वशून्यान्तर्भूमौ निजेच्छासमुन्मेषसमयं समासाद्य (बालार्क?वालाग्र)कोटच्यं(शु?श)रूपा विगर्भीकृताशेषसंसारबीजाऽनुबध्नासि (का त्वं ? कन्दं) तदा (प्य?त्वम)म्बिका गीयसे । तदनु परिजनितकुटिलाग्र-तेजोऽङ्कुरा जननि वामेति संस्तूयसे । ततः (बद्धसु)स्पष्टरेखा शिखा ज्येष्ठेति संभाव्यसे । (तत्र ? सैव) शृङ्गाटकाकारतामागता (तदा) रौद्रीति विख्याप्यसे ।। २४ ।।

ताश्च वामादिकास्त्वत्कलास्त्रीन् गुणान् सन्दधत्यः क्रियाज्ञानचयवाञ्छा-स्वरूपाः क्रमात् तामरसजन्ममधुमथनपुरवैरिणां बीजभावं भजन्त्यः सृजन्त्य-स्त्रिभुवनं त्रिपुरसुन्दरीति तेन सङ्कीर्त्यसे ।। २५ ।।

तत्र शृङ्गाटपीठोल्लसत्कुण्डलीकाकलापा कुलात्प्रोल्लसन्ती सगन्धी शिवार्कं समास्कन्द्य चान्द्रं महामण्डलं द्रावयन्ती पिबन्ती सुधां कुलवधूः कुलं परित्यज्य परपुरुषकुलीनमवलम्ब्य विश्वं परिभ्राम्य सर्वस्वमाक्रम्य तेनैव मार्गेण निजकुलनिवासं समागत्य सन्तुष्यसीति प्रियः कः पतिः कः प्रभुः कोऽस्तु तेनैव जानीमहे हे महेशानि रमसे च कामेश्वरी कामगिर्यालयेऽनङ्ग-कुसुमादिभिः सेविता तदुपरि जालन्धरपीठे वज्रपीठेषु वज्रेश्वरी परिजना नटचसि पुनः पूर्णगिरिगह्वरे नग्नवसनार्चिते भगमालिनी विलससि देवि ज्वलन्मदनशरनिकरमधुविकसितसमदमधुकरकदम्बविपिनविभवे भगवति श्रीत्रिपुरसुन्दरि श्रीओड्याणपीठे नमस्ते नमस्ते नमस्ते नमस्ते शिवे ।।२६।।

इति त्रिपुरसुन्दरीचरणकि(ङ्करशिरिच?ङ्किणीशिञ्जितं)
महाप्रणतिदीपकं त्रिपुरसुन्दरीदण्डकम् ।
इमं भजति भक्तिमान् पठति यः सुधीः साधकः
स चाष्टगुणसम्पदां भवतु भाजनं सर्वदा ।।२७।।

---

1. अर्थरत्नावल्याम् ( पृ० २०४ ) उद्धृतमेतत् ।

सौधाम्बुधावरुणपोतसुवर्णशैल-
कादम्बदिव्यवनमध्य(म)वर्णभूमौ ।
भास्वद्विचित्रमणिमण्डपदिव्यपीठ-
मध्यस्थितां भुवनमातरमाश्रयामि ॥ २८ ॥

ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि-
स्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि त्रिभुवनेश्वरि विश्वमात-
रन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ २९ ॥

इति दीपकनाथसिद्धविरचितं
त्रिपुरसुन्दरीदण्डकं समाप्तम् ॥

# सुभगोदयः

## शिवानन्दमुनिविरचितः

यस्मिन् सृष्टिस्थितिध्वंसनिरोधानुग्रहात्मकम्[1] ।
कृत्यं पञ्चविधं शश्वद् भासते तं [2]स्तुमः शिवम् ॥ १ ॥
प्रातः शिरसि शुक्लेऽब्जे द्विनेत्रं द्विभुजं गुरुम् ।
वराभययुतं शान्तं स्मरेत् तन्नामपूर्वकम् ॥ २ ॥
मूलादि[3]ब्रह्मरन्ध्रान्तं मूलविद्यां विभावयेत् ।
उद्य[4]द्दिनकरोद्योतां यावच्छ्वासं दृढासनः ॥ ३ ॥
अशेषाशुभशान्त्यर्थं समाहितमनाश्चिरम् ।
तत्प्रभा[5]मण्डलव्याप्तं शरी[6]रं परिचिन्तयेत् ॥ ४ ॥
स्नानकर्मणि संप्राप्ते मूर्ध्नि [7]मन्त्री जलाञ्जलिम् ।
विद्ययाऽथ [8]त्रिशः कुर्यात् [9]तत्पूतस्त्रिरपः पिबेत् ॥ ५ ॥
तर्पणं च त्रिधा भूयस्त्रिधा च प्रोक्षणं तनौ ।
त्रिधा चार्घ्यं दिनेशाय तन्मुखः सम्यगुत्क्षिपेत् ॥ ६ ॥
चक्रराजं हृदि ध्यात्वा मध्ये देवीं विभावयेत् ।
अष्टोत्तरशतावृत्त्या जपेद् विद्यां प्रसन्नधीः ॥ ७ ॥
ततो मौनी विशुद्धात्मा [10]हृदा विद्यां [11]परामृशन् ।
अबहिर्मानसो योगी यागभू[12]मिमथो विशेत् ॥ ८ ॥
तत्र प्राङ्मुख [13]आसीनो वराघ्यम्बरभूषणः ।
सिन्दूर[14]चित्रितं चक्रराजं भूमौ समालिखेत् ॥ ९ ॥

---

१. विधाना–क. ख. । २. नुमः–ख. त. । ३. ब्रह्म–त. । ४. दिवा–ख, दादित्यसंकाशां तटित्कोटिसमप्रभाम्–सौ. । ५. पटल–सौ. । ६. रमपि–सौ । ७. मन्त्रजपाञ्जलिः–ख. त. । ८. त्रिदशः–ख. । ९. तां–त. । १०. हृदि–त. । ११. मृशेत्–त. । १२. मथावि–क. त. । १३. नः प–ख. त. । १४. रञ्जितं–ख. त. ।

अथवा हेमताम्रादिपट्टे[1] चक्रं विलिख्य तु ।
स्थापयेत् पुरतः पीठे रक्तचन्दननिर्मिते ॥ १० ॥
पञ्चशक्तिचतुर्वह्नितद्विलासात्मकं समम्[2] ।
ऋज्वाकृति[3] यथा चक्रं तथा कुर्यात् समाहितः ॥ ११ ॥
भूगृहं स्वरपत्राब्जं वस्वरं भुवनाश्रकम् ।
दशारयुग्ममष्टाश्रं त्र्यस्रं मध्यं च भेदतः ॥ १२ ॥
त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं चक्रं सर्वसौभाग्यदायकम् ॥ १३ ॥
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा[4] ।
सर्वरोगहरं हृद्यं सर्वसिद्धिप्रदाभिधम्[5] ॥ १४ ॥
सर्वानन्दमयं मध्यं नवमं चक्रनायकम्[6] ।
नवधा चक्रसङ्केतं यो जानाति स पूजकः ॥ १५ ॥
गन्धपुष्पाक्षतादींश्च[7] दक्षभागे[8] निधापयेत् ।
दीपांस्तथाऽभितो[9] मन्त्री पुरतः साधनान्तरम्[10] ॥ १६ ॥
चक्रराजं समभ्यर्च्य ततः सम्पूर्णविद्यया[11] ।
यजेत् पुरत्रयं भक्त्या बीजत्रयसमन्वितम् ॥ १७ ॥
शोषदाहाप्लवं[12] कृत्वा वाय्वग्निसलिलाक्षरैः ।
प्राणायामत्रयं कुर्यात् स्मरन् विद्यां हृदा पुनः ॥ १८ ॥
पार्ष्णिघातकरास्फोटसमुदञ्चितवक्त्रकैः ।
तालत्रयमथो दद्यात् सशब्दं संप्रदायतः ॥ १९ ॥
अमृतीभूतदेहोऽसौ देव्यात्मा साधकोत्तमः ।
न्यासं देहस्यासनार्हं[13] विदधीत विधानतः ॥ २० ॥

---

१. रूप्यताम्र–ख., हेमरूप्या–त. । २. पदम्–त. । ३. ध्वजा–क. । ४. परम्–ख. त. । ५. यकम्–त. । ६. इतः परम्–'तस्य सर्वार्थसिद्धिः स्यात् त्रिपुरायाः प्रसादतः' इति श्लोकार्धोऽधिकः–त. । ७. पुष्पगन्धा–क. । ८. गेऽभि–क. । ९. भिधो–क. । १०. स्थापना–त., सातना–क. । ११. इतः परम्–'ह्रीं श्रीं समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलकौलातिगनिगर्भरहस्यातिरहस्यपरापररहस्ययोगिनीचक्रश्रीपादुकां पूजयामि' इत्यधिकः पाठः–त. । १२. प्लवान्–त. । १३. स्य सन्नाहं–क. त. ।

अं आं सौः

इति बीजत्रयावृत्त्या मध्यमादितलान्तकम्[1] ।
करशुद्धिविधिं कुर्यात् स्थितिन्यासक्रमेण तु ॥ २१ ॥

ह्रीं क्लीं सौः श्रीमहात्रिपुरसुन्दरीदेव्यात्मासनाय[2] नमः ।
ह्सैं ह्क्लीं ह्स्सौः श्रीमहात्रिपुरसुन्दरीचक्रासनाय[2] नमः ।
ह्सैं ह्स्क्ल्रीं ह्सौः श्रीमहात्रिपुरसुन्दरीसर्वमन्त्रासनाय[2] नमः ।
ह्रीं क्लीं ब्लें श्रीमहात्रिपुरसुन्दरीसाध्यसिद्धासनाय[2] नमः ।

चतुर्भिरेतैर्मनुभिः कुर्यादासनकल्पनाम्[3] ।
यष्टुश्चक्रस्य मन्त्राणां देवतानां सपुष्पकैः[4] ॥ २२ ॥

ऐं[5] क्लीं सौः श्रीमहात्रिपुरसुन्दरीहृदयाय नमः ।
ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरीशिरसे स्वाहा ।
ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरीशिखायै वषट् ।
ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरीकवचाय हुं ।
ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरीनेत्रत्रयाय वौषट् ।
ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरी-अस्त्राय फट् ।

षडङ्गमाचरेदेतैः षड्भिर्मन्त्रैः स्थितिप्रदैः ।
त्रिद्व्येकदश[6]कत्रिद्विसंख्याङ्गुलिगतैः क्रमात् ॥ २३ ॥

[7]ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ब्ल्ँू वशिनीवाग्देवतायै नमः ।

ह्रीं श्रीं कं खं गं घं ङं क्ल्ह्रीँ कामेश्वरीवाग्देवतायै नमः ।
[8]ह्रीं श्रीं चं छं जं झं ञं न्व्लीँ मोदिनीवाग्देवतायै नमः ।
ह्रीं श्रीं टं ठं डं ढं णं य्लूँ विमलावाग्देवतायै नमः ।
ह्रीं श्रीं तं थं दं धं नं ज्म्रीँ अरुणावाग्देवतायै नमः ।

---

१. न्तिकम्–ख. । २. 'श्रीमहात्रिपुरसुन्दरी' नास्ति–क. त. । ३. नम्–त. । ४. कम्–त. । ५. 'ऐं क्लीं सौः·······अस्त्राय फट्' इत्यस्य स्थाने 'ऐं हृदयाय नम इत्यादि' इत्येव पाठः–क. त. । ६. शतक–क. । ७. ह्रीं श्रीं रहित एव पाठः सर्वत्र–क. त. । ८. सम्पूर्णा पङ्क्तिर्नास्ति–ख. ।

ह्सौं श्रीं पं फं बं भं मं ह्स्ल्व्यूँ जयिनीवाग्देवतायै नमः ।

ह्सौं श्रीं यं रं लं वं[1] झ्म्र्यूँ सर्वेश्वरीवाग्देवतायै नमः ।

ह्सौं श्रीं शं षं सं लं ळं क्षं क्ष्म्रीं कौलिनीवाग्देवतायै नमः ।

[1]शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे[2] ।
आधारे व्यूहकं यावन्न्यासमष्टभिराचरेत् ॥ २४ ॥
विधाय वामभागे तु मण्डलं चतुरस्रकम् ।
शुद्धोदकेन गन्धाद्यैरर्चयेन्मूलविद्यया ॥ २५ ॥
तत्र शङ्खं प्रतिष्ठाप्य पूर्णोदं[3] हेतुसंयुतम्[4] ।
सगन्धपुष्पं साधारं सषडङ्गार्चनं पुनः ॥ २६ ॥
कृत्वा तेन पुरोभागे मण्डलं[5] चतुरस्रकम् ।
त्रिकोणवृत्तषट्कोणं रचयेत् तत्र मण्डलम् ॥ २७ ॥
समस्तव्यस्तबीजैस्तु मध्यं कोणत्रयं तथा ।
[6]अर्चयेत् गन्धपुष्पाद्यैर्बीजावृत्त्या षडस्रकम् ॥ २८ ॥
तत्राग्निसोमसूर्यात्मबुद्ध्याधारादिकं त्रिकम् ।
आराधयेत् पुनश्चार्घ्यं विशेषेण समर्पयेत् ॥ २९ ॥
अभ्यन्तरे लिखेत् त्र्यस्रं सबीजोदरकोणकम् ।
अकथादित्रिरेखात्म[7] सहक्षाभ्यन्तरं बुधः ॥ ३० ॥
तच्च हंसेन चाराध्य बहिर्वृत्तात् षडस्रके ।
षड्भिर्मूलषडङ्गैश्च पुरोभागादि पूजयेत् ॥ ३१ ॥
मूलविद्यां[8] जपेत् सप्तवारं स्पृष्ट्वार्घ्यकं पुनः ।
अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपादि दर्शयेत् ॥ ३२ ॥

---

१. सम्पूर्णा पङ्क्तिर्नास्ति–क. । २. गुह्यके–ख. । ३. पूर्णोदो–क. । ४. संयुतः–क. । ५. चतुरस्रं च मण्डलम्–ख. त. । ६. अभ्यर्च्य–ख., पूजयेत्–त. । ७. त्मा सहक्ष्या–ख. । ८. मन्त्रं–त. ।

1. 'यं रं लं वं शं' इति, 'षं सं हं ळं क्षं' इति च क्रमो दृश्यते–क. । तथा च "यवर्गषवर्गयोरपि पञ्चपञ्चवर्णात्मकतैवेति तु केचित्" (पृ. ५१) इति सेतुबन्धोक्तिरत्र संगच्छते ।

2. नित्याषोडशिकार्णवस्थं ( १।१२९ ) सूत्रम् ।

प्रोक्षयेत् तेन चात्मानं पूजोपकरणान्यपि[१] ।
द्रव्यान्तरं चक्रराजं सर्वं विद्यामयं भवेत्[२] ॥ ३३ ॥
[1]ततो हृदयपद्मान्तः स्फुरन्तीं सांविदीं[३] कलाम् ।
अशेषव्यवहाराणामधिष्ठात्रीं परां शिवाम् ॥ ३४ ॥
ध्यात्वा चिरं प्रसन्नात्मा यतप्राणगतिक्रमः ।
त्रिखण्डामुद्रया पश्चाद् वहद्वायुपुटक्रमात् ॥ ३५ ॥
[४]निर्गमय्यातिदीप्ताभां तामावाहनविद्यया[५] ।
चक्रमध्यत्रिकोणान्तः श्रीपीठान्तर्निधापयेत् ॥ ३६ ॥
ह्स्रैं ह्स्क्ल्रीं ह्स्सौः श्रीमहात्रिपुरसुन्दर्यै[६] नमः ।
बालार्कमण्डलाभासां चतुर्बाहां त्रिलोचनाम् ।
पाशाङ्कुशौ शरांश्चापं धारयन्तीं शिवां श्रये[७] ॥ ३७ ॥
एवं ध्यात्वाऽर्चयेद्[८] देवीमुपचारैरशेषतः[९] ।
धूपदीप[१०]निवेद्यान्तैर्मुद्राः संदर्शयेत् क्रमात् ॥ ३८ ॥
तर्पणानि पुनर्दद्यात् त्रिवारं मूलविद्यया ।
तत्तत्तिथिमयीं नित्यां समयेऽस्मिस्त्रिधाऽर्चयेत् ॥ ३९ ॥
[2]प्रतिपत्प्रभृता[११] देव्यः[१२] पौर्णमास्यन्तिकाः[१३] क्रमात् ।
एकैकां पूजयेद्यो हि स सौभाग्यमवाप्नुयात् ॥ ४० ॥
[3]विभाव्य च महात्र्यस्रं सम[१४]रेखं[१५] स्वरोदरम् ।
तत्तद्वर्णं तिथिमयीमःस्वरे षोडशीं यजेत् ॥ ४१ ॥

---

१. णानि च–त. । २. इतः परम्–'त्र्यश्रं शिरं तु संभाव्य तस्मिन् श्रीनाथमण्डलम् । रेखाया दक्षिणे दिव्यं पश्चिमेऽपि च सैद्धकम् ॥ क्रमेण दक्षिणावृत्त्या चोत्तरे मानवं यजेत् ।' इत्यधिकः पाठः–त. । ३. सहितां–क., संविदं–ख.त. । ४. नास्त्येष श्लोकार्धः–क. । ५. मुद्रया–त. । ६. 'श्रीमहात्रिपुरसुन्दर्यै' नास्ति–क. त. । ७. भजे–त. । ८. त्वा यजेद्–क. त. । ९. देवीं हृदादीन् सोपचारकः–क. । १०. पादिनैवेद्यैः–त. । ११. भृतौ–क. ख. त. । १२. देव्याः–ख.त. । १३. स्यन्तिके–क त., स्यान्तिकैः–ख. । १४. नव–त. । १५. रेखास्वरोदयम्–क. ।

1. योगिनीहृदयदीपिकायां ( पृ. ३०२, ३१३ ) दृश्यते श्लोकार्धः ।
2. ऋजुविमर्शिन्याम् ( पृ. ४९ ), अर्थरत्नावल्यां ( पृ. ४९ ) चोद्धृतं संकेतपद्धतिवचनमेतत् ।
3. योगिनीहृदयदीपिकायां ( पृ. २६ ) दृश्यते श्लोकार्ध एषः ।

अं ऐं क्लीं सौं आं ईं ऊं यां रां लां वां सां कामेश्वरीच्छाकामफलप्रदे सर्वसत्त्ववशङ्करि जगद्विक्षोभकरे हुं हुं हुं ऐं द्रां द्रीं क्लीं ब्लूं सः ह्सौः क्लीं ऐं कामेश्वरीनित्याश्रीपादुकां पूजयामि ।

आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिवासिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं ह्र्ब्लें ह्रीं भगमालिनीनित्याश्रीपादुकां पूजयामि ।

इं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा नित्यक्लिन्नानित्याश्रीपादुकां पूजयामि ।

ईं ओं क्रों भ्रों क्रों च्ङ्रों क्रों छ्रों ज्रों झ्रों स्वाहा भेरुण्डानित्याश्रीपादुकां पूजयामि ।

उं ॐ ह्रीं वह्निवासिन्यै नमो वह्निवासिनीनित्याश्रीपादुकां पूजयामि ।

ऊं ह्रीं फ्रें सः नित्यक्लिन्ने मदद्रवे स्वाहा महाविद्येश्वरीनित्याश्रीपादुकां पूजयामि ।

ऋं ॐ ह्रीं शिवदूत्यै नमः शिवदूतीनित्याश्रीपादुकां पूजयामि ।

ॠं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षं ह्रीं फट् त्वरितानित्याश्रीपादुकां पूजयामि ।

ऌं ऐं क्लीं सौः कुलसुन्दरीनित्याश्रीपादुकां पूजयामि ।

ॡं द्रां द्रीं क्लीं ब्लूं सः नित्यानित्याश्रीपादुकां पूजयामि ।

एं ह्रीं फ्रें स्रूं भ्रूं क्लीं आं ह्रीं क्रों नित्यमदद्रवे हुं फ्रें ह्रीं नीलपताकानित्याश्रीपादुकां पूजयामि ।

ऐं झ्म्र्यौं विजयानित्याश्रीपादुकां पूजयामि ।

ओं स्वौं सर्वमङ्गलानित्याश्रीपादुकां पूजयामि ।

औं ॐ नमो भगवति ज्वालामालिनि देवि देवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुं फट् स्वाहा ज्वालामालिनीनित्याश्रीपादुकां पूजयामि ।

अं च् क्रौं चित्रानित्याश्रीपादुकां पूजयामि ।

अः मूलमुच्चार्य महात्रिपुरसुन्दरीनित्याश्रीपादुकां पूजयामि ।

मध्यप्राक्त्र्यस्रमध्यान्तस्थितिनित्यार्चनात् पुनः ।
त्रिभङ्ग्या पूजयेन्मन्त्री गुरुपादक्रमावलिम् ॥ ४२ ॥
पराख्यां परापराख्यामपराख्यां त्रिकात्मिकाम् ।
मुनिवेदनागसंख्यां गुरोर्ज्ञात्वा समर्चयेत् ॥ ४३ ॥
मायालक्ष्मीबीजयुग्मं सर्वमन्त्रेषु चादितः ।
संयोज्य पूजयेद्[1] विद्यामुपदेशविधानतः[2] ॥ ४४ ॥
अभितोऽङ्गावृ(ति?ती)[3]र्देवीमग्नीशासुरवायुषु ।
देवीमौलौ चतुर्दिक्षु यजेच्छ्रीशम्भुनिर्णयात् ॥ ४५ ॥
बाह्यचक्रेषु योगिन्यस्तदुल्लाससमुद्भवाः ।
तद्ध्यानेन समा ध्येयाः पूजायां साधकोत्तमैः ॥ ४६ ॥
प्रकटाश्च तथा गुप्तास्तथा गुप्ततराः पराः ।
संप्रदायाः कुलोत्तीर्णा निगर्भाश्च रहस्यकाः ॥ ४७ ॥
परापररहस्यस्था अतिपूर्वरहस्यकाः ।
नवधा नाम[4]संकेतो योगिनीनां विधीयते ॥ ४८ ॥
त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ॥ ४९ ॥
अत्युपह्वरमेवेदं विद्यासंकेतसंज्ञितम् ।
सत्संप्रदायसं[5]सिद्धं नवकं भुक्तिमुक्तिदम् ॥ ५० ॥
चक्रेश्वरीं यजेत् तत्र तत्तच्चक्रार्चनादथ[6] ।
पूजायां प्रतिचक्रं च मुद्राः संदर्शयेत् क्रमात्[7] ॥ ५१ ॥

---

१. द् बहिः–त. । २. विद्वानु–ख. त. । ३. वृतीं देवी–क. । ४. चक्र–त. । ५. संसाध्यं–क. । ६. दयः–क. । ७. इतः परम्–'त्रैलोक्यमोहनचक्राय नम इति चतुरस्रमभ्यर्च्य, चतुरस्रेषु सम्पूज्या अणिमाद्यष्टसिद्धयः । ब्राह्म्याद्या मातृकाः सर्वाः पूज्याश्च तदनन्तरम् ॥' इत्याद्यधिकः पाठः ।

[1]ह्लीं श्रीं अणिमासिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं लघिमासिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं महिमासिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं ईशित्वसिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं वशित्वसिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं प्राकाम्यसिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं भुक्तिसिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं इच्छासिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं प्राप्तिसिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वकामसिद्धिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं ब्रह्माणीश्रीपादुकां पूजयामि ।
ह्लीं श्रीं माहेश्वरीश्रीपादुकां पूजयामि ।
ह्लीं श्रीं कौमारीश्रीपादुकां पूजयामि ।
ह्लीं श्रीं वैष्णवीश्रीपादुकां पूजयामि ।
ह्लीं श्रीं वाराहीश्रीपादुकां पूजयामि ।
ह्लीं श्रीं इन्द्राणीश्रीपादुकां पूजयामि ।
ह्लीं श्रीं चामुण्डाश्रीपादुकां पूजयामि ।
ह्लीं श्रीं महालक्ष्मीश्रीपादुकां पूजयामि ।

चतुष्कमादितः पूज्यं द्वारदक्षिणभागतः ।
यथाक्रमं पश्चिमादिचतुष्कं च तथा पुनः ॥ ५२ ॥
वायुदि[2]क्ष्वादितः पूज्यं द्वयमन्ते[3]ऽधऊर्ध्वतः ।
ब्राह्म्या[4]दिसव्यभागेषु दिक्षु चाष्टसु पूजयेत् ॥ ५३ ॥

अं कामाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
आं बुद्ध्याकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।

---

१. ह्लीं श्रीं रहित एव पाठः सर्वत्र–ख. । २. भक्षा–क. । ३. न्तेऽथ–क. त. ।
४. सौम्यभागादि–ख. ।

इं अहङ्कारार्कर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ईं शब्दाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
उं स्पर्शाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ऊं रूपाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ऋं रसाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ॠं गन्धाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ऌं चित्ताकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ॡं धैर्याकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
एं स्मृत्याकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ऐं नामाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
ओं बीजाकर्षिणीनित्यकलाश्रीपादुकां पूजयामि ।
औं आत्मकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
अं अमृताकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।
अः शरीराकर्षिणीनित्याकलाश्रीपादुकां पूजयामि ।

भूपपत्रसरोजान्तः पश्चिमाशादलादितः ।
विलोमेन यजेदेताः क्रमान्नित्याः कलाः पुनः ॥ ५४ ॥

कं खं गं घं ङं अनङ्गकुसुमादेवीश्रीपादुकां पूजयामि ।
चं छं जं झं ञं अनङ्गमेखलादेवीश्रीपादुकां पूजयामि ।
टं ठं डं ढं णं अनङ्गमदनादेवीश्रीपादुकां पूजयामि ।
तं थं दं धं नं अनङ्गमदनातुरादेवीश्रीपादुकां पूजयामि ।
पं फं बं भं मं अनङ्गरेखादेवीश्रीपादुकां पूजयामि ।
यं रं लं वं अनङ्गवेगिनीदेवीश्रीपादुकां पूजयामि ।
शं सं षं हं अनङ्गाङ्कुशादेवीश्रीपादुकां पूजयामि ।
ळं क्षं अनङ्गमालिनीदेवीश्रीपादुकां पूजयामि ।

चतुष्कं प्रथमं पूज्यं पौरस्त्यादिदिशाक्रमात् ।
द्वितीयमग्निकोणादि [1]नागपत्राम्बुजेऽर्चयेत् ॥ ५५ ॥

[2]ह्लीं श्रीं सर्वसंक्षोभिणीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वविद्राविणीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वाकर्षिणीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वाह्लादिनीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वसंमोहिनीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वस्तम्भिनीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वजम्भिनीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्ववशङ्करीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वरञ्जिनीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वोन्मादिनीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वार्थसाधनीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं [3]सर्वसम्पत्तिपूरणीशक्तिश्रीपादुकां पूजयामि ।
ह्लीं श्रीं सर्वमन्त्रमयीशक्तिश्रीपादुकां पूजयामि ।
श्रीं श्रीं सर्वद्वन्द्वक्षयङ्करीशक्तिश्रीपादुकां पूजयामि ।

[4]मन्वश्रेषु स्थिता एताः शक्तयः सर्वसिद्धिदाः ।
पश्चिमादिक्रमे[5]णैव विलोमेन प्रपूजयेत् ॥ ५६ ॥

सर्वसिद्धिप्रदादेवीश्रीपादुकां पूजयामि ।
सर्वसम्पत्प्रदादेवीश्रीपादुकां पूजयामि ।
[1]सर्वप्रियङ्करीदेवीश्रीपादुकां पूजयामि ।
सर्वमङ्गलकारिणीदेवीश्रीपादुकां पूजयामि ।

---

१. भाग-क. । २. ह्लीं श्रीं रहित एव पाठः सर्वत्र-ख. । ३. सर्वाशापरि-ख. । ४. मनुश्रेष्ठ-क. । ५. णैता-क. ।

1. एतदनुरोधेन मूले ( १।१७० ) इत्यत्र 'सर्वश्रेयस्करी' इत्यस्य स्थाने 'सर्वप्रियङ्करी' इति पाठः स्थापनीयः ।

सर्वकामप्रदादेवीश्रीपादुकां पूजयामि ।
सर्वदुःखविमोचिनीदेवीश्रीपादुकां पूजयामि ।
सर्वविघ्ननिवारिणीदेवीश्रीपादुकां पूजयामि ।
सर्वमृत्युप्रशमनोदेवीश्रीपादुकां पूजयामि ।
सर्वाङ्गसुन्दरीदेवीश्रीपादुकां पूजयामि ।
सर्वसौभाग्यदायिनीदेवीश्रीपादुकां पूजयामि ।

पङ्क्त्यश्रेषु[1] स्थिता एता देव्यः सर्वार्थसाधिकाः[2] ।
वारुणीं दिशमाश्रित्य वरिवस्येद् विलोमतः ॥ ५७ ॥

ह्रीं[3] श्रीं सर्वज्ञादेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वशक्तिमयीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वैश्वर्यप्रदादेवीश्रीपादुकां पूजयामि ।
श्रीं श्रीं सर्वज्ञानमयीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वव्याधिविनाशिनीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वाधारस्वरूपिणीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वपापहरा[4]देवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वानन्दमयीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वरक्षास्वरूपिणीदेवीश्रीपादुकां पूजयामि ।
ह्रीं श्रीं सर्वेप्सितफलप्रदादेवीश्रीपादुकां पूजयामि ।

महाफलप्रदा देव्यो दशान्तर्दिगराश्रयाः ।
पश्चिमाशामवष्टभ्य पूर्ववत् पूजयेदिमाः ॥ ५८ ॥
मध्यचक्रे[5] विलोमेन वशिन्याद्यष्टकं यजेत् ।
पादुकां पूजयामीति (न्यासा[6]?न्यसे)द् देवीं[7] विशेषतः ॥ ५९ ॥

---

१. पङ्क्त्यश्रेष्ठ–क., वक्ष्यश्रेष्ठ–ख. । २. सिद्धिदाः–ख. । ३. ह्रीं श्रीं रहितः पाठः सर्वत्र–ख. । ४. पापप्रशमनी–ख. । ५. मध्ये–ख. । ६. सादेतं–क. । ७. 'देवीं' नास्ति–क. ।

द्रां द्रीं क्लीं ब्लूं सः (यां रां लां वां सां सर्व)जम्भनेभ्यो बाणेभ्यो नमः ।

(धं थं सर्वसं)मोहनाय धनुषे नमः ।

(आं ह्रीं सर्व)वशीकरणाय पाशाय नमः ।

क्रों (सर्व)स्तम्भनायाङ्कुशाय नमः ।

महामध्यमहादेवीषडङ्गावरणाद् बहिः ।

पश्चिमादिचतुर्दिक्षु यजेद् बाणाद्यमायुधम् ।। ६० ।।

वाग्भवमुच्चार्याग्निचक्रे कामगिरिपीठे मित्रीशनाथात्मके कामेश्वरीदेवीरुद्रात्मशक्तिश्रीपादुकां पूजयामि ।

कामराजमुच्चार्य सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथात्मके वज्रेश्वरीदेवीविष्णवात्मशक्तिश्रीपादुकां पूजयामि ।

शक्तिबीजमुच्चार्य सोमचक्रे पूर्णगिरिपीठे ओड्याणनाथात्मके भगमालिनीदेवीब्रह्मात्मशक्तिश्रीपादुकां पूजयामि ।

श्रीमूलमुच्चार्य ब्रह्मचक्रे ओड्याणपीठे चर्यानाथात्मके श्रीमहात्रिपुरसुन्दरीदेवीपरब्रह्मात्मशक्तिश्रीपादुकां पूजयामि ।

कामेश्वर्यादिका एता अग्रदक्षोत्तरोदरे ।
वा(का?क्का)[1]मशक्तिबीजानां व्यस्ताव्यस्तमुखा[2] यजेत् ।। ६१ ।।
पूर्ववद् धूपदीपौ च मुद्राः[3] कारणतर्पणम् ।
नैवेद्यं सघृतं दद्यात् सितापूपादिसंयुतम् ।। ६२ ।।
वरिवस्यां विधायेत्थं सजपं[4] सहुतक्रियम् ।
सह कामकलाध्यानं सौभाग्यहृदयं स्मरेत्[5] ।। ६३ ।।
[6]मण्डलं चतुरश्रं च सवृत्तं वामभागतः ।
विधाय मनुनाऽनेन सपुष्पं तत्समर्पयेत्[7] ।। ६४ ।।

---

१. जाभा–क. । २. मुखं–ख. । ३. नैवेद्यं सघृतं ततः । सितापूपादिसंयुक्तं दद्यान्मुद्राश्च दर्पणम् ।।–ख. । ४. विद्यां जप्त्वा समर्च्य तत्–ख. । ५. पठेत्–ख. । ६. 'मण्डलं...... हूं स्वाहा' इत्येष पाठः पूर्वं ४४ श्लोकानन्तरं स्थापितः–ख. । ७. समर्चयेत्–ख. ।

ऐं व्यापकमण्डलाय ऐं ।

अर्घान्नपूर्णसलिलं स्थापयेत् तत्र भाजनम् ।
त्रिधा पठन् कलावर्णमनुं दद्याद् बलिं ततः ॥ ६५ ॥

ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हूं स्वाहा ।

बद्ध्वा तु खेचरीमुद्रां क्षमस्वेति प्ररोचयेत् ।
यथोपदेशं प्रणमेद् गुरुभक्तिभरानतः[१] ॥ ६६ ॥

[1]मूलोद्भवं शक्तिचक्रं यतस्तन्मयतां गतम् ।
तस्मिन्नेवाव्यये तत्त्वे[२] विलीनं तद्विभावयेत्[३] ॥ ६७ ॥

[2]मूलं स्वात्मनि चिद्रूपे यजेद्यत्तदेव[४] हि ।
पुष्पादिकं समाघ्राय शुचौ देशेऽप्सु वा त्यजेत् ॥ ६८ ॥

[3]पराहन्तामये संविदग्नौ संवेद्यतर्पणे[६][७] ।
इदन्तालक्षणं हव्यं जुहुयादबहिर्मुखः ॥ ६९ ॥

एतद्विद्याचिरक्लिष्टैः शिष्यैरभ्यर्थितो भृशम् ।
शिवानन्दमहायोगी सुभगोदयमब्रवीत् ॥ ७० ॥

मन्त्राः शतं समुद्दिष्टाश्चतुस्त्रिंशदधिश्रियः ।
सारवन्तीह सूत्राणि सप्ततिः सुभगोदये ॥ ७१ ॥

प्रसृता भारतीज्योत्स्ना शिवानन्देन्दुमण्डलात् ।
कुदेशिकमहाघर्मसन्तप्तैः सेव्यतां चिरम् ॥ ७२ ॥

इति शिवान्दमुनिविरचितः सुभगोदयः समाप्तः ॥

*

---

१. परायणः–त. । २. धाम्नि–दी. । ३. परि–दी. । ४. यद्यज्यं त–ख. । ५. संपेत–ख. । ६. तर्पणम्–क. ख. ।

1. एष श्लोको योगिनीहृदयदीपिकायाम् ( पृ. ६९, ३३८ ) उद्धृतो दृश्यते ।
2. पङ्क्तिरेषोद्धृता दृश्यते तत्रैव ( पृ. ६९ ) ।
3. महार्थमञ्जरीपरिमले ( पृ. १३२ ) समुद्धृत एष श्लोकः ।

# सुभगोदयवासना

## शि वा न न्द मु नि वि र चि ता

[1]पराभूजन्मपश्यन्तीवल्लीगुच्छसमुद्भवा[1] ।
मध्यमासौरभा[2] वैखर्यक्षमाला जयत्यसौ[3] ॥ १ ॥

समस्तसम्पत्सम्पूर्णभोगमोक्षफलाप्तये ।
ध्यानामृतमयं नौमि गुरुं संविन्मयं शिवम् ॥ २ ॥

पूर्णप्रमातृ(सं?ता)सिद्धयै संकोचानां च शान्तये ।
चिदानन्द[4]महीसारां विद्यामात्मीकरोम्यहम् ॥ ३ ॥

चिद्रसाच्छामृताम्भोधिलहरी(तस्य?रस)शीकरैः ।
आर्द्रीकृतसमस्ताङ्गो विदधे स्नानमुत्तमम् ॥ ४ ॥

अशेषकर्मानुष्ठानयोग्यताप्रतिपादिनीम् ।
सन्ध्यामुपासे शिवयोः सामरस्यपदं शिवाम् ॥ ५ ॥

कालचक्रमयीमेतामन्तस्तपनमण्डले ।
तोयाञ्जलिप्रदानेन प्र(ण?णौ)म्यात्माम्बिकामहम् ॥ ६ ॥

विहितप्रतिषिद्धात्मविकल्पपदपातनम् ।
सिद्धिरत्नाकरं क्षेत्रं यजनस्थानमाश्रये ॥ ७ ॥

भूषानुलेपतिलकमालावस्त्राञ्जनादिभिः ।
अलङ्करोम्यहं देहं संवित्पीठमनुत्तमम् ॥ ८ ॥

अहन्तेदन्तयोर्बीजमविभागरसात्मकम् ।
शिवशक्तिमयं चक्रं विश्वाकारं भजाम्यहम् ॥ ९ ॥

---

१. पल्लीगच्छ–क. । २. सौभरी–क. । ३. त्यजा–क. । ४. चिदनन्त–क. ।

1. चिद्वल्ल्यां (पृ. ४१) समुद्धृत एष श्लोकः । 'परा भूजन्म' इत्येवमादिकोऽसमस्तः पाठोऽनुचितस्तत्रत्यः ।

अयं वैश्वम्भरो भागो देव्याश्चक्रात्मना स्फुरन् ।
शरीरं स्थूलमेवेदं भावयामि मुखाद् गुरोः ॥ १० ॥

[1]सोमसूर्यकृशान्वात्मतेजस्त्रितयरूपकम् ।
नेत्रत्रयं भावयामि वृत्तत्रितयमञ्जसा ॥ ११ ॥

[2]षोडशच्छदपद्मो[१]ऽयं भागो भूताक्षमानसम् ।
विकारात्मकतापन्नं देव्याः [२]संभावयाम्यहम् ॥ १२ ॥

[3]वसुच्छदनपद्मा[३]ङ्कदलोऽयं [४]चक्रगो विभुः ।
अव्यक्ताद्याः प्रकृतयो [५]भूतान्ता निश्चिनोम्यहम् ॥ १३ ॥

[4]चतुर्दशारधरणी[६] करणानि चतुर्दश ।
[७]चतुर्दशशिवारण्यं महादेव्याः स्मराम्यहम् ॥ १४ ॥

[5]बाह्यो दशारभागोऽयं बुद्धिकर्माक्षगोचरः[८] ।
मण्डलात्माभिमानि(न्यो?न्या) देव्याः संकल्पयाम्यहम् ॥ १५ ॥

[6]अन्तर्दशारवसुधा [९]बुद्धिकर्मेन्द्रियावलिः ।
महात्रिपुरसुन्दर्या इति संचिन्तयाम्यहम् ॥ १६ ॥

[7][१०]अष्टारांश[११]प्रदेशोऽयं [१२]चिन्निर्वाणैषणादिकम् ।
[१३]सूक्ष्मं पुर्यष्टकं देव्या मतिरेषा हि गौरवी ॥ १७ ॥

---

१. द्मोत्थं भोग–चि., द्माङ्कदेशो–दी. । २. संकल्प–क. । ३. ङ्को देशो–क., ङ्कदेशो यश्च–दी. । ४. चक्रको–चि. । ५. भूतांशा–क., भूतानां–चि. । ६. वसुधा–दी., सरणो–चि. । ७. चक्ररूपशिवारण्या–क. । ८. गोचरा(:)–क. । ९. ज्ञानकर्मेन्द्रियाणि च–दी. । १०. ष्टारव्यपदे–दी. । ११. प्रवेशो–चि. । १२. र्वाणेषणकादि–क., र्यणेषु सादि–चि. । १३ सूक्ष्मक्षणं–क., सूक्ष्मपुर्यष्टकं–चि. ।

1. चिद्वल्ल्यां ( पृ. ५३ ) समुद्धृत एष श्लोकः ।
2. चिद्वल्ल्यां ( पृ. ६४ ) योगिनीहृदयदीपिकायां ( पृ. ६८ ) च दृश्यते श्लोकः ।
3. चिद्वल्ल्यां ( पृ. ६३ ) योगिनीहृदयदीपिकायां ( पृ. ६८ ) च वर्तते श्लोकः ।
4. चिद्वल्ल्यां ( पृ. ६२ ) दृश्यते सम्पूर्णः श्लोकः, योगिनीहृदयदीपिकायां ( पृ. ६८ ) तु पूर्वार्धमात्रमेव ।
5. श्लोकार्धश्चिद्वल्ल्यां ( पृ. ६१ ) दीपिकायां ( पृ. ६८ ) च द्रष्टव्यः ।
6. श्लोक एव दीपिकायां ( पृ. ६८ ) दृश्यते ।
7. चिद्वल्ल्यां ( पृ. ६० ) दीपिकायां ( पृ. ६८ ) च दृश्यते श्लोकः ।

[1]इच्छादिशक्तित्रि[१]तयं पशोः सत्त्वादिसंज्ञकम् ।
[2]महत्त्र्यश्रं चि[२]न्तयामि गुरुवक्त्रादनु[३]त्तरात् ॥ १८ ॥

[3]महामध्यं च चक्रस्य महानन्दात्मकं पु[५]नः ।
[४]अनुत्तरविमर्शैकसारं संविन्मयं भजे ॥ १९ ॥

विभाव्यैवं चक्रगतिं भूयो भूयो विमृश्य च ।
विद्यां करोमि च पुनः समस्तव्यस्तपूजया ॥ २० ॥

[4]संवित्सतत्त्वनैर्मल्यसिद्धये शोषणादिकम् ।
विकल्पसार्वभौमस्य शरीरस्याश्रयाम्यहम् ॥ २१ ॥

आनीय (सं?सां)विदं वेद्यं तदेकीकरणात्मकम् ।
प्राणसंयमनं कुर्वन् वेद्योपशममारभे ॥ २२ ॥

[5]पातालादिषु लोकेषु ये विघ्ना भेदलक्षणाः ।
ददामि तालत्रित(यास?यं त)न्निराकृतिसत्फलम् ॥ २३ ॥

[6]कारणात्मपरामृष्टकार्य[६]भूताङ्गुलिस्थितिम् ।
करोमि चिन्मयीं शुद्धिं करयोः [७]परिशोधिनीम् ॥ २४ ॥

भावराशिमशेषेण चिद्रूपाणां शिवात्मनाम् ।
चतुर्णामर्चकादीनां विदधाम्यासनं क्रमात् ॥ २५ ॥

---

१. तयपाशो–क. । २. भावयामि–दी. चि. । ३. त्तरम्–चि. । ४. त्तम–क. ।
५. भजेत्–क. । ६. कार्यंभूतान् भुवि स्थितिः–क. । ७. स्पर्शशोधिनीम्–क. दी. ।

1. चिद्वल्ल्यां ( पृ. ४३ ) दीपिकायां ( पृ. ६८ ) चोद्धृतः श्लोकः ।
2. 'महत्त्र्यक्षं''''महानन्दात्मकं' कपुस्तके न दृश्यते, दीपिका(पृ. ६८ )चिद्वल्ली(पृ. ४३,७१)-दृष्ट एषोंऽशस्तत्र त्रुटित इति प्रतीयते, 'पुनः' इत्यन्तिमस्य पदस्य तत्रोपलब्धेः ।
3. चिद्वल्ल्यां ( पृ. ७१) समुद्धृत एष श्लोकः ।
4. महार्थमञ्जरीपरिमले (पृ. ११५ ) श्लोकोऽयं दृश्यते । श्लोकस्याभिप्रायस्तत्रैवावलोकनीयः ।
5. दीपिकायां ( पृ. २४७ ) दृश्यते श्लोकार्धः ।
6. दीपिकायां स्थलद्वये ( पृ. २३७, २८० ) महार्थमञ्जरीपरिमले ( पृ. ११७ ) च श्लोक एष दृश्यते ।

[1]सर्वज्ञत्वादिशक्तीनां सतीनामात्मनि प्रभौ ।
उन्मज्जनं भावयामि षडङ्गविधियोगतः ॥ २६ ॥
मातृकावर्गसंयुक्तवशिन्याद्यष्टकस्मृतेः ।
विमृशामि महाहन्तां परिपूर्णचिदात्मिकाम् ॥ २७ ॥
कल्पयामि च सामान्यमर्घ्यं सर्वविशोधनम् ।
चिद्रसप्रायममृतं सिद्धिदं कल्मषापहम् ॥ २८ ॥
शिवशक्त्यात्मषट्कोणसामरस्यत्रिकोणकम् ।
संविद्रूपमहादर्शं करोम्येतेन मण्डलम् ॥ २९ ॥
मातृमानप्रमेयात्मपावकेनेन्दुविग्रहम्[2] ।
आधारपात्रपीयूषं सन्दधेऽहमनुक्रमात् ॥ ३० ॥
कलासनविमर्शेन विशेषा(र्घ्य?र्घ्यं) चिदात्मकम् ।
भावयामि भवप्राप्तिसाधनं भवभेषजम् ॥ ३१ ॥
अर्घ्योदाभ्युक्षणेनैव देहपुष्पस्थ(या?ला)दिकम् ।
संविदम्भोधिलहरीरसेनार्द्रीकरोम्यहम् ॥ ३२ ॥
स्वात्मानन्दचमत्कारं परितृप्तिप्रयोजनम् ।
समाधिं समतासारं सम्यगङ्गीकरोम्यहम् ॥ ३३ ॥
स्वातन्त्र्योल्लासि(का?ता)शेषतत्त्वव्रातविजृम्भितम् ।
संवित्तत्त्वं महाहन्तासारं ध्यायामि शीतलम् ॥ ३४ ॥
[3]ज्ञानक्रिया(स्त?स)तत्त्वेन मन्त्रमुद्राक्रमेण तु ।
आवाहयामि हृदयाद्बहिः संवित्कलां निजाम् ॥ ३५ ॥
[4]घृत[१]काठिन्यवच्च[२]क्रमहायोनौ चिदम्बरम् ।
द्रुतहेमघनीभा(व इ?वमि)[३]व मूर्तीकरोम्यहम् ॥ ३६ ॥

---

१. सृतकारिन्य–क. । २. च्चक्रं–दी. । ३. वमिति मूर्ति–दी. ।

1. महार्थमञ्जरीपरिमले ( पृ. ११७ ) समुद्धृत एष श्लोकः ।
2. अग्निरविचन्द्रविग्रहमित्यर्थः । इनः सूर्यः । 'इनः सूर्ये प्रभौ' ( ३।३।१११) इत्यमरः ।
3. द्रष्टव्यम्–"मन्त्रमुद्राशब्देन ज्ञानक्रिये लिलक्षयिषिते" ( ऋजु., पृ. ४६ ) इति वचनम् ।
4. दीपिकायां ( पृ. ८६ ) दृश्यते श्लोकः ।

[1]प्रकाशैकघने धाम्नि विकल्पान्[१] पाशवादिकान्[२] ।
निक्षिपाम्यर्चनद्वारा[३] वह्नाविव घृताहुतीः ॥ ३७ ॥
रागद्वेषचरुं पूर्णम(हि?भि)मानावसेचनन् ।
चिरेण मयि संजातमुपहारीकरोम्यहम् ॥ ३८ ॥
[2]प्रदानैस्तर्पणैः[४] सम्यग्विशुद्धैरमृतात्मभिः ।
महाहन्तीकरोमीदं[५] विश्वं[६] हव्यवपुर्धरम्[७] ॥ ३९ ॥
प्रकाशभरिता(:)[3]कान्तिक्रियासा(रं?राः) शिवात्मिकाः ।
ज्ञानक्रियात्मने देव्यै मुद्राः संदर्शयाम्यहम् ॥ ४० ॥
[4]खं वायुर्ज्योतिरब्भूमिशब्दादिगुणभेदतः[८][९] ।
दशपञ्चतया[१०] व्याप्ता व्यापिकाः पूजयाम्यहम् ॥ ४१ ॥
अनुत्तरादिसर्गान्तबोधचन्द्रकलाश्रिते ।
मध्य(त्रा?व्य)श्रे षोडशैता यजेन्नित्याः कलाः क्रमात् ॥ ४२ ॥
[5]प्रमातृसप्तकेष्वे(को?कं) विहाय प्रथमं पुनः ।
त्रिकं वारादिभेदेन संश्रये गौरवीं स्थितिम् ॥ ४३ ॥
सर्वज्ञत्वादिकाः शक्तीः सेवे संवि(त्त?त्ति)तः परा(:) ।
षडङ्गोपास्तियोगेन गर्भावरणदेवताः ॥ ४४ ॥
[6]चक्रराजे परामृश्या[११] योगिन्यः[१२] प्रकटादिकाः ।
विमर्शाख्याश्चिदम्भोधिलह(री?र्य)स्ता[१३] अपि क्रमात् ॥ ४५ ॥

---

१. विकल्पप्रसरादिकान्–दी. । २. प्रस–से. । ३. निक्षिपेत् स्वार्चन–दी. । ४. नैदानैः–दी. क. । ५. महाहन्तां–दी., मदहन्ता–दी. । ६. विश्वहव्यधनुर्धरम्–क. । ७. पुरःसरम्–दी. । ८. रक्ते षट्–क. । ९. योगतः–क. । १०. दशं पञ्च च यान्नित्या ध्याविका यजतां भजेत्–क. । ११. मृश्य–चि. । १२. योगिनोः–चि. । १३ विमृशामि चिद–क. ।

1. दीपिकायां ( पृ. १९३ ) सेतुबन्धे ( पृ. १९४ ) च वर्तते ।
2. दीपिकायां स्थलद्वये ( पृ. २६४,३३३ ) समुद्धृत एष श्लोकः ।
3. कान्तिशब्दोऽत्र प्रकाशार्थत्वाज्ज्ञानपरः ।
4. चिद्वल्ल्यां ( पृ. ३६ ) समुद्धृतः श्लोकः ।
5. शिवः, मन्त्रमहेश्वरः, मन्त्रेश्वरः, मन्त्रः, विज्ञानाकलः, प्रलयाकलः, सकल इति सप्त प्रमातारः ।
6. चिद्वल्ल्यां ( पृ. ५६ ) दृश्यते श्लोकः ।

वसुधाभवने दे(वं?वीं) महाचित्तरुमञ्जरीम् ।
प्रकटाह्वां पूजयामि त्रैलोक्यपरिमोहिनीम् ॥ ४६ ॥
यस्या उल्लसिता एता योगिन्यश्चिद्घनत्विषः ।
चक्रेश्वरीर्भजाम्येताश्चक्रे चक्रे समाहितः ॥ ४७ ॥
राजच्छदनपद्मस्था गुप्ताह्वाश्चिन्मणिप्रभा ।
ताः संदधे महाशक्तीः सर्वाशापरिपूरिकाः ॥ ४८ ॥
याश्च गुप्ततराह्वानाः संवित्कौस्तुभदीप्तयः ।
भजे ता वसुपत्राब्जे सर्वसंक्षोभणात्मिकाः ॥ ४९ ॥
चतुर्दशारावरणे या देव्यश्चिन्मधुश्रियः ।
कलाह्वाः पूजयाम्येताः सर्वसौभाग्यदायिकाः ॥ ५० ॥
बाह्यपङ्क्त्यश्रके या वा (देव्य)श्चिच्च(न्द्र)चन्द्रिकाः ।
सर्वार्थसाधिका एताः कुलोत्तीर्णाह्वया यजे ॥ ५१ ॥
[1]अन्तर्दशारगा देव्यो विद्युत्पुञ्जनिभाः शुभाः ।
निगर्भाख्या भजाम्येताः सर्वरक्षाविधायिनीः ॥ ५२ ॥
अष्टारे या वशिन्याद्याश्चित्क्षीरस्निग्धताः पराः ।
सर्वरोगहरा एता विमृशामि विशेषतः ॥ ५३ ॥
[2]देव्याः संवित्सतत्त्वाया भेदो(द?द्द)लनहेतुकाः ।
आयुधाख्याः पराः शक्तीर्बाणाद्याः पूजयाम्यहम् ॥ ५४ ॥
सर्वानन्दमयीं मध्ये महात्रिपुरसुन्दरीम् ।
यजाम्यतिरहस्यां तां महार्चिःस्पन्दधर्मिणीम् ॥ ५५ ॥
विमृशामि महाहन्तां संवित्स्रोतोमहानदीम् ।
[3]जनिपालनधर्मेण जपेनान्तर्मुखात्मना ॥ ५६ ॥

---

१. चक्रेश्वरे–चि. । २. श्चक्रं चक्रं समाश्रिताः–चि. । ३. देव्यश्चिल्लताग्रफलानि या(ः)–क. । ४. पूजनीयाः–चि. । ५. त्स्वसत्तायाः–चि. । ६. द्दमन–चि. ।

1. चिद्वल्ल्यां ( पृ० ६१ ) श्लोकोऽयमवलोक्यते ।
2. चिद्वल्ल्यां ( पृ० ५८ ) पद्यमिदमवलोकनीयम् ।
3. महार्थमञ्जरीपरिमले ( पृ० १२८ ) समुद्धृत एष श्लोकार्धः ।

संविन्मये महावह्नौ विमर्शपरमार्चिषि ।
श्रद्धीकरोम्यक्षवृत्तीस्तिला(द्या?ज्या)हुतिकर्मणा(म्?) ॥ ५७ ॥
सर्वज्ञत्वादिशक्तीनां संविद्रू(पा?प)विमर्शनम् ।
विलयाङ्गविधानेन विदधामि विधानतः ॥ ५८ ॥
विश्वभेदलयप्रायां महासंवित्त(नूर्ण?नूं नि)जाम् ।
भावयामि महाकामकलाध्यानेन नित्यदा ॥ ५९ ॥
सौभाग्यहृद्विमर्शेन संवित्सर्वात्वभावनाम् ।
तन्मयत्वफलावाप्त्यै करोम्यहमनारतम् ॥ ६० ॥
अर्चास्थानानि मानिन्यै देवतायै चिदात्मने ।
ददामि च बलिव्याजाद् विकल्पा(द्वि?न् वि)घ्न-
(शा?श)ब्दि(कात्?तान्) ॥ ६१ ॥
कायवाङ्मन(सा?सां) येयं शिवैकात्म्येन योजना ।
नमस्कृतिं करोम्येतां संविद्रू(पा?प)विमर्शि(नीः?नीम्) ॥ ६२ ॥
इदन्तोल्लासितं हव्यं संविच्चक्रस्य मध्य(म?ग)म् ।
महाहन्तीकरोम्येवं तदिद च विमृश्यते ॥ ६३ ॥
[1]संविदग्नौ महासारे विमर्शैकशरीरिणि ।
भेदाभासमिदं हव्यं जुहोम्यपुनरुद्भवम् ॥ ६४ ॥
क्रियाशेषमशेषेण विमृशामि चिदात्मकम् ।
पराम(र्श?र्शः) परा पूजा पवित्रं हि विधीयते ॥ ६५ ॥
ग्रथिता सेयमम्लान(ा) संविन्माला मनोहरा ।
महानुभावगन्धाढ्या जुषतां लोकमातरम् ॥ ६६ ॥
इती(तरास्य?रिताऽस्याः) क्रमवासना शुभा विरुद्धहीनक्रममार्गशोधिनी ।
हिताहितद्वैतपथप्रणाशिनी समस्तसंविन्मयपूर्णचित्पथा ॥ ६७ ॥
सूत्राणामपि सप्तत्या सुभगोदयवासना ।
शिवानन्देन रचिता विदुषां प्रह्वतां महत् ॥ ६८ ॥

इति शिवानन्दमुनिविरचिता सुभगोदयवासना समाप्ता ॥

---

1. दीपिकायां ( पृ. २४८ ) समुद्धृतोऽयं श्लोकः ।

# सौभाग्यहृदयस्तोत्रम्

## शिवानन्दमुनिविरचितम्

[1]तन्महः परमं नौमि कृत्यैः पञ्चभिरङ्कितम्[१] ।
अशेषविश्वाभेदात्म[२] पूर्णाहन्तात्मकं[३] शिवम् ॥ १ ॥

[४]त्रिधा विभक्तं यद्वस्तु स्तो(त्र?तृ)[५]स्तुत्यस्तुतिक्रमात् ।
एकस्मै महसे तस्मै नमः सकल[६]चक्षुषे ॥ २ ॥

स्मरामि तां परां[७] वाचं पश्यन्त्यादिक्रमाश्रयाम् ।
नानाविधरसाकारां[८] महानुभवरूपिणीम् ॥ ३ ॥

[2]देशकालपदार्थात्म[९] यद्यद्वस्तु यथा यथा[१०] ।
तत्तद्रूपेण या भाति तां श्रये सांविदीं[११] कलाम्[१२] ॥ ४ ॥

मूलादिबिलपर्यन्तं महात्रिपुरसुन्द(री?रि) ।
या तनुस्ते तडित्प्रख्या तां भजे[१३] भवशातनीम् ॥ ५ ॥

[3]योनौ कनकपुञ्जाभं[१४] हृदि विद्युच्छटोज्ज्वलम् ।
आज्ञायां चन्द्रसंकाशं महस्तव महेश्वरि ॥ ६ ॥

[4]प्रसृतामृतरश्म्यौघ[१५]सन्तर्पितचराचराम् ।
भवानि[१६] भवशान्त्यै त्वां भावयाम्यमृतेश्वरीम् ॥ ७ ॥

---

१. रचितम्-क., रञ्जितम्-त. । २. भेदेन-क. ख. । ३. नन्दकरं परम्-त. । ४. त्रिविभक्तं च-क. ख. । ५. स्तोत्य-क. ख. । ६. परम-ख. । ७. श्रिताम्-त. । ८. कार-क. ख. । ९. र्थात्मा-क. ख. दी. । १०. तथा-क. ख. दी. त. । ११. संविदं-क. ख. त. । १२. पराम्-क. । १३. वन्दे-ख., श्रये-त. । १४. संकाशं-क., पुष्पाभं-त. । १५. श्म्यो-ग. त. । १६. भवानीं-ख. दी. त. ।

1. 'तन्महः परमं नौमि' इत्यंशश्चिद्वल्ल्यां ( पृ. ५ ) दृश्यते ।
2. दीपिकायां स्थलद्वये ( पृ. ५,१७९ ) समुद्धृतोऽयं श्लोकः ।
3. महार्थमञ्जरीपरिमले ( पृ. १४५ ) दृश्यते श्लोकः ।
4. दीपिकायां ( पृ. २५७ ) दृश्यते श्लोकः ।

[1]वर्णः[1] कला पदं[2] तत्त्वं मन्त्रो[3] भुवनमेव च ।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥ ८ ॥
अनाश्रितादिकालाग्निरुद्रान्तं चित्रमद्भुतम्[4] ।
उन्मीलयसि मातस्त्वं प्रकाशवपुषि त्वयि ॥ ९ ॥
यदिदं भासते देवि नामरूपक्रियात्मकम् ।
प्रकाशवपुषि[5] त्वत्तस्तत्सर्वं नातिरिच्यते ॥ १० ॥
[2]नेत्रादिजालकोपान्ते[6] हृत्पद्मासनलीलया[7] ।
वारं वारं त्वया[8] देवि रूपादिमधु सेव्यते ॥ ११ ॥
संविद्देव्यः समाक्रम्य विषयानमृतासवान्[9] ।
योगिनां[10] प्रेषयन्त्यार्ये त्वत्पूजार्थं[11] हि सर्वदा ॥ १२ ॥
सौभाग्यहृदयं गुह्यं[12] शिवानन्देन[13] योगिना ।
समाराधनपूर्त्यर्थं स्तुतं[14] सकलकामदम् ॥ १३ ॥
इति विरचितमेतत् त्रैपुरं स्तोत्रमाप्तं[15]
प्रकटितपरमार्थं योगिवर्योपजुष्टम्[16] ।
सकलदुरितरोग[17]ध्वंसनानन्यकार्यं
प्रतियजनविधानं सेव्यतां भक्तियुक्तैः ॥ १४ ॥

इति शिवानन्दमुनिविरचितं सौभाग्यहृदयस्तोत्रं समाप्तम् ॥

---

१. वर्णाः–क. ख. । २. मनुस्तत्त्वं–क. ख. । ३. पदं–क. ख. । ४. चिर–क. । ५. वपुषस्तस्मात्त–क. ख., वपुषस्त्वत्त–त. । ६. ज्वाल–क. ख. । ७. नन–त. । ८. मया–ख. । ९. सवः–ग., सवम्–त । १०. योगिनी–क. । ११. जार्थे–क. । १२. स्तोत्रं–ख. । १३. सर्वा–क., चिदा–ख. । १४. स्मृतं–ग. । १५. माद्यं–क. । १६. वर्येण–क. । १७. योग–क. ।

1. महार्थमञ्जरीपरिमले ( पृ. ७३ ) चिद्वल्ल्यां ( पृ. १८ ) च दृश्यते श्लोकः ।
2. महार्थमञ्जरीपरिमले ( पृ. २३ ) उद्धृतोऽयं श्लोकः ।

# सौभाग्यसुधोदयः

## अमृतानन्दयोगिविरचितः

[1]जयति[१] ज्योतिरनुत्तरमिदमखिलं यस्य भासते भासा ।
सा भासयति[२] यन्न भानुर्न शीतभानुः कुतो बृहद्भानुः ॥ १ ॥

[2]स्वाभाविकी स्फुरत्ता विमर्शवपुरस्य[३] विद्यते शक्तिः ।
सैव चराचरमखिलं जनयति जगदेत(व?द)वति[४] संहरते ॥ २ ॥

तस्य निरुपाधिमूर्तेर्निखिलातीतस्य नित्यतृप्तस्य ।
ससारमोहसंभ्रमसंगतिरनयैव सन्ततं भवति ॥ ३ ॥

सेयं तदैकरस्यात् परा परामर्शरूपिणी शक्तिः ।
स्वस्वातन्त्र्योल्लासस्पन्दादेका[५]ऽप्यनेकधा वितता ॥ ४ ॥

प्रथमं पश्यन्त्यादिप्रकारभेदप्रपञ्चिताकारा ।
विश्वो[६]त्तीर्णानाहत[७]नादमयी सैव मातृका जाता ॥ ५ ॥

[3]अखिलमनाहतमूर्तिमर्त्युत्तीर्णस्वरूपिणी तरति ।
कायति[८] नानानामप्रपञ्चरूपेण मातृका देवी ॥ ६ ॥

---

१. एषा पङ्क्तिर्न दृश्यते–क. ख. । २. जयति–ग. । ३. रूपास्य–सौ. । ४. देतदपि च संहरति–ग. सौ. । ५. न्त्र्येणोल्ल–ग. । ६. 'विश्व' नास्ति–ग. । ७. नामवती–ग. । ८. पङ्क्तिचतुष्टयं न दृश्यते–क. ख. ।

1. "यत्र तेजांसि तेजांसि तमांसि च तमांसि च । तेजांस्येव तमांस्येतद्वरदज्यो····॥" इति प्रथमः श्लोकः–क., अत्रत्यद्वितीयपङ्क्तिस्थाने—"तस्मै········यत्यनुत्तरे" इति दृश्यते–ख. । वस्तुतस्तु—"यत्र तेजसि तेजांसि तमांसि च तमस्यलम् । तेजांसि च तमांस्येतद्वन्दे ज्योतिरनुत्तरम् ॥" इत्यभिनवगुप्तकृतपरात्रींशिकालघुवृत्तिमङ्गलाचरणश्लोक एष विकृतरूपेणात्र दृश्यते ।

2. सौभाग्यभास्करे ललितासहस्रनामभाष्ये ( पृ. १२२ ) उद्धृतो दृश्यत एष श्लोकः ।

3. श्लोकोऽयं योगिनीहृदयदीपिकायां ( पृ. १०६ ) दृश्यते ।

निजभागाहविर्भागा(?) पर्यासससमासैकरस्यभेदम(यि?यी ।
एकाऽप्येकादश(वा?धा) जाता माता परैव पश्यन्ती ॥ ७ ॥

[ [1]पश्यति सर्वं स्वात्मनि करणानां सरणिमपि यदुत्तीर्णा ।
तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माता ॥ ]

पश्यन्त्य(ा)ः परमार्थः स्व(ा)वयवा (प्य?व्य)ष्टयोऽष्ट वामा (सा?द्याः) ।
[१]ताभ्यः समष्टिरूपे न सामरस्यं च तत्त्वतो भिन्नम् ॥ ८ ॥

एकैकरस्यरूपा पराऽपरा[२]ऽष्टांशमातृपरमार्था ।
ताभ्यामनाहताख्या नादमयी मध्यमाऽभवन्माता ॥ ९ ॥

स्थानादिभिरहतत्वाद् बुद्धिव्यापारमात्रबोध्यत्वात् ।
माताऽनाहतनामा सूक्ष्मा विकृतादिनादनवकमयी ॥ १० ॥

सूक्ष्मैव [३]मध्यमेयं नादमयी स्थूलभावमापन्ना ।
[४]द्व्युत्तरचत्वारिंशद्वर्णात्मकवर्गनवकरूपेण ॥ ११ ॥

[2]पश्यन्तीव न केवलमुत्तीर्णा नापि वैखरीव बहिः ।
स्फुटतरनिखिलावयवा [५]मध्यगता मध्यमा तयो(र?र्य)स्मात् ॥ १२ ॥

परयाऽपरया पाद[६]द्यष्टव्यष्टयात्मना च पश्यन्त्या ।
मात्रा मध्यमया नववर्गात्मिकया च वैखरी जाता ॥ १३ ॥

स्थानकरणप्रयत्नैरभिहतपवनप्रवर्तितार्णत्वात् ।
हतनामधेयमस्या विहितं वर्णोदयक्रमाभिज्ञैः ॥ १४ ॥

---

१. 'ताभ्यः······ सामरस्यं' नास्ति—क.ख. । २. परास्ताशमात्र—ग. । ३. मध्यमया—ख ।
४. द्व्यन्तर—क. ख. । ५. वाग्रूपा—क. ख. सौ. । ६. ष्टकमव्य—क. ख. ।

1. [ ] चिह्नस्थः श्लोकः सौभाग्यभास्करे ( पृ. १०० ) सौभाग्यसुधोदयश्लोकत्वेनोद्धृतः प्रकरणानुरोधादत्र स्थापितः, मातृकासु तु नोपलभ्यते ।

2. सौभाग्यभास्करे ( पृ. १०० ) उद्धृतो दृश्यते श्लोकः ।

[1]अवधारणे(द्र?त्र) वै (वे?चे)दमक्षे विवरे च ख गतौ रीति ।
कर्णविवरैकगम्यस्वार्णेयं वैखरी यतो माता ॥ १५ ॥

दश पञ्च च बिन्द्वन्ताः स्वरा मताः प्रतिपदादितिथिरूपाः ।
रविशशिसर्गस्पन्दप्रभवा हि भवन्ति ते तदात्मानः ॥ १६ ॥

रविशशिरूपौ बिन्दू शिवशक्तिमयौ तदात्मकः सर्गः ।
सत्तोद्रेकश्च तयोः शिवशक्त्योस्तत्स्वभावतोऽवस्थे ॥ १७ ॥

सत्ता शिवस्तदंशा वामा ज्येष्ठा तथैव रौद्री स्यात् ।
एता एवानुत्तरमिच्छोन्मेषश्च समभव(द्?न्) ह्रस्वाः ॥ १८ ॥

उद्रेकः शक्तिः[1] स्यादिच्छा ज्ञाना[2] क्रिया च शक्त्यंशाः ।
दीर्घास्ता एवासन्नानन्दश्चेशनोनता चेति ॥ १९ ॥

अस्वरवपुरादिशिवः परः[3] प्रमाता स्वसंविदुन्मेषात् ।
इच्छति वेदितुमर्थानीशनया तदनु वेत्ति भिन्नगतिः ॥ २० ॥

[4]इच्छावेशानन्तरमस्मिन् प्रागीशनोदयान्मध्ये ।
व्यक्ताव्यक्तार्थमया(ः) षण्ढा इच्छेशनोद्भवा वर्णाः ॥ २१ ॥

इच्छानुत्तरयोगाद्विहिता श(क्तिः?क्ति)स्वरस्य संभूतिः ।
एकारानुत्तरयोः सङ्गादैकारसंभवो भवति ॥ २२ ॥

उन्मेषानुत्तरयोः सङ्गादोकारजन्म निर्णीतम् ।
ओकारानुत्तरयोः सङ्गाच्छक्तित्रिशूलनिष्पत्तिः ॥ २३ ॥

वेदनरूपो बिन्दुः शिवशक्तिद्वितयसामरस्यतनुः ।
[5]वेदकवेद्यविभागस्वरूपसंकोचरूपसंस्कारः ॥ २४ ॥

---

१. शक्त्यंशः–क. ख. । २. ज्ञानं–क. ख. । ३. परप्रमाता–ग. । ४. पङ्क्तित्रयं नास्ति–ख. । ५. पङ्क्तित्रयं नास्ति–ख. ।

1. "वै निश्चयेन खं कर्णविवरं राति गच्छतीति व्युत्पत्तिः सौभाग्यसुधोदये कथिता" (सौभाग्यभास्करे, पृ. १०० )। "अनुत्तराख्यशिवस्येच्छाशक्त्या योगादिक्रमेण वर्णोत्पत्तिप्रकारः सौभाग्यसुधोदये द्रष्टव्यः" ( सौभाग्यभास्करे, पृ. १२५ ) । "एवमन्येषां वर्णानामुत्पत्तिः परापञ्चाशिकासौभाग्यसुधोदयादिषु वर्णिताऽनुसन्धेया" ( सेतुबन्धे, पृ. २९१ ) ।

रविशशिसंचरणवशाद् यथैव विकसन्ति सन्ततं तिथयः ।
तन्मयसर्गस्पन्दादुन्मिषितास्ते स्वरास्तदात्मानः ॥ २५ ॥

सर्गेण कादिवर्णैरपि षट्त्रिंशद्भिरात्मनोऽवयवैः ।
षट्त्रिंशत्तत्त्वमयं जगदावृणुते शिवात्मकं माता ॥ २६ ॥

शक्तिर्न शिवेन विना शिवोऽपि न तया विनाऽस्ति तद्वदिदम् ।
विश्वं वागर्थमयं शिवशक्त्युल्लाससंभवं भाति ॥ २७ ॥

[1]यदयमनुत्तरमूर्तिर्निजेच्छया निखिलमपि जगत्स्रष्टुम् ।
[१]पस्पन्दे स [२]स्पन्दः प्रथमं शिवतत्त्वमुच्यते तज्ज्ञैः ॥ २८ ॥

इच्छा सैव स्वच्छा सन्ततसमवायिनी [३]परा शक्तिः ।
सचराचरस्य जगतो बीजं निखिलस्य [४]निजनिलीनस्य ॥ २९ ॥

स्वेच्छाशक्त्युद्गीर्णं जगदात्माहन्तया समाच्छाद्य ।
निवसन् स एव निखिलानुग्रहनिरतः सदाशिवोऽभिमतः ॥ ३० ॥

विश्वं स एव पश्यन्निदन्तया निखिलमीश्वरो जातः ।
सा [५]भवति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः ॥ ३१ ॥

माया [६]विभेदबुद्धिर्निजांशभूतेषु निखिलभूतेषु ।
नित्यं तस्य निरङ्कुशविभवं वेलेव [७]वारिधिं रुन्धे ॥ ३२ ॥

स तया परिमितमूर्तिः संकुचितसमस्तशक्तिरेष पुमान् ।
[८]रविरिव सन्ध्यारक्तः संहृतरश्मिः [९]स्वभासनेऽप्यपटुः ॥ ३३ ॥

सम्पूर्णकर्तृताद्या या बह्व्यः सन्ति शक्तयस्तस्य ।
संकोचात् संकुचिताः कलादिरूपेण रूषयन्त्येनम् ॥ ३४ ॥

[१०]यत्सर्वकर्तृता सा संकुचिता कतिपयार्थमातृपरा ।
किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते [११]कलानाम्ना ॥ ३५ ॥

---

१. प्रस्यन्दे—क. ख. । २. स्यन्दः—क. ख. । ३. सती—ग. दी. । ४. विली—दी. । ५. भाति—दी. । ६. पि भेद—क. ख. ग. । ७. वारिधे—ग. । ८. शशि—ग. । ९. नेऽथ—दी. । १०. तत्—ग. दी. । ११. नाम—ग. ।

1. यदयमित्यादिका गन्धवतीत्यन्ताः श्लोका योगिनीहृदयदीपिकायां ( पृ. १२४-१२६ ) समुद्धृताः सन्ति ।

सर्वज्ञताऽस्य शक्तिः परिमिततनुरल्पवेद्यमातृपरा ।
ज्ञानमुपपादयन्ती[1] विद्येति निगद्यते बुधैराद्यैः ॥ ३६ ॥

नित्यपरिपूर्णतृप्तिः शक्तिस्तस्यैव परिमिता तु सती ।
भोगेषु रञ्जयन्ती सततममुं रागतत्त्ववतां याता ॥ ३७ ॥

या नित्यताऽस्य शक्तिर्निकृष्य निधनोदयप्रदानेन ।
नियतपरिच्छेदकरी[2] क्लृप्ता[3] स्यात् कालतत्त्वरूपेण ॥ ३८ ॥

याऽस्य स्वतन्त्रताख्या शक्तिः संकोचशालिनी सैव ।
कृत्याकृत्येष्ववशं नियतममुं नियमयन्त्यभून्नियतिः ॥ ३९ ॥

इच्छादित्रिसमष्टिः[4] शक्तिः शान्ताऽस्य[5] संकुचद्रूपा ।
संकुचितेच्छाद्यात्मकसत्त्वादिकसाम्यरूपिणी तु सती ॥ ४० ॥

बुद्ध्यादिसामरस्यरूपा[6] चित्तात्मिका मता प्रकृतिः ।
इच्छाऽस्य रजोरूपाऽहङ्कृतिरासीदहंप्रतीतिकरी ॥ ४१ ॥

ज्ञानाऽस्य सत्त्वरूपा निर्णयबोधस्य कारणं बुद्धिः ।
तस्य क्रिया तमोमयमूर्तिर्मन इत्युच्यते विकल्पकरी ॥ ४२ ॥

वागादिपञ्चभेदैः[7] स एव संकुचितविग्रहो देवः ।
ज्ञानक्रियोपरागप्राधान्याद् विविधविषयरूपोऽभूत् ॥ ४३ ॥

श्रोत्रं चक्षुः स्पर्शनजिह्वाघ्राणानि बोधकरणानि ।
वाक्पाणिपादपायूपस्थाख्यानि कर्मकरणानि ॥ ४४ ॥

शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
अयमेवातिनिकृष्टो[8] जातो भूतात्मनाऽपि भूतेशः ॥ ४५ ॥

गगनमनिलश्च तेजः सलिलं भूमिश्च पञ्च भूतानि ।
श्रोत्रादिकरणवेद्याः शब्दाद्यास्तानि वेदकान्येषाम् ॥ ४६ ॥

---

१. उत्पादयति ज्ञानं–क. ख, । २. नियति–ग. । ३. तृप्ता–ग. । ४. समष्टिशक्तिः–क. ख. दी. । ५. शान्तस्य–ग. । ६. स्वरूप–ग. दी. । ७. वामादि–ग. । ८. निष्कृष्टो–ग. ।

वचनकरी वागासीत्[1] पाणिः स्यात् करणभूतमादाने ।
गमनविसर्गानन्दत्रितये पादादिकत्रिकं[2] करणम् ॥ ४७ ॥

गन्धवती भूमिः स्यादापः सांसिद्धिकद्रवास्तेजः ।
उष्णस्पर्शविशिष्टं सस्पर्शो[3] वायुरम्बरं शब्दः ॥ ४८ ॥

[1]मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् ।
शक्तिशिवौ[4] शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम् ॥ ४९ ॥

चतुरात्मिकेयमेषा[5] परादिरूपप्रपञ्चभेदवती[6] ।
सृष्टिस्थितिसंहारानाख्याख्यांश्चतुरोऽन्वयान[7]भिव्याप्ता ॥ ५० ॥

इति[8] श्रीमदमृतानन्दयोगिविरचिते सौभाग्यसुधोदये
प्रथमः प्रपञ्चः ॥

---

[2]सैव महाविद्यात्मा माता चतुरन्वयैकविश्रान्तिः ।
चतुराननादिजननी जाता चतुरात्मवर्गफलदात्री ॥ १ ॥

[3]अस्वरविमर्शरूपौ स्वांशौ हित्वा चतुष्कलौ सैव ।
वामादीच्छादिमयान्यकरोद् द्वन्द्वान्यमूनि चत्वारि ॥ २ ॥

वामांशो ब्रह्मा स्यादिच्छैव तस्य भारती शक्तिः ।
अनयोरेतन्मिथुनं सृष्टिः[9] प्रागन्वयात्म[10] वाग्बीजम् ॥ ३ ॥

ज्येष्ठांशो विष्णुः स्याज्ज्ञाना[11] विश्वम्भरा तयोर्मिथुनम् ।
इदमेव दक्षिणान्वयरूपं श्रीकामराजमध्यास्ते ॥ ४ ॥

---

१. वागुक्ता–ग. । २. पादादिकं–दी. । ३. मरूपः–ग., मरूपस्पर्शो–दी. । ४. शक्त्यन्तं–ग. । ५. चातु–ग. । ६. भेद–क. ख. । ७. ख्यार्णान् चतुर–क. ख । ८. इत्यमृतानन्दकृते–क. ख. । ९. शान्तिः–ग. । १०. प्राग् वाग्भवात्मकं बीजम्–क. ख. दी. । ११. स्याज्ज्ञानं–क. ख. दी. ।

1. सेतुबन्धे ( पृ. १२८ ) दृश्यते श्लोक एषः । "एतेषां ( ३६ तत्त्वानां ) स्वरूपमुत्पत्तिक्रमश्च सौभाग्यसुधोदये द्रष्टव्यः" ( पृ. ६८ ) इति वरिवस्यारहस्ये, तदस्यैव प्रकरणस्य परामर्शकम् ।

2. द्वितीयप्रपञ्चस्थाः सर्वे श्लोका योगिनीहृदयदीपिकायां ( पृ. १००-१०२ ) दृश्यन्ते ।

3. एष श्लोकार्धो योगिनीहृदयदीपिकायां १७१ तमे पृष्ठेऽपि दृश्यते ।

रौद्रयात्मकस्तु रुद्रः क्रियामयी शक्तिरस्य रुद्राणी ।
युगलमिदं[1] तार्तीयं बीजं पालयति पश्चिमाम्नायम्[2] ॥ ५ ॥

स्यादम्बिकास्वरूपः[3] शम्भुः शान्तात्मिकाऽस्य शक्तिः स्यात् ।
मिथुनमिदं शिवशक्त्योरुत्तरसमयात्म तुर्यमधितिष्ठेत् ॥ ६ ॥

एवमनुत्तरशक्त्योश्चतुरंशद्वन्द्वरूपिणी परा जाता ।
चतुरन्वयात्मिकेयं[4] पश्यन्ती मातृकामयी विद्या[5] ॥ ७ ॥

सृष्टिः पूर्वाम्नायो वाग्भवबीजं तदात्मकं त्रिविधम् ।
सृष्टिस्थितिसंहारैर्भिन्ना सृष्टिस्त्रिमूर्तिमूर्तिः स्यात् ॥ ८ ॥

ब्रह्माऽत्र सृष्टिसृष्टावधिपतिरेतस्य भारती शक्तिः ।
सोऽयं[6] हस्यार्थः स्यात् स एव शिवशक्तिवाचकश्चापि ॥ ९ ॥

हस्यार्थः स्यादत्र स्वशक्तिमयरूपसार्णसंयोगात् ।
सृष्टिस्थितौ तु विष्णुः कर्ता विश्वम्भराऽस्य शक्तिः स्यात् ॥ १० ॥

विष्णुः कलिपेरर्थो ललिपेरेतस्य शक्तिरर्थः स्यात् ।
रुद्रोऽधिपतिः शक्ती रौद्री स्यात् तत्र सृष्टिसंहारे ॥ ११ ॥

हरवर्णयुगलमनयोर्वाचकमर्थोऽत्र रस्य रुद्रः स्यात् ।
रुद्राक्षरसम्पर्काद् रौद्री तच्छक्तिरत्र हस्यार्थः ॥ १२ ॥

अत्र तु शक्त्यर्णस्य प्राथम्यं शक्तिबीजभूतत्वात् ।
अधिवसतः शिवशक्ती संज्ञानाख्या[7] तयोस्तु त्रित्वमयी ॥ १३ ॥

कामकला कलयित्री तुर्यमयी रक्तशुक्लमिश्रतनुः ।
रक्तो बिन्दुः शक्तिः शुक्लः शम्भुः परस्तदैकात्म्यम् ॥ १४ ॥

एवं द्वितीयबीजं स्थितिरूपं दक्षिणान्वयात्म स्यात् ।
स्थितिसृष्ट्यादिविभेदाद्[8] वसन्ति ता एव देवतास्तत्र[9] ॥ १५ ॥

---

१. मयं–ग. । २. ज्ञात्म–ग. । ३. कांशभूतः–ग. । ४. रक्षरा–ग. । ५. महाविद्या–ग. ।
६. सेयं सस्यार्थः–ग. । ७. सर्गा–ग. । ८. दात्ता एवात्रापि देवता न्यवसन्–ग. । ९. स्त्वत्र–क. ख. ।

अत्र कलवर्णमध्यस्थितो हकारः स्थितिस्वरूपत्वम् ।
अस्य द्योतयति परं [1]स्थितिरूपं संवि[2]दम्बिकाकारः ॥ १६ ॥
संहारात्मकपश्चिम[3]समयमये तद्वदेव [4]तार्तीये ।
संहृतिसृष्ट्यादि[5]वशाद् वसन्ति ता एव देवता[6]स्तत्र ॥ १७ ॥
सृष्टौ शक्तेर्नियतप्राधान्यादस्य शक्तिबीजत्वात् ।
[7]स्वात्मनि संहृतिसृष्टौ शिवमन्तर्भाव्य [8]भासते शक्तिः ॥ १८ ॥
त्रिमये तुरीयबीजेऽनाख्यारूपोत्तरान्वयात्मनि तौ ।
शक्तिशिवावधिवसतो निरन्तरं सामरस्यमापन्नौ ॥ १९ ॥
सृष्ट्यादिभेदभिन्नश्रीविद्यावर्ण[9]युगलनवकात्मा ।
नवनादवर्गरूपा माता सा मध्य[10]माऽभिधा वितता ॥ २० ॥
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
व्याप्यव्यापकभावात् पञ्चदश स्युः क्रमेण तत्संख्याः ॥ २१ ॥
[11]तिथयश्च कला नित्यास्तदात्मिकाः स्युस्तथैव तत्संख्यैः ।
वर्णैः समष्टिरेषा विद्या व्याप्नोति तानि सर्वाणि ॥ २२ ॥
[12]सर्गादिसमष्टिरूपः [13]स्वांशैरेभिस्तदात्मना विततः ।
सर्गेण कादिवर्णैरपि षट्त्रिंशद्भिरात्मनोऽवयवैः ॥ २३ ॥
पुनरज्व्यञ्जनबिन्दु[14]प्रभेदभिन्नांस्तदक्षरावयवान् ।
षट्त्रिंशत्संख्याकांस्तत्त्वमयानश्नुते हि सा माता ॥ २४ ॥
व्यष्टिसमष्टिविभेदैश्चतुरात्मा तत्त्वबीजपीठमयी ।
[15]चतुरन्वयात्मनाऽपि च माताऽष्टकमातृकामयी विद्या ॥ २५ ॥

[16]इति श्रीमत्पुण्यानन्दशिष्यामृतानन्दयोगिप्रवरविरचिते
सौभाग्यसुधोदये द्वितीयः प्रपञ्चः ॥

---

१. ध्वनिरूपः–ग. । २. दम्बरा–ग. । ३. समये–दी. । ४. तार्तीयम्–दी. । ५. वशात् सन्ति–दी. । ६. स्त्वत्र–क. ख. ग. । ७. स्वात्मा–ग. । ८. विभासते–दी. । ९. युग्म–ग. । १०. मा मता–ग. । ११. तिथयः कलाश्च–ग. । १२. सर्गः समष्टि–ग. । १३. स्वरैस्त्रिभिः–ग. । १४. प्रभेदनोदक्षरावयवान्–ग. । १५. चतुरक्षरा–ग. । १६. इति द्वितीयः प्रपञ्चः–क. ख. ।

अस्याम्बिकांशभूता शक्तिः[1] (सा से?स्वांशे)न शान्तया साकम् ।
समरसभावं याता जाता ज्योतिर्मयी महाबिन्दुः ॥ १ ॥

सैव स्वेच्छोद्रेकाद् वामा (प?व)मनादमुष्य विश्वस्य ।
वक्रीकृत[2]निजरूपा सृष्टिः[3] शृङ्गाटवामरेखा स्यात् ॥ २ ॥

ज्येष्ठा ज्ञानावेशादृज्वी स्थितिरेतदग्ररेखा[4] स्यात् ।
रौद्री क्रियोपरागात् संहृतिरेतस्य दक्षिणा रेखा ॥ ३ ॥

इत्थमियं पश्यन्ती जाता[5] माता त्रिकोणरूपेण ।
साऽपि चतुर्बीजवती विद्या वेद्या तदात्मिका तद्वत् ॥ ४ ॥

वामा(दि?दी)च्छाद्यष्टप्रतिबिम्बै[6]रष्टकोणमुत्पन्नम् ।
अष्टत्रिकोणमध्यस्पन्दैर्दशभिर्दशारमुत्पन्नम् ॥ ५ ॥

अस्यैव प्रतिबिम्बं बाह्यदशारं च भासमानस्य ।
स्पन्दवशादेवैषां चक्राणां समुदितं च मनुकोणम् ॥ ६ ॥

द्व्युत्तरचत्वारिंशद्योनिगणो[7] मध्ययोनिपर्यन्तम् ।
नादमयैर्नववर्गैर्मध्यमया तावदक्षरैर्व्याप्तः[8] ॥ ७ ॥

विद्यांशमयैः[9] स्वार्णैः काद्यैर्वर्गैः स्वरैश्च[10] षोडशभिः ।
अष्टद्व्यष्टदलाम्बुजयुगलं व्याप्नोति वैखरी देवी ॥ ८ ॥

बीजत्रयमयतेजस्त्रितयविकाराश्च तानि वृत्तानि ।
भूबिम्बत्रयमेतत् पश्यन्त्यादित्रिमातृविश्रान्तिः ॥ ९ ॥

चतुरश्रषोडशाष्टच्छदात्मक[11]चक्रत्रयं त्रिधा सृष्टिः ।
पूर्वाम्नायो वाग्भवबीजं तद्वत्[12] त्रिमूर्तिदैवत्यम् ॥ १० ॥

---

१. क्तेरंशेन–ग. । २ चक्री–क. ख. । ३. सृष्टि–क. ख. । ४. खासीत्–ग. । ५. माता जाता–ग. । ६. मप्यासीत्–ग. । ७ गणा–क. ख. । ८. व्याप्तम्–क. ख. । ९. यस्वार्णः–ग. । १० 'स्वरैः' नास्ति–क. ख. । ११. 'च्छदात्मक' नास्ति–ग. । १२. तद्धि–क. ख. ।

मनुकोणं द्विदशारं त्रितयमिदं कामराजबीजं स्यात् ।
स्थितिरत्र देवतानां त्रयमपि तद्वच्च दक्षिणाम्नायः ॥ ११ ॥
अष्टत्रिकोणमध्यत्रितयं तार्तीयमेष[१] संहारः ।
[२]अत्रापि देवतात्रयमासीदयमेव पश्चिमाम्नायः ॥ १२ ॥
सर्वंमनाख्यारूपं तुर्यं शिवशक्तिदेवताधिकृतम् ।
स्यादु[३]त्तरसमयात्मकमेवं स्रोतोमयं महाचक्रम् ॥ १३ ॥

[४]इति श्रीमत्पुण्यानन्द(शिष्यामृतानन्दयोगिप्रवरविरचिते)
सौभाग्यसुधोदये तृतीयः प्रपञ्चः ॥

---

[1]चित्तमये श्रीपीठे ज्योतिर्बिन्दौ यदस्य संक्रान्तम् ।
[५]प्रतिबिम्बं परधाम्नः परलिङ्गं [६]तत्प्रकोर्त्यते प्राज्ञैः ॥ १ ॥
तत्र परा परमेशी प्रकाशशक्त्यात्म(का?कौ) निजावंशौ ।
निर्भिद्य नित्ययोगात् कामः कामेश्वरीत्यभून्मिथुनम् ॥ २ ॥
[७]सर्वैः स्वस्वात्मतया [2]कामो देवः [८]प्रकाम्यमानत्वात् ।
[3]वक्त्राद्यास्तस्यांशा वाराद्य [९]र्वणितं बुधैराद्यैः ॥ ३ ॥
परमात्मिका तदीया स्वेच्छाशक्तिर्बभूव कामेशी ।
इच्छादिकास्तदीया मूर्धाद्यंशा मनीषिभिः कथिताः ॥ ४ ॥
अनयोरात्मावय(त?व)व्याससमासैकरस्यभेदवपुः ।
पश्यन्ती मातेयं न तत्त्वतो भिद्यते ततस्ताभ्याम् ॥ ५ ॥

---

१. मेव–क. ख. । २. तत्रापि–क. ख. । ३. रान्वयान्वादिक–क. ख. । ४. इति तृतीयः प्रपञ्चः–क. ख. । ५. प्रतिफलितं–क. ख. दी. । ६. तत्र–ग. । ७. सर्वेऽस्य–ग. । ८. स–ग., स काम्यत्वात्–दी. । ९. र्वणिता–क. ख. ।

1. योगिनीहृदयदीपिकायां ( पृ. ६१ ) समुद्धृतमेतत्पद्यम् ।
2. योगिनीहृदयदीपिकायां ( पृ. २६३ ) समुद्धृत एष पद्यांशः ।
3. "वामाद्यास्तस्यांशा वक्त्राद्या वर्णिता बुधैराद्यैः" इति पाठः समुचितः प्रतिभाति ।

[१]सा च चतुरक्षरात्मा तदंश(पू?भू)तानि तानि मिथुनानि ।
चत्वारि वेदयन्ति विद्या वेद्या तदात्मिका विबुधैः ॥ ६ ॥
आधारनवकमनयोर्मूलादिब्रह्मरन्ध्रपर्यन्तम् ।
नवनादवर्ग[२]रूपा माता व्याप्नोति मध्यमा देवी ॥ ७ ॥
सृष्ट्यादित्रयभेदैर्नवभिर्भिन्नार्णयुग्मनवकव(ति?ती) ।
नवचक्ररूपिणी सा विद्या व्याप्नोति तद्वदाधारा(त्?न्) ॥ ८ ॥
षट्त्रिंशत्तत्त्वमयं शरीरमनयोर्निजेच्छयोपात्तम् ।
[३]हन्ताद्यविद्ययाऽपि व्याप्तं तावत् प्रकारभिन्नाभ्याम् ॥ ९ ॥
एकत्रिंशत्रितय[४]द्वितयसमष्टिप्रकारसंकलितैः ।
तत्त्वैः [५]स्वावयवमयैश्चतुर्भिरनयोस्तथान्वया व्याप्ताः ॥ १० ॥

इति चतुर्थः प्रपञ्चः ॥

---

श्रीपीठशैलशिखरे [६]परशिवभानोः प्रकाशमानस्य ।
निजशक्तिरश्मिनिकरश्[७]चक्रक्रमदेवतात्वमायातः ॥ १ ॥
[1]मध्यत्रिकोण[८]कोणे वामे श्रीपूर्णपीठमेतस्मिन् ।
बुद्धिमये परतेजःप्रतिफलितं त्वितरलिङ्गतां यातम् ॥ २ ॥
रौद्रः स्यादोड्डीशः क्रियैव भगमालिनी तयोर्मिथुनम् ।
रुद्र[९]स्वशक्तिरूपं तृतीयबीजात्मकं (त(द)ध्यास्ते ॥ ३ ॥
[2]दक्षिणकोणेऽहङ्कृतिरूपे जालन्धरे तु संक्रान्तम् ।
परधाम बाणलिङ्गं [१०]जातं संक्रान्त्युपाधि[११]भेदवशात् ॥ ४ ॥

---

१. सा चतुरक्षरा वा–क. ख. । २. नाथ–क. ख. । ३. हन्तार्य–ख., हतयाद्य–ग. । ४. 'द्वितय' नास्ति–ग. । ५. स्वावयवान्–क. ख. । ६. शितधाम्नः–क. ख. । ७. श्चक्रं–ग. । ८. 'कोणे' नास्ति–ग. । ९. स्य–क. ख. । १०. तत्संक्रान्तद्युति–क. ख. । ११. च्छेद–क. ।

1. दीपिकायां ( पृ. ६१ ) समुद्धृतमेतत्पद्यम् ।
2. दीपिकायां ( पृ. ६१ ) दृश्यते श्लोक एषः ।

ज्येष्ठांशः षष्ठीशः ज्ञाना वज्रेश्वरी तयोर्मिथुनम् ।
विष्णुविश्वम्भरात्मकमस्मिन्नधिवसति मध्यबीजमयम् ॥ ५ ॥

[1]पुनरेव कामपीठे तदग्रकोणे स्थिते मनोरूपे ।
प्रतिफलितं तज्ज्योतिः स्वयम्भुलिङ्गं समीरितं[१] सद्भिः ॥ ६ ॥

वामांशो मित्रेशः[२] कामेशीच्छा तयोर्मिथुनम्[३] ।
ब्रह्मब्राह्मीरूपं वाग्भवबीजात्मकं वसत्यस्मिन् ॥ ७ ॥

इत्थं वामाद्यंशैर्वागादिकबीजवाच्यतां यातैः ।
वामादियुगलरूपा जाता सा मातृकैव पश्यन्ती ॥ ८ ॥

वसुयोनिष्वदसीयं पुर्यष्टकमष्टदेवताकारम् ।
अन्तर्दशारचक्रे सर्वज्ञाद्यास्तदक्षसंचाराः ॥ ९ ॥

स्युः सर्वसिद्धिदाद्यास्तदक्षविषया बहिर्दशारगताः ।
मनुकोणशक्तिनिकरः करणचतुर्दशकमेव[४] तदीयमभूत् ॥ १० ॥

द्व्युत्तरचत्वारिंशद्योनिगतो देवतानिकायोऽयम् ।
मध्यमया नववर्गैर्विद्यार्णयुगात्मकैरभिव्याप्तः ॥ ११ ॥

अष्टकमनयोरिष्टं प्रकृतीनामष्टपत्रशक्तितया ।
एतद्विकारजातं संजातं[५] नृपपत्रदेवताकारम् ॥ १२ ॥

अणिमादिगुणनिकायस्तयोस्तयोरेव[६] धातुसमुदायः ।
मुद्रामयी च सा[७] वै[८] चतुरश्रत्रयमये वसत्यस्मिन् ॥ १३ ॥

द्विरदकलादलकमलद्वितयगतं[९] शक्तिरश्मिचक्रमिदम् ।
विद्यात्मकैः स्वकीयैर्वर्णैर्व्याप्नोति वैखरी माता ॥ १४ ॥

---

१. समीहितं–दी. । २. मित्रीशः–ग. । ३. तयोरिदं युग्मम्–ग. । ४. दशं क्रमे–ग. । ५. नववसुपत्राब्जदे–क. ख. । ६. स्तनयोरेव–क. ख. । ७. सदपि–ग. । ८. त्रितयमधि–ग. । ९. ले द्वितीयमिदं–क. ख. ।

1. दीपिकायां ( पृ. ६१ ) समुद्धृतमेतत्पद्यम् ।

आधारनवकमनयोर्नवचक्रीभावमागतं शिवयोः ।
तन्मध्यचारचतुरा मुद्रात्वं प्राप मोदनात् संवित् ॥ १५ ॥
तन्नादशक्तिनवकं नवचक्रेशीस्वरूपमापन्नम् ।
विद्यार्णयुग्मनवकं तद्विद्यानवकरूपतो[1] विततम् ॥ १६ ॥
नवचक्रवासिनीनां भासां प्रकटादियोगिनीनां च ।
तासामिव चक्राणां चतुराम्नायादिरूपता ज्ञेया ॥ १७ ॥

इति पञ्चमः पटलः ॥

---

तदनादिबोधरूपं परमानन्दात्मकं परं ज्योतिः ।
स्फुरति यदा स्वात्मानं विमृष्टं विद्ययाऽनयाऽभिलषेत्[2] ॥ १ ॥
तदनुत्तरस्फुरत्ताकार(:) स्वात्मीयतत्त्वविस्रष्टा[3] ।
परमशिवो गुरुराद्यश्चर्यानाथापराभिधानधरः[4] ॥ २ ॥
विद्यानां सर्वासां भिन्नस्रोतःपरम्पराकाणाम् ।
वारिधिवर इव[5] सरितां पुण्यतमो भवति यत्र संभेदः ॥ ३ ॥
भिन्नः स एव यातः कामे(श?शी)[6]त्वं विमर्शभागेन[7] ।
शक्तिः साऽस्य निरङ्कुशविभवं[8] वेलेव वारिधिं रुन्धे ॥ ४ ॥
कृतयुगसमये विद्यामाद्यामस्यै विमर्शरूपिण्यै ।
ओड्याणपीठनिलयश्चर्यानाथोऽधिदेव(ते?तै)वेशः[9][10] ॥ ५ ॥
एतन्निरोधजन्या[11] मुक्तिर्जन्तोः स एव संसारः ।
संसारस्य च मुक्तेः सरणि शरणं प्रयामि तच्चरणम् ॥ ६ ॥

---

१. रूपनवकलाविदितम्–क ख. । २. विद्ययाऽभिलषत्–क. ख । ३. समृष्टा–क. ख. । ४. परा–क. ख. । ५. इति–ग. । ६. कामेश्वरीत्वं–ग. । ७. भेदेन–क. ख. । ८. विभवा–ग. । ९. ओङ्कार–ग. । १०. नाथादिदेवदेवेशम्–ग. । ११. मुक्तिर्मुक्ति–ग. ।

सेयं स्वीयैर्भिन्नान् गुरून् गुणैः षष्ठमित्रसंज्ञादीन्[1][2] ।
अन्वग्रहीदमी(षा?षां) ज्येष्ठो ज्येष्ठौलिहेतुरोड्डीशः ॥ ७ ॥
क्रोधमुनिश्चिद्रूपस्त्रेतायुगनायकोऽन्त्यबीजपतिः ।
सत्त्वतनुर्भगमालाभर्त्ता श्रीपूर्णशैलपीठगतः[4] ॥ ८ ॥
सुब्रह्मण्यो मध्यः षष्ठीशो मध्यमौलिकर्ता[5] च ।
प्राणात्मा वज्रेशीनाथ(ः) श्रीकामराजबीजपतिः ॥ ९ ॥
जालन्धरपीठस्थो द्वापरयुगनायको रजोरूपः ।
श्रीकण्ठो मित्रेशो[6] ना(थं?थः)[7] कामेश्वरीमनःकान्तः ॥ १० ॥
श्रीकामरूपनिलयो विषयमयो[8] वाग्भवाक्षराधिपतिः ।
बालो बालौलिकरः कलियुगकालप्रभुस्तमोमूर्तिः[9] ॥ ११ ॥
नाथैरेभिः[10] परज्योतिपरिस्पन्दः प्रपञ्चपरमार्थः ।
दिव्यौघोऽयं कथितः[11] सेव्यः श्रीवामकेश्वरीदेव्याः ॥ १२ ॥
मित्रेशनाथमात्रे[12] कलियुगस(न्धा?न्धौ) निलीय निवसन्तीम् ।
विद्यामाद्यामेनां लोपामुद्रा युगादितः प्रापत् ॥ १३ ॥
यदनन्यलब्धपूर्वां[13] विद्यामेषा युगादितो लेभे[14] ।
तत्तन्नाम्ना[15] प्रथितं सन्तानमिदं हि सर्वकालेषु ॥ १४ ॥
तदनु मुनिः कलशभवस्ताभ्यां कङ्कालतापसाचार्यः[16] ।
तस्माद् धर्माचार्यो लघुनुतिवररचनविदितविज्ञानः ॥ १५ ॥
तस्मादपि योगि(स?व)राद् योगेशी मुक्तकेशिनी नाम ।
नानापदानमहितो दीपकनाथः स्वसन्ततेर्दीपः ॥ १६ ॥

---

१. शेष–ग. । २. कान्–ग. । ३. माथा दत्ता–ग. । ४. शैलपूर्ण–क. ख. । ५. मध्यमोलि–ग. । ६. मित्रीशो–ग. । ७. नाथा–ग. । ८. विषम- क. ख. । ९. प्रमूर्तिराख्यातम्–क. ख. । १०. नादैः–क. ख. । ११. विदितः–क. ख. । १२. मित्रीशः–ग. । १३. वर्मिनामेषा–क. ख । १४. लभते–क. ख. । १५. तन्नाम्ना–क. ख. । १६. काल–ग. ।

विद्यामवाप तस्या योगिन्या विमलबोधभागिन्याः[1] ।
एतैः शिवांशभूतैः[2] सिद्धौघ(:) षड्भिरीरितो गुरुभिः ।। १७ ।।

दीपकनाथस्य सुतो विद्यां तस्मादवाप जिष्णवाख्यः ।
अथ मातृगुप्तदेवस्तस्मादस्माच्च तेजसो[3] देवः ।। १८ ।।

तस्मान्मनोजदेवस्ततो[4]ऽपि कल्याणनाथयोगिवरः ।
तस्मात् परमानन्दः स्वात्मानन्दस्ततो महायोगी ।। १९ ।।

तदनु त्रिलोचनेशो दक्षिणसन्तानसिद्धि[5]सन्तानः ।
एतस्माद् देवेशो मारिजबाधाख्य[6]विषयविदितयशाः ।। २० ।।

तस्माच्च केशवेशस्त्रिलोचनेशापराभिधान[7](प?ध)रः ।
तस्मात् पुण्यानन्दो (माम?ममा)[8]मृतानन्दयोगिनो नाथः ।। २१ ।।

भानुक[9](सुमा?शुभा)वसानं सन्तानं स्वीयमा[10]त्मनो ज्ञात्वा ।
सम्प्रति सन्तति[11]योजितजनना[12]दहमस्मि पञ्चमः पुरुषः ।। २२ ।।

एतैर्नाथै[13]रुदितो मानौघो मानवोत्तमैरर्च्यः ।
सर्वेषां तु गुरूणां गोप्यं[14] तत्पूज्यनाम सामयिकम्[15] ।। २३ ।।

गुरुवक्त्र[16]मात्रगम्यं न पुस्तके लोकना[17]मवल्लेख्यम् ।
एतेषामोघानामिव गाङ्गानां[18] तमो(व?प)हं त्रितयम् ।। २४ ।।

वागादित्रितयमयं वन्द्यं[19] विद्यावतारसोपानम् ।
एतत्त्रितयसमष्टि श्रीगुरुनाथस्य पादुकात्रितयम् ।। २५ ।।

---

१. मङ्गलाकृतेः क्रमतः–क. ख. । २. शिवाङ्ग–ग. । ३. तेजदेवाख्यः–ग. । ४. ज्ञनाथस्तस्मात्–क. ख. । ५. सिन्धु–ग. । ६. वारिववायव्य–क. ख. । ७. शो वराभिधानधरः–ग. । ८. महा–क.ख. । ९ भानुकु–क.ख. । १०. मासना–ग. । ११. सन्तत–ग. । १२. सन्ततिरह–ग. । १३. नादैर्विदितो–क. ख. । १४. योग्यं यत्–ग. । १५. धामैकं–ग. । १६. वक्त्रादव–क. ख. । १७. नाथ–क. ख. । १८. नां नवरङ्गानां–क. ख. । १९. वेद्यं–क. ख. ।

(शि?सि)तशोणमिश्र[1]रूपं तुर्यं वागादिमयतया वेद्यम् ।
[2]निव(स)ति सहस्रप(ते?त्रे) सरोरु(हो?हे) नाथपादुकारूपम् ॥ २६ ॥

सुभगत्वसुधारसोदयाय स्वगुरुरूपायविशेषशेषभाजः ।
निजमानसमन्दरादमथ्नादमृतानन्दसुधीरयुग्मसि[3]न्धुम् ॥ २७ ॥

[4]इति श्रीमत्पुण्यानन्दशिष्यामृतानन्दयोगिप्रवरविरचिते
सौभाग्यसुधोदये षष्ठः प्रपञ्चः ॥

ग्रन्थश्च परिसमाप्तः ॥

---

१. बिन्दु–क. ख. । २. नास्त्येषा पङ्क्तिः–ग. । ३. सिद्धाम्–क. ख. । ४. इत्यमृतानन्दकृते–क. ख. ।

# चिद्विलासस्तवः

## अमृतानन्दयोगिविरचितः

[1]स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः ।
सामरस्य[१]वपुरिष्यते परा पादुका परशिवात्मनो गुरोः[२] ॥ १ ॥
चित्रभानुशशिभानुपूर्व[३]क[४]त्रित्रिभेद[५]नियतेषु वस्तुषु[६] ।
तत्तदात्मकतया विमर्शनं तत्समष्टिगुरुपादुकाजपः ॥ २ ॥
तीर्थमद्वयसुधारसोद[७]धेर्वारितं[८] निजविमर्शवेलया ।
आणवादिमलमोचनोचितं स्नानमत्र[९] विधिना निमज्जनम् ॥ ३ ॥
[2]सा[१०] निशा सकललोकमोहनी[११] वासरः स खलु सर्वबोधकः ।
सामरस्यमिह सन्धिरेतयोः श्रीपरैव ननु[१२] सान्ध्य[१३]देवता ॥ ४ ॥
[3]स्वप्रकाशशिव एव भास्करस्त[१४]द्विमर्शविभवा[१५] मरीचयः ।
[१६]यैः स भासयति वेद्यमण्डलं तस्य पूजनमहन्तया मतिः ॥ ५ ॥
[१७]चिद्विलासमयभित्तिभावितं ज्ञानदीपविगलत्तमोगुणम् ।
आत्मतत्त्वमिह याग[१८]मण्टपं[१९] तस्य[२०] पूजन[२१]विधानमर्चनम् ॥ ६ ॥

---

१. तनु– क. घ. । २. गुणः–च. । ३. कं–ध. । ४. त्रित्रिकेण–छ. । ५. निचितेषु–घ. । ६. ङ्कितः–ङ । ७. दधिः–घ ङ. ज. । ८. वारिदं–च. । ९. मन्त्र–ग. । १०. या–ग. । ११. मोहिनी–छ. । १२. खलु–ङ. च. । १३. साध्य–घ. । १४. रः स–छ. । १५. विभवो–दी. । १६. यैः सहादधति वेद्य–ङ. च., यैस्तथा स यदि वेदि–छ. । १७. त्वत्कलास्थिमय–ख. ज., स्वप्रकाशमयभित्तिभावित–ग., त्वक्पलास्थिमय–छ. । १८. योग–च. । १९. मण्डपं–ख. घ.छ. । २०. तत्र–ग. । २१ मण्डल–ङ., मण्डप–च. ।

1. योगिनीहृदयदीपिकायां १८५, १९५, ३३७ पृष्ठेपूद्धृत एष श्लोकः ।
2. चिद्वल्ल्यां ३५ पृष्ठे उद्धृत एष श्लोकार्धः ।
3. योगिनीहृदयदीपिकायां २४९ पृष्ठे उद्धृतः श्लोक एषः ।

[1]भेदलक्षणविपक्षसंकटात्[१] तारणं परमिहात्मरक्षणम् ।
संविदात्मकतया [२]विमर्शनं [३]बन्धनं भवति सर्वतो दिशाम् ॥ ७ ॥

[४]वेदिका हृदयपद्मकर्णिका चिन्मयी वसति तत्र देवता ।
[५]यो हि तद्यजनकर्मकर्मठ[६]स्तस्य पाशभिदुरः स भैरवः ॥ ८ ॥

[७]विश्वभेदविभ[८]वा विकल्पधीलक्षणा[९] भवति विघ्नसन्ततिः ।
निर्विकल्पनिजधा[१०]मविश्र[११]मस्तन्निराकरणमत्र कीर्तितम्[१२] ॥ ९ ॥

[2][१३]यत्र निर्विषयबोधलक्षणः[१४] स्वात[१५]मशम्भुरवतिष्ठतेऽनिशम्[१६] ।
तत्त्वजालकमिदं शिवावधि क्षमा[१७]मुखं सकलमासनं[१८] मतम् ॥ १० ॥

[3]आत्मतत्त्वगतयोरशुद्धयोरत्र कर्मकरणात्मनोर्द्वयोः ।
शुद्धतत्त्वलय[१९]भावनामयी शुद्धिरात्मकरयोः परा मता ॥ ११ ॥

वेद्यसंविद[२०] इदंस्फुरात्मनो[२१] वेतृ[२२]संविदि विलापनामयी[२३] ।
वृत्तिरद्वयविमर्श[२४]विग्रहा प्राणसंयतिरुदीरितोत्तमा[२५] ॥ १२ ॥

आसनानि नवचक्रसंविदामुद्भवस्थितिलयास्त्रिशस्त्रिशः[२६] ।
अङ्गषट्करचना षडध्वनामंशतावगतिरात्मसंविदः[२७] ॥ १३ ॥

---

१. टोद्धारणं–ग., टोत्तारणं–दी. । २. विचिन्तनं–ग. । ३. सर्वतो भवति बन्धनम्–ग. । ४. अम्बिका–ग. । ५. कोऽपि–ग., सोऽपि–घ., योऽपि–ङ. च. । ६. ठः सर्व–ग. । ७. चित्त–ग. । ८. भवो–क. ख. घ. ङ. च. छ. ज. । ९. र्लक्षणो–क., लक्षणो–ख. घ. छ ज., लक्षणं–ग.च. । १०. धाम्नि–ग. । ११. विश्रमात्–ग. । १२. कीर्तनम्–क. ग. । १३. नित्य–ग. । १४. णम्–ङ. दी. । १५. साम्ब–ख. ज. । १६. भूशम्–ङ. च. । १७. क्षमात्मकं–ग. । १८. माननं–ङ. । १९. मय–ग., गत–ख. दी. । २०. दमिदं–ग. । २१. परात्मनः–ग., स्फुटात्तनो–ङ., स्फुटात्मनो–च., स्फुरन्मनो–छ. । २२. वेंद्य–ग. । २३. मयि–क., नं मयि–ग. । २४. लक्षणा–ङ. च । २५. त्तरा–छ. । २६. स्त्रयः क्रमात्–घ. । २७. विदि–ग., विदा–घ.ङ.च. ।

1. योगिनीहृदयदीपिकायां ९१ पृष्ठे, चिद्वल्ल्यां च ६ पृष्ठे उद्धृत एष श्लोकार्धः । क. ख. घ. छ. ज. मातृकासु तु न दृश्यते एष श्लोकः ।
2. योगिनीहृदयदीपिकायां ( पृ. १८८ ) दृश्यते श्लोकार्ध एषः ।
3. योगिनीहृदयदीपिकायां ९१, २८० पृष्ठयोरुद्धृत एष श्लोकः । क. ख. घ. छ. ज. मातृकासु तु न दृश्यते ।

काम ऊर्ध्वगतबिन्दुराननं भानुरेष तदधोगतौ स्तनौ ।
चित्रभानुशशिनावुभौ कला योनिरत्र सपरार्धकुण्डली ॥ १४ ॥

एवमात्मनि चतुष्कलामये सर्वतत्त्वसमवायलक्षणे ।
न्यासमाहुरिह वैखरीतिवाग्वृत्तितः समविशेषभावनम् ॥ १५ ॥

पूरुषत्वसमवाप्तिहेतुपुर्यष्टकाख्यनिजसूक्ष्मवर्ष्मणः ।
चित्पदे लयविधानमष्टवाग्देवतान्यसनमिष्टमुत्तमम् ॥ १६ ॥

अन्तरङ्गकरणान्युपाधयः स्वप्रकाशनभसोऽत्र संक्रमात् ।
पीठभावमुपयान्ति तानि तन्न्यासकर्म परधाम्नि हृल्लयः ॥ १७ ॥

तत्त्वधामयुगमातृकात्मकत्रित्रिभेदनियतेषु वस्तुषु ।
पानपात्रपरमामृतत्रयं तुर्यविश्रमणमर्घ्यशोधनम् ॥ १८ ॥

[1]मेदिनीप्रमुखमाशिवं मतं तत्त्वचक्रमिह चक्रमुत्तमम् ।
स्वस्वभावसमवायभासिनी देवता भवति सांविदी कला ॥ १९ ॥

[2]आन्तरस्य निजसंविदात्मनो मातुरक्षकरणाध्वना बहिः ।
मेयसंविदि समर्पणं तदावाहनं समरसत्वलक्षणम् ॥ २० ॥

---

१. वुभे–ग. । २. स हरा–क. ख. छ. ज. । ३. ख्य–च. । ४. येन चा–ग. । ५. रादि–क. ख. ग. ङ. च. छ. ज. । ६. वृत्तिता–क. ख. ज., कीर्तिरासनमशेषभासनम्–ग., वृत्तिता च सविशेषभासनम्–घ., चित्तता समवशेषभावनम्–ङ. च. । ७. भावनाम्–छ. । ८. पौरुषत्व–ग. । ९. वाय–ग. । १०. वर्ष्मणा–ग., वर्त्मनाम्–ङ. च. । ११. चित्पथे–च. । १२. म्यसन–क. । १३. जुष्ट–छ. । १४. भ्रान्त–घ. च. । १५. णप्रभावतः–छ. । १६. नवसूत्र–छ., नभसाऽत्र–ङ. । १७. याति भावितं न्यास–ग. । १८. धाम केवलम्–घ. । १९. तल्लयः–क. ङ. च., तल्लयात्–ग. । २०. त्मनः–ग. । २१. केण–छ. । २२. तस्तु लक्षणः–ग., तस्वलक्षणम्–घ. च., मस्वलक्षणम्–ङ. । २३. पाद–क. ख. ङ. च. छ. ज., अर्घ्य–घ. । २४. त्रय–क., त्रया–ङ. । २५. वण–क. ख. ज. । २६. मिति–ङ. च. । २७. स्वरूप–ङ. च. । २८. मयभावनामयी–ग., समवायभासिनी–चि. । २९. सादिनी–छ. । ३०. रत्र–दी. । ३१. त्मनो–घ., त्मना–ङ. घ. दी. । ३२. सदावा–ग. घ. ङ. च. ।

1. चिद्वल्ल्यां ( पृ. १४ ) समुद्धृत एष श्लोकः ।
2. योगिनीहृदयदीपिकायां ( पृ. ९३ ) समवलोक्यते श्लोक एषः ।

[1]पञ्चधैव यदिदं प्रपञ्चितं पञ्चधाऽनुभवशाश्वतोदयम् ।
तत्[2]सु[3]म्हरणमौपचारिकं कर्म निर्मल[4]निजात्मसंविदि ॥ २१ ॥
[5]यस्तु [6]पञ्चदशधा प्रकल्प्यते काल[7] एष [8]शशिभानुसंक्रमात् ।
तस्य [9]शाश्वतपदे [10]लयक्रिया [11]नित्यवासरकला[12]र्चनं मतम् ॥ २२ ॥
बाह्य[13]चक्रमुपगा मरीचयस्तत्त्व[14]जाललसदात्म[15]संविदः ।
तत्सम[16]र्चनमतीव चिन्मयानाख्य[17]धाम्नि विलय[18]क्रमक्रिया ॥ २३ ॥
यच्चतुर्विधमिदं विभासते तत्त्वरूपममृतान्त[19]राकृति ।
तस्य [20]पञ्चमपदे [21]लयक्रिया [22]संमतं बलिचतु[23]ष्टयं तथा ॥ २४ ॥
पञ्चधा प्रसरत[24]श्चिदात्मनो [25]ह्यान्तरस्य [26]बहिरिन्द्रियाध्व[27]ना ।
सामरस्यमिह संविदात्मनारा(त्रि?र्ति)कं परमिदं समीरितम् ॥ २५ ॥
वाक् सहैव मनसा निवर्तते[28]ऽप्राप्य निष्कलनिरञ्जनाद्[29] यतः ।
[30]तत्र निर्मनसि शब्दवर्जिते धाम्नि विश्रमणमुत्तमो[31] जपः ॥ २६ ॥
बिम्बितं स्फुरति यत्र [32]संविदो रूपमान्तरमिदन्तया बहिः ।
विश्वमेतदखिलं चराचरं दर्पणं हृदयदर्पणं [33]परम् ॥ २७ ॥
छादयन्नि[34]खिलमात्मसंविदा[35] त्रायते [36]त्रिविधतापसंकटात् ।
[37]यच्चिदम्बरगतं [38]शिवात्मकं छत्रमत्र कमलं सुधा[39]मलम् ॥ २८ ॥

---

१. पञ्चता–क. ख. ङ. ज., वञ्चिता–घ. च. । २. तत्त्व–ग., तस्य–ङ. च. । ३. संस्म–घ. । ४. मिह्रा–ग. । ५. यत्तु–ग. । ६. प्रकीर्त्यते–ग. घ. ङ. च. । ७. एव–घ.ङ.च. । ८. शिव–घ., विश–ङ. । ९. विश्रुत–घ. । १०. क्रमाद्–ङ. । ११. सन–घ. । १२. च निर्मितम्–घ. । १३. पथगा–ग. । १४. जालक–ग. । १५. संविदि–ङ. । १६. मतीत–क. ख. छ. ज., मिदन्तया मया-ग. । १७. भिख्य–घ. । १८. क्रिया–ग. । १९. कृषत्–घ., घकृत्–ङ. च. । २०. शाश्वत–ग., पश्चिम–च. । २१. समर्पणं–ङ. च. । २२. सन्मतं–क. छ., चिन्तितं–ग. । २३. मतम्–ग. । २४. त्मनश्चा–च. । २५. बाह्यतश्च–ग. । २६ बहिरध्वना ततः–ङ. च. । २७. त्मवः–ग., त्मना–घ. । २८. व्याप्य–ग., प्राप्य–घ. ङ. च. । २९. नोद्यतः–ग. । ३०. तत्त्व–ग., अत्र–घ. । ३१. मोत्तमम्–ग. ङ. । ३२. संविदा–ग. छ. । ३३. मतम्–ङ.च. । ३४. त्यखिल–ग, न्नखिल–ङ. । ३५. दस्त्रा–ग. । ३६. निखिल–क.ख.छ., विविध–ज. । ३७. सच्चि–घ. । ३८. चिदा–ङ. च. । ३९. मयम्–ग. ङ. च. ।

पञ्चधा स्फुरण[1]मेव संविद[2]श्चामरं[3] विविध[4]चारु[5]चङ्क्रमम् ।
विश्वदृग्लय[6]विचित्र[7]निर्मितः स्वेक्षणक्षणभवो[8] भवस्तवः ॥ २९ ॥

[1]एषणा[9]त्रयमयस्य वर्ष्मणस्तत्त्वसंचयमयस्य संविदि ।
धाम्नि तत्त्व[10]समतीत[11]सत्त्वके[12] स्वात्मनः खलु निवेदनं मतम् ॥ ३० ॥

[2]स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्थमस्तके ।
तत्[13]प्रसादमिह तत्त्वशोधनं प्राप्य मोदमुपयाति भावुकः ॥ ३१ ॥

[3]पाशजालकमिदं परं[14] पशोर्ना[15]शिकारण[16]मतो मतं[17] हविः[18] ।
तत्त्वतो[19] निजगुरोर्निरीक्षणात् प्राप्यते तदमलं पवित्रितम्[20] ॥ ३२ ॥

[4]वेद्यराशि[21]दमनेन विश्वतो निर्विकल्पमयवासनो[22]ल्बणम् ।
चित्तमेव[23] दमनं[21] शिवेऽमुकस्यार्पणं[24] दमनकार्पणं[21] परम् ॥ ३३ ॥

[5]दीयते[25] परशिवैक्यभावना क्षीयते[26] सकलपापसंचयः[27] ।
येन चिज्जलधिपारसेतुना दीक्षणं गुरुकटाक्षवीक्षणम् ॥ ३४ ॥

---

१. स्फुरित–ग. । २. चामरं–ङ. च. । ३. स्वात्मभावपरिचारसंक्रमः–ग., संविदो विधृतचामरक्रियम्–ङ., क्रमम्–च. । ४. विधृत–क. ख. घ. ज. । ५. चातुरक्रमम्–क. ख. घ. छ. ज. । ६. दुर्लभ–क. ख. ग. घ. ङ. च. ज. । ७. ता–ग., तं–क. ख. घ. ङ. च. ज. । ८. स्वेक्षणक्षणभवस्तव स्तवः–क. ख. ज., मीक्षणक्षणभवस्तवस्ततः–ग., स्त्रिक्षणक्षणभवो–घ., स्वेक्षणं परमकम्पदं तपः–छ. । ९. ईषण–क., ईक्षण–ख. ज., ईषणा–घ., एषण–ङ. च. । १०. सत्त्व–घ. । ११. ससगे–क. ख., तत्त्वगे–घ., सप्तके–ङ. च., सद्मगे–ज. । १२. सद्मनः–ङ. । १३. यत्–क. ख. ज. । १४. परा वशं नाश–ङ., परा वर्शानाशि–च. । १५. व्यांज–ग. । १६. मतां–ङ. । १७. मनः परम्–ग. । १८. पविः–च. । १९. भिद्यते–ग., तत्रता–ङ., तत्त्रितो–च. । २०. विचि–ग. । २१. घम–छ. । २२. निजवासनो–ङ.च. । २३. मेतदमलं–घ. । २४. वे मुख–छ., वे मुखं स्वा–च. । २५. विद्यते–ङ. । २६. क्षिप्यते–ङ. च. । २७. पाश–घ. ।

1. गपुस्तके नास्त्येष श्लोकः ।
2. योगिनीहृदयदीपिकायां १७५, १८१, १९५ पृष्ठेषूद्धृतः श्लोक एषः ।
3. घमातृकायां नास्त्येष श्लोकः ।
4. गपुस्तके नास्त्येष श्लोकः ।
5. चिद्वल्ल्यां ( पृ. ७३ ) समुद्धृतः श्लोकार्ध एषः ।

[१]अन्तरङ्गकरणा[२]त्मनां चतुस्स्रोतसां विविधदेवता[३]जुषाम् ।
पूजनं परमिहोन्मनीशिखामध्यवर्ति[४]परमात्मयोजनम् ।। ३५ ।।

[1]पञ्च[५]बोध[६]करणानि [७]मानसं दर्शनानि विषयप्रदर्शनात् ।
दर्शनानि षडमूनि तानि तत्पूजनं भवति तल्लय[८]श्चिति ।। ३६ ।।

जाग्रदादिसमया[९]श्चतुर्विधा[१०]श्चान्तरात्मपरमात्म[११]विग्रहाः ।
[१२]पञ्चमेऽत्र [१३]तदतीतचिद्घने धाम्नि तल्लयमतिस्तदर्चनम् ।। ३७ ।।

[2]खे निरस्तनिखिल[१४]क्रिया[१५]क्रमे या चितिश्चरति [१६]शाश्वतो[१७]दया ।
सा शिवत्व[१८]समवा[१९]प्तिकारिणी खेचरी निखिल[२०]खे[२१]दहारिणी ।। ३८ ।।

[3][२२]यत्स्वरूपमहिमा विकल्पि[२३]तं शक्तिचक्र[२४]मिह रज्जुसर्पवत् ।
तत्स्वरूपपरमार्थबोधतस्तत्र तस्य विलयो विसर्जनम् ।। ३९ ।।

या क्रिया[२५]समभि[२६]हारतस्त्रिधा [२७]दर्शिताऽत्र गुरुभावना[२८]दिका ।
सा [२९]विभेदलय[३०]भावनादिकाऽ[३१]भ्यस्यतां परशिवैक्यसिद्धये ।। ४० ।।

[३२]इति चिद्विलासस्तवः समाप्तः ।।

---

१. आन्त–क. ख. ग. ङ. च. छ. ज. । २. त्मना–घ. । ३. जुषः–ग. । ४. शिवमत्र–ग., शिवमात्र–क. ख. घ. च. ज., हि शिवात्म–छ. । ५. पाद–ङ. । ६. विषयाणि–घ. । ७. मानसे–क. ज. । ८. च्छिदि–छ. । ९. यश्चतुर्विधः–ग., यांश्चतुर्विधां–ङ. । १०. ह्यन्त–छ. । ११. विग्रह–ग., विग्रहे–ङ. । १२. पञ्चमो–ग., पञ्चमन्त्र–घ. । १३. द्योतिचित्पथे–ग. । १४. सकल–दी. । १५. लागमक्रियैर्या च निश्च–छ. । १६. कालकर्तरी–ङ. च. । १७. दधौ–दी. । १८. वाय–ग. । १९. दायिनी–ङ. च. । २०. भवति–ङ. च. छ., सकल–दी. । २१. भेद–ग. । २२. यः–क. ख. । २३. ल्पतः–छ. । २४. मिति–क. । २५. मधिकाततः क्रिया–ग. । २६. तः क्रिया–घ. ङ. च. । २७. दीक्षिताऽस्य–क. ख. छ. ज., वीक्षिता त्रि–ग., वीक्षिताऽत्र–घ. । २८. धिका–ग. छ. । २९. विबोध–ग. । ३०. वासनाधिका तस्य ते परशिवैक्यभावना–ग. । ३१. लभ्यतां–छ. । ३२. इति चिद्विलास –क., इति श्रीपुण्यानन्दपरमयोगीन्द्रविरचितश्चिद्विलासः सम्पूर्णः–घ., इति चिद्विलासः समाप्तः–ङ. च. ।

1. गपुस्तके नास्त्येष श्लोकः ।
2. योगिनीहृदयदीपिकायां (पृ. ७८) दृश्यते श्लोक एषः ।
3. ङ. च. मातृकयोर्नास्त्येष श्लोकः ।

[ प्रक्षिप्ता अधिका वा श्लोकाः ]

[1]यत् त्वगादिनिजधातुसप्तकं तत्समष्टिरिह चाष्टकं तनौ[१] ।
तत्तदङ्गविलय[२]क्रियोदितं [३]त्वष्टकाष्टकसमर्प[४]णं पर[५]म् ।। ४१ ।।

[2][६]दृक्क्रियात्मशशिभानुमध्य[७]गं खे चरत्यनलयष्टिधाम यत्[८] ।
यत्त[९]दूर्ध्वशिखरं परं नभस्तत्र दर्श[१०]य शिवं[११] त्वमम्बिके ।। ४२ ।।

[3]आत्मसंविदनले शिवात्मनि वासनेन्धनविवृद्धतेजसि ।
वृत्तिपञ्चकहविस्समर्पणं होममत्र कथितं मनोषिभिः ।। ४३ ।।

[4]या शिवैक्यविषया मनःक्रिया प्रत्यगुन्मुखतया शिवस्त्रिया ।
पूजनादिविविधक्रियालयः स्वात्मसंविदिति हि क्षमापणम् ।। ४४ ।।

.................................................... ।
[5]आत्मचक्रमनुदेवतात्मनामासनं शिवमयत्वभासनम् ।। ४५ ।।

---

१. तनोः–ग. । २. क्रमक्रिया–ङ. च. । ३. चाष्ट–ङ. च. । ४. र्चनं–ङ. च. । ५. मतम्–ङ. च. । ६. यत्–दी., हृत्–सौ. । ७. मध्यतः–ग., मध्यगे–दी., मध्यगः–सौ. । ८. यष्टि धाम यः–ग., त्यनिलवत् सुधामयः–चि., दृष्टिधाम्नि यः–दी., दृष्टिधाम यः–सौ. । ९. तत्–ग. । १०. यति वक्त्रमम्बिके–ग. । ११. शिवत्व–दी. ।

1. गपुस्तके ४० संख्याकः, घ. ङ. मातृकयोश्च ३९ संख्याकः श्लोकः ।
2. गपुस्तके ३० संख्याक एष श्लोको दृश्यते । वस्तुतस्तु चिद्गगनचन्द्रिकायाः ३२ संख्याक एष श्लोकोऽनवधानेनात्र स्थापितः ।
3. गपुस्तके ३१ संख्याकः श्लोकः ।
4. गपुस्तके ३५ संख्याकः श्लोकः ।
5. योगिनीहृदयदीपिकायां ( पृ. ९२ ) समुपलभ्यते श्लोकार्ध एषः । अत्रोद्धृता अन्ये श्लोकाश्चिद्विलासे समुपलब्धाः, एष श्लोकार्धस्तु तत्र न दृश्यते । प्रकरणानुरोधाच्चानुमीयते श्लोक एष तत्रत्य एव स्यादिति । अत एवामत्र संनिवेशितः ।

रामचन्द्रसहायेन व्रजवल्लभशर्मणा ।
ग्रन्थियादोभिराकीर्णस्तीर्णः षोडशिकार्णवः ।।

# चिद्विलासस्तवमातृकाश्लोकसंख्याक्रमबोधिका सारणी

| क्रमसंख्या | क. | ख. | ग. | घ. | ङ. | च. | छ. | ज. |
|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ | १ | १ |
| २ | २ | २ | २ | २ | २ | २ | २ | २ |
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| ५ | ५ | ५ | ६ | ५ | ५ | ५ | ५ | ५ |
| ६ | ६ | ६ | ५ | ६ | ६ | ६ | ६ | ६ |
| ७ | × | × | ११ | × | ७ | ७ | × | × |
| ८ | ७ | ७ | ७ | ७ | ८ | ८ | ७ | ७ |
| ९ | ८ | ८ | ८ | ८ | ९ | ९ | ८ | ८ |
| १० | ९ | ९ | ९ | ९ | १० | १० | ९ | ९ |
| ११ | × | × | १० | × | ११ | ११ | × | × |
| १२ | १० | १० | १२ | १० | १२ | १२ | १० | १० |
| १३ | ११ | ११ | १३ | ११ | १३ | १३ | ११ | ११ |
| १४ | १२ | १२ | १४ | १२ | १४ | १४ | १२ | १२ |
| १५ | १३ | १३ | १५ | १३ | १५ | १५ | १३ | १३ |
| १६ | १४ | १४ | १६ | १४ | १६ | १६ | १४ | १४ |
| १७ | १५ | १५ | १७ | १५ | १७ | १७ | १५ | १५ |
| १८ | १६ | १६ | १८ | १६ | १८ | १८ | १६ | १६ |
| १९ | १७ | १७ | १९ | १७ | १९ | १९ | १७ | १७ |
| २० | १८ | १८ | २० | १८ | २० | २० | १८ | १८ |
| २१ | १९ | १९ | २१ | १९ | २१ | २१ | १९ | १९ |
| २२ | २० | २० | २२ | २० | २२ | २२ | २० | २० |

| क्रमसंख्या | क. | ख. | ग. | घ. | ङ. | च. | छ. | ज. |
|---|---|---|---|---|---|---|---|---|
| २३ | २१ | २१ | २३ | २१ | २३ | २३ | २१ | २१ |
| २४ | २२ | २२ | २४ | २२ | २४ | २४ | २२ | २२ |
| २५ | २३ | २३ | २५ | २३ | २५ | २५ | २३ | २३ |
| २६ | २४ | २४ | २६ | २४ | २६ | २६ | २४ | २४ |
| २७ | २५ | २५ | २७ | २५ | २७ | २७ | २५ | २५ |
| २८ | २६ | २६ | २८ | २६ | २८ | २८ | २६ | २६ |
| २९ | २७ | २७ | २९ | २७ | २९ | २९ | २७ | २७ |
| ३० | २८ | २८ | × | २८ | ३० | ३० | २८ | २८ |
| ३१ | २९ | २९ | ३७ | २९ | ३१ | ३१ | २९ | २९ |
| ३२ | ३० | ३० | ३८ | × | ३५ | ३५ | ३० | ३० |
| ३३ | ३१ | ३१ | × | ३० | ३६ | ३६ | ३१ | ३१ |
| ३४ | ३२ | ३२ | ३९ | ३१ | ३७ | ३७ | ३२ | ३२ |
| ३५ | ३३ | ३३ | ३६ | ३२ | ३२ | ३२ | ३३ | ३३ |
| ३६ | ३४ | ३४ | × | ३३ | ३३ | ३३ | ३४ | ३४ |
| ३७ | ३५ | ३५ | ३२ | ३४ | ३४ | ३४ | ३५ | ३५ |
| ३८ | ३६ | ३६ | ३३ | ३५ | ३८ | ३८ | ३६ | ३६ |
| ३९ | ३७ | ३७ | ३४ | ३६ | × | × | ३७ | ३७ |
| ४० | ३८ | ३८ | ४१ | ३७ | ४० | ४० | ३८ | ३८ |
| ४१ | × | × | ४० | × | ३९ | ३९ | × | × |
| ४२ | × | × | ३० | × | × | × | × | × |
| ४३ | × | × | ३१ | × | × | × | × | × |
| ४४ | × | × | ३५ | × | × | × | × | × |
| ४५ | × | × | × | × | × | × | × | × |

# अनुक्रमणीभागः

तत्र

# नित्याषोडशिकार्णवश्लोकार्धानुक्रमणी



* एतच्चिह्नाङ्किता अंशाष्टिप्पणीस्थाः ।

# व्याख्याद्वयोद्धृतग्रन्थग्रन्थकारनामानि

# व्याख्याद्वयोद्धृतश्लोकार्धानुक्रमणी

# परिशिष्टस्थग्रन्थश्लोकार्धानुक्रमणी

# विशिष्टपदानां विषयानुक्रमणी

# परिवर्धनानि संशोधनानि च

## ( उपोद्घातभागे )

| पृष्ठे | पङ्क्तौ | |
|---|---|---|
| २२ | २ | ज्ञानदीपविमर्शिन्या मातृका राजस्थानप्राच्यविद्याप्रतिष्ठानस्य उदयपुर-शाखायामपि वर्तते । |
| २३ | ६-८ | नानामातृकासाहाय्येनास्माभिर्योगिनीहृदयस्य दीपिकायाश्च परिष्कृतं संस्करणं क्रियते । तत्र प्रायः सर्वासु मातृकासु 'अस्मदुक्त' इत्येव पाठः समुपलभ्यते । |
| २३ | ११-१२ | ज्ञानदीपविमर्शिन्यामपि बाह्य आन्तरश्च वरिवस्याविधिर्वर्ण्यते । अस्यापि संस्करणमस्माभिश्चिकीर्ष्यते । |
| २३ | २० | आगमतत्त्वविलासाख्ये ग्रन्थे १६० तन्त्रनामानि दृश्यन्ते ( तान्त्रिक साहित्य, पृ० ३०-३१ ) । चतुष्षष्टितन्त्राणां नवविधा नामावली तालिकामुखेन लुप्तागमसंग्रहद्वितीयभागस्य उपोद्घाते ( पृ० ९४-१११ ) स्थापिता द्रष्टव्या । |
| २४ | ३२ | "विष्णु-शिव-सूर्य-बुद्धादिरूपतया····भगवानेक एव" ( स्पन्दप्रदीपिका, पृ० ९२ ) इति मायावामनिकास्थितया बुद्ध-शिवयोरभेदमारोप्य सर्वेषां शिवोपदिष्टत्वं वक्तुं शक्यते । |
| २६ | १५-१६ | रुद्रयामलस्य परिष्कृतं संस्करणं नाद्यावधि संजातमिति खेदावहमेतत् । |
| ४५ | ३-५ | जयद्रथयामलस्य सम्पादनादिकं प्रचलतीति श्रूयते । |
| २७ | २१ | वीणाशिखतन्त्रं हालैण्डवासिना डॉ० तून-गान्द्रियानमहोदयेन सम्पादितं |
| २९ | ४ | न चिरादेव प्रकाशिष्यते । शिवस्य वामवक्त्राद्विनिर्गतमेतत् तन्त्रम् । |
| २८ | १४ | नयोत्तरं प्रतिष्ठालक्षणसारसमुच्चये(२।१२१) वामतन्त्रेष्वेव परिगणितम् । |
| २८ | २२ | कामिकं देवनागराक्षरेष्वपि साम्प्रतं मुद्रितमिति ज्ञायते । |
| २८ | २५ | सार्धत्रिशतिकालोत्तरागमो देवनागराक्षरेषु पाण्डिचेरीतः प्रकाशितः साम्प्रतमुपलभ्यते । |
| २८ | २८ | कुब्जिकामतस्य (षट्साहस्रसंहितायाः) पञ्चपटलात्मको भागो रोमनाक्षरेषु |
| ४२ | २ | मुद्रितः समुपलभ्यते । |
| २८ | ३२ | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः प्रकाशिता गोरक्षसंहिता मतोत्तरतो- |
| ४२ | १९ | ऽभिन्नेत्यस्माकं परिकल्पना । |

| पृष्ठे | पङ्क्तौ | |
|---|---|---|
| २९ | ८-९ | तोतुलं तोतुलोत्तरं च प्रतिष्ठालक्षणसारसमुच्चये ( २।११५ ) गारुडतन्त्रेषु परिगण्येते । |
| ३१ | १५ | अनन्तशक्तिभट्टारकस्त्रिपुरसुन्दरीकल्पलताकर्तेति ज्ञानदीपविमर्शिन्या नेपालमातृकातः ( ४७ क पत्रे ) परिज्ञायते । |
| ३४ | ३ | क्षेमराजविषये काश्चन नूतनाः सूचना अस्माभिर्लुप्तागमसंग्रहस्य उपोद्घाते ( पृ० ७, ६३, २१९ ) समुट्टङ्किताः । |
| ३९ | १५ | नागभट्टेन त्रिपुरासारसमुच्चये ( २।२५ ) त्रिपुरार्णवः स्मृतः । |
| ४० | १६ | नागभट्टापराभिधकविहस्तिमल्लस्य परिचय आस्माकीने हिन्दीभाषामये "आगम और तन्त्रशास्त्र" इत्याख्ये ग्रन्थे ( पृ० ८४-८६ ) द्रष्टव्यः । |
| ४० | २२ | षट्सहस्रभट्टारकपदेनात्र कुब्जिकामतस्य षट्साहस्री संहिता स्मृता स्यात् । |
| ४० | २८ | परापञ्चाशिकाया अपि परिष्कृतं संस्करणमस्माभिश्चिकीर्ष्यते । |
| ४० | २९ | सोमतिलकसूरिकृतव्याख्यासहितस्त्रिपुराभारती-लघुस्तवो राजस्थान-प्राच्यविद्याप्रतिष्ठानेन १९५२ ई० वर्षे प्रकाशितः । |
| ४७ | १०-११ | लुप्तागमसंग्रहस्य द्वयोरपि भागयोरत्रत्यानि वचनानि संगृहीतानि । |
| ४८ | ९-१० | पाण्डिचेरीस्थितफ्रेंच-शोधसंस्थानतो भागत्रयात्मकं नूतनं परिष्कृतं संस्करणमस्य तृतीयं समजायत । |
| ५४ | १७-१९ | तन्त्राणां वामदक्षिणविभागो दशमशताब्दीभवेन सोमदेवसूरिणा विरचिते यशस्तिलकचम्पूनाम्नि ग्रन्थे दृश्यते ( यशस्तिलक एण्ड इण्डियन कल्चर, पृ० २०६, २०८ इत्यादीनि द्रष्टव्यानि ) । |
| ५५ | ७ | चतुर्विंशतिभेदो वामो मार्गः प्रतिष्ठालक्षण० ( २।१२४ ) निर्दिष्टः । |
| ५६ | ६-८ | सिद्धान्तशैवागमानामुपागमानां शिवस्य पञ्चवक्त्रेभ्यो विनिर्गतानामागमानां च नामावली तालिकामुखेन स्थापिता लुप्तागमसंग्रहस्य उपोद्घाते ( पृ० ८६-९३ ) द्रष्टव्या । |
| ५९ | ५ | "आप्यं चण्डासिधारादि" ( चर्या० १।३६ ) इति पूर्वोद्धृत( पृ० ५५, प० ४ )मृगेन्द्रागमवचनेन चण्डासिधारादीनां पश्चिमवक्त्रोद्भवत्वं ज्ञायते । प्रतिष्ठालक्षण० ( २।१२६ ) तथैव दृश्यते । एवं च "चण्डासिधारादावूर्ध्वे" इति क्षेमराजवचनसंगतये प्रमाणमन्वेषणीयम् । |
| ६२ | ३३-३४ | प्रतिष्ठा०(६।३२७-३३५) अक्षोभ्यादिचतुष्षष्टियोगिनीनामानि दृश्यन्ते । |